Tanjore Sarasvati Mahal Series No. 187.

# SIDDHĀNTA RATNĀVALĪ

OF

## SRI VENKATACHĀRYA

Edited with Introduction

*By*

Vedartha Ratnakara, Veda Vachaspati,
Srutismrti, Itihasa, Mimamsadvaya Kalpasutra Visarada,

AGNIHOTRAM

RĀMĀNUJA TĀTĀCHĀRYA

( Receipient of President Award for Sanskrit )

**TANJORE MAHARAJA SERFOJI'S**

**SARASVATI MAHAL LIBRARY, THANJAVUR.**

**1982 ]**

सरस्वतीमहाल ग्रंथमालयाः पुष्पम् - १८७.

श्रीमत्पण्डिततातााचार्यसूनु - श्रीवेङ्कटाचार्ययज्वना

विरचिता

# ॥ सिद्धान्तरत्नावली ॥



संपादकः

भारतीयराष्ट्रपतिना सम्मानिताः

वेदार्थरत्नाकरः, वेदवाचस्पतिः, श्रुतिस्मृत्यैतिहासमीमंसाढ्य

कल्पसूत्र विशारद

**श्री अग्निहोत्रं रामानुजताताचार्याः**





तंजापुरी महाराजा शरभोजी सरस्वतीमहालग्रंथालय निर्वाहकसमितिः ।

तंजापुरी ॥



१९८२ ]

# PREFACE

I introduce this book with great pleasure to the scholars under the series of publications of rare and valuable Sanskrit manuscripts of this Library. The book Siddhanta Ratnavali is a treatise on the accepted conclusions of supremacy of Vishnu following the Visistadvaita Philosophy.

The author of this work "Venkatacharya" was a native of Kumbakonam and his father was the Rajaguru of Naik Kings of Tanjore.

The publication of Siddhanta Ratnavali is in the 187 series of manuscripts of Sanskrit literature edited and published by this Library with the aid of the Government of India special grant Rs. One Lakh.

The editor of this work Agnihotram Thiru Ramanuja Tatachariar of Kumbakonam is

a recipient of President Award for his erudition and meritorious service to Sanskrit Language. This eminent traditional scholar has edited this book with great care and in a commandable manner. His elaborate and lucid introduction in Sanskrit, English and Tamil will be useful to the scholars and readers. Our sincere thanks are due to him for his invaluable service.

It becomes our duty to thank the Government of India for their timely grants, for bringing out this useful work under the publication of valuable books available in this Library.

Our thanks are due to the Sarada Vilas Press, Kumbakonam for their neat execution of printing and good get up and also to the staff member of this Library.

S. MEIKANDA DEVAN, I. A. S.,
*DISTRICT COLLECTOR & CHAIRMAN,*
T. M. S. S. M. Library Administrative Committee.

Thanjavur,
18—9—82.



# ANJORE SARASVATI MAHAL LIBRARY,

## SOME OF THE SANSKRIT PUBLICATIONS.



| Title | | Rs. |
|---|---|---|
| Dharmukutam—Aranya Khanda ... | | 4—00 |
| „ —Kishkinda Khanda ... | | 16—00 |
| „ —Yuddha Khanda ... | | 30—00 |
| Sivarahasyam ... | | 40-00 |
| Vishnutatva Dipika ... | | 2—00 |
| Sataratna Sangraha of Umapati Sivacharya | | 13—00 |
| Sruta Pradipika of Sudarsana Bhatta | | 23—00 |
| Minor Works of Sri Krishnananda Sarasvati | | 0—75 |
| Mudrarakshasa Nataka Katha of Mahadeve | | 3—00 |
| Chola Champu ... | | 1—00 |
| Sahendra Vilasam ... | | 3—00 |
| Ragunatha Vilasa | | 2—00 |
| Niti Sataka of Bhartruhari ... | | 4—00 |
| Panchakala Kriya Deepa ... | | 11—00 |
| Ananda Raghavam of Rajachudamani Dikshita ... | | 5—00 |
| Krishna Carita of Agastya Pandita ... | | 27—00 |
| Bhavana Purushottama of Ratnaketa Srinivasa Dikshita... | | 15—00 |
| Nan Siromani Tika and Akhyarthavada Tippanam of Raghudeva | | 1—50 |
| Shaddarsini Siddanta Sangraha | | 4—00 |
| Lakshnarajih of Tippabhatta and Laghunyayavadah Trayah ... | | 2—00 |
| Phalavati ... | | 36—00 |
| Paniniya Dhatupatha ... | | 3—00 |
| Yaska's Nirukta and Nighantu | Part I | 16—00 |
| | Part II | 17—00 |
| Dharma Vijaya Chambu ... | | 3—75 |



# AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures. solely inherited by the Nation, and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also of the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library. Thanjavur.

The manuscripts so presented will be accepted and acknowleged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world-famous 'Sarasvati Mahal Library'. It is open to you to share the honour of Serfoji, in your own measure, by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it, will you hasten to take it up?. The Library waits for your answer.

Administrative Officer,
T.M.S.S.M. Library.

# भूमिका

अथेदानीं विदुषां पुरस्तात् सिद्धान्त - रत्नावली - नामकोऽयं ग्रन्थ उपस्थाप्यते । अस्य ग्रन्थस्य विष्णूत्कर्ष प्रतिपादनमेव परमोद्देशः । श्रुति-स्मृतीतिहास - पुराणेषु विष्णोः पारम्यमेव प्रतिपाद्यत इति अयं ग्रन्थकर्ता मीमांसान्यायावलंबनेन निरूपयति । अयं च रामानुजसिद्धान्तानुसारी ग्रन्थः । तत्र तत्र आचार्यवेदान्तदेशिके महतीं भक्तिं प्रकटयति । अत्र चत्वारः परिच्छेदाः । प्रथमे परिच्छेदे स्वाचार्य - मतानुसारेण श्रुत्यादिषु विष्णोः पारम्यमेव प्रतिपाद्यत इति निरूपयति । द्वितीय - परिच्छेदे विष्णोः पारम्यं अनभ्युपगच्छतां परेषां पक्षं प्रतिक्षिपति । तृतीय - परिच्छेदे सर्व - परविद्यो-पास्यत्वं सर्वोपनिषत् - प्रतिपाद्यत्वं च नारायणस्यैवेति विवृणोति । चतुर्थे परिच्छेदे नारायणस्यैव परम - प्राप्यत्वमिति विशदयति । अत्र च बहवो वेद-भागाः सुप्रसिद्धा उपनिषदः अष्टादश पुराणान्युपपुराणानि भगव-द्गीतादयः बहवो ग्रन्थाः समालोचिताः । परस्पर - विरुद्धवत् दृश्यमानानां वचनानां समीकरणाय मीमांसा - न्यायाश्च प्रदर्शिताः । मीमांसान्याय-जटिलोऽयं ग्रन्थः। विष्णोःपारम्य - प्रतिपादनार्थं प्रवृत्तोऽयं ग्रन्थः अन्यपारम्यवादिनां पक्षमपि महता प्रयत्नेन निराकरोति ॥

शिवतत्त्व - विवेक , शिवार्क (आदित्य) मणिदीपिकादिग्रन्थेभ्यः प्रति-पक्षा अनूद्यन्ते । वेदेषु कस्य पारम्यमुच्यत इति निर्णयं कर्तुं वेदोपबृंहणभूत-इतिहास - पुराणानां अवलम्बनेन , विष्णोः पारम्यं संस्थाप्यायमेव वेदार्थः इति निरूपयति । वेदमन्त्रेषु शिवस्य वा विष्णोर्वा पारम्य - प्रतिपादकानां वचनानां अदर्शनात् , तथा उपनिषत्स्वपि कस्याश्चित् देवताव्यक्तेरप्यनुल्लेखात् , विचारः पुराणमात्र - विश्रान्तो दृश्यते । प्रसिद्धोपनिषत्सु सत्-ब्रह्मादिशब्दैः कारणतत्त्व-प्रतिपादनात् , **काश्चिदेवोपनिषदः सुबालोपनिषत् - महानारायणोप-निषत् - अथर्वशिखोपनिषत् - श्वेताश्वतरोपनिषत्-आत्मप्रबोधोपनिषत्-ब्रह्मबिन्दूपनिषत् - मैत्रायणीयोपनिषत् - मैत्रेयोपनिषत् - नृसिंहपूर्वता-**

**पिन्युपनिषत् - नृसिंहोत्तरतापिन्युपनिषत् - प्रभृतयः** प्रमाणत्वेनादृताः नारायणपरत्वस्थापनार्थम् । तथा **अथर्वशिखा - अथर्वशिरः - श्वेताश्वताराद्युपनिषत्सु** स्थूल - दृष्ट्या प्रतीयमान - शिवजगत्कारणत्वस्य विष्णुपारम्य्यप्रतिपादन एव तात्पर्यमिति प्रकाशयति । पुरुषसूक्तस्य सर्वैरंगीकृतस्य, भगवन् - मुखारविन्दात् उत्पन्नायाः भगवद्गीतायाश्च विष्णुपारम्य - प्रतिपादन एव तात्पर्यमिति महता प्रयासेन निरूपयति । गीताविचारावसरे अनुगीता च समालोचिता । असकृत् स्वगोष्ठ्यन्तर्गत - महाचार्याणां वेदान्तविजयाख्य-ग्रन्थादपि स्वोक्तार्थावष्टंभार्थं व्याख्याप्रकारश्च आदृतः ॥

विष्णुपारम्य - निरूपप्रवृत्तोऽयं ग्रन्थकर्ता भगवता रामानुजेन प्रदर्शितमेव मार्गं अनुसरति ॥

विदितमेवेदं विदुषां यत् — जिज्ञासाधिकरणे ब्रह्मशब्दार्थ - निरूपणावसरे ब्रह्मशब्दार्थं निरूप्य, **"स च सर्वेश्वर एव" इति** वदन् भगवान् रामानुजो ब्रह्मशब्दार्थस्य सर्वेश्वरे भगवति नारायण-एव उपसंहार इति वदति । **तथैव—अग्रेदं तत्त्वमिति प्रकरणे** — बृहदारण्यकेऽन्तर्यामि - ब्राह्मणे सामान्यतया श्रूयमाणस्य **आत्मशब्दार्थस्य** विशेषे नारायण एवोपसंहार इति, सुबालोपनिषत् - श्रुत्यनुसारेण निर्णयः कृतः ( चिदचितोः परमपुरुष-शरीरतया तन्नियाम्यत्वेन तदपृथक् सिद्धिः परमपुरुषस्य च **आत्मत्वेन** ) इति ॥

तथा परैरन्यथा व्याख्यातं लिंगभूयस्त्वाधिकरणं — तैत्तिरीय - दहर-विद्या - समनन्तर - श्रूयमाण नारायणानुवाकानुसारेण नारायणस्य सर्वपर-विद्योपास्यत्व-प्रतिपादन-परमिति च निरूपितम् । एतन्मार्गानुसारेण सद्ब्रह्मादि-शब्दवाच्यः नारायण एवेति महता प्रबन्धेन विवृतम् ॥

भगवद्गीता यद्यपि नारायणमुखारविन्दात् उद्गता, तथाप्यत्र बहुषु स्थलेषु ईश्वरब्रह्मादिशब्दानां दर्शनात् (पश्य मे योगमैश्वरम् — ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति — मयि सर्वाणि कर्माणि संन्यस्य — ब्रह्मण्याधाय कर्माणि ) गीतायाः, नारायणपरत्वे संशयमुद्घोषयतां पक्षोऽपि निरस्यते ॥

महाभारते आश्वमेधिके पर्वणि दृश्यमान - अनुगीता - प्रमाणेन भगवद्गीतायाः अन्यार्थं वर्णयतां मतमपि खण्डितम् । पुरुषसूक्तं यद्यपि नारायणपरमिति आपस्तम्बादिभिः निर्णीतं ( सहस्रशीर्षा पुरुष इति उपहितां पुरुषेण नारायणेन उपतिष्ठते ) अथापि पुरुष - शब्दस्य वेदादिषु बहुषु स्थलेषु शिवेऽपि प्रयोग-दर्शनात् पुरुषसूक्तं न नारायण-पारम्य - पक्षस्य प्रमाणं भवितुमर्हति इति वदतां वादा अपि दूरीकृताः ॥

वेदेषु यद्यपि विचारो न विस्तरेण कृतः; अथापि उभाभ्यां अपि वादिभ्यां वेदात् केचन अभिप्रायाः स्वस्वपक्षस्थापनार्थं आदृता दृश्यन्ते । **अजायमानो बहुधा विजायते** इति उत्तर-नारायणानुवाके पठ्यते । अत्र अजस्य नारायणस्य बहुधा जायमानत्वं वर्ण्यते । अत्रोत्पत्तिश्रवणात् नारायणस्यापि उत्पत्तिर्भवितुमर्हतीति कृत्वा नारायणस्योत्पत्तिमतः न पारम्यं वक्तुं युज्यत इति पूर्वपक्षिणो वदन्ति । परन्तु अयं ग्रन्थकर्ता अनेन वाक्येन श्रूयमाणमुत्पत्तिमत्त्वं अंगीकृत्य तादृशोत्पत्तेरवतार - परत्वं वर्णयित्वा नारायणस्य उत्पत्तिः न कर्मकृता, अपि तु स्वेच्छाकृता , यदि उत्पत्तिः कर्मकृता स्यात् तदैव परत्वस्य भङ्गः स्यादिति निरूपयति ॥

इदं च सुस्पष्टमेव यत् — वेदेषु रुद्र-शब्देनैव काचन देवता प्रतिपाद्यते न शिव-शब्देन । तथा विष्णु-शब्दश्च सुप्रसिद्धो मन्त्रब्राह्मणेषु देवताविशेष-प्रतिपादकत्वेन । अथापि शतरुद्रीये ' नमः शिवाय ' इति दर्शनात् रुद्रशिवशब्दयोः एकार्थत्वं वदन्तो शिवपारम्यवादिनः वेदेऽपि शिवपाम्यं वर्तत इति प्रतिपादयन्ति । तथा विष्णु - शब्दस्य नारायण - शब्देन एकार्थत्वं वदन्तो वादिनः नारायणशब्दवाच्यस्य विष्णोः पारम्यमेव वेदे प्रतिपाद्यत इति वदन्ति । नारायण - शब्दः शतपथब्राह्मण एव दृश्यते, नान्यत्र । अयं चात्र नारायणशब्दः केनचित् इतिहासेन संबद्धो दृश्यते । नारायण - शब्दस्य अत्रास्तित्वं अंगीकृत्यैव उभौ विवदेते । तथा अन्यस्मिन् इतिहासे रुद्र - संबद्धः कश्चन इतिहासोऽपि वर्तते । अत्रापि इतिहासास्तित्वं रुद्रशब्दस्य देवताविशेष - वाचित्वं

चांगीकृत्य स्वस्व - पक्षानुसारेण वादं कुर्वाते । यतोऽयं विषयः अत्यन्तमपूर्वः, अतस्तद्विवरणं कुर्मः ॥

शतपथ - ब्राह्मणे ( ६-१-३-१ ) अष्टमूर्तिब्राह्मणं अथवा कुमार-ब्राह्मणमिति किञ्चन प्रकरणं वर्तते । तत्र प्रजापतिना पृष्टो रुद्रः "अहं अनपहत-पाप्मा " इति वदति । ( अनपहतपाप्मा वा अहं अस्मि ) तथा अहीनपाञ्चरात्र-नामक - यज्ञसम्बन्धे नारायणः पञ्चरात्रयागमनुष्ठायैव सर्वाधिपत्यं प्राप्तवानिति प्रतिपाद्यते । पूर्वप्रकरणस्य वाक्यमादाय वैष्णवाः ब्रह्माऽसाधारणानपहतपाप्मत्वं रुद्रस्य नास्तीति वदन्तः तस्य परदेवतात्वं प्रतिषेधन्ति । तथा पञ्चरात्र-यागानुष्ठानानन्तरमेव सर्वलोकाधिपत्यं नारायणः प्राप्तवानिति श्रवणात् नारायणस्य आधिपत्यं कर्मकृतमिति वदन्तः शैवाः नारायणस्य परदेवतात्वं प्रतिषेधन्ति । एतद्विवृणुमः —— अग्निचयन - प्रकरणे पृथिवीपरिणाम - प्रकारं क्रमशः प्रतिपाद्य पृथिवीपर्यन्त-परिणामानन्तरं भूतानां भूतपतेश्च उत्पत्तिमुक्त्वा भूतानां पतिः उषसा पत्न्या साकं संवत्सराय दीक्षां कृतवान् । भूतानाञ्च पतिः उषसि रेतो असिञ्चत् । ततः कश्चन कुमारोऽजायत, सोऽरोदीत् । कुमार ! किमर्थं रोदिषि इति प्रजापतिः पप्रच्छ । तत्र अयं कुमारः अनपहतपाप्मा वा अस्मि अहितनाम नामधेहि इत्यब्रवीत् । तस्य प्रथमं रुद्र इति प्रजापतिः नामाकरोत् । ततः स्वस्य सर्वापेक्षया ज्यायस्त्वं मन्यमानो रुद्रः पूर्वनाम्नि असंतुष्टः पुनरपि नाम धेहीत्यब्रवीत् । ततः शर्वः इति नाम प्रजापतिरदात् । एवं **पशुपति-उग्र - अशनि - भव - महादेव - ईशान** - नामभिः प्रजापती रुद्रं भूषयामास । कुमार इति नाम नवमं चाकरोत् इति प्रतिपादितम् । उत्पत्त्या स्वस्य अनपहत-पाप्मत्वम् रुद्रोऽपि प्रथयति । अत्र श्रूयमाण-रुद्र-शब्दः न पुराण-प्रसिद्ध - रुद्र - परः । " **तान्येतानि अष्टावग्निः रूपाणि** " इति नाम्नां-अग्ने रूपत्वं सुस्पष्टमुक्तम् । तथा नामकरणेन पाप्मानां अपहतिश्च उच्यते । अथापि अनपहत - पाप्मत्वं रुद्रेणैव अंगीकृत - मिति-कृत्वात्र विचारः प्रवर्तते । पुराणेषु प्रसिद्धा रुद्रव्यक्तिः अन्यादृशी खलु ॥

तथा पुरुषमेध - प्रकरणे (१३-५-१-१) पुरुषेण नारायणेन पुरुषमेध - पञ्चरात्र - नामको यागो दृष्टः तेनायजता। तेनेष्ट्वा अत्यतिष्ठत् सर्वाणि भूतानि, स इदं सर्वमभवत् इत्युक्तम्। एतत्स्थलादन्यत्र नारायण-शब्दो न प्रयुक्तः। अतः नारायण-शब्देन किं प्रतिपाद्यत इति न ज्ञायते। अथापि कस्याश्चित् देवतायाः अयं प्रस्ताव इत्यंगीकारे नदोषं पश्यामः। पुरुषो ह वै नारायण इति नारायण-शब्द-विशेषणत्वेन पुरुष-शब्दः प्रयुक्तः। परन्तु पुरुष-शब्दस्य सर्वपुरुष-साधारणत्वात् अनेन पुरुष-शब्द - विशेषणेन किं लभ्यत इति न ज्ञायते। परन्तु अस्मिन् यागे पुरुषसूक्तस्य सम्बन्धोऽपि दृश्यते। पुरुष - सूक्ते जगत्कारणतत्त्वं पुरुषत्वेन वर्ण्यते। तदनुसारेण व्याख्याने, नारायणशब्दस्य पुरुषसूक्त - वाक्यस्य पुरुषेण संबन्धश्च वक्तुं शक्यते। ऋग्वेदीयसर्वानुक्रमण्यां पुरुषसूक्तस्य द्रष्टा नारायण इत्युक्तम्। यथा तथा वा भवतु। अत्र प्रमाणान्तर - प्राप्तमहिम्नो जगत्कारणीभूत - नारायणस्य वाच्यत्वम् अंगीकृत्यैव शिवपारम्य - वादिभिः दूषणं कृतम्। विष्णुपारम्य-वादिभिः समाधानं च कृतम्। परन्तु अयमितिहासः पुरुषमेधविध्यर्थवादे श्रुतः। अर्थवादानुसारेण विशिष्य इदमित्थमिति निर्णयः कर्तुं न शक्यत इति वैदिकैः अंगीक्रियते। एवमेव वेदान्त - प्रसिद्ध - ब्रह्मविषये, विष्णु-विषये च इतिहासाः सन्ति। ब्रह्म अभिजिन्नक्षत्रेष्टिं कृत्वा ब्रह्मलोकमजयत् इत्युच्यते। (ब्रह्म वा अकामयत ब्रह्मलोकम् अभिजयेयमिति। तदेतत् ब्रह्मणे ऽभिजिते चरुन्निरवपत्। ततो वै तद्ब्रह्मलोकमभ्यजयत् (तै॰ ब्रा॰ ३-१-२) तथा विष्णुरपि स्वदेवताकेष्टिं कृत्वैव पुण्यं श्लोकं श्रुतवान्। पापकीर्त्या अस्पृष्टोऽभवत् इति श्रूयते (विष्णुर्वा अकामयत पुण्यं श्लोकं शृण्वीय न मा पापी कीर्त्तिरागच्छेदिति, स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत् तै॰ ब्रा॰ ३-१-२) इति। एतादृशा इतिहासास्तत्तद्-त्तयाग - प्रशंसापराः। प्रशंसायां प्रवृत्तानि ब्राह्मणानि बहुधा वदन्तीति भगवता यास्केनापि सूचितम्। (बहु - भक्ति - वादीनि हि ब्राह्मणानि भवन्ति) अत्रोक्तं ब्रह्म वा तथा विष्णुर्वा न वादिभिः प्रमाणान्तरानुसारेण अंगीकृतं ब्रह्म,

विष्णुर्वा । परन्तु वेद-संप्रदायानुसारि-देवतात्ववन्त एव । देवताप्रशंसा-परेषु ब्राह्मणोक्तेतिहासेषु च देवतायाः शरीरादिकं अंगीकृत्यैव व्यवह्रियते । परन्तु इदं शरीरादिकं स्वाभाविकं वा अन्यार्थं आरोपितं वेति विचारावसरे जैमिनिना एतेषां अर्थवादत्व-प्रकटनेन, अन्यार्थत्वं स्थापितम् इति गम्यते । परन्तु ऐतिहासिकैः यथार्थत्वमेव स्वीकृतम् । सर्व - सत्यवादी भगवान् रामानुजोऽपि अर्थवाद - प्रतिपादितस्यापि सत्यत्वं - अंगीकृत्य स्वसिद्धान्तं निरूपयति । वेदार्थ-संग्रहे भगवतः शरीरादिसत्त्वे मन्त्रार्थवादा एव प्रमाणमित्युक्तम् । अतः रामानुज - मतानुसारिना अनेन ग्रन्थकारेण पूर्वोक्त - स्थलेषु विग्रहादिमद्देवतैव प्रतिपाद्यत इति अंगीक्रियते ॥

तथा सर्वैरपि प्रतिदिनं कालत्रयेऽपि जप्यमानो गायत्री - मन्त्रः सवितृ-देवताकत्वेन ऋग्वेदे वैश्वामित्रमण्डले (३-६२-१०) पठ्यते । अथापि तन्मन्त्रस्य अन्यादृशं प्राधान्यं वर्तत एव । अत एव प्रतिदिनं सर्वैः जप्यते । तत्रापि शिव - विष्णु - पारम्य - वादिनस्तन्मन्त्र - प्रतिपाद्यार्थे महान्तं विचारं कुर्वन्ति । अयं मन्त्रो विष्णु - पर इति वैष्णवाः, तथा शिव - पर इति शैवाश्च वदन्ति । प्राचीनैः अस्य मन्त्रस्य व्याख्याने महान् परिश्रमः कृतः । स्मृतिषु तथेतिहास पुराणेष्वेतन्मंत्र — विवरणात्मकानि बहूनि वचनानि सन्ति । तत्रैव अस्य मन्त्रस्य विष्णुपरतया शिवपरतया च व्याख्यानस्य आरम्भः कृताः । परन्तुः विष्णु - शिवपारम्यवादिनौ उभावपि कस्य पक्षस्य साधुत्वम् कस्य पक्षस्या-साधुत्वमिति विवादे प्रवृत्तौ दृश्येते ॥

तथा ब्रह्मसूत्रकाराः जगत्कारणभूत - ब्रह्मतत्त्व - निरूपणे प्रवृत्ताः । परन्तु तत्र सांख्यादय एव प्रतिवादिनः । अत्र न शिव-विष्णु-पारम्य-विषये कश्चन विचारः कृतः । यद्यपि ब्रह्मसूत्रस्य वेदोक्त - देवता - तत्त्व - निर्णये न प्रवृत्तिः, ब्रह्म - शब्दार्थ - निरूपण एव नैर्भर्यं पश्यामः । अथापि अचेतन - प्राकृत - तत्त्वानां अभिमानि - देवता काचन वर्तत इति तैरंगीक्रियते । (अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां २-१-५) तथा इतिहास -

पुराणोक्तरीत्या देवान् देवलोकं च अंगीकुर्वन्ति । कर्म विषयेऽपि तादृश-देवता - प्रसादादेव फलोत्पत्तिर्भवतीति च तैः प्रतिपादितम् । ( फलमत उपपत्तेः ३-२-३८ )। अत्र जैमिनिना नेदमङ्गीकृतमित्यपि तत्रैव सूचितम् । धर्मं जैमिनिरत एव ३-२-३९ )। ब्रह्मसूत्रस्य सद्ब्रह्मादि-शब्दार्थ - निरूपण एव तात्पर्यमिति सर्वसंप्रतिपन्नम् । परन्तु वादिनावुभावपि स्वस्व - सिद्धान्तानु-सारेण अर्थं वर्णयन्तौ अन्यतर - पारम्य - प्रतिपादन एव ब्रह्मसूत्रस्यापि तात्पर्य-मिति निरूपयन्तौ विवदेते ॥

सर्वेषामपि वचनानां प्रामाण्यमङ्गीकृत्य, तद्व्याख्यायामेव वादिनो विवदन्ते । परन्तु अन्यतरपारम्यनिर्णयो नानुष्ठाने किमपि भेदं जनयितुं शक्नोति । श्रुतिस्मृतिविहितकर्मसु कल्पसूत्राणामेव प्रमाणत्वात्, कल्पसूत्रेष्वन्यतरपारम्य-चर्चाया एवानुल्लेखात् ॥

एतादृश - ग्रन्थकरणस्य किं मूलमिति विचारे बहवः विषयाः समा-पतन्ति । उभाभ्यां वादिभ्यां वेदप्रामाण्यं तथा स्मृतीतिहासपुराणानामपि प्रामाण्यं चाङ्गीकृतम् । अथापि शिवपारम्यविषये वा विष्णुपारम्यविषये वा वेदेषु विचारस्य न अतीव अवकाशः वर्तते । कुतः ? तत्र शिवस्य विष्णोश्च देवतान्तर - साधारणं देवतात्वमेवास्ति । न तयोर्मध्येऽन्यतरस्य उच्चनीच-भावावकाशः । अथापि इतिहासपुराणेषु सृष्टिस्थितिसंहाराख्य - कार्यनिर्वाहार्थं मूर्तित्रयकल्पनं कृतम् । सृष्टिकर्तृत्वेन ब्रह्मा प्रतिपादितः, तथा स्थिति-कर्तृत्वेन विष्णुः, संहारकर्तृत्वेन शिवश्च । परन्तु उपनिषत्सु एकस्यैव तत्त्वस्य ब्रह्मणः सृष्टिस्थितिसंहारकर्तृत्वमुक्तम् । भृगुवल्ल्यां श्रूयमाण इतिहासे अयमर्थस्सुस्पष्टः । वरुणः ब्रह्मलक्षणोपदेशकाल एवं वदति । यतः वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्ति अभिसंविशन्ति, तद्ब्रह्मेति [ यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति । तद्विजि-ज्ञासस्व तद्ब्रह्मेति । ] एतदनुसृत्यैव ब्रह्मसूत्रकाराः व्यासाचार्यपादाः स्वकीये ब्रह्मसूत्रे जन्माद्यधिकरणे जन्मस्थितिलयकारणत्वं एकस्यैव तत्त्वस्य वदन्ति ।

[ जन्माद्यस्य यतः । १-१-२ ] परन्तु पुराणेषु त्रयाणामेषां कर्मणां एकस्थत्वे विरोधं पश्यन्तः मूर्तित्रयकल्पनं कृतवन्त इति ज्ञायते । व्यासाचार्यपादानां अष्टादशपुराणकर्तृत्वात् कथमिमं विभागं ते सहन्त इति न जानीमः । अथापि पुराणेषु मूर्तित्रयकल्पनवत् त्रिमूर्त्यतीत-तत्त्वस्याप्यङ्गीकारात् कथञ्चित् सामञ्जस्य कल्पनस्यावकाशो वर्तत एव । अथापि त्रिमूर्त्यतीत-तत्त्वस्य शिवत्वं वा विष्णुत्वं वा इति तत्रापि विचारो भवत्येव । पुराणेष्वपि कानिचित् विष्णुपारम्य्यवादीनि, कानिचित् शिवपारम्य्यवादीनि । तथा कानिचिद्वचनानि शिवविष्ण्वोरभेदं च प्रतिपादयन्ति । क्वचित् विष्णुना शिवस्तवः क्रियते, तथा क्वचित् शिवेन विष्णुस्तवश्च । तथा विष्णु - शिव - शब्दानां देवताविशेषे रूढत्वेऽपि योगार्थ-प्रतिपादनेन शिवसम्बन्धिस्तोत्रे विष्णुशब्दतत्समानार्थकशब्दानां प्रयोगस्तथा विष्णुसम्बन्धिस्तोत्रे शिवशब्दतत्समानार्थकशब्दानां प्रयोगश्च वर्तते । विष्णु-सहस्रनामस्तोत्रं एकमेवात्रोदाहरणाय पर्याप्तम् । विष्णुगुणकीर्तनार्थं प्रवृत्ते अस्मिन् स्तोत्रे "**सर्वः शर्वः शिवः स्थाणुः**" इति प्रसिद्धशिवनामभिः विष्णु-र्विशेषितः । अतश्च अन्यतर - पारम्य्यनिरूपणं न सहसा विचारमन्तरा कर्तुं शक्यते । अतो विचारकाले मीमांसान्यायाः, निर्णयार्थं उभाभ्यामपि वादिभ्यां उद्धृताः वर्तन्ते । मीमांसान्यायस्य वाक्यशास्त्रत्वात् तदनुसारेण अर्थनिर्णयार्थं उभे अपि प्रयतेते । शिवपारम्य्यं विष्णुपारम्य्यं वा यदि स्वकीयदर्शनानुसारेण निरूप्येत तदा विचारस्य अवकाश एव न भवेत्, दर्शनभेदस्य स्वाभाविकत्वात् । तथा प्रमाणवचनेषु यदि च शिव - विष्णुतत्त्वयोरन्यतरस्यैव उल्लेखनं स्यात्, तदाऽपि विचारावकाशो न स्यात् ॥

यदा वादिनः स्व-दर्शनस्य प्रामाणिकत्वं प्रकटीकर्तुं सर्वसम्मत-प्रमाण-ग्रन्थान् स्वपक्षसाधनार्थं उद्धरन्ति तदैव क्षोभो भवति । तथा स्वपक्षस्थापनेन यदि ते विश्रान्ता भवेयुः, तदाऽपि न क्षोभस्यावकाशः । परन्तु, परपक्ष-निराकरणपूर्वक - स्वपक्षस्थापनस्यैव न्यायवित्सम्मतत्वात् प्रतिपक्षखण्डनमपि आवश्यकं भवति । अतश्च विचारपूर्वक निर्णयस्यैव साधुत्वमङ्गीकृत्य वादिभिः विचारः क्रियते । अस्मिन् ग्रन्थे प्रारम्भ एव एवं लिख्यते । "इह खलु

भगवान् बादरायणः परमकारुणिकः परमपुरुषार्थार्थिजनानुजिघृक्षया मानान्तरागोचरं वेदान्तैकवेद्यं परं ब्रह्म "जन्माद्यस्य यतः" इति सूत्रेण "यतो वा इमानी"त्यादिश्रुत्यर्थाविष्करणमुखेन निर्धारयाञ्चकार जगत्कारणं ब्रह्मेति । स च को देवः इति संशये .... .... एकैकवाक्यपर्यालोचनसन्तुष्टाः ते ते वादिनः शिव - हिरण्यगर्भादिषु अन्यतरस्य परत्वमाहुः — श्रीमदाचार्यास्तु सर्वशाखाप्रत्ययन्यायेन एकार्थविषयत्वावश्यम्भावेन छागपशुन्यायेन सामान्यशब्दस्य विशेषे पर्यवसानात् सच्छब्दस्य बृहदबृहत्साधारणस्य ब्रह्मशब्दाभिहिते विशेषे, तस्य च चेतनाचेतनसाधारणतया उपयुज्यमानस्य आत्मशब्दाभिहिते विशेषे, तस्यापि जीवपरसाधारणस्य नारायणशब्दाभिहिते च विशेषे तात्पर्यं कल्पन्ते । तस्य च जातिशब्दत्वाभावात् अनेकार्थत्वाभावाच्च विशेषणशब्दमूर्धन्यत्वात् तेनैव इतरेषां शब्दानां विशेषे निर्धारणं युक्तम् । अनेन एतत् ज्ञायते । उपनिषत्सु श्रूयमाणः सच्छब्दः सामान्यः, ततोऽपि ब्रह्मशब्दो विशेषः, ब्रह्मशब्दोऽपि सामान्यः, अतोऽपि आत्मशब्दो विशेषः, सोऽपि सामान्यः, तादृशशब्दस्य नारायणशब्दाभिहिते विशेषे तात्पर्यं कल्प्यते इति । प्रायः इयमेव रीतिः शिवपारम्यवादिभिरपि अङ्गीकृता दृश्यते । परन्तु नारायणशब्दस्य अथवा शिवशब्दस्य कुत्र वा रूढिरिति वादिभिरेव निर्णेतव्यम् । भवति अत्र च तत्तन्मतमेव प्रमाणम् । नान्यत्किञ्चन । इदं तावदवश्यं ज्ञातव्यम्, ऋग्वेदे अग्नीन्द्रसोमादिशब्दाः देवता तत्वप्रतिपादनार्थं निर्दिष्टाः । अत्र दशसहस्राधिकऋक्षु अग्नेः इन्द्रस्य च किञ्चिन्यूनषट्सहस्राधिकऋचः वर्तन्ते । सोमस्य सहस्राधिकऋचः, अन्येषां पुनः उषाविष्णुरुद्रादीनां शतपरिमितसंख्याका एव ऋचो दृश्यन्ते । यद्यपि मन्त्रसंख्यानुसारेण देवतायाः न्यूनत्वं अधिकत्वं वा वक्तुं न शक्यते । मन्त्रसंख्या संहिताकाराणामेव अभिप्रायं प्रकटयति न ऋक्मन्त्रद्रष्टॄणाम् । अथापि ऋग्वेदे या या देवताः प्रतिपादिताः ता एव तैरेव शब्दैः कर्मसु देवतात्वेन गृह्यन्ते । परन्तु अग्नीन्द्रादिशब्दाः न वेदेष्वेव एव दृष्टाः, अपि तु इतिहासपुराणेष्वपि । परन्तु इतिहासपुराणादिषु दृश्यमानाः देवाः परिमितशक्तिमन्तः उपास्यदेवतात्वेन ग्रहीतुं

योग्याः । ऋग्वेदे परं श्रूयमाणाः अग्नीन्द्रादिशब्दवाच्याः यागोद्देश्याः देवताः सर्वज्ञाः सर्वशक्तियुक्ताः । अतो महानयं विषयः समायाति यत् वेदानुसारेण पुराणदेवतानां व्याख्या वा पुराणानुसारेण वेदस्थदेवताशब्दानां व्याख्या वा इति ॥

श्रुतेः प्रबलत्वात् श्रुत्यर्थानुसारेणैव स्मृतिभूत-इतिहासपुराणस्थदेवता-वाचिशब्दानां अर्थवर्णनं युज्यते । यद्यपि "इतिहासपुराणाभ्यां वेदं समुप-बृंहयेत्" इति वचनेन इतिहासपुराणानुसारि अर्थवर्णनमेव युज्यत इति प्रतिभाति । अथापि कस्मिन्नंशे पुराणादीनां उपबृंहणत्वं इति विचारे अविरुद्धांशे एव उपबृंहणावकाशः वक्तुं शक्यते, न विरुद्धांशेषु । वेदोक्तधर्मादीनां उपबृंहणे चरितार्थस्यास्य प्रमाणस्य न देवतातत्वोपबृंहणविषयत्वं अङ्गीकर्तुं शक्यते । विरोधाधिकरणन्यायेन यदि वेदोक्तो अर्थः पुराणोक्तार्थेन विरुध्यते तदा स्मृतिभूतपुराणोक्तार्थत्याग एव न्याय्यो भवति । अथवाऽन्यपरत्वं वक्तव्यं। वेदेषु प्रयुक्ता अग्नीन्द्रादिशब्दाः सर्वज्ञं सर्वशक्तिमन्तं तत्वं देवतात्वेन वदन्ति । इतिहासपुराणेषु श्रूयमाणाः देवाः असर्वज्ञाः असमर्थाश्च । अतश्च इतिहास-पुराणोक्तशब्दार्थत्वेन ग्रहीतव्याः देवताः न वेददेवताः; अपि तु विजातीया एव इतिहासस्वरूपसम्पादनार्थं कल्पिताः इत्यपि वक्तुं शक्यते । भगवान् जैमिनिरिममर्थं मनसि निधायैव 'परन्तु श्रुतिसामान्यात्' इति वदति । अत एव भगवता यास्केन, स्वकीये निरुक्ते ऐतिहासिकपक्षेण वेदस्य व्याख्यानं मतान्तरत्वेन सूचितम् । वृत्रशब्दव्याख्यानावसरे इन्द्रवृत्रयुद्धवर्णनं ऐति-हासिकानां पक्षं मतान्तरमिति निर्दिशति । (अथ को वृत्रः, मेघ इति नैरुक्ताः, त्वाष्ट्रः असुर इति ऐतिहासिकाः) अतः इतिहासानुसारेण वेदार्थवर्णनस्य पृथग्मतत्वेन निर्देशात् इतिहासपुराणानुसारेणैव वेददेवतातत्वव्याख्यानं कर्तव्यमिति न निर्बन्ध इति दृश्यते । तथा जैमिनिरपि स्वकीयमीमांसाशास्त्रे विग्रहवद्देवताः नाङ्गीकरोतीत्येतत्प्रसिद्धमेव । वेदानां इतिहासपुराणैः यदि सम्बन्धो न स्यात् नात्र देवतातत्वविचारो भवेत् । इतिहासपुराणानि हि वेदार्थविशदीकरणार्थमेव वयं प्रवृत्तानि इति वदन्ति [ वेदोपबृंहणार्थाय ताव-

व्यासयत प्रभुः। वेदोपनिषदां सारात् जाता भागवती कथा ] अतश्च इतिहास-पुराणानि वेदव्याख्यानत्वेनैव अङ्गीकृतानि। व्याख्येयभूतवेदार्थे सन्देहे सत्येव व्याख्यानानुसरणं सम्भवति। न हि व्याख्यानं एव निर्णायकं भवितुमर्हति। अतश्च बहुषु वेदव्याख्यानपक्षेषु पुराणरीत्या व्याख्यानं एकमेव पक्षं प्रकाशयेत्। नान्यव्याख्यानं प्रतिक्षिपेत् ॥

अत्रेदं विचार्यते। अन्यमतेषु देवतातत्वं सुस्पष्टमेव तत्तन्मतग्रन्थैः प्रतिपाद्यते। मूलभूतदेवतातत्वे विचारावसर एव न दृश्यते। परन्तु कथमिति वैदिकमते परं एवंविधविचारस्य अवकाशः भवति इति अवश्यं चिन्तनीयम्। ऋग्वेदे प्रतिपाद्यमानाः देवताः प्राकृततत्वापेक्षया अतिरिक्ताः (अप्राकृताः) अथवा प्राकृततत्वादनतिरिक्ता वा इति विचारावसरे उपास्यत्वेन ज्ञानशक्तिमतां देवतानामेव अङ्गीकारार्हत्वात् न जडानां प्राकृतवस्तूनां देवतात्वं भवितुमर्हति। परन्तु कथं अग्निसोमसूर्यादिप्राकृततत्ववाचिशब्दपुरस्कारेण देवताः स्तूयन्ते इति चिन्तायां प्राकृतवस्तुद्वारा देवतायाः स्तवः क्रियते इत्येकः पक्षो भवति। अन्यः पक्षः पुनः सर्वज्ञत्वसर्वशक्तिविशिष्टदेवताया एव उपास्यत्वं इति। परन्तु प्राकृतवस्तुतत्स्वरूपस्वभावनिरूपकपदानां अन्यपरत्वमेव वर्णनीयं भवति इति। अयमेव पक्षः जैमिनिनाऽप्यङ्गीकृतः। यद्यपि देवता-बहुत्वं स्थूलदृष्ट्या युक्तमिति प्रतीयेत। अथापि सूक्ष्मेक्षिकया विमर्शने नायं पक्षस्समीचीनः इति प्रतिभाति। देवतातत्वस्य एकत्वं ऋग्वेदे एव सुस्पष्ट-मङ्गीकृतम्। [य एको अस्ति दंसना, स्वधया तदेकं — यो देवानां नामधाः एक एव ] अतो ज्ञायते एकमेव देवतातत्वं बहुभिः नामभिः व्यवह्रियत इति। ऋग्वेदे एव सुस्पष्टं अयमर्थः विवृतः, एकं सद्विप्रा बहुधा वदन्तीति। दशमे मण्डले अतिस्पष्टतया अयमर्थः उक्तः। एकत्वमेव देवतायाः न बहुत्वं, एकत्वं स्वाभाविकं बहुत्वं काल्पनिकमिति। [कवयो वचोभिरेकं सन्तं बहुधा कल्प-यन्ति ] एतादृशैकदेवतातत्वस्य किं लक्षणमिति ऋग्वेदादपि ज्ञातुं शक्यते। जगत्स्रष्टृत्वं जगद्धारकत्वं जगद्रक्षकत्वं इत्यादिकं देवतातत्त्वनिरूपणावसरे तत्र तत्र प्रतिपाद्यते। तथा सृष्ट्यनन्तरं देवतातत्वस्य स्वसृष्टवस्तुषु अन्तः

प्रवेशश्च प्रतिपाद्यते । [अक्षरान् आविवेश] परन्तु एतादृशदेवतात्वं पुरस्कृत्यैव अग्नीन्द्रादयः सर्वा अपि स्तूयन्ते । अनेन ज्ञायते देवतात्वं परमेकमेव । परन्तु तादृशदेवतात्वं तत्र तत्र पुरस्कृत्य स्तुवन्ति इति । एतादृश-सूक्ष्मदर्शनाभावेन पाश्चात्यविमर्शकाः अस्मिन् विषये भ्रमन्ति - कथं वा सर्वा अपि देवताः जगत्स्रष्ट्र्यो भवेयुरिति । एतादृशदेवतातत्वं ब्राह्मणभागेषु प्रजापति-शब्देन निर्दिष्टम् ॥

उपनिषत्सु सद्ब्रह्म-आत्मादिशब्दैः निर्दिष्टम् । परन्तु इतिहासपुराणेषु विष्णुशिवादिशब्दैर्निर्दिष्टम् । कथं वा वैदिकं मार्गं विहाय इतिहासपुराणेषु शिवस्य विष्णोर्वा प्राधान्यं कल्पितमिति विचारणीयमेव भवति । इतिहासपुराणेषु त्रिमूर्तीनां सृष्टिस्थितिसंहारकर्तृत्वं विभज्य दत्त्वा पुनः तत्र सङ्कुचितं अधिकार-दोषं विभाव्य त्रिमूर्त्यतीततत्वं किञ्चन अङ्गीकृत्य तस्यैव जगत्सृष्ट्यादिकर्तृत्वं अङ्गीकृतं तादृशमूलतत्वावतारभूतत्रिमूर्तिषु सृष्ट्यादिविभागश्च कृत इति यदि देवताः बह्वयःस्युः तदैव कस्याः पारम्यं कस्या वा अपारम्यमिति विचारो भवेत् । वेदेषु देवताबाहुल्यस्यादर्शनात् कस्योत्कृष्टत्वं कस्य वापकृष्टत्वं इति विचारावकाश एव नास्ति । कर्मदेवतात्वेन, प्रतिपादनावसरे अग्नीन्द्रादिदेवानां विष्णोश्च साधा-रण्यमेव अङ्गीकृतम् । अतश्च कर्मस्वपि न उत्कर्ष - अपकर्षावकाशः । सर्वोऽपि विचारः एतद्ग्रन्थस्थः पुराणमात्रविश्रान्तः दृश्यते । यतः बह्वयः देवताव्यक्तयः तत्राङ्गीकृताः, अतश्च बह्वीनां मध्ये कस्या देवतायाः पारम्यमिति चर्चा अपि भवति । अस्मन्मतग्रन्थेषु स्मृतिषु देवतातत्वविषये न अतीव विचारः कृतः । ब्रह्मसूत्रे ब्रह्मशब्दार्थविचारः तदुपासनविचारश्च दृश्यते । दार्शनिकसूत्रेषु तत्तद्दर्शन-सम्बन्धिविचारा एव दृश्यन्ते । नात्र वेदे प्रतिपाद्यमाना देवता का? इति विचारः कृतः । अतः इतिहासपुराणानुसारेण शिवव्यक्तेः विष्णुव्यक्तेर्वा प्राधान्यं ये अङ्गीकुर्वन्ति तेषां मतानुसारेणैव शिव - विष्णुपारम्यप्रतिपादकानां वचनानां ऐककण्ठ्यसम्पादनार्थं विचारावकाशः प्रसज्यते । यदि च मतभेदेन देवताभेद-मङ्गीकृत्य अत्र विचारः क्रियेत, तर्हि द्वयोरपि मतयोः समञ्जसत्वसंभावनया क्षोभ एव न स्यात् ॥

परन्तु वादिनः उभयपक्षीया अपि परस्परविरुद्धानां वचनानां ऐकमत्य-संपादनाय सर्वशाखाप्रत्ययन्यायेन एकार्थत्वप्रतिपादने प्रवृत्ताः स्वोक्तार्थ एव वेदतात्पर्यभूतः नान्योक्तः इति विस्रंभेण वदन्ति ॥

देवतातत्वविचारावसरे एते वक्ष्यमाणा अपि विषयाः अस्मच्चिन्तनामाकर्षन्ति । यद्यपि ऋग्वेददेवतातत्वं सुस्पष्टं, अथापि कैश्चिन्महर्षिभिः तत्र विचारः कृतो दृश्यते । बृहदारण्यके शाकल्ययाज्ञवल्क्यसंवादे अयं प्रश्नस्समागतः । 'कत्येव देवा याज्ञवल्क्य' इति शाकल्येन पृष्टम् । याज्ञवल्क्येन त्रयस्त्रिंशदधिकत्रिशताः तथा त्रिसहस्राः देवाः इति प्रत्युक्तम् । असन्तुष्टश्शाकल्यः पुनरपि इममेव प्रश्नं कृतवान् 'कत्येव देवा याज्ञवल्क्य' इति । याज्ञवल्क्यः पूर्वोक्तसंख्यान्यूनसंख्यां देवतानां अवदत् । एवं बहुवारं आम्रेडिते प्रश्ने यदा त्रिसंख्या आगता तदा शाकल्येन पुनरपि कति देवाः इति प्रश्नः कृतः । याज्ञवल्क्यः त्रिसंख्यायाः अर्धभूतां अध्यर्ध-संख्यां प्रतिवचनत्वेन प्रकटीकृतवान् । एतच्छ्रुत्वा शाकल्यो विरराम । को वा अभिप्रायः अत्र इति विमर्शने अध्यर्धशब्दः लोकातीत - एकदेवतायां पर्यवसन्नः । अत ऊर्ध्वं प्रश्नावकाश एव नासीत् । वेदेषु श्रूयमाणं देवताबाहुल्यं एकदेवे एव पर्यवस्यतीति निर्णयस्सञ्जातः । परन्तु अत्रैव वसुरुद्रादि-शब्दानां देवतावाचकानां शब्दानां विमर्शनकाले आध्यात्मिकपरतया तेषां शब्दानां अर्थवर्णनं कृतम् । किञ्च देवतातत्वविचारावसरे त्रयो ग्रन्थाः अस्माकं पुरस्तात्तिष्ठन्ति । जैमिनेः मीमांसाशास्त्रं, सङ्कर्षदेवताकाण्डं, तथा यास्कनिरुक्तञ्च । एतेषु त्रिषु ग्रन्थेषु वेदार्थविचारावसरे देवतातत्व-विचारः प्रसक्तः । तत्र जैमिनिः अन्यादृशं देवतातत्वमङ्गीकरोति । नास्या देवतायाः रूपं वा निग्रहानुग्रहशक्तिर्वा अस्ति । परन्तु यागस्वरूप-सम्पादनार्थं अङ्गीकृततत्वस्यैव देवतात्वं इति वदति । यद्यपि संकर्षकृतो ग्रन्थः उत्सन्नः । अथापि तत्र तत्र उदाह्रियमाणवचनानुसारेण ज्ञायते अयं ग्रन्थः तत्तद्यागेषु का देवता इति विचारार्थं प्रवृत्तः इति । परंतु यास्कः स्वकीये

निरुक्ते देवताकाण्डे विस्तरेण वेददेवतातत्वं विचारयति । अनेनऋग्वेद-देवता: सर्वा अपि समाहृत्य ता: त्रेधा विभज्य अग्नीन्द्रसूर्यत्वेन, तासां पृथिवी-अन्तरिक्षद्युस्थानानि च कल्पितानि । सुप्रसिद्धविष्णो: रुद्रस्य च वेदमार्गेणैव स्थानं कल्पयति । विष्णो: द्युस्थानं रुद्रस्यान्तरिक्षस्थानञ्च दत्तम् । अग्नीन्द्र-सूर्यादितत्वानां भौतिकत्वं अङ्गीकृत्यैव देवतात्वमपि यास्क: प्रतिपादयति । भौतिकस्य पदार्थस्य देवतात्वाभावं मनसि निश्चित्य भौतिकत्वपुरस्कारेणैव देवता-तत्वं वर्णयति । तासां सर्वशक्तिमत्त्वं सुस्पष्टमेव प्रतिपादयति । (आत्मा सर्वं देवस्य)

देवतानां आकारो अस्ति वा न वा इति पूर्वपक्षसिद्धान्तरूपेण विचार्य अन्तत: उभयमपि तेनाङ्गीकृतम् (७-७) आकारवत्त्वं तथा तदभावश्च । आकाराभाव: स्वाभाविक आकारवत्त्वं कल्पितमिति वदति । किंच देवतातत्व-विचारावसरे अन्यत् इदमवशिष्यते । यश्च प्रसिद्धदेवशब्दार्थविषयो विचार: । देवशब्द: न किञ्चिदपि तत्वं व्यक्तिं वा वदति । परन्तु अस्य शब्दस्य महत्प्राधान्यं वर्तते इति ज्ञायते । तत्र तत्र देवताशब्दप्रयोग एव तत्र निदर्शनम् । अनेन न काऽपि व्यक्तिरुल्लिखिता वर्तते । देवशब्दनिर्णयाधीन-स्तल्लोकनिर्णय: । वेदेष्वेव देवशब्द: एकवचनान्त: बहुवचनान्तश्च प्रयुक्त: । परन्तु कस्स: इति वा के ते इति वा वक्तुं न शक्यते । परन्तु अग्नीन्द्रादितत्वं देवतात्वेनैवाङ्गीक्रियते । अतश्च देवशब्द: किञ्चित्तत्व-प्रतिपादक एव, न व्यक्तिविशेषे विश्रान्त इति ज्ञायते । विष्णोश्शिवस्य वा महिमप्रतिपादनावसरे देवशब्द: प्रयुक्त: । विष्णुर्देव: रुद्रो देव इति । अन्यच्च पुराणेषु विष्णोश्शिवस्य च देवेषु आधिपत्यञ्च दत्तम् । देवानां स्थानविशेष: (देवलोक:) स्वरूपस्वभावविशेषाश्च महताऽऽडम्बरेण विवृता: । एतादृशदेवेष्वेव अग्नीन्द्रादीनां अन्तर्भावश्च कृत: ।

परन्तु किं कारणं पुरस्कृत्य अरूप-अनाम-देवतत्वस्य रूपनामादिकं कृतमिति न वयं जानीम: ।

इतः परं एतद्विचारणीयमवशिष्यते। किमिति युक्त्या निर्णयः क्रियते इति। सर्वेष्वपि मतेषु स्वस्वतत्वप्रतिपादनं विचारं विनैव क्रियते। अस्मिन् मते परं किमिति तत्वनिर्णयार्थं विचारः क्रियते। विचारैः तत्वनिर्णयः कर्तुं शक्यते इति न केनापि प्रतिज्ञातुं शक्यते। विचारः विद्वन्मात्रविश्रान्तः। परंतु तत्वं सर्वजनापेक्षितम्। देवतातत्वे विश्वासः तथा देवतातत्वप्रीत्यर्थं कर्माणि च सर्वैरपि अङ्गीक्रियन्ते। जनानां विश्वासः परम्पराप्राप्तः विद्वद्भिः स्वसामर्थ्येन अन्यथाकर्तुं अकर्तुं वा न शक्यते। अतश्च किमर्थमेतादृश-विचारः क्रियते इति ज्ञातव्यमेव। प्रायः अस्मन्मते सर्वेष्वपि प्रतिष्ठितेषु विषयेष्वपि विचारं कुर्वन्ति विद्वांसः। विचारस्य किं प्रयोजनमिति प्रश्ने ज्ञान-वैशद्यमेव प्रयोजनमिति ते वदन्ति। परंतु नेदं ज्ञानवैशद्यसंपादनं सर्वजन-साधारणम्। विचारेण वैशद्यसंपादनं विद्वन्मात्रे विश्राम्यते पुनः विचारमन्तरेणैव परंपराप्राप्तविश्वासेनैव कर्मादिकं अनुतिष्ठन्ति। तेषां विचारः नोपकरोति। अथापि विचारः नावश्यकः इति न केनापि वक्तुं शक्यते। बुद्धिवैशद्यमपेक्षमाणानां विदुषां विचारस्यापेक्षितत्वात्। अतः **विश्वासः विचारश्च** न विरुध्यते परस्परम्। भिन्नविषयत्वात्। वेदान्ततत्वनिर्णये विचारस्यातीव अवकाशो वर्तते। यतस्तत्र कस्याप्यप्रतिष्ठितत्वात् विचारेणैव निर्णेयत्वात् अतस्तत्र विचारे न दोषः। परंतु सुप्रतिष्ठितदेवतातत्वविषये तथा अनुष्ठानविषये च विचारः उत्साहजननार्थमेव भवति। अत एव मनुनोक्तं—

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥' इति।

नहि विचारेण सन्ध्यादिकं कर्तव्यं इति निर्णेतुं शक्यते - अपितु सन्ध्यावन्दन-तत्वमङ्गीकृत्य मूलहानिं विना विचारकरणे न दोषः इति मनुः अभिप्रैति। विचारं विना विदुषां मोदो न भवेत्। अत एव दीधितिकृता रघुनाथ-शिरोमणिना 'प्रत्यक्षसिद्धमप्यर्थं अनुमानेन बुभुत्सन्ते तर्करसिकाः' इति उक्तम्। एतच्च लौकिकविषये समंजसं भवति। परन्तु अलौकिकविषये नेदं

संगच्छेत । विचारविषयस्य सर्वथा अलौकिकत्वात् । मततत्वविषयः युक्त्यैव स्थापयितुं शक्यत इति वावदूकाः वदन्ति । युक्त्या सर्वमपि साध्यते इति विद्वद्भिरपि उद्घुष्यते । अस्मन्मते विदुषामेव वावदूकानां प्राधान्यदर्शनात् युक्त्या सर्वं स्थाप्यते इति बहोः कालात् पूर्वमारब्धः अयं प्रवादः इदानीमपि वर्तते । प्रसिद्धदार्शनिकेषु विना वेदान्तिनः बौद्धादयस्सर्वेऽपि युक्त्यवलम्बेनैव स्वस्वसिद्धान्तं स्थापयन्ति । चार्वाकः प्रत्यक्षमेकमेव प्रमाणं अङ्गीकरोति । प्रत्यक्षातिरिक्तस्य न कस्याप्यर्थस्य प्रामाण्यं वर्तते इति तस्याभिप्रायः । अन्येषु बौद्धजैनसांख्यन्यायवैशेषिकदर्शनेषु युक्तेरेव प्राबल्यमङ्गीकृतम् । बौद्धादयः युक्तिशरणा एव स्वार्थं स्थापयन्ति । सांख्याः मूलप्रकृतेः तथा जीवस्य च आनुमानिकत्वमेव अभ्युपगच्छन्ति । तार्किकाः ईश्वरस्यापि अनुमेयत्वं वदन्ति । एतेषां युक्त्या सर्वार्थसाधनं कर्तुं शक्यते इति धैर्यमपि वर्तते । वेदान्तिनः पुनः युक्त्या न किमपि स्थापयितुं शक्यते इति निश्चित्य शब्दप्रमाणशरणा एव स्वपक्षं स्थापयन्ति । ब्रह्मसूत्रकारेण 'शास्त्रयोनित्वात्' (१-१-३) इति शब्दप्रमाणकत्वं जगत्कारणस्य ब्रह्मणः उक्तम् । युक्तेरस्थिरत्वात् तदवलम्बनेन अर्थनिर्णयः न साधीयानिति एषामाशयः । परन्तु शब्दार्थनिर्णयविषये युक्त्यवलम्बनं तेषामप्यावश्यकं भवति । यतः शब्दार्थनिर्णयविषये प्रमाणान्तरवचनैः निर्णेतव्ये न्यायावलम्बनं अगत्या अङ्गीकर्तव्यं भवति ।

अतएव वेदान्तिनोऽपि परस्परं शब्दार्थनिर्णयेऽपि विवदन्ते । ब्रह्मसूत्रकारा अपि अन्यदर्शनखण्डनकाले "नेतरोऽनुपपत्तेः" "अनुपपत्तेस्तु न शारीरः" इति युक्तिमेव प्रदर्शयन्ति । परन्तु स्वमतप्रदर्शनकाले शब्दप्रमाणमेव शरणीकरोति "श्रुतेस्तु शब्दमूलत्वादिति" (२-१-१७) । तर्कदूषणकाले सूत्रकारैः महान् आवेशः प्रदर्शितः "तर्काप्रतिष्ठानादपि" (२-१-११७) इति । युक्तेः अस्थिरत्वं उत्तरसूत्रेणापि सूचितम् । आचार्यवर्य-कवितार्किकसिंह-वेदान्ताचार्याः पुनः तर्केण यल्लभ्यते तस्यास्थिरत्वेऽपि परिग्राह्यत्वं वदन्ति स्वकीये न्यायपरिशुद्धौ । " नह्यपूर्वाः तीर्थङ्कराः

न भवन्ति इति राजाज्ञा" इति । वेदान्तविचारेषु युक्त्यवलम्बनं न दोषाय भवेत् । यतः युक्त्यैव निर्णेतव्ये अंशे वेदान्ततत्वे प्रमाणान्तरेण कार्यं किञ्चिदेव वर्तते ।

एतादृशवादप्रतिवादपरैर्ग्रन्थैर्बुद्धिकौशलं अभिवर्धते इत्यत्र न कोऽपि सन्देहः । वादग्रन्थेषु कस्य साधुत्वं कस्यासाधुत्वं इति न केनापि वक्तुं शक्यते । परन्तु मध्यस्थैः प्रमाणानुसारिणोः वादिप्रतिवादिनोः उभयोरपि पक्षयोः साधुत्वमेव वक्तव्यं भवति । यतः उभयोरपि पक्षयोः सम्प्रतिपन्नत्वात् तत्र विचारः केवलं मोदायैव भवति ।

अस्मिन् ग्रन्थे इतिहासपुराणेभ्यः परश्शतानि वचनानि उदाहृतानि । कृत्स्नो भारतग्रन्थः समालोचितः । तत्र तत्र श्रूयमाणवचनेषु सामञ्जस्य-सम्पादनार्थं अन्यादृशी व्याख्यापद्धतिरादृता । देवतातत्वविमर्शे उत्सुकानां अयं ग्रन्थः महदुपकुर्यात् । कस्मिन् कस्मिन् काले कथं वा कथं वा देवतातत्व-मभूदिति, तथा कथं वा वेददेवतातत्वं पश्चात्काले परिणतमिति ज्ञातुञ्चायं ग्रन्थः उपकरोति ।

अस्य ग्रन्थस्य कर्ता ताताचार्यसूनुः वेङ्कटाचार्यः **A. D.** सप्तदश-शतकालिकः इति ज्ञायते । अयं यज्वा इति लिख्यते । एतद्ग्रन्थमातृकायां शतक्रतु चतुर्वेदी इति निर्देशः कृतः - अतः अयं सोमयाजीति गम्यते । अत्रैव बुक्कपट्टणस्य निर्देशः कृतः । आन्ध्रप्रदेशे बुक्कपट्टणे ये ताताचार्याः आसन् तद्वंश्योऽयं इति ज्ञायते । (विख्यातो भुवि बुक्कपट्टणमहावंशः) परन्तु **P. P. S. शास्त्रिमहोदयः** स्वकीये Descreptive Catalogue of **T. M. S. S. L.** ग्रन्थे इमे वेङ्कटाचार्याः कुम्भघोणे पाट्टराचार्या इति ये इदानीं प्रथन्ते ताताचार्यवंश्याः तेषां मूलभूतस्य अय्या कुमारताताचार्यस्य पुत्र इति वदति । एतद्ग्रन्थकर्तुः पिता राजगुरुरासीत् इति ग्रन्थकर्त्रैव लिखितम् ।

( "तातार्यो यस्य तातः क्षितिपतिमकुटीराजिनीराजिताङ्घ्रिः" )

अनेनैव वेङ्कटाचार्येण कृते सिद्धान्तवैजयन्त्याख्यग्रन्थे ब्रह्मशब्दार्थ-निरूपेणनामकतृतीयप्रकरणे अन्ते एवं लिखितम् "अग्निष्टोम-वाजपेय-याजिनः वेङ्कटाचार्यस्य कृतिषु" इति (Govt. Oriental Manuscript Library D. No. 5067 Leaf)

पठितॄणां सौकर्याय तत्रतत्र मीमांसान्यायविवरणं तथाऽनुबन्धे अपूर्वा उपनिषदः पुरुषसूक्तं च प्रकाशिताः। एतद्ग्रन्थनिर्माणे तञ्जावूर् महाराजा सर्फोजी सरस्वती महाल् Library स्थाने वर्तमानाः मातृकाः, तथा मद्रपुर्यां राजकीयप्राच्यकोशालयमातृकाश्च समालोचिताः (Govt. Oriental Manuscript Library)

प्रथमद्वितीयपरिच्छेदौ सरस्वती महाल् मातृकानुसारेण लिखितौ। तृतीयचतुर्थपरिच्छेदौ मद्रपुरीप्राच्यकोशालयमातृकानुसारेण लिखितौ।

एतादृशग्रन्थप्रकाशने नियोजकानां सरस्वतीमहाल् कोशालय-सभ्यानां, विशिष्य तञ्जावूर् कलक्टर् महाशयानां तथा सर्फोजि राज-वंश्यानां सभाध्यक्षाणां अन्येषाञ्च सबहुमानं धन्यवादान् वितरामः।

---

# SIDDHANTA RATNAVALI

Siddhanta Ratnavali, as the name implies, is a fine collection of gems of thoughts establishing Visishtadvaita siddhanta and Srivaishnava theology. Numerous passages from *sruti* (veda-vedanta) and secondary scriptures, namely *smritis, ithihasas* and puranas are cited to support the view that Vishnu - Narayana is the supreme Deity. Since the Upanishads are the primary authority for the knowledge of ultimate Reality (*tattva*), for the *jagat-karana* quite an array of texts are presented from the entire range of the Upanishads, including minor Upanishads such as Atharvasikhaa, Atharvasiras, Subalopanishad, Brahmabindu Upanishad, Atma-prabodhopanishad and Nrsimhapurva and uttara tapaniyopanishads. The *Bhagavad Gita* as also the *Anugita* are quoted to substantiate this thesis. Purushasukta and Gayatri mantra are explained fully, and interpreted with the help of *Itihasas* and *puranas* as establishing the supremacy of Vishnu. Throughout his interpretation of sruti texts the author follows scrupulously mimamsa nyayas (the rational canons of interpretation set forth by the mimamsakas). At the outset, it is well to remember that the identity of Vishnu - Narayana is a basic doctrine of the Visishtadvaitin. The Vaishnava acharyas have, however, a preference for the name Narayana, as it has a greater philosophical importance. It brings out the special features of the relation between the Supreme Lord and the finite souls and stresses, the aspects of God's immanence (indwelling presence) and transcendence *apra-*

*kritatva*. Besides, this name is specifically mentioned in crucial texts specially intended to determine the nature of the Supreme, the one and only cause of the universe. (Eko Ha Vai Narayana asit.)

The author does not indulge in or initiate a sectarian controversy inspired by an urge to exalt one's God and run down the God of others. There is no question of 'my God' and 'your God' because to all who believe in Vedic revelation, the many Gods proclaimed in sruti are entitled to reverence. But the Vedas while praising many Gods as the ultimate, speak of the Real as one, whom the wise call differently. (Ekam sat Vipra bahudha vadanti). Therefore, to all to whom religion matters most, the question who is the supreme one, whose manifestations are many is really of great importance. It is a vital problem of textual interpretation, especially in the context of secondary scriptures intended to clarify Vedic teachings seem to talking different voices. Therefore, books like *Sidhanta Ratnavali* serve a longfelt need and serve an exegetical purpose. Further, the author of this work follows the lead given by eminent vedantic writers like Appayya Dikshita and their works such as *Sivatattva-viveka* and *Sivarkamanidipika* seeking to establish the supremacy of Siva over Vishnu, taking their stand on the self-same scriptures and following *mimamsa nyayas*. Such works thus fulfil a necessary function in our religion.

Among vedantins, Bhagawad Ramanuja made a successful attempt to identify the Brahman of the Upanishads with a personal God (Sa Ca Sarvesvara

Eva). In his comments on *jignasadhikarana,* he identifies brahman with Narayana, a personal God, mentioned on rare occasions in the Upanishads but more frequently in the Puranas. In the Subalopanishad, Atma - Narayana identification is maintained in explanation of the antaryamitattva. This upanishad runs like the Antaryami brahmana of the Brihadaranyaka Upanishad, (3-7). It concludes by stating that the Antaryamin is none other than Narayana. (Esha ha Atma apahatapapma divyo Deva Eko Narayanah). Likewise, the Taithiriya Yajnikopanishad while referring *daharavidya* (daharam vipapmam paravesmabhutam yat pundarikam puramadhysamstam tatrapi daharam gaganam visokas tasmin yadantas tadupasitavyam 8-7). Immediately after this passage comes the great *Narayana Anuvaka,* where the word Narayana is used freely to denote the cause of the universe. Ramanuja rightly points out that on the upanishadic view the jagatkarana is Narayana and none else.

In his comments on Lingabhooyastvadhikarana of Brahmasutra (III. iii. 43) Ramanuja establishes that only Narayana is the object of *upasana* in all *paravidyas.* Brahmasutra (I. i. ii.) lays down a nyaya (Gati Samanyat) - the principle that once we decide something in one place it is also applicable to all other places, as the aim of all scriptures is the same. So it follows when something is established, in one passage of the Upanishads it is equally applicable to other passages of the Upanishads tackling the same problem. Thus the ultimate cause of the universe is Narayana.

Another striking feature of Ramanuja's conception of the Deity is that Narayana is neither mere impersonal Being or thought nor a person in the ordinary finite sense of the word person. In the language of the eminent philosopher P. N. Srinivasachariar, He is personal - cum - impersonal God. Five characteristics, namely, satya, jnana, ananta, ananda and amalatva constitute His distinguishing features (sarupa - nirupaka - dharmas). This essence ( transcendental ) is His being the home of all perfections and absolute freedom from imperfections of any kind. From this follow other auspicious qualities such as jnana, sakti etc. These are called *nirupitasvarupa viseshanas*. They denote His immanence and His abiding interest in finite souls. He is not a person in the ordinary sense, but is Aprakrita Purusa. God's personality is wholly unlike that of human persons.

From the personal point of view, all attributes come such as jnana, bala, etc. only on the basis essential features of Brahman. The body of God is termed as Aprakrita, not having essence of human body (Na tasya Prakritamurtir Mamsa - Medo'sti Sambhava). Thus Ramanuja's God is neither personal nor impersonal, but super-personal. The impersonal aspect stressed in the Upanishads and the personal aspect emphasised in the mantras Brahmanas of Karma Kanda and the Vishnu Purana. Ramanuja says so in Vedartha Sangraha. The followers of Ramanuja rely on the srutis and on the ihihasas and puranas which are said to be upa - brahmanas (secondary scriptures) meant for clarifying the profound truths of sruti, too deep for easy

apprehension. It is a matter of common knowledge that the puranas having philosophical signifiicance - Vishnu Purana and Bhagavata explicitly identify the upanishadic brahman with Vishnu Narayana (Brahmeti Paramatmeti Bhagavan iti sabdyate - Vishnunama sa Vedeshu Vedanteshu cha Giyate Vishnu Samjnitah. Vishnos - Sakasadudbhutam jagat tatraiva cha Sthitam. Sthitisamyamakartasw jagatosya jagat cha sa).

If all puranas had identified the Upanishadic Brahman with Vishnu - Narayana, only, there would have been no room for any controversy as to who is the Jagatkarana. Some puranas identify Brahman with Vishnu and some with Siva directly and indirectly. Some of the upanishads too, for example the Atharvasikha, the Atharvasiras and the Svetaswatara Upanishads, offer scope for doubt. They mention Siva as Jagatakarana. (Na sa nna chasat Siva eva Kevalah.) (sambhurakasa madhya dhyeyah.) Among the Puranas, some glorify Vishnu, and some Siva as the Universal cause. Sometimes in one and the same puranas, both the tendencies are noticed so, the need arises for resolving the doubt as to who is the Supreme Deity. Since both the views claim vedic sanction, the question which of these views accords best with the vedas has to be squarely faced.

The Rig Veda refers to Agni, Indra, Varuna and and other Gods. In the brahmanas, the name prajapati is more commonly used to denote the supreme. But the upanishads use commonly such terms as Sat, Atman, Jyotis and Brahman to denote the ultimate Reality. In the post-vedic period, the

tendency was to strengthen the personal aspect. One of the vedic Gods is chosen in preference to others and regarded as the Supreme Lord. This is the stage of the *Ishtadevata*. Some preferred Vishnu, and some Siva. It is not known how this tendency arose, while even today rituals intended to propitiate different Gods of the vedic pantheon continue to be observed.

According to the upanishads Srishti (creation), sthiti (sustenance) and sambara (involution) are the functions of Brahman. The widely accepted definition of Brahman offered by the Taittiriya upanishad reads: "Brahman is that from which all things are born, in which they live on being born, and into which they enter when they perish". (Yato va Imani Bhutani Jayante Yena Jatani Jivanti, Yat prayanti - abhisamvisanti. Taitt ( III. i. i) Again there is the well known dictum. That by knowing which (Brahman) all things become known emphasising the fact that Brahman is the jagat-karana. (eka-vijnanena, sarvam vijnatam Bhavati) the cause helps one to understand the effects. Following all this, the author of the Brahmasutra combines the functions of Srishti, sthiti and samhara in the definition of Brahman (Janmady asyayatah). But in the puranas, the threefold functions are divided and Brahma, Vishnu and Siva are invested respectively with the duties of creation, sustenance and destruction. Thus arose the concept of the Trinity, Brahma, Vishnu and Siva, each being in sole charge of one function. Brahma became the srishti karta, Vishnu the sthitikarta, and Siva the samhara karta. While by and large the Trimurti

concept found favour with the puranas, the limitation of functions did not satisfy the staunch devotees of Vishnu or of Siva.

The concept of one Supreme God taking on the threefold manifestations gained ground; and this one was identified by some with Vishnu, by some with Siva. The inevitable implication is there are two Vishnus or two Sivas - the Supreme Vishnu and the Vishnu of the trinity or the Supreme Siva and the Siva of the trinity. The trinity principle is sought to be linked up with the belief in one Supreme Deity is ultimately responsible for the three functions acting through the agency of the Trimurtis. Otherwise, the conception of each God being responsible for only one of the three functions appears truncated. This solution is often a source of confusion as to which Vishnu or which Siva is referred to in a given stotra.

Etymologically Vishnu signifies the universal pervader; and Siva, the auspicious. Proceeding on the etymological meaning one finds in the hymns addressed to Vishnu, the name Siva also occurs and would be in place; likewise in the stotras extolling Siva, the term Vishnu occurs quite naturally. Vishnusahasranama for example contains the Names. Sarvassarvas Sivasthanuh. But the doubt may arise as to whether the etymological meaning or the conventional significance is to be adopted.

Again, the Vaishnava belief in the avataras (the descent) of the Divine is objected to by the rival as finitising the infinite. Krishna's connection with the Pandavas is sometimes said to stand in the way of

His Supremacy as an incarnation of Vishnu. In the Gita, Bhagavan identifies Himself with Jagad Karana Tattva in some places; and in one place He refers to Himself as Isvara. (Aham Krtsnasya Jagatah Prabhavah Pralayastatha. Iswaras Sarva Bhutanam Hrddese Arjuna Tishtati. Psya me Yogam Aisvaram). In some other places He identifies Himself with Brahman (Mayi sarvani karmani sa sya Brahman-yadhaya karmane). So an atmosphere of uncertainty prevails even in Gita.

The *Purusha Sukta* is unique in being found in all the Vedas; who is the purusha who is extolled in this Hymn? Here again, the votaries of Vishnu and of Siva put forth their rival claims.

The Puranas which are taken as clarifying the Vedic teachings are, however, the major field of conflict. They contain endless stories, some demostrating the supremacy of Vishnu and some, the supremacy of Siva. The Itihasas which are generally assigned a greater importance relatively to the Puranas, are also not wholly unequivocal. Let us take a few episodes such as Parasurama's conversation with Rama; here we find a reference to the contest between Vishnu and Siva instigated by the Devas with a view to assess who among them was the supreme and their deciding that Vishnu is supreme (adhikam menire Vishnum). Banasura favoured the supremacy of Vishnu and the rishis sent Bhrigu to find out who was supreme, Bramha, or Vishnu or Siva. His verdict was that Vishnu was the highest God. No importance is (or should be) attached to these episodes, as they are born of sectarian prejudice. The Puranas abound in stories,

चरुर्हविर्विकारःस्यादि'त्यधिकरणे ( जै. सू. 10-1-10 ) स्थाल्यां लाक्षणि-

---

अनेक शक्तिकल्पनामिया न शक्तिः , अपि तु लक्षणादिनैव बोधः । अतः त्र अत्र वाक्यशेषो नास्ति इत्यत्रापि त्रिवृदादिपदार्थः वैदिकः एव ग्रहीतव्यः । अन्यथ त्रिवृच्छब्दस्य स्तोत्रगत ऋक्नवकत्वं शक्यम् । नैव त्रैगुण्यम् । चरु शब्दस्य ओदना - न तु स्थाली । अश्ववालशब्दस्य काषायः एवार्थः । वायकेशाः । ( जै. सू. 11-8-4 )

**चरु शब्दस्य ओदन वाचित्वाधिकरणम् :—**

सौर्यं चरुं निर्वपेत् , इत्यादिवाक्ये चरु शब्दः किं स्थालीं वक्ति उत ओदनमिति संदेहः । तत्र लौकिकाः आहिमवतः आच कुमारीभ्यः सर्वेऽपि स्वदेशीय भाषा प्रसक्त्या यत्किंचित् मकार यकारादि अक्षरं उपरि प्रक्षिप्य चरुशब्दं पात्रे पाकाधिकरणे ताम्रादिमये प्रयुंजते । चरुशब्दः स्थालीं वक्ति । यदितस्याः अदनीयत्वाभावेन पुरोडाशगत प्रधानयोग्यता न स्यात् तर्हि चामूत्पुरोडाशविकृतित्वम् । कपालविकृतित्वं भविष्यति । श्रवणयोग्यतायाः नद्भावात् ।

यथा कपालेषु हविः स्नप्यते - तथा स्थाल्यामपि स्नवयितुं शक्यते । तस्मात् चरुशब्दः स्थालीवाचकः एव इति पूर्वः पक्षः ।

सिद्धांतस्तु - अन्नमेव चरुशब्देनोच्यते । कुतः श्रुति प्रसिद्धेः । आदित्य "प्रायणीयः चरुः" इति विधाय तद्वाक्यशेषे हि 'अदितिमोदनेन' इति चरुरनूद्यते । यदि भोज्यान्ने चरु शब्दः क्वापि लोके नदृष्टः तर्हि ओदन विशेषवाची चरु शब्दः अस्तु । तत्र विद्वत्प्रसिद्धेः । विद्वांसो याज्ञिकाः शब्दैक समधिगम्य धर्माधर्मव्यवहारिणः शब्दार्थविप्लवे तात्पर्यवंतः अनवस्रावित अंतरूष्मपक्वे जीवतण्डुले विशद सिद्धोदने चरु शब्दं प्रयुञ्जते । सति ओदन-वाचित्वे सौर्यमिति तद्धितोऽप्युपपद्यते यथाऽग्नेयः इति । देवतातद्धितयुक्तः पुरोडाशः प्रदेयद्रव्यम् । तथाचरुरपि । तस्माच्चरुशब्दः अन्नवाची ( जै. सू. 10-1-10 )

कत्वेन वर्णितस्य चरुशब्दस्य च स्थाल्यां हविष्यपीति स्थालीपरत्वेन चानुदर्शनात् । न्यायविरोधेऽनुशासनस्य शक्तिग्राहकत्वस्य वक्तुमुद्युक्तत्वाच्च ।

किं चानुशासनस्य शक्तिग्राहकत्वनैयत्ये 'कोकिलः पिक इत्यपी'ति कोशसत्वेन पिकशब्दस्य कोकिलपरत्वसाधनस्य निष्प्रयोजनत्वसिद्धेः । 'पिकनेमाधिकरणे' पिकशब्दमुदाहृत्य म्लेच्छप्रसिध्या कोकिलपरत्वसाधनस्य निष्प्रयोजनत्वप्रसङ्गः । अपि चैवं 'अवदातः सितो गौरो वलक्ष' इति तत्सत्वेनावदातशब्दस्य शुक्लविशिष्टशक्तत्वापत्तिः । न चेष्टापत्तिः । 'वर्णानां तणति नितान्तानामि'ति (पा॰ सू॰ फिषोन्तउदा) फिट्सूत्रेणाद्युदात्तत्वेऽनुदात्तान्तत्वेन वर्णादनुदात्तादिति मकारःङीप्प्रत्ययोः प्रसङ्गात् । उक्तं च महाभाष्ये - 'अवदातायां तुङी प्रसज्येत अवदाता ब्राह्मणी वर्णादनुदात्तादि'ति नैष वर्णवाची । किं तर्हि ? विशुद्धवाची, आतश्च विशुद्धवाची ।

एवं ह्याह - त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च ।
एतच्छीलं विजानीहि ब्राह्मणाग्रयस्य लक्षणम् ॥

इति । एवं च शक्तिग्राहकतायां शतशोव्यभिचरितेन कोशेन न्यायविरुद्धस्यले शक्तेर्वर्णयितुमशक्यत्वात्, न तद्बलाच्छिव शर्वस्यासाधारण्येन शक्तिरभ्युपगन्तुं शक्या । कृष्णशब्दस्य त्वसाधारण्यग्राहकप्रमाणान्तराभावे न्यायबलागतसाधारण्याङ्गीकारेऽपि नास्माकं क्षतिः ।

कथं तर्हि प्रकरणोपपदाद्यभावस्थले नीलकण्ठत्वादिविशिष्टवस्तुप्रतीतिरिति चेत् न । पार्थशब्दोऽर्जुनस्येव प्रसिद्धिप्राचुर्येण तथा प्रतीतेरुपपन्नत्वात् । तत् पक्षे साधारणेन पुरुषशब्देन भगवत्प्रतीतिवदुपपत्तेश्च । द्वितीयः कल्पोऽप्युपपन्नतरः । आवृत्तिवाक्यभेदप्रसङ्गयोरभावेऽपि भगवत्कारणत्वावेदकश्रुत्यन्तरबाधप्रसङ्गेनार्थद्वयपरत्वस्य वर्णयितुमशक्यत्वात् ।

'एकधा ब्रह्मण उपहरती'त्यत्र किं सकृत्वसहत्वयोरनियमः उतासहत्वमेवेति संशय्य एकप्रकारवचनत्वादेकधा शब्दस्य सकृत्वसहत्वयोरुभयोरप्येक यागाः पापतीति प्रयोगदर्शनात् तयोरुभयोरप्येक प्रकाररूपत्वादनियम इति

प्रत्यक्षं प्रापय्य सकृत्वविधाविडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षेषु कालभेदेन अनुहरणे प्राप्ते 'सकृद्धरति नाधिकामि'ति विधानादेनां क एवास्य भक्ष उपहर्तव्य इति चोदकप्राप्तभक्षान्तरबाधः स्यादिति तदबाधाय महत्वरूपैकप्रकार निविरित्येकधोपहारः। 'सहत्वं भक्षभक्षाणां प्रकृतौ विहृतत्वात्' इति **सूत्रेण बाधलक्षणे राद्धान्तितत्वेन** (जै. सू. 10-1-1) शास्त्रान्तरबाधप्रसङ्गे शक्तिद्वयोपस्थाप्यार्थद्वयस्वीकरणस्य न्यायबहिष्ठत्वात्। एकप्रकारार्थकैकया शब्दोपस्थितयोरपि सकृत्वसहत्वयोरतिदेशप्राप्तभक्षान्तरबाधाय तस्य शब्दस्यैकार्थपरत्वस्वीकारे कैमुतिकन्यायेन शक्तिद्वयोपस्थाप्ययोरर्थयोः प्रत्यक्षश्रुत्यन्तराबाधायैकार्थपरत्वस्वीकारस्योचितत्वात्। उदाहृतकर्णपर्ववचनं तु स्वामिमत-

---

**बाधलक्षणाधिकरणम् :—**

बाधो नाम प्रकृति संबन्धिनः पदार्थस्य विकृत्यंगत्व ग्राहक प्रमाणाभावः। न तु पदार्था भावमात्रम्। प्रकृतावेव नित्ये यथाशक्ति प्रयोगे पदार्था भाव सत्वेन बाधव्यवहारापत्तेः। नापि विकृतौ सः। नित्यविकृति प्रयोगे यथा शक्त्यनुष्ठानस्य अंगीकृतत्वात् तत्रापि बाधव्यवहारापत्तेः।

पशुपुरोडाशे प्राकृत पदार्थाभावेन प्रसंगेऽपि बाधत्वापत्तेः च। अस्ति-चेदं कृष्णल चरौ। प्रकृति संबन्धिनोऽवघातस्य वितुषी भाव प्रयोग लोपेन लोऽप्यति देशस्य विकृत्यङ्गत्व ग्राहकत्वा भावात्। अन्यसंबन्धिनोङ्गस्य अन्यांगत्व ग्राहक प्रमाणाभावः इति उक्तौ विकृति संबन्धिनः उपहोमादेः प्रकृति संबन्धिनः प्रयाजादेः वा ज्योतिष्टोमांगत्व ग्राहक प्रमाणा भाववत्वात् बधापत्तेः प्रकृति विकृति पदोपादानम्।

एवंच यद्धर्मावच्छिन्नस्य यत्प्रकृति संबन्धित्व विशिष्टस्य यद्विकृतिभूत यदंगत्व ग्राहक प्रमाण विषयत्वाभावः तद्धर्मावच्छिन्नस्य तत्र बाधितत्वमिति निष्कृष्टोऽर्थः। अयं च बाधः त्रिविधः। अर्थलोपात्। प्रत्याम्नानात् प्रतिषेधाच्चेति। (जै. सू. 10—1—1)

विपरीतार्थसाधकम्। ततो रुद्रशिवशब्दस्य शुभतारूपनिमित्तमुखप्रवृत्तिकत्वा-वसायात्।

न च निरुपाधिकशुभत्वमादाय शक्त्यन्तरं प्रतिपादयन्तीति वाच्यम्। तथा तद्वाक्येन प्रतिपादनासिद्धेः। तथा प्रतिपादनस्यानुपपन्नत्वाच्च। न हि रुद्रनिष्ठशुभत्वस्य निरुपाधित्वमात्रेण तत्र शक्त्यन्तराभ्युपगमो युक्तः। तथा सति पाकजनितरूपसाधारणशक्त्यपेक्षया स्वाभाविके रूपे भिन्नायाः शक्ते रक्तादिशब्दानामङ्गीकारप्रसङ्गात्। निरुपाधिकत्वं च शुभत्वस्य 'पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलमि'ति माङ्गल्यपरमकाष्ठाप्रतिपादनेन भगवत्यप्यस्तीति निरुपाधिकशिवत्वमुखेन शक्त्यन्तराङ्गीकारेऽपि भगवत्साधारण्यमनिवार्यम्॥ एतेन योगेनान्यत्र प्रयुज्यमानानामीश्वरमहेश्वरेशानशब्दानामसाधारण्यं व्याख्यात-मित्यप्यत एव निरस्तम्। योगेनान्यत्र प्रयुज्यमानेषु शब्देषु '**प्रोक्षणी**' **न्यायावतारात्** (जै. सू. 1-4-25-26) साधारण्यस्य वक्तुमशक्यत्वात्।

---

## प्रोक्षण्यादिशब्दानां यौगिकताऽधिकरणम्:—

दर्शपूर्णमासयोः श्रूयते। प्रोक्षणीरासादय इति। तत्र प्रोक्षणी शब्दस्याभिमन्त्रणा सादनादि संस्कृतिः प्रवृत्ति निमित्तम्। कुतः सर्वेषु वैदिक प्रयोग प्रदेशेषु संस्कृतानामेवापां प्रोक्षणी शब्देनोच्यमानत्वात् इत्येकः पक्षः। लोके जलक्रीडायां प्रोक्षणीभिः उद्वेजिताः स्मः इत्यसंस्कृतास्वप्सु प्रयोगात् बर्हिरादिशब्दवज्जातौ रूढत्वात् उदकत्वजातिः प्रवृत्ति निमित्तम्।

न च प्रकर्षेण उक्ष्यत आभिः इति योगोऽत्र शंकनीयः। रूढेः प्रबलत्वादिति पक्षांतरम्। तत्र न तावत् संस्कारो युक्तः अन्योन्याश्रयत्वात् विहितेष्वभिमन्त्रणादिषु संस्कारेष्वनुष्ठितेषु पश्चात् संस्कृतास्वप्सु प्रोक्षणीशब्द प्रवृत्तिः। तत्प्रवृत्तौ सत्याम् प्रोक्षणी शब्देनापोऽनूद्याभिमन्त्रणासिद्धिरिति। नापि जाति पक्षो युक्तः। उदक जातौ - प्रोक्षणी शब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वेन इतःपरं शक्तेः कल्पनीयत्वात्।

योगस्तु सर्वेष्वर्थेषु प्रयोगाभावनिबन्धनं हि रूढिकल्पनम् । तदुक्तं **नयविवेक-दीपिकायां वरदराजेन** – यत्र साक्षादवयवशक्तेरतिव्यापित्वात् न समुदाय-प्रयोगोपपादकत्वमिति समुदायशक्तेरवश्यकल्पनया रूढतैव तत्र संप्राप्तरूढिरन-पेक्षत्या योगापहारिणीति ईशानशब्दासाधारण्यं न बादरायणाभिप्रेतमिति पुरुषसूक्तार्थविचारे वक्ष्यामः ॥

यदपि शम्भुशब्दस्य न द्रुहिणसाधारण्यं, तस्य कार्यकोटौश्रवणादिति - तदप्यसङ्गतम् - शिवस्यापि कार्यकोटौश्रवणात् । तज्जननमकर्मकृतमिति चेत् द्रुहिणजननमप्यकर्मकृतमिति किं न स्यात् । अपवादकप्रमाणाभावे जन्मनः कर्मकृतमवश्यम्भावीति चेत् तुल्यमितरत्रापि । शिवजन्मनोऽप्यकर्मकृतत्वग्राहक-प्रमाणाभावात् उत्तीर्णपरमशिवविषयत्वात् न दोष इति चेत् - उत्तीर्णचतुर्मुख-विषयत्वमिति किं न स्यात् । अथर्वशिरसि शिवस्योत्तीर्णत्वं कथितमिति चेत् 'प्रजापतिर्वा एकोऽग्रे तिष्ठन् स नारमतएकस्वात्मानमभिध्यायन्नि'त्युपक्रमे प्रलयकालवर्तित्वेन प्रतिपादितस्य प्रजापतेरंशभूतत्वेन 'तस्याप्रोक्ता अग्रया-स्तनव्यो ब्रह्मा विष्णुरुद्र' इति त्रयाणामुक्त्या **मैत्रेयोपनिषदि** चतुर्मुख-स्याप्युत्तीर्णत्वं कथितमिति न कश्चित् विशेषोऽन्यत्राभिनिवेशात् ।

विष्णुपुराणे नारायणशब्दस्य चतुर्मुखाभिधानत्वोक्त्या तत्साधारण्य-मित्येतत् श्लोकार्थपर्यालोचनविधुराणां सदसि शोभते ।

'नारायणाख्यो भगवान् ब्रह्मालोकपितामहः ।
उत्पन्नं प्रोच्यते विद्वन्नित्य एवोपचारतः ॥'

इत्यस्य श्लोकस्य नारायणाख्यो भगवान् लोकपितामहब्रह्मरूपेणोत्पन्न इत्युप-

---

ततो गोशब्दवदश्वकर्णशब्दवच्च रूढो न भवति । योगस्तु व्याकरणेन क्लृप्तः । सोपसर्गात् धातोः करणेल्युट् प्रत्ययेन व्युत्पादनात् । तस्मात् प्रोक्षणीशब्दः यौगिकः । घृतादेः प्रोक्षणत्वं प्रयोजनम् । (जै. सू. 1-4-25-26)

चारत उच्यते। स तु नित्य एव स्वेच्छाकृत सर्वात्मकत्वार्थक नारायणशब्दस्य चतुर्मुखाभिधानत्वे वाच्यत्वात् । कर्माधीनशरीरपरिग्रहस्यैव मुख्योत्पत्तिरूपत्वात् :

'जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरि: ।
ब्रह्माभूत्वाऽस्य जगतो विसृष्टः सम्प्रवर्तते ॥'

इत्याद्युत्तीर्णे मुखोक्त्यभिप्रायेणेत्यभिप्रायकत्वात् । यद्वा ।

'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिण: ।
अवापवैष्णवीं निद्रामेकी भूयाथ विष्णुना ॥'

इति **कौर्मवचनेन** स्वरात्रौ चतुर्मुखस्य नारायणानुप्रवेशप्रतिपादनेन नारायणाख्यान्तर्भूतत्वात् नारायणाख्य इति उच्यते। एवं विध: चतुर्मुख: प्रतिकल्पमुत्पन्न इत्युपचारत: तस्य द्विपरार्धकालावस्थायित्वेन नित्यत्वादित्यभिप्राय: ॥ एतेन कौर्मवचने नारायणाख्यत्वोक्तिरपि व्याख्याता ।

**आश्वलायनस्मृतिवचनमपि** भगवदनुप्रवेशनिबन्धनमेव नारायणत्वं प्रतिपादयति । अप्शयनादित्युक्तेरुदकशायि नारायणानुप्रवेशहेतुकाप्शयनप्रतिपादिकाया भगवत्यनुप्रवेशस्य नारायणाख्यान्तर्भूतत्वे हेतुप्रतिपादनाभिप्रायकत्वात् । अन्यथा जलशयनमात्रस्य मत्स्यमकरादिसाधारणस्य नारायणाख्याप्राप्तौ हेतुत्वासम्भवात् । तथोक्त्ययोगात् 'आपो नारा' इति वचनं तु रूढिसिद्धत्वत्कारेण योगसद्भावप्रतिपादनमुखेन योगरूढत्वप्रतिपादनपरम् । न चात्र तथात्वं सम्भवति, रूढेरसिद्धत्वात् । न तु नारायणादीनां नामान्यन्यत्रसम्भव' इति **वामनपुराणवचन**विरोधप्रसङ्गाच्च । तस्मात् न देवतान्तरवाचकशब्दतुल्यत्वं नारायणशब्दस्येति निस्साधारण्यनारायणपदविषये निश्चयं यान्ति । बाधे स ब्रह्माद्या: समानप्रकरणपठिता: शङ्कितान्यार्थशब्दा **इत्याचार्य** सूक्तिर्निर्व्यूढैव । उत्तीर्णश्च शिवो गगनकुसुमायमान इत्युत्तरत्र प्रपञ्चयिष्यते । उपबृंहितवांश्चेमामुपनिषदं भगवान् बादरायण: । **सभापर्वणि** —

'पुरा यः प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ॥

आभूत संप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः ॥'

**मोक्षधर्मे** त्वनुस्मृतावपीदं वचनं पठितम्—

'एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ।'

इति विशेषः ॥ अत्र 'ब्रह्मादिषु प्रलीनेष्वि'त्यनेन 'ब्रह्मा नेशान' इत्यत्र सृष्टेः प्राक् चतुर्मुखाद्युत्पत्त्यभावप्रतिपादनपरत्वं पराकुर्वन् 'न ब्रह्मा नेशान' इत्यं शमुपबृंहितवान् । 'एकस्तिष्ठति विश्वात्मे'त्यनेनासीदित्यस्योत्पत्त्यर्थकत्वमङ्गी-कुर्वतो जिह्वाञ्छित्वा विद्यमानार्थकत्वं व्यवस्थापयन् 'एको ह वै नारायण आसीदि'त्यं शमुपबृंहितवान् । एवं च सकलमहाजनपरिगृहीतमहाभारताद्युप-बृंहणोपोद्बलितया विशेषशब्दमूर्धन्यनारायणशब्दघटितया सर्वेतरव्यवच्छेदेन जगत्-कारणतां भगवतीं प्रतिष्ठापयन्त्या अनया महोपनिषदा भगवानेव परंब्रह्मेति सेत्स्यतीति सर्वं समञ्जसम् ॥

**नारायणोपनिषदपि** भगवतः सर्वजगत्कारणत्वे प्रमाणम् । 'नारायणात् ब्रह्मा जायते । नारायणात् रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात् द्वादशादित्या रुद्राः सर्वेदेवताः सर्वाणि भूतानि नारायणादेव समुत्पद्यन्त इति सर्वजगत्कारणत्वस्य तत्र प्रतिपादनात्' ॥

यत्त्वल्पेन जल्पितं परमशिवादुत्पन्नस्य नारायणस्य सर्वजगत्कारणत्वस्य महत्प्रपञ्चसर्गकारित्वप्रतिपादनपरत्वेनान्यथासिद्धत्वात् नेयमुपनिषन्मूलकारणतां प्रतिपादयितुं शक्नोतीति, तदपि तुच्छम्—'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म' इति 'जन्माद्यस्य यत' इति च श्रुतिसूत्राभ्यां ब्रह्मलक्षणकथन-पराभ्यां प्रतिपादितस्य जन्मादिकारणत्वस्य 'नारायणादेव सर्वाणि भूतानि

समुत्पद्यन्ते, नारायणे प्रलीयन्त' इति वाक्येन नारायणनिष्ठत्वप्रतिपादनेन तदतिरिक्तकल्पना प्रतिरोधात् ।

ननु तत्र जन्मादित्रितयकारणत्वस्य समुदायस्य लक्षणत्वं कथितम् । अत्र तु नारायणेन त्रितयकारणत्वमभिहितम् । किं तु सृष्टिलयकारणत्वमेव 'सर्वाणि भूतानि समुत्पद्यन्ते, नारायणे प्रलीयन्त' इत्येतावन्मात्रोक्तेः । अतो न नारायणनिष्ठत्वं ब्रह्मलक्षणस्यानया श्रुत्या प्रतिपाद्यत इति चेत् न । जन्मादीनां प्रत्येकमेव लक्षणत्वात् व्यावृत्त्या प्रसिध्या समुदायस्य लक्षणत्वासम्भवात् । 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' (न्यायसूत्रम् १-१) इत्यादाविव बहुलक्षणकथनस्य शिष्यवैशद्यार्थत्वात् । समुदितकारणत्वस्य लक्षणत्वपक्षेऽपि जन्मकारणत्वस्य लक्षणत्वेऽभिहिते स्थिते प्रलयकारणीभूतवस्त्वन्तरशङ्का स्यादिति तद्वारणाय समुदायस्य लक्षणत्वं किमित्युक्तत्वेन प्रत्येकं वस्तुगत्या तेषां जन्मादिनामतिप्रसक्तत्वाभावेन सृष्टिलयकारणत्वोक्तिमात्रेण नारायणस्य ब्रह्मत्वनिर्णयसम्भवात् । उक्तं चाचार्यपादैः 'प्रत्येकं लक्षणत्वं सुवचनमिह-बहुव्याहृत्तिर्भीमहिने सम्भूयाप्याहुरेके । फलमपि च तदाशङ्कितार्थव्युदास' इति ।

किंच 'नित्यो वेद' 'एको नारायण' इति नित्यत्वप्रतिपादनं न स्वरूपनित्यत्वाभिप्रायकम् । तत्र सर्वात्मसाधारण्येन तत्प्रतिपादनस्यानर्थक्यात् 'एको नारायण' इति इतरव्यवच्छेदेन प्रतिपादनस्यासङ्गतत्वापाताच्च । तस्मात् विग्रहविशिष्टवेषेणप्रलयकालावस्थानाभिप्रायकमिति तस्यान्यत उत्पन्नत्वोत्प्रेक्षाया असम्भवात् तस्य मूलकारणत्वमेवावेदयतीति न कश्चित् क्षुद्रोपद्रवः ।

एवं सौबालोपनिषदपि भगवतस्सर्वोत्कर्षं ख्यापयति । 'तदाहुः किं तदासीत् तस्मै सहोवाच न सन्नासन्न सदसदिति तस्मात् तमः सञ्जायते, तमसो भूतादिः, भूतादेराकाशं आकाशाद्वायुः वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, तदण्डं समभवदि'ति जगत्सृष्टिमूलकारणत्वेन, 'पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाश-

न्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिः महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तम एकीभवति परस्तान्न सन्नासन्न सदसदि'ति लयपर्यवसान-भूमित्वेन चोक्तस्य समष्टिव्यष्टिचेतनाचेतनोभयविलक्षणस्य परमात्मनो 'नैवेह किंच नाग्र आसीत् अमूलमनाधारा इमाः प्रजाः प्रजायन्ते, दिव्यो देव एको नारायण' इत्युक्त्या नारायणत्वस्फुटीकरणात्। 'चक्षुरध्यात्मद्रष्टव्यम्, अधिभूतमादित्यः तत्राधिदैवतं, नाडीतेषां निबन्धनम्, यश्चक्षुषी यो द्रष्टव्ये य आदित्ये यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति सोऽयमात्मा तमात्मानमुपासीत जरमजर मृतमभयमनन्तमि'त्यारभ्य 'एष सर्वज्ञ एष सर्वेश्वर एषोऽधिपतिः एषो-ऽन्तर्यामी'त्यन्तेन 'चक्षुर्द्रष्टव्य नासा घ्रातव्य जिह्वा रसयितव्याद्यन्तर्यामित्वेन वर्णितस्यात्मनः चक्षुश्च द्रष्टव्यं च नारायणो घ्राणं च घ्रातव्यं च नारायणो जिह्वा च रसयितव्यं च नारायणः त्वक् च स्पर्शयितव्यं च नारायणो मनश्च मन्तव्यं च नारायणो बुद्धिश्च बोद्धव्यं च नारायणोऽहङ्कारश्चाहं कर्तव्यं च नारायणश्च चित्तं च चेतयितव्यं च नारायण' इत्यादि नारायणत्वाविष्करणाच्च। जगत्कारणत्वान्तर्यामित्वे हि परब्रह्मण्येव; नान्यत्रेति '**जन्माद्यस्य यतः**' '**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशादि'ति** (ब्र. सू. 1-2-19) **सूत्राभ्यां** भगवता **बादरायणेन** स्फुटीकृतम्। अतस्तयो-र्नारायणनिष्ठत्वोक्त्या नारायणस्य परब्रह्मत्वसिद्धिः।

न च चक्षुर्द्रष्टव्याद्यन्तर्यामित्वोक्तिमात्रात् नारायणस्य न सर्वान्तर्यामित्वं सिध्यतीति वाच्यम्। चक्षुर्द्रष्टव्याद्यन्तर्यामिण एव यश्चक्षुषि योद्रष्टव्यो य आदित्ये यो नाड्यां यः प्राणो यो विज्ञाने य आनन्दो यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरती'त्यत्र सर्वान्तर्वर्तित्वोक्ते 'चक्षुश्च द्रष्टव्यं च नारायण' इत्यादिवाक्योपात्तद्रष्टव्यत्व घ्रातव्यत्व रसयितव्यत्व मन्तव्यत्वबोध-व्यत्वाहंकर्तव्यत्वचेतयितव्यत्ववक्तव्यत्वादिधर्मानाक्रान्तस्य पदार्थान्तरस्याभावाच्च। 'वरुणोऽर्यमाचन्द्रमाः कालः कलिर्धाता ब्रह्मा प्रजापतिः मासाश्च दिवसाश्चार्ध-

दिवसाश्च कालाः कालाश्च महाकल्पाश्चाधश्चोर्ध्वं च दिशश्च नारायणः पुरुष य एवेदं सर्वं यद्भूतं यच्च भव्यं' इत्यत्र 'एष सर्वभूतान्तरात्मा अपहत-पाप्मादिव्यो देव एको नारायण' इत्यत्र च सर्वान्तर्यामित्वस्य कण्ठरवेण प्रतिपादनाच्च ॥

यदाह कश्चित् शिवादित्यमणिदीपिकायाम् **सुबालोपनिषदुपक्रमे** 'तदाहुः किं तदासीदि'ति प्रश्नपूर्वकं निर्विकल्पकं परमात्मस्वरूपं प्रथममासीत्, ततस्तमः, तमो भूतादिः, तत आकाशादिक्रमेण भूतपञ्चकं तेन ब्रह्माण्ड-मुत्पादितं, तन्मध्ये दिव्यः सहस्रशीर्षः सहस्राक्षः सहस्रपात् सहस्रबाहुः पुरुषो जात इत्युक्त्वा 'ब्राह्मणोऽस्य मुखमासीत् बाहूराजन्यः कृत' इत्यादिना पुरुषसूक्तप्रक्रियया तस्य मुखादिभ्यो ब्राह्मणादीनां हृदयाद्यवयवान्तरेभ्योऽन्येषां च केषांचित् चेतनाचेतनानामुत्पत्तिं ललाटात् क्रोधजस्य रुद्रस्य निश्वासेभ्यो वेदादिशब्दजालस्य प्रादुर्भावं चाभिधाय तस्मादेवार्धेन स्त्रीभावं अर्धेन पुरुषभावं च प्राप्तात् वेदऋषियक्षराक्षसादीनां तिरश्चां च तत्तज्जन्मोचितस्त्रीपुंसविग्रह-परिग्रहेण मिथुनीभावमुत्पन्नादुत्पत्तिं वर्णयित्वा उपसंहारकाले तेन क्रियमाणं त्रैलोक्यभस्मीभावमुपक्रम्य 'पृथिव्यप्सु लीयत' इत्यादिना 'तम एकीभवती' इत्यन्तेन पृथिव्यादेः प्रथमकार्यतमः पर्यन्तस्य प्रपञ्चस्य परमात्मनिलयो दर्शितः।

एवं तावत् **सुबालोपनिषदि** प्रथमानुशासने जगदादिकारणभूत-परमात्मा तेन ब्रह्माण्डमध्ये सृष्टः। तन्मध्यस्थितदेवमनुष्याद्यवान्तरसृष्टिसंहार-कारी सहस्रशीर्षत्वादिविशिष्टपुरुषश्चेति द्वौ वर्णितौ। तत्र 'तदण्डं हिरण्मयं सम्भवती'ति प्रकृत्य 'तन्मध्ये दिव्य सहस्रशीर्ष सहस्राक्षः सहस्रपात् सहस्रबाहुः पुरुषो जायत' इति ब्रह्माण्डमध्ये परमात्मना सृष्टो यः पुरुषो वर्णितः, तमेव ब्राह्मणादिसकलप्रजास्रष्टारं दिव्यपुरुषं 'नैवेह किंचनाग्र आसीत् अमूलमनाधार इमाः प्रजाः प्रजायन्त' इति प्रवृत्ते तृतीयानुशासने 'दिव्यो देव एको नारायण' इति प्रस्तुत्य 'चक्षुश्च द्रष्टव्यं च नारायण' इत्यादिना तस्य सर्वोपादानत्वप्रयुक्तं सार्वात्म्यमुक्त्वा, तस्यैव चतुर्थानुशासने 'यस्य पृथिवी शरीरमि'त्यादिना 'स एष सर्वभूतान्तरात्मा अपहतपाप्मादिव्यो

देव एको नारायण' इत्यन्तेन सर्वान्तर्यामित्वमुक्तम्। न च तत्परमात्मसृज्यत्वेन दिवि परमाकाशरूपायां चिच्छक्तौ भवत्वेन च प्रकृतस्य महाजलौघमध्यसृष्टं ब्रह्माण्डरूपगर्भगोलकमध्यनिवासलब्धनारायणसंज्ञस्य स्वरूपेणोपपद्यते। अतः परमात्माभेददृष्ट्या तदुपपादनीयमिति सुबालोपनिषदोऽपि नारायणतत्त्व एव विश्रान्तिरिति।

अत्रोच्यते — अस्या उपनिषदो न भगवदतिरिक्तपर्यवसायित्वं वक्तुं शक्यम्। तस्मात् 'तमः सञ्जायते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तम एकीभवती'त्यत्र परमकारणीभूतवस्तुजन्यत्वेनावगतस्य तमसो 'यस्य मृत्युः शरीरं, यो मृत्युमन्तरे सञ्चरन् यं मृत्युं न वेद, स एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण' इति वाक्येन नारायणशरीरत्वावगमात्। मृत्युशब्दो हि 'व्यक्तं शरीरं यस्याक्षरं शरीरमि'त्यनन्तरं 'यस्य मृत्युः शरीरमि'त्याम्नानेन स्थानप्रमाणेन तमोवाचकः 'तमो वा इदमेकमास तत्परेणेरितं विषमत्वं प्रयाती'ति वाक्यपर्यालोचनया गुणसाम्यावस्था। प्रकृतेरेव तमः शब्दार्थत्वेन तस्याजन्यत्वायोगेन तमः सञ्जायत इत्यस्य गुणवैषम्यावस्थायोग्यतापादकात्यन्तलीनत्वावस्थात्यागमात्रपरत्वात्। तादृशतच्छरीरप्रेरणादेवोत्तरभाविगुणवैषम्यावस्थाया उत्पत्तेर्युक्तत्वेन नारायणैकनिष्ठत्वस्य स्फुटतरं प्रतीयमानत्वात्।

यदपि मध्यसृष्ट पुरुष एव 'नैवेह किंचन अग्र' इत्यादितृतीयाऽनुशासने 'दिव्योदेव एको नारायण' इति प्रतिपाद्यत इति तदसमञ्जसम्। प्रथमखण्डे देवाद्यवान्तरसृष्टिकर्तृमध्ये प्रतिपादनेऽपि 'नैवेह किंचनाग्र आसीदि'त्यस्य 'तदाहुः किं तदासीत् न सन्नसन् न सदसदि'ति वाक्यैकार्थ्याय कारणविषयत्वावश्यम्भावात्। तथा हि सन् असन् न सदसदि'त्यस्य वाक्यपरमकारणत्वपरमभ्युपगन्तव्यम्। तस्मात् 'तमस्सञ्जायत' इत्याद्युत्तरवाक्यानुसारात्। न हि तद्वाक्यस्य सदादिशब्दवाच्यनिषेधमात्रपर्यवसायित्वे तस्मादित्यादिवाक्यं सङ्गच्छते; अभावस्य प्रपञ्चकारणत्वाभावात्। अतः चेतनाचेतनतदुभयमिश्रव्यष्टिपदार्थेभ्यश्च विलक्षणब्रह्मनञ् पर्युदासलक्षणां 'नार्षेयं

प्रणीत' इत्यादाविवाङ्गीकृत्य 'न सन् नासदि'ति वाक्ये प्रतिपाद्यते। तत्र 'सर्वं वाक्यं सावधारणमि'ति न्यायेन ब्रह्ममात्रसत्वप्रतिपादनादितरचेतनाचेतन-प्रपञ्चनिषेधोऽप्यर्थसिद्धः। एवं तद्वाक्यसिद्धप्रपञ्चनिषेधानुवादकस्य 'नैवेह किंचनाग्र आसीदि'त्यस्यापि तत्र कारणीभूते विशेषविधानप्रवृत्तत्वमवश्याभ्यु-पेयम्। अन्यथा तद्वाक्यसिद्धप्रपञ्चनिषेधानुवादमात्रस्यानर्थक्यापातात्। तस्मात् 'न सन्नासदि'ति वाक्यप्रतिपाद्यमाने ब्रह्मणि नारायणत्वरूपविशेषविधानार्थं प्रवृत्तमिदं वाक्यमिति तस्य मध्ये सङ्कीर्त्यमानवस्त्वन्तरपरत्वमयुक्तम्।

ननु 'दिव्यो देव एको नारायण' इत्यस्य 'अमूलमनाधार इमाः प्रजाः प्रजायन्त' इत्यनन्तर माम्नानेन विपरिणामेन सन्निहितजनिक्रियाया एव सम्बन्धात् नारायणस्य जनिमत्वप्रतिपादकमेव तदिति चेत् - न। किं काल-विशेषे नारायणस्य जनिमत्वं तेन प्रतिपाद्यते? किं वा जनिमत्वमात्रम्? नान्त्यः। 'नैवेह किंचनाग्र आसीदि'त्यनुवादानर्थक्यापातात्। नाद्यः। 'तदण्डं सम्भवन्मध्ये सहस्रशीर्षे'त्यादिवाक्ये नारायणस्योत्पत्तिः प्रतिपाद्यत इत्यङ्गीकुर्वतात्वया सृष्ट्यग्रिमकाले नारायणोत्पत्तेः वक्तुमशक्यत्वात्। अन्यथा प्रथमखण्डस्य वाक्यविरोधापत्तेः। अण्डसृष्ट्यनन्तरोत्पत्तेः तद्वाचकपदाभावेन वक्तुमशक्यत्वात्। तद्वाचकपदाध्याहारेऽपि 'नैवेही'त्यादिवाक्यानर्थक्यस्य दुर्वारत्वात्। तस्मात् चेतनाचेतनविलक्षणतया प्रतिपादित ब्रह्मकोदेव इति विशये तदाकाङ्क्षापरिपूरणाय देवतानिर्धारणार्थत्वेन 'नैवेही'त्यादिवाक्यं प्रवृत्तमित्याकाङ्क्षानुरोधेनासीदि'ति पदस्यैवाध्याहारो युक्तः। न च कीर्त्यमानः पुरुषः क इत्यप्याकाङ्क्षाऽस्तीति वाच्यम्। प्रधानभूतपरमकारणविषयक-विशेषाकाङ्क्षापरिपूरकत्वस्यैव प्रधानाप्रधानयोः 'प्रधाने कार्यसम्प्रत्यय' इति न्यायेन वक्तुं युक्तत्वात्। उक्तं च वार्तिककृता कात्यायनेन — 'प्रधाने कार्य सम्प्रत्ययात् सिद्धमि'ति।

किं च जनिक्रियानुषङ्गपक्षेऽपि जननापादनवाचकपदाध्याहारोवर्जनीयः। प्रत्युतकल्प्योपस्थितिकपदाध्याहारस्त्वत्पक्षे। मत्पक्षे तु नैवेहे 'त्यत्राव्यवधानेन

श्रुतस्यासीदित्यस्याध्याहारः । अपि च त्वत्पक्षे विपरिणामाध्याहारौ द्वावपि वाच्यौ । मत्पक्षेत्वध्याहार एक एवेत्यपि विशेषः । तस्मात् 'नैवेहे'त्यत्र कारणस्य नारायणत्वं निर्धार्य इत्येवं वक्तुं युक्तम् ।

नन्वेवमस्य नारायणपरमकारणत्वतात्पर्यत्वेऽण्डसृष्ट्यनन्तरं नारायणपरत्वाऽभिमतपुरुषसूक्तश्रुत 'सहस्रशीर्षे'त्यादिविशिष्टपुरुषकीर्तनं कथं घटेतेतिचेत् न । 'उतामृतत्वस्येशान' इति ईशानपदश्रुतिः रूढया शिवमुत्थाप्य सूक्तं नयति तद्वशमितित्वयाऽप्यस्य सूक्तस्य परमशिवपरत्वाङ्गीकारेणानुयोगस्य तुल्यत्वात् । 'नतु मध्ये पुरुषो दिव्य' इत्युक्तिमात्रात् न सहस्रशीर्षत्वादि विशिष्टपुरुषस्योत्पत्तिः प्रत्येतुं शक्या । मध्ये तस्य स्थितत्वपरत्वेनापि तद्वर्ण नोपपत्तेरिति चेत् - न । तुल्यत्वात् ॥ ननु पुरुषसूक्तस्य निमित्तभूतपरमशिवातिरिक्तचिच्छक्त्यंशजन्माद्रुपादानभूतनारायणपरत्वपक्षे मध्ये कीर्तनमुपपद्यत इति चेत् - न । उपादानकारणभूतस्य नारायणस्य पृथिव्यण्डसृष्ट्यनन्तरसृष्टत्वायोगेनानुपपत्तेरकल्पत्वात् ।

यदपि 'चक्षुर्द्रष्टव्यंचे'त्यादौ सर्वोपादनत्वप्रयुक्तं सार्वात्म्यं प्रतिपाद्यत इति तदप्यनुपपन्नम् । 'यश्चक्षुषी यो द्रष्टव्ये यो नाड्यां यो घ्रातव्य' इत्यादिषु प्रतिपर्यायं 'एतस्मिन् सर्वस्मिन्नन्तरे संचरति सोऽयमात्मातमात्मा नमुपासीते' त्यन्तर्यामितयोक्तस्य वस्तुनो विशेषनिर्धारणाकाङ्क्षायाः सत्त्वेनोत्तरखण्डस्थितस्य 'चक्षुश्च द्रष्टव्यं चे'त्यादेरन्तर्यामित्वनिबन्धनः सर्वात्मप्रतिपादनपरत्वस्यैव स्वरसत्वात् । 'सिंहवनगुप्ति'न्यायेनानेन पूर्ववाक्यप्रतिपन्ने नारायणत्व उत्तरवाक्यप्रतिपाद्यमानसार्वात्म्यान्तर्यामित्वनिबन्धनत्वस्य च वाक्यद्वयपर्यालोचनया ज्ञातुं शक्यत्वात् । किं चैतदुत्तरखण्डे 'अन्तश्शरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरमि'त्यारभ्भ 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण' इत्यन्तेन सन्दर्भेण कारणकार्योभयात्मकत्ववस्त्वन्तर्यामित्वप्रतिपादनात् नारायणशब्दार्थस्य विशिष्यान्तर्यामित्वस्य बुद्ध्यारूढत्वात् नोपादानत्वनिबन्धनमेव सार्वात्म्यमिति वक्तुं युक्तम् । अपि

चोपादानत्वप्रयुक्तत्वेऽपि नारायणस्य ब्रह्मात्मत्वमनिवार्यम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिरुपादानातिरिक्त निमित्ताङ्गीकारासम्भवात् । विस्तरस्तु **भाष्यविस्तरश्रुतप्रकाशिकयोरनुसन्धेयः ।**

परमात्मसृज्यस्यान्तर्यामित्वं न सम्भवतीत्यनुपपन्नम् । नारायणस्य स्वातिरिक्तसृज्यत्वग्राहकप्रमाणासिद्धेः । दिव्यविशेषणव्यावृत्त्यादिवि परमाकाशरूपायां चिच्छक्तौ भवत्वेन प्रकृतस्य नान्तर्यामित्वस्वरूपेण सम्भवतीत्यपि तत्तुच्छम् । "यथा नद्यः स्यन्दमानाः समुद्रे स तं गच्छन्ति "नामरूपे विहाय तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्यं' दिव्योह्यमूर्तः पुरुष' इत्यादीनामपि परमात्मपरत्वाभावापत्तेः । 'तत्र जातस्तत्र भव' इति पृथगधिकारात् कर्णललाटात् कर्णालङ्कार इत्यादौ तत्रोत्पत्तिशून्येऽपि भावार्थकन् - प्रत्ययाङ्गीकारेण तस्योत्पत्त्यर्थकत्वासम्भवात् । वस्तुतः शैषिकस्यास्य प्रत्ययस्य भावार्थजातार्थयोराहत्य विधानभावादर्थान्तरेण सावकाशत्वाच्च ।

दिव्यशब्दस्य परमाकाशवर्तित्वपरत्वान्महाजलौघमध्यसृष्टब्रह्माण्डगर्भगोलकमध्यनिवासलब्धनारायणसंज्ञस्य परमात्मत्वं न सम्भवतीत्यप्यज्ञानविजृम्भिविकल्पासहत्वात् । तथा हि - किं नारायणशब्दयोगार्थपर्यालोचनया उदकान्तर्वर्तित्वमात्रावगमात् कृत्स्नान्तर्यामित्वं नास्तीत्यभिमतम्, अथवा नारायणसंज्ञाया अनन्तरभावित्वात् तत्संज्ञितस्तस्य तत्प्रागभावपदार्थान्तर्यामित्वं न संभवतीत्यभिमतम् । नाद्यः । उदकान्तर्वर्तित्वप्रतिपादनस्य तदितरान्तर्वर्तित्वाभावपर्यन्ततात्पर्यकत्वाभावात् । **अन्तर्यामित्वब्राह्मणे** – (बृ· उ· 3-7-4) '**योऽप्सु तिष्ठन्**' इत्युदकान्तर्वर्तित्वेन प्रतिपादितस्यैव कृत्स्नान्तर्यामित्वावेदनात् ।

'नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणस्मृतः ॥'

इत्यादिशास्त्रबलात् सर्वान्तर्यामित्वस्य नारायणशब्दार्थत्वावगमाच्च । न द्वितीयः संज्ञाया अनन्तरभावित्वासिद्धेः । योगार्थस्यैव ह्यनन्तरभावित्वम् । न च तावता

संज्ञाया अनन्तरभावित्वं कदाचित्तत्सम्बन्धमादाय शब्दप्रवृत्तेः सर्वदापि सम्भवात् । पूर्वकल्पसम्बन्धिनारस्थितिमादाय सर्गादावपि नारायणशब्दप्रवृत्ति-सम्भवाच्च । संज्ञाया अनन्तभावस्य संज्ञिनस्तत्पूर्वभाविपदार्थान्तर्यामित्वाबाधकत्वाच्च । न चानन्तरभाविन्या संज्ञिया तत्पूर्वभाविपदार्थान्तर्वर्तिनः कथं निर्देश इति वाच्यम् । निर्देशदशायां संज्ञाया उपस्थिति मात्रस्य तत्र तन्त्रत्वत्, न हि संज्ञायाः प्रतिपाद्यमानपदार्थप्रागभावोऽपि संज्ञिनि देशे तन्त्रम, कस्मिंश्चिदर्थे सङ्केतितेन शब्देन सङ्केतात्प्रागभाविनोऽर्थस्य पश्चात् निर्दिश्य प्रतिपादना-सम्भवप्रसङ्गात् । तस्मात् नारायणस्य सर्वान्तर्यामित्वे न किंचित् बाधकमिति सर्वान्तर्यामित्वसर्वकारणत्वादिप्रतिपादनमुखेन नारायणस्य सर्वोत्कर्ष प्रख्यापनैक-तानेयं सुबालोपनिषदिति सर्वमवदातम् ।

उपबृंहिता चेयमुपनिषत् भगवतामनुना स्वप्रणीते धर्मशास्त्रे —
( म· स्मृ· 1–5 )

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

ततस्स्वयम्भूर्भगवानव्यक्तोव्यंजयन्निदम् ।
महाभूतादिवृत्तौजः प्रादुरासीत् तमोनुदः ॥

योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तस्सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एषः स्वयमुद्बभौ ॥

सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥

तदण्डमभवत् हैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
तायदस्यानं पूर्वं तेन नारायणस्स्मृतः ॥

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥

इतीयं सप्तश्लोकी श्रुतप्रकाशिकायां व्यासाचार्यैर्व्याख्याता ।

अयं हि तद्ग्रन्थः [ स्मृत्यधिकरणे - 2-1-1 ] – " धर्मान् नो वक्तुमर्हसी"ति मुनिभिः पृष्टो भगवान् मनुधर्मान्विवक्षन् भगवदाराधनरूपस्य वर्णाश्रमधर्मस्याराध्यज्ञानसापेक्षत्वात् प्रथममाराध्य स्वरूपमाह-आसीदिदमित्यादि-सप्तभिः श्लोकैः । तत्र परमकारणभूतस्यैव सर्वतादात्म्यसम्भवादग्नीन्द्रादि-सर्वदेवतातादात्म्योपपत्त्यर्थं 'यतो वा इमानी'त्याद्यनुसारेण लक्षणं विवक्षन् भगवतः परमकारणत्वं वक्तुं वेदान्तेषु सृष्टेः प्रलयपूर्वकत्वेन प्रतिपादितत्वात् प्रथमं प्रलयदशामाह — आसीदिति । अत्र सुबालोपनिषदर्थे भगवता मनुना-ऽनुसन्धीयते । अतस्सुबालोपनिषदुक्तप्रकारेणात्र प्रलय उच्यते । तत्र हि 'पृथिव्यप्सु प्रलीयत' इत्यादिना पृथिव्यादिक्रमेण तमः पर्यन्तप्रलय उक्तः । तमाह इदं तमोभूतमासीदिति । तत्र पृथिव्यादीनां स्वकारणेषु लयो वैयधि-करण्येन प्रतिपादितः ।

'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥'

इति प्रक्रियया सत्कार्यवादकाष्ठामभिप्रेत्य सामानाधिकरण्येनेदं तमो भूतमित्युक्तम् । तमोभूतं — तमोभाववत् । तमोऽवस्थमासीदित्यर्थः । तमसि लीयत इति निर्देशस्यायमर्थ इत्यभिप्रायः । यथाह - भगवान् [ बादरायणपिता ] पराशरः - 'अव्यक्तस्थे च सलिले वाय्ववस्थे च तेजसी'ति । तमोऽवस्थस्य कारणस्य योग्यानुपलब्धिनिरस्तत्वशङ्काव्यावृत्त्यर्थमाह - अप्रज्ञातमिति । प्रकृष्टं ज्ञानं - अपरोक्षज्ञानम् । तेन विषयीकर्तुमशक्यमित्यर्थः । अयोग्यत्वादनुपलब्धिः । तस्मात् न योग्यानुपलब्धिरित्यभिप्रायः । अयोग्यत्वमुपपादयति-अलक्षणमिति ।

'शब्दस्पर्शविहीनं तद्रूपादिभिरसंहितम्'

इत्युक्तप्रकारेण रूपादिलक्षणरहितत्वात् प्रत्यक्षयितुमयोग्यमित्यर्थः । कार्येषु

रूपादिमत्त्वदर्शनात् कारणेनापि रूपादिविशेषगुणवत्ता भाव्यम् । अतो न यथोक्तकारणमुपपद्यत इत्यत्राह-अप्रतर्क्यमिति । प्रतर्कः-बाह्यतर्कः । तदगोचर-भूतं, ते तर्काः कालात्ययापदिष्टा इति भावः । यद्वा अप्रज्ञातमिति । प्रत्यक्षा-गोचरत्वस्योक्तत्वादप्रतर्क्यमित्यनुमानागोचरत्वमुक्तं स्यात् । 'तम एकी भवती'ति श्रुत्युक्तमविभागावस्थत्वं तमसो दर्शयति - अविज्ञेयमिति । विज्ञानं - विभागेन ज्ञानम् । परस्मात् ब्रह्मणः पृथग्व्यपदेशानर्हावस्थां क्षीरे नीरमिव प्राप्तमित्यर्थः । स्वरूपैक्याशङ्कापरिहारार्थमाह - प्रसुप्तमिव सर्वत इति । यथा सुषुप्तौ जीवस्य परमात्मनः पृथग्व्यवहारानर्हावस्थापत्तिरेव । न तु स्वरूपैक्यम् । एवं चिद-चिदात्मकस्य जगतो ब्रह्मणि पृथग्व्यवहारानर्हसंसर्ग एव न स्वरूपैक्यमित्यर्थः । सुषुप्तौ सर्वथा साम्यव्यावृत्त्यर्थं सर्वत इति पदम् । यद्वा पूर्वमचिदंशप्रलयप्रकार-उक्तः । 'प्रसुप्तमिव सर्वत' इति तु चिदंशप्रलयप्रकार उक्तः । तत इति । ततः - सर्गकाले प्राप्त इत्यर्थः । 'सम्प्राप्ते सर्गकाले व्ययाव्ययावि'तिवत् । स्वतः कारणान्तरसद्भावकृतोत्पत्तिप्रलयव्यावृत्त्यर्थमाह - स्वयम्भूरिति । परम-कारणविषयो हि स्वयम्भूशब्दोऽवयवार्थपौष्कल्यात् नारायणपरो दृष्टः । यथा सभापर्वणि —

> 'अव्यक्तोऽव्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ।
> पुरा नारायणो देवः स्वयम्भूः प्रपितामहः ॥'

इत्यारभ्य 'ततस्स भगवांस्तोये ब्रह्माणमसृजत् स्वयम्' इति । **मोक्षधर्मे** च—'नारायणो जगन्मूर्तिरि'त्यारभ्य ।

> 'ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा ।
> तस्मात् पद्मात् समभवत् ब्रह्मावेदमयो निधिः ॥'

इति । **आश्वमेधिके** च 'विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः' इति च । अतोऽयं स्वयम्भूशब्दो नारायणविषयः । चतुर्मुखस्रष्टरि प्रयुक्तत्वात् । ग्रन्थान्तरवचनैस्तत्प्रकरणानुगुण्यात् भगवच्छब्दसामानाधिकरण्याच्च । देवता-विशेषनिर्णयार्थं कारणत्वोपयोगिगुणपौष्कल्यज्ञापनार्थं चाह - भगवानिति ।

'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेणान्यत्र ह्युपचारतः ॥'

इति वचनात्। इदं व्यञ्जयन् व्यष्टिरूपकार्यजातं व्यञ्जयितुम्। 'लक्षण हेत्वोः क्रियाया' इति शतृप्रत्ययः। महाभूतादिवृत्तौजाः – व्यष्टिकारणानि पृथिव्यादीनि महाभूतानि। आदिशब्देन तत्कारणभूतमहदहङ्कारौ गृह्येते। तेषु प्रवृत्तसङ्कल्पज्ञानरूपतेजाः। तदर्थमव्यक्तः प्रादुरासीत्। अर्श आद्यजन्तत्वात् पुल्लिङ्गता। अत्राक्षरावस्थाप्यर्थसिद्धा। 'महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयत' इति हि क्रमः। पूर्वमविभक्ततमश्शरीरको भगवान् व्यष्टिसृष्टिहेतुभूततन्मात्राहङ्कारसृष्ट्यर्थं स्वसङ्कल्पाद्विभक्ततमश्शरीरकोऽक्षरावस्थाप्राप्तिपूर्वकमव्यक्तावस्थप्रकृतिशरीरकोऽभूदित्यर्थः। अव्यक्तशब्दमपि विवृण्वन् समष्टिव्यष्टिसृष्टिमनन्तरवर्तिनीं सङ्क्षेपेणाह-योऽसाविति। अतीन्द्रियग्राह्यः - इन्द्रियमतीत्यवर्तमानेन शास्त्रेणैव ग्राह्यः। यद्वा इन्द्रियग्राह्यानतीत्यवर्तमानः। इन्द्रियग्राह्यानतीत्य वर्तमानत्वं तुच्छस्याप्यस्तीति तद्व्यावृत्त्यर्थमाह - सूक्ष्म इति। अत एवाव्यक्तः न तुच्छ इत्यर्थः। सनातनः - अव्यक्तशरीरकत्वे- [illegible] इत्यर्थः। स एष इति कार्यकारणयोरेकद्रव्यत्वं [illegible]। तथापि कारणं कार्यं चेत् निमित्तान्तरापेक्षा स्यादित्यत्राह - स्वयमिति। मृत्कुलालादौ निमित्तोपादानयोर्भेददर्शनादेकस्यैव निमित्तोपादानत्वेऽनुपपन्ने इत्यत्राह - अचिन्त्य इति। बाह्यतर्काः श्रुतिनिरस्ता इति भावः। सर्वभूतमय उद्बभौ - सर्वसमष्टिव्यष्टिरूप उद्बभौ। कार्यकारणयोरेकद्रव्यत्वे कार्यकारणवैषम्यं किमित्यत्राह - उद्बभाविति। पदाभ्यां सूक्ष्मत्वस्थूलत्वे एव कार्यकारणदशावैषम्यम्। न तु द्रव्यभेद इत्युक्तं भवति। एवं सङ्क्षेपेण समष्टिव्यष्टिसृष्टिमुक्त्वा समष्टिसृष्टिं पृथगाह - सोऽभिध्याय इति। अभिध्यानं सङ्कल्पः। स्वरूपेणैव समष्टिव्यष्टिरूपेण परिणतश्चेत् भगवच्छब्दोक्तनिर्दोषत्वादिविरोध इत्यत्राह - शरीरात्स्वादिति। शरीरशब्देन तमोऽव्यक्तावचित्संसृष्टं अचिद्वस्तूच्यते। सिसृक्षुर्विविधाः प्रजाः - व्यष्टिसिसृक्षयेत्यर्थः। अप एव ससर्जादौ - अप्छब्दोऽण्डकारणसमस्ततत्त्वप्रदर्शनार्थः। पृथिवीमयस्याण्डस्या-

न्नमकारणं ह्याप:। अतोऽप्छब्दनिर्देशः। अप इति व्याख्येयश्रुतिगताप्छब्द:-न्मारितः। 'ता इमा आपस्तद्धिरण्यमण्डमभवदि'ति हि श्रुतिः। अप्छब्दार्थश्च इमेव महाभूतादिवृत्तौजा इत्यादिना व्याख्यातः। एवकारेण त्रिवृत्करणं व्यवर्त्यम्। अत्रिवृत्कृता आप इत्यर्थः। तासु वीर्यमपासृजत् - वीर्यं त्रिवृत्करणजनितामण्डोत्पादनशक्तिं तास्वजनयदित्यर्थः। अत्र 'नानावीर्याः पृथग्भूताः नाशक्नुवन्नि'त्याद्यनुसन्धेयम्। एवं समष्टिसृष्टिमुक्त्वा अथ व्यष्टि-सृष्टिमाहतदण्डमिति। तत् अण्डकारणतत्त्वजातम्। इतरहेमव्यावृत्त्यर्थमाह - न्हेमांशुसमप्रभमिति। तत्र चतुर्मुखसृष्टिमाह - तस्मिन्निति। सर्वलोकपितामह इत्यनेन देवमनुष्यादीनां दक्षादयः स्रष्टारः - तेषां स्रष्टा चतुर्मुख इति। न्मावतोऽण्डान्तर्गतवस्तु सर्गस्सद्वारक इत्युक्तं भवति। स्वयं - भगवान्नारायणः परमकारणभूतः स्वयमेव चतुर्मुखशरीरकोऽभवदित्यर्थः। 'विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थित' इति वचनात्। **सुबालोपनिषदि** 'अज एको नित्य' इति निर्विकारत्वं जगत्कारणत्वं जगदन्तरात्मत्वं चोक्त्वा नारायणशब्दोऽ-न्वृदावर्तितः। अतो जगत्कारणत्वादिकं त्रितयमपि नारायणशब्दस्यावयवार्थ इति श्रुतेरभिप्राय इति मत्वा जगत्कारणत्वादिप्रवृत्तिनिमित्तकं नारायणशब्दं परम कारणस्य वाचकत्वेनाह - आपो नारा इति। चित्संसृष्टान्यण्डकारणतत्त्वान्यापः। तासां नारत्वमुपपादयति — आपो वै नरसूनव इति।; 'ईङ्क्षाय' इत्यस्माद्धा-तोः डप्रत्यये टिलोपे च कृतेर इति भवति। नरः-अक्षयः, निर्विकार इत्यर्थः। 'जह्नुर्नारायणो नर' इति वचनात् नर इति भगवन्नाम। तस्मात् जाता इत्यण्प्रत्यये कृते नारा इति भवति। नाराख्या आपोऽयनमस्येति नारायणः। एवं नरशब्देन निर्विकारत्वं, नारशब्देन जगत्कारणत्वं, अयनशब्देन जगदन्त-रात्मत्वं चेत्यर्थत्रयमुक्तं भवति। तस्मिन् जज्ञे स्वयं ब्रह्मेति भगवत एव प्रस्तु-तत्वात् स एवात्रास्येति सर्वनामशब्देन परामृश्यत इति न व्यवहितपरा-मर्शित्वदोषः।

यत्तु व्याख्यात्रन्तरैः सर्वनामशब्दः प्रधानपरामर्शी। शाब्दप्राधान्यं च प्रथमानिर्दिष्टस्य चतुर्मुखस्येति स एव नारायणसंज्ञ इत्याशङ्क्य बहुश्रुतिवचन

विरोधात्। उपरि चतुर्मुखस्य भगवद्विसृष्टतावचनाच्च भगवत एव नारायणसंज्ञेति परिहृतम्। तच्चाविरुद्धम्। 'अथ चतुर्मुखस्य नारायणसंज्ञत्वव्यावृत्त्यर्थमितरदेवानां द्रुहिणसृष्टानां परत्वशङ्कादूरोत्सारणार्थं च चतुर्मुखस्य भगवद्विसृष्टतामाह - यत्तदिति। यत्तदित्यनुवादरूपत्वात् स[भगवानत्रानूद्यते। अव्यक्तस्य चिदचित्समुदायरूपत्वादव्यक्तशरीरकं ब्रह्म सदसच्छरीरकं भवति। तद्विसृष्टः तेन विशेषेण जीवबुद्ध्यव्यवधानेन] भगवतैव सृष्टः स ब्रह्मेति कीर्त्यत इत्यर्थः' इति॥

एतेन नारायणनामनिर्वचनं सन्निहितत्वात् जलमध्येऽण्डोत्पन्नत्वेन क्लृप्तावयवशक्तित्वाच्च ब्रह्मण्येवान्वेति। न तु स्रष्टरि स्वयम्भुवीति न मानववचनानां नारायणकारणत्वप्रतिपादकत्वम्। न च सन्निधानात् प्रकरणस्य बलीयस्त्वात् प्रकरणिसृष्ट्यैव तदन्वयः, तत्रापि महाजलौघसृष्टियुक्तिसामर्थ्यसिद्धतन्मध्यनिवाससद्भावात् अन्यत्रार्थतृप्तिरिति वाच्यम्। तस्यात्र प्रकरणित्वासिद्धेः। प्राधान्येन तत्प्रतिपादयिषिततायां लिङ्गादर्शनात्।

'भूग्रामस्य सर्वस्य ह्युत्पत्तिः प्रलयस्तथा'

इति महर्षिणां प्रपञ्चोत्पत्तिप्रश्ने हि तन्निरूपणासीदिदमिति प्रवृत्तं, न तु यतो भूतग्रामस्योत्पत्तिर्यस्मिंश्च प्रलयस्तं स्रष्टारं वेदेति प्रश्ने तन्निरूपणाय प्रवृत्तम्। तस्मात् निष्परिपन्थिसन्निधानेन नारायणनामनिर्वचनस्य ब्रह्मण्येवान्वयो युक्तमिति परास्तम्। व्यासार्यैः (ब्र॰ सू॰ 1-4-29) नारायणनामनिर्वचनस्य भगवद्विषयत्वस्थापनात्॥

केचित्तु - अपां नारसंज्ञां विधायकेन वाक्येन व्यवधानात् न ब्रह्मणस्सन्निधानमस्ति। किं च 'आपो वै नरसूनव' इत्यत्रापां सृष्टस्ततोऽपि सन्निधानात् तत्रैव तन्निर्वचनान्वयो युक्तः, न ब्रह्मणि।

'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्।
तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यत॥'

इति तदनन्तरश्लोके तत्संज्ञाविधायके संज्ञिविशेषणवैयर्थ्यापत्तेश्च । आद्यसंज्ञाविधानस्य स्रष्टृविषयत्वे आनन्तर्यात् द्वितीयसंज्ञापि तद्विषयेति शङ्कानिवारणाय संज्ञि विशेषणवत् संज्ञाद्वयस्याप्येकविषयत्वे तत्प्रयोजनासम्भवात् ।

'महाप्रलयकाले त्वेतदासीत् तमोमयम् ।
प्रसुप्तमिव चात्यर्थमप्रज्ञातमलक्षणम् ॥

ततस्स्वयम्भुरव्यक्तः प्रभवः पुण्यकर्मणाम् ।
व्यञ्जयन्ते तदखिलं प्रादुरासीत् तमोनुदः ॥

अतीन्द्रियः परोऽव्यक्तादन्तर्यामिस्सनातनः ।
नारायण इति ख्यातः स एव स्वयमुद्बभौ ॥

स्वशरीरादभिध्यायन् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासुवीर्यमपासृजत् ॥

तदेवाण्डं समभवद्धेमरूपमयं जगत् ।
तत्र ब्रह्मा सम्भवत् ॥'

इत्यादिमात्स्यवचनेन समानार्थे स्रष्टर्येव नारायणपदप्रयोगस्यनिस्संशयत्वाच्च । तस्मादिदं नारायणनामनिर्वचनं प्रसिद्धनारायणविषयकमेव । अन्यथा प्रसिद्धिविरोधापत्तेः । तस्मादिमानि वचनानि नारायणे कारणत्वप्रतिपादनैकतत्पराणी त्याहुः ।

यत्तु कश्चिदाह - तमोनुद इत्येतत् क्विप् प्रत्यये पञ्चम्यन्तम् । तेन तमोऽधिष्ठातुः सकाशात् स्वयम्भ्वादिशब्दितस्य नारायणस्य प्रादुर्भावप्रतिपादनपरमिति न नारायणस्य मूलकारणतायामुपबृंहणत्वमस्य वचनजातस्य युज्यते । न च तमोनुद इत्येतत् दिगुपलक्षणकप्रत्ययान्तत्वेन प्रादुर्भवितृविशेषणमेवेति शङ्क्यम् । 'आसीदिदं तमोभूतमि'ति श्लोकेन सर्गादौ तमोरूपेण जगदवस्थानं प्रतिपाद्यते । 'ततस्स्वयम्भुर्भगवानि'त्यादिना तदनन्तरं प्रादुर्भूतत्वेनोच्यमानस्य रूपस्य पूर्वसिद्धितमोऽधिष्ठातृत्वायोगात्, तस्य प्रादुर्भवितृविशेषणत्वे 'योऽसा'

विंत्याद्यनन्तरश्लोकस्यासङ्गत्यापत्तेश्च । स ह्यतीन्द्रियादिग्राह्यत्वादिविशिष्टात् परमेश्वरात् प्रस्तुतस्य स्वयम्भुवोऽभेदव्यवच्छेदपरः । षड्विंशतिरित्येव ब्रूयादिति (जै. सू. 9-4-2) वदेवकारोपहतविधिशक्तिकतया तस्य स्वयम्भवितृत्वाद्यविधायकतया 'ततः स्वयमुद्भावि'त्यंशस्य स्वयम्भूरिति पूर्वश्लोकपरामृष्टस्वयंभवितृत्वधर्मेण धर्म्यनुवादपरत्वात् । न च निखिलप्रपञ्चप्रकृतिभूतमायात्मकतमोधिष्ठातृपरस्य तमोनुद इत्यस्य स्वयम्भुविशेषणत्वे तस्य परमेश्वरात् भेदप्रसक्तिरस्ति । न तावदभावव्युत्पादनस्येह सङ्गतिरस्ति । कदाचिदस्मत्पक्षे तु

---

**षड्विंशतिरस्य वङ्क्रयः इत्यादौ समस्य ऊहाधिकरणम्** —

अश्वमेधे त्रयः सवनीयाः पशवः श्रुताः । अश्वः तूपरः, गो मृगः, ते प्राजापत्याः इति । तेषु अश्वस्य चतुस्त्रिंशद्वङ्क्रयः (चतुस्त्रिंशत् वाजिनः देवबन्धोः वङ्क्रीरश्वस्य । स्वधितिः समेति ।) अत्र अध्रिगुप्रैषे विशेषोऽयम् आम्नायते ।

न चतुस्त्रिंशत् इति ब्रूयात् । षड्विंशतिरित्येव ब्रूयात् । सोऽयं निषेधः गिरापद निषेधवत् नित्यः । न तु विकल्पितः । चतुस्त्रिंशन्मन्त्र निषेध पुरस्सरं षड्विंशतिमंत्रे विहिते सति नित्यनिवृत्तिः निषिद्धस्य भवति । इति पूर्वः पक्षः । सिद्धांतस्तु - षड्विंशतिरित्येव ब्रूयात् इत्येवकारेण विधित्व प्रत्ययबाधात् - षड्विंशति मन्त्रस्तावत् चोदकप्राप्तत्वात् न निषेधः । तस्य चतुस्त्रिंश मन्त्रेणापवादप्रसक्तौ न चतुस्त्रिंशत् इत्यपवादकं मन्त्रं प्रतिषिध्य चोदक प्राप्तस्य अनयोदितत्वेन यथापूर्वम् - अवस्थानमनूद्यते । एवं अर्थं सूचयितुं एवकारः प्रयुक्तः । गिरापदद्दृष्टांतस्तु विषमः । अप्राप्तत्वात् तत्र इरापदं विधीयते । तेन च विहितेन पाठ प्राप्ते गिरापदे बाधिते सः बाधः नगिरा इति प्रतिषेधेन अनूद्यते । ततः दृष्टांते निषेधानुवादः दार्ष्टान्तिके विध्यनुवादः इति महद्वैलक्षण्यम् । तस्मात् प्रसंजकेन उपजीव्येन अनुमित विधिना प्रत्यक्षनिषेधेन च समान बलतया चतुस्त्रिंशत् इत्ययं मन्त्रः अश्वस्याध्रिगुप्रैषे विकल्प्यते (जै. सू. 9-4-2)

स्तमोऽधिष्ठातुरीश्वरात् स्वयम्भुवः प्रादुर्भावोक्त्या ततो भेदप्रसक्तिः। जीवस्य स्वयम्भूत्वानुपपत्तेः। तस्यापीश्वराभावेनेकेश्वरवाद इति शङ्कावारणाय तदभावश्च वक्तव्य इति। तमोऽधिष्ठाता परमेश्वर एव, उपाधिविशेषकृतेन नारायण-स्यात्मना रूपान्तरेण सर्गादावभिव्यक्त इत्येतदभिप्रायोऽनन्तरश्लोके सङ्गच्छते-तराम्। तस्मात् क्लृबन्तत्वेन पञ्चम्यन्तं प्रादुर्भावयितृपरमेव। प्रादुर्भावयिता च 'प्रशासितार'मित्यादिशास्त्रोपसंहारश्रुतपरब्रह्मनिर्वाणानुरोधात् परमशिव एव व्यवस्यतीत्युपसंहारस्याप्यैकार्थ्यं लभ्यते। न च कथमुपसंहारानुरोधात् जीवपरत्व-निर्णयः, तस्यैव शिवपरत्वग्राहकः, प्रमाणाभावादिति वाच्यम्। शास्त्रोपसंहारे।

'प्रशासितारं सर्वेषामणीयांसमणीयसाम्।
रुक्माभं स्वप्नधीगम्यं विद्या तु पुरुषं परम्॥'

इति सर्वान्तर्यामित्वादिगुणकं परमात्मानमुपदिश्य,

'एनमेके वदन्त्यग्निर्मरुतोऽन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥'

इति वैदिकव्यवहारबाहुविध्यं प्रदर्श्य

'एष सर्वाणि भूतानि पञ्चभिर्व्याप्यमूर्तिभिः।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्॥'

इति मूर्तिपञ्चकेन सर्वभूतव्यापिनं रूपलिङ्गप्रदर्शनेन शिव एव परमात्मेति स्पष्टीकारात्। प्रतिपादिता हि तैत्तिरीयोपनिषदा सवितृमण्डलमध्यवर्तिनं शिवं प्रस्तुत्य तस्य मूर्तिपञ्चकेन सर्वभूतव्याप्तिः। स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतव्यमित्यादिना। यद्यपि पञ्चात्मेत्यविशेषेण श्रुतं तथापि प्राक् सद्योजातादिमूर्तिपञ्चकप्रतिपादनात् तथैवेह व्यासव्युपदेशायो-पन्यस्तमिति गम्यते। तस्मादुपसंहारस्य शिवपरत्वात् तदैकार्थ्याय तमोनुद इत्येतत्क्लिबन्तत्वेन पञ्चम्यन्तं प्रादुर्भावयितृपरमेवेत्युपगन्तुं युक्तमिति।

अत्रोच्यते — तमोनुद इत्यस्य प्रथमान्तत्वमभ्युपगम्य स्वयम्भूशब्द-सामानाधिकरण्यमेव युक्तं वक्तुम्। स्वयम्भूशब्दाभिधेयस्य 'सोऽभिध्याये'-त्यादिना चतुर्मुखकारणत्वेन प्रतिपाद्यमानस्य,

'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥'

इति श्लोके कारणत्वनित्यत्वयोः प्रतिपादनात् । कारणपदं हि न यत्किञ्चित् कारणत्वाभिप्रायकम् । तस्य सर्ववस्तु साधारण्येनाव्यावर्तकतापत्तेः । किं तु मूलकारणत्वाभिप्रायकम् । तथा च न चतुर्मुखकारणस्यान्यत उत्पत्त्यङ्गीकारे तत्साङ्गत्यमिति । तमोनुद इत्यस्य प्रथमान्तत्वसन्देहे 'सन्दिग्धे तु वाक्य-शेषादि'ति न्यायेन कारणत्वोक्ति स्वयम्भूविषयिणी प्रथमान्तत्वं तमोनुद इत्यस्य निर्धारयति । एवं नित्यत्वमपि स्वयम्भुवोऽन्यत उत्पन्नत्वे नित्यत्वोक्त्ययोगात् । अतस्तमोनुद इत्यस्य इगुपधलक्षणकप्रत्ययान्तत्वेन प्रादुर्भवितृविशेषणत्वं न सम्भवति । 'आसीदिदं तमोभूतमि'ति श्लोकेन सर्गादौ तमोरूपेण जगदवस्थानं प्रतिपाद्य 'ततस्स्वयम्भूर्भगवानि'त्यादिना तदनन्तरं प्रादुर्भूतत्वेनोच्यमानस्य पूर्वसिद्धतमोऽधिष्ठातृत्वायोगादिति । तदसङ्गतम । स्वरूपेण प्रादुर्भावानुक्तेः पूर्वं तमः प्रेरकत्वेनोक्तस्याव्यक्तस्वरूपेण प्रादुर्भावस्यैवोच्यमानत्वात् । 'महा-भूतादिवृत्ताजि'त्यस्य महाभूतादिविषयकसङ्कल्पज्ञानरूप तेजा इत्यर्थकत्वेन तदुत्पादनायाव्यक्तशरीरकत्वेन प्रादुरासीदित्यर्थवर्णनसम्भवात् ।

यदपि योऽसावतीन्द्रियग्राह्यत्वादिविशिष्टात् परमेश्वरात् स्वयम्भुवो-भेदव्यवच्छेदपरस्य निखिलप्रपञ्चप्रकृतिभूतमायाख्यतमोऽधिष्ठातृपरस्य तमोनुद इत्यस्य स्वयम्भवितृविशेषणत्वे परमेश्वरात् भेदप्रसक्त्यभावेन निष्प्रयोजनत्वं स्यादिति - तदप्यनुपपन्नं सर्वभूतमयपदसार्थक्यायसर्वभूतमयत्वेन प्रादुर्भाव परत्वेन सप्रयोजनसम्भवात् । प्रत्युतत्वपक्ष एवास्य श्लोकस्य निष्प्रयोजनत्वम् । न चातीन्द्रियग्राह्यत्वादि विशिष्टात् स्वयम्भुवः भेदव्यवच्छेदपरत्वेन प्रयोजन-वत्वम् । जीवस्य स्वयम्भूत्वानुपपत्तेरिति त्वयोक्तत्वेन न जीवात्मत्वसम्भवेनेश्वर-भिन्नत्वशङ्काया अनुदयात् । न चेश्वरभावेऽपि ततो भेदशङ्का कर्मणोरवश्यं विना स्वेच्छाधीनाविर्भाववत्वं हि स्वयम्भूत्वमितित्वयोक्तरीत्या तत्प्रादुर्भावस्यैच्छि-कत्वात् अभेदेऽपीच्छाबलात् रूपान्तरविशिष्टविशेषणोत्पत्तेः सम्भवात् प्रमाण-न्यायविरुद्धानेकेश्वरशङ्काया अनुदयात् ।

यदप्येवकारोपहृतविधिशक्तिकतया स एव स्वयमुद्भावि'त्यस्य स्वयम्भवितृत्वं विधायत्वमिति - तत्तुच्छम् — 'स एष स्वयमुद्भावि'ति पाठात् सर्वभूत-कर्तृत्वेनोद्भावस्याप्राप्ततया । '**यद्यपि च चतुरवर्तीयजमानः पञ्चावर्तैव वपाकार्येत्य'** ( जै. सू. 10-7-20 )त्येव विधिसम्भवात् । अपि च पूर्वश्लोके स्वयम्भूर्भगवानव्यक्त इत्यादिशब्दैः प्रथमान्तैः प्रतिपादितस्यैव ये चावसाविति सर्वनामपरामर्शो युक्तः । तस्य समानविभक्तिकप्रधानपरामर्शित्व-

---

**पञ्चावदानतायाः सर्वसाधारण्याधिकरणम्** —

दैक्ष्ये पशौ वपायागः हृदयाद्यंगयागश्च विहितः । तत्र वपायाग विषये यद्यपि चतुरवत्ती यजमानः, पंचावत्तैव वपा कार्या इति । श्रुतौ दर्शपूर्णमासयोर्हि चतुरवदानं एवं संपादितम् । सकृत् उपस्तरणम् - द्विः हविषोः अवदानम् सकृदभिधारणमिति । पंचावत्तिनां तु पंचावदानम् - हविरवदानस्य त्रिरावृत्या पंचावत्तसंपादनं भवति ।

पंचावत्ति व्यतिरिक्तानां सर्वेषां चतुरवदानमेव । चोदकेन दैक्ष्ये पशौ चतुरवदान पंचावदानयोः प्राप्तौ चतुरवत्तिनामपि पंचावदानम् विहितम् । यद्यपि चतुरवत्ती यजमानः पंचावत्तैव वपाकार्या इति वपायाग विषये श्रुतम् । अनेन वाक्येन सकृदुपस्तरणम् - कृत्स्नायाः वपायाः सकृदवदानम्, त्रिरभिधारणं इति । चोदकप्राप्त चतुरवदानविधेः अयं अपवादः ।

तत्र पंचावदानस्य वपायामेव श्रवणात्, किमियं पंचावत्तता वपायाग मात्र विषया उतहविष्ट्व सामान्यात् हृदयाद्यंगेष्वपि पंचावदानविधिरिति चिंतायाम् - पंचावदानस्य वपामुद्दिश्यैव विहितत्वात् - वपायाग विषय एव पंचावदानम् - हृदयाद्यंगेषु वचनाभावात् - न पंचावदानम् - इति पूर्वः पक्षः । सिद्धांतस्तु - अवदानस्य चोदक प्राप्तत्वेन विधेयत्वाभावात् - अवदानमुद्दिश्य विधीयमाना संख्या अवदानयुक्तेषु अन्येष्वपि पश्वंगेषु भवत्येव । ( जै. सू. 10-7-20)

स्वारस्यात् । '**प्रजापतिर्वरुणायाश्वमनयत्** (जै. सू. 3-4-14) स

---

**अश्वप्रतिग्रहेष्टयधिकरणम्** —

**इदमाम्नायते - यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेत् इति ।** तत्र प्रतिग्रहशब्दः यद्यपि स्वार्थं प्रतिग्रहमेव बोधयति, परंतु अर्थवादे दातुरेव दोष श्रवणात् प्रतिग्रह शब्दः उपक्रमस्थार्थवादानुसारेण दानपरः इति व्याख्यातव्यम् ।

उपक्रमेहि प्रजापतिः वरुणायाश्वमनयत् सस्वां देवता मार्छत् । सपर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तन्निरवपत्, ततो वै स वरुण पाशात् अमुच्यत । इति श्रुतम् । अत्र प्रजापति देवतायाः अश्वदानेन दोषप्राप्तेः उक्तत्वात् तदनुसारेण प्रतिग्रह शब्दस्य दानविषयत्वमेव वक्तव्यम् । तत्र विशेषाश्रवणात् लौकिक वैदिक दानयोरपि असाविष्टिः भवति इत्येकः पक्षः । न केसरिणो ददाति इति स्मृत्या अन्येभ्यः प्रीत्या क्रियमाणं लौकिकं अश्वदानं निषिद्धम् । तदनुष्ठाने प्रायश्चित्तरूपा इयं इष्टिः इति द्वितीयः पक्षः ।

सिद्धांते तु वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति । अश्वदाने जलोदराख्य दृष्टदोषः उच्यते । सच वैदिकदाने एव भवति । न तु लौकिकदाने । अस्ति हि वैदिकमश्वदानम् — 'बडवा दक्षिणा' इत्यादि श्रवणात् । वैदिक दानस्यैव अर्थवादेन बुद्धिस्थत्वात् वैदिकदान विषयः एव इयमिष्टिः भवति । उपक्रमस्थार्थवादानुसारेण इयमिष्टिः दातुरेव भवति । न प्रतिग्रहीतुः । असंजात विरोध्युपक्रमानुसारेण विधायक पदमपि प्रतिग्राहयेदिति । एवमन्तर्भावितणिजर्थपरतया व्याख्येयम् । चतुर्दशाधिकरणेन वैदिकाश्व दानाएव इयमिष्टिरिति निर्णीतम् । उत्तराधिकरण एव इयमिष्टिः दातुरेव न प्रतिग्रहीतुः इति निर्णीतम् । उत्तराधिकरणमवलंब्य पूर्वाधिकरणस्य प्रवृत्तत्वात् - अधिकरणद्वयस्यापि भावः अत्र लिखितः । (जै. सू. 3-4-14)

स्वांदेवतामार्च्छदि'त्यत्र तच्छब्दस्य प्रजापतिपरामर्शकत्वादङ्गीकारात् । अन्यथा प्रतिगृहीतुरिष्टिपक्षे उपक्रमविरोधात् भावनस्यासङ्गतत्वापत्तेः । पूर्वमव्यक्त-शब्देनोक्तस्य तेनैवाव्यक्तशब्देन पुनः परामृश्यमानस्य स्वयम्भवितुरेव योऽसा-वित्यत्रोत्पत्त्यमानत्वाङ्गीकारस्य युक्तत्वेन तदतिरिक्तपरत्वकथनस्यानुक्षितिप्रास्त-त्वाच्च । तस्मात् योऽसाविति श्लोकस्य स्वयम्भवित्रनुवादेन परमात्मभेदविधायकत्वं नाङ्गीकर्तुं शक्यमिति । पूर्वश्लोकेऽव्यक्तात्मना प्रादुर्भूतत्वेन कथितस्य सर्व-भूतात्मना प्रादुर्भूतत्वकथनपरत्वमेव वक्तुं युक्तम् । अतो नैतच्छ्लोकस्यार्थ-वांम्सया तमोनुद इत्यस्य पञ्चम्यन्तत्वाङ्गीकरणं युज्यत इति पूर्वोक्तरीत्या प्रथमान्तत्वनिर्धारणमेव साधीयः ।

यदप्युपसंहारे 'एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभि'रिति मूर्ति-पञ्चकेन सर्वभूतव्याप्तिलिङ्गदर्शनेन शिवः परमात्मेत्यवधार्यते । तैत्तिरीयोप-निषदि — 'प्राक्सद्योजातादिमूर्तिपञ्चकस्यैव स वा एष पुरुषः पञ्चधापं चात्मे'ति वाक्ये सर्वभूतव्याप्त्युपदेशायोपन्यस्तत्वावधारणेन मूर्तिपञ्चकेन सर्वभूत-व्याप्तेः शिवधर्मत्वावसायादिति - तदप्यसमञ्जसम् - 'स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तर-दिशश्चे'त्यव्यवहितोत्तर वाक्योपस्थितपृथिव्याद्यात्मकत्व परत्वसम्भवेऽनेकवाक्य-व्यवहितसद्योजातादिमूर्तिपञ्चकपरत्वाऽङ्गीकारस्यायोगेन मूर्तिपञ्चकेन सर्वानु-प्रवेशस्य ततः शिवधर्मत्वानिर्णयात् । भगवदसाधारणपुरुषशब्देन 'समुद्रे-ऽन्तः कवयो विचक्षते, त्वष्टारूपाणि विकुर्वन्तं विपश्चिमि'त्यत्र प्रसिद्धाभ्यां समुद्रशायित्वलिङ्गोत्तरनारायणप्रत्यभिज्ञानाभ्यां भगवत्परतया निर्णीते सुवर्ण-धर्मानुवाके' 'अन्तः प्रविष्टश्शास्ता जनानामि'ति श्रुतेन प्रशासितृत्वलिङ्गेन च 'प्रशासितारं सर्वेषामणीयसां समणीयसाम् । रुक्माभं स्वप्नधीगम्यं विद्या तु पुरुषं परमि'त्यस्य भगवत्परत्वावसायात् । 'पञ्चभिर्व्याप्यमूर्तिभि'रित्यस्य स्वाधिष्ठितैर्वियदादिभिः सर्वप्राणिजातव्यापित्व परत्वेनान्यथासिद्धि सम्भवाच्च । अनेनोपसंहारस्य शिवपरत्वनिर्धारणासिद्धेः ।

एतेन 'अग्निं पुरातनयिलोरचितात् रुद्रो वा एष यदग्निरीशानामि'त्यस्येत्यादिषु दृष्टचरप्रयोगैरग्नीन्द्रादि शब्दैर्व्यवहारवाक्योक्ति बलादुपसंहारस्य शिवपरत्वमिति निरस्तम् । एतादृशप्रयोगाणां शिवे तच्छक्तिकल्पनेऽन्यत्र प्रयोगवैधुर्ये वा प्रमाणाभावेनाकिञ्चित्करत्वात् । तस्मादुपसंहारस्य शिवपरत्वानिर्णयात् न तदनुरोधेनोपक्रमकीर्तितस्य शिवत्वनिर्धारणमित्यस्मदुक्तरीत्या भगवत्परत्वमेवास्य युक्तमिति सुबालोपनिषदुपबृंहणत्वं निर्बाधमित्येषा दिक्

एवमात्मप्रबोधोपनिषदपि भगवतः सर्वोत्कर्षं ख्यापयति—'प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् अकार उकारो मकार इत्यक्षरं प्रणवम्, तदेतदोमि'ति ।

'यमिष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात्'

ओं नमो नारायणाय शङ्खचक्रगदाधराये'त्यत्र वाक्ये 'ओं तत्सदि'ति निर्देशो ब्रह्मणस्त्रिविधःस्मृत' इत्यादिषु ब्रह्माभिधायकत्वेन प्रसिद्धप्रणववाच्यस्य श्रीमदष्टाक्षरमन्त्रदेवतात्वेन शङ्खचक्रगदाधरत्वेन च प्रतीयमानत्वात् तथा । 'अथ यदिदं ब्रह्मपरमिदं पुण्डरीकं तस्य य आत्मा' हेमपुण्डरीकमध्ये तस्मात् कारणरूपं बोधस्वरूपं विज्ञानपरं' 'तस्मात् तदाह मात्रं दीपवत्प्रकाशो' 'ब्रह्मण्यो देवकी पुत्रो' 'ब्रह्मण्यो मधुसूदनः 'सर्वभूतस्थमेकं नारायणम्, कारणरूपम्, एकाकरम्, परं ब्रह्म शोकमोहनिर्मुक्तं विष्णुं ध्यायन् नासीदती'त्यत्र दहराधिकरणे ब्रह्मधर्मतया वर्णितस्य दहरपुण्डरीकान्तर्वर्तित्वस्य सर्वभूतस्थमिति सर्वान्तर्यामित्वस्य च श्रवणात् । कारणरूपमित्यत्र स्वरूपशब्दस्य स्वरूपपरत्वे शरीरपरत्वे वा महदहङ्कारादिकारणत्वकार्यवर्गकारणत्वसिध्या जगत्कारणत्वरूपब्रह्मलक्षणस्यापि नारायणनिष्ठत्वावसायाच्च । 'एकाकारं परं ब्रह्मे'ति कण्ठरवेण परब्रह्मत्वावेदनाच्च । तस्मादियमुपनिषद् नारायणस्य परब्रह्मत्वे निर्विचिकित्सप्रमाणाभावसाम्राज्यमनुभवतीति दिक् ।

स एवं ब्रह्मबिन्दूपनिषदपि नारायणस्य परत्वे प्रमाणम् । 'तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनं तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम्'

अग्निविकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिं च यज्ज्ञात्वा मुच्यते बुधः ॥

इति ब्रह्मप्राप्तिहेतुभूताहंग्रहणोपासनाविषयस्यान्तर्यामिणः 'तदस्म्यहं वासुदेव' इति वाक्यशेषे वासुदेवत्वकीर्तनात् ।

एवं **मैत्रायणीयोपनिषदपि** भगवतस्सर्वोत्तमत्वं प्रथयति । तत्र 'विश्वस्य नार्मेषा तनूर्भगवतो विष्णोर्यदिदमन्नं प्राणो वाऽन्नस्य रसः प्राणस्य मनोविज्ञानं मनस आनन्दं विज्ञानस्येत्येवं विदन्नन्नवान् प्राणवान् मनस्वान् विज्ञानवानानन्दवान् भवती'त्यारभ्य 'अग्निहोत्रं जुह्वानो मोहजालं भिनत्ति अन्तस्स मोहं छित्वा क्रोधंस्तन्वानः काममभिध्यायमानश्चतुर्जालं ब्रह्मकोशं हिनस्ति । ततः परमाकाशम् । अत्र हि सौरसौम्याग्नेयमण्डलानि भित्वा ततः शुद्धसत्त्वान्तरावस्थं अचलममृतं धृतं विष्णुसंज्ञं सर्वाधारं धाम सत्यकामसर्वज्ञत्व-संयुक्तम् स्वतन्त्रचैतन्यं स्वे महिम्नि तिष्ठमानं पश्यति ।' अत्रोदाहरन्ति — 'अग्निमध्ये स्थितस्सोमस्तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्वं सत्त्वमध्ये स्थितोऽच्युतः ॥' शरीरप्रदेशमात्रमङ्गुष्ठमात्रमणोरप्यणुतरं ध्यायंतः परमतां गच्छन्ति । अत्र हि 'सर्वे कामास्समाहिता' इति । अत्रोदाहरन्ति—'अंगुष्ठ-प्रदेशशरीरमात्रं प्रदीपवत् प्रतापवत् द्विधा त्रिधा हि ब्रह्माभिष्टूयमानं महादेवो भुवनान्याविवेश । ओं नमो ब्रह्मणे नम ' इत्यन्तेन वाक्यसन्दर्भेण मिश्र-सत्त्वोत्तीर्णशुद्धसत्वाधिष्ठातृत्वनित्यत्वसर्वाधारत्वसत्यकामत्वानन्य विशेषणत्वानन्या-धारत्वमुक्तप्राप्य मुमुक्षुध्येयत्वादिधर्मवत्वेन कथितस्य परमात्मनो विष्णुसंज्ञत्व-प्रतिपादनात् ।

यच्छब्दात् 'तदेतदोमि'ति यदस्याग्रंतच्छान्तमशब्दमभयमानन्दं तृप्तं सुस्थिरमचलममृतमच्युतं ध्रुवम् विष्णुसंज्ञे सर्वासां धामेति भगवतो विष्णुसंज्ञस्य **'ओं तत्सदि'ति निर्देशो** (गीता - 17—23) 'ब्रह्मणस्त्रिविधस्मृत 'इति परब्रह्मपरत्वेनावगम्यमानप्रणववाच्यत्वाद्याविष्करणात् ।

'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
सत्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ।
योऽसावादित्ये पुरुषः सोसावहम् ॥'

इत्यादिनान्तर्यामित्वप्रतिपादनाच्च । 'सत्यधर्माय दृष्टय' इति **बृहदारण्यक** (**ईशावास्या**) वाक्यानुसारात् विष्णव इत्यस्य विष्णुदृष्टमित्यर्थः । क्रियार्थोपपदस्य कर्मणि स्थानिन' इति चतुर्थी । उपबृंहिता चेयमुपनिषत् योगयाज्ञवल्क्येन ।

'सवितुस्तद्वरेण्यं तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम् ॥
सूर्यमध्ये स्थितस्सोमस्तस्य मध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्वं सत्वमध्ये स्थितोऽच्युतः ॥
सोऽन्नं प्राणो मनश्चैव ज्ञानमानन्दमेव च ।
निमेषादिमनः कालस्तस्मादुत्पद्यते यतः ॥
कालकर्ता ततो ज्ञेयः कालाख्यो विष्णुरव्ययः ।
एषा विश्वभृतो नामतद्विविष्णोः सनातनी ॥
अन्नरूपेण विज्ञेया ययेदं धार्यते जगत् ॥'

इति । **यमस्मृतावपि** 'रविमध्ये स्थित' इति श्लोकं पठित्वा अनन्तरं,

'एष देवस्तु मर्त्यानां पटैरिव विधीयते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः ॥
एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ॥'

इति पठितम् । **दत्तात्रेयस्मृतौ** —

'द्वयोऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्हृदिस्थितः ।
सोऽहं नारायणोदेवः पुरुषो लोकभावन ॥'

'योऽसावादित्ये पुरुष' इति वाक्यमुपबृंहितम् । तस्मादियं **मन्त्रार्थणी-**
**षत्** भगवदतिशयैकप्रवणेति सर्वं सुस्थम् ।

तथा **कठवल्लिका** अपि भगवतस्सर्वोत्कर्षं ख्यापयन्ति —

" अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥"

" नायमात्मा प्रवचनेनलभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् ॥"

षु मुक्तदृश्यत्वेन स्वप्रसादं विना दुरवबोधत्वेन चोक्तस्य,

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः ॥'

अत्ता चराचरग्रहणात् [ब्र. सू. 1-2-9] इति सूत्रे परमात्म-
निर्णीतेन प्रतिपादितस्य च ब्रह्मणो,

'विज्ञान सारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥'

ष्णुस्वरूपत्वस्फुटीकरणात् ।

यस्तु कश्चिदाह—कठवल्लीप्रतिपाद्यो न नारायणः । तत्र पदशब्दस्य
पदं सङ्ग्रहेण ब्रवीम्योमि'त्युपक्रमानुरोधेन सर्ववेदप्रतिपाद्यत्वादिविशिष्ट-
त्वावगमेन 'तद्विष्णोः परमं पदम्, सदा पश्यन्ति सूरयः' इत्यादिवत्
रत्वायोगात् । ब्रह्मणि वृत्तेः सर्वाभ्युपगन्तव्यत्वे सति विष्णुशब्दस्य
न्तत्वे षष्ठ्यन्तत्वे वा पदशब्दोदितस्य ब्रह्मणो विष्ण्वतिरेकस्यैव स्वरसतः
मानत्वात् । विष्णोः पदमिति 'राहोः शिर' इतिवदौपचारिक-
पदेश इति विष्णुशब्दस्यापि प्रतिपादयिषिते ब्रह्मणि वृत्त्यभ्युपगम्येऽपि
**र्वशिखायां** 'व्यापनाद्वा महादेव' इत्यन्ते महादेवनामनिर्वचनप्रकरणे

'सर्वे देवतास्संविशन्तीति विष्णुरि'ति शिवनामत्वेनापि निर्वचनदर्शनात् नारायणैकान्त्यासिद्धेः । तदैकान्त्येऽपि मन्त्रोपनिषदि जगत्कारणब्रह्मपरहर-शब्दवत् तस्यानन्यथासिध्यभावेन तदनुरोधिवृत्त्यन्तरसहिष्णुत्वाच्च । अतो न नारायणः कठवल्ली प्रतिपाद्य इति —

अत्र ब्रूमः — सत्यम् - उपक्रमानुरोधेन पदशब्दो ब्रह्मपरः । तथापि 'तद्विष्णोरि'ति पञ्चम्यन्तत्वाभ्युपगमे षष्ठ्यन्तत्वाभ्युपगमे वा 'विष्णो-र्ब्रह्मव्यतिरेकः प्रतीयत' इति न वक्तुं शक्यम् ।

'रुद्रं तु सारथिं कृत्वा मनः प्रग्रहवान्नरः ।
स याति परमं पारं विष्णवाख्यं पदमव्ययम् ॥'

इति **नारायणोपनिषदि** पारभूतस्य पदस्य विष्णाख्यत्वोक्त्या तदनुसारेण शिलापुत्रकस्य शरीरं 'राहोः शिरो' 'ममात्मेत्या'दौ इव 'विष्णोः परमं पदमि'त्यत्रापि षष्ठ्याकारभेदमात्रेणारोपितभेदमादायोपपन्नत्वात् । अत एव पञ्च-म्यन्तत्वाङ्गीकारस्या योगाच्च । प्रतिपादितं च **कैयटेन** — एतादृशस्थलेषु षष्ठ्या उपपन्नत्वं शिलापुत्रकस्य शरीरमिति बहिर्वस्तुभेदेऽसत्यपि भेदव्यवहारो-ऽवस्थाभेदाश्रयो दृष्टः शिलापुत्रकः क्रियमाणविक्रियमाणत्वाद्यनेकावस्थायुक्तो यो दृष्टः तस्येदं शरीरमिति परिदृश्यमानावस्थाभेदेन निर्दिश्यते । एकमेव हि वस्तु तदेवेदमिति प्रत्यभिज्ञानादेकत्वमत्यजदप्यवस्थाभेदात् नानारूपमाभाति । तथा हि 'हन्त्यात्मानमात्मने'ति एकस्यापि बुध्यवस्थापि तदवस्थाभेदाश्रयः कर्तृकर्म-करणत्वाभाव" इति । एवं वचनान्तरानुसारात् षष्ठ्या स्वारसिकार्थत्वात् न दोषः । **'तस्याग्रयणात् ग्रहणमि'त्यधिकरणे** उक्थ्यान्निगृह्णातीत्यत्र कारकविभक्त्यङ्गीकारस्य स्वस्य स्वरूपसत्वेऽपि 'तं परांचमुक्थ्यात् षोडशिनं गृह्णाती'ति शाखान्तरवचनानुसारेण तत्स्वारस्यत्यागस्य मीमांसकैरभ्युपगमात् । न च तत्रोपविभक्त्यङ्गीकारेऽपि न विभक्तेर्मुख्यार्थभङ्ग इति वाच्यम् । वच-नान्तरानुसारेणैव मुख्यार्थत्यागस्याप्यदोषत्वात् । तथैव **तन्त्रलक्षणे** (जै.

एकादशाध्याये ) दशपेयेक्रयप्रतिकर्षात ( जै. सू. 11-2-55 ) ततः प्राचां तस्मात् समानतन्त्रं स्यादि'त्यधिकरणे किमभिषेचनीयदशपेयौ समानतन्त्रौ भिन्नतन्त्रौ वेति सन्दिह्य सहसोमौ क्रीणात्यभिषेचनीयस्य दशपेयस्येति वचनादभिषेचनीया सोमक्रयकाले दशपेय 'सोमक्रयापकर्षात् तदादिवाभि-सम्बन्धात् तदन्तमपकर्षेस्यादि'ति पाश्चमिकसूत्रोक्तन्यायेन ततः प्राचामिति पदार्थानामपकर्षात् सहोपक्रमितव्यौ ताविति यथोपक्रमं समापयितव्यात् समान-तन्त्राविति पूर्वपक्षं प्रापय्य 'सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ती'ति वचनान्तरानु गारात् 'सह सोमौ क्रीणाती'त्यत्रत्य क्रीणातेः क्रतुबहिर्भूतलौकिकमूल्य-निश्चयरूपोपसंवादलक्षकत्वाङ्गीकारात् । दशपेयक्रयप्रतिकर्षाभावात् भिन्नतन्त्रा-वेति राद्धान्तितत्वात् ।

---

## दशपेये अभिषेचनीययोः भेदेन प्रयोगाधिकरणम् —

राजसूये दशपेयाभिषेचनीय संज्ञकौ द्वौ सोमयागौ । तत्र द्वयोरपि पृथग्यागत्वात् पृथगेव अंगादीनां अनुष्ठानं वा सहसोमं क्रीणातीति द्वयोः यागयोः क्रयैक्य प्रतिपादनात् तंत्रेण अनुष्ठानं वा इति संशयः । अभिषेचनीय दशपेयस्य च सोमे क्रेतव्ये सति क्रयात् पूर्वं भाविनां दशपेयांगानां अप-कर्षात् तंत्रमिति पूर्वः पक्षः ।

सिद्धांतस्तु :— भिन्नकालीनयोः अभिषेचनीय दशपेययोः अंगानां भेदनानुष्ठानमेव संसृपाख्याभ्यः दशभ्यः इष्टिभ्यः ऊर्ध्वं अपराह्णे दशपेयोपक्रमः । ताभ्यः प्राचीने अत्यंतव्यवेहिते काले अभिषेचनीयः । अतः कालभेदात् पृथगेवानुष्ठानम् । क्रयसाहित्यमपि नात्रास्ति । सद्योदीक्षयन्ति । सद्यः सोमं क्रीणन्ति इति दशपेये क्रयस्य सद्यस्कालत्व विधानात् । सहसोमौ इति क्रयांगशेष भूतसंवादे साहित्यं विवक्षितम् । अतः उभयोः पृथगेव अनुष्ठानम् । न तंत्रेण ॥ ( जै. सू. 11-2-55 )

अपि च 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमि'ति वाक्येन पदशब्देन प्रक्रमात् पद्यते गम्यत इति व्युत्पत्त्या तस्य शब्दस्य प्राप्यस्वरूपपरत्वात् प्राप्य-स्वरूपमेवात्र प्रतिपाद्यम्। तथा च तत्स्वरूपविशेषाकाङ्क्षायां तन्निर्धारणाय 'विज्ञान सारथिर्यस्तु' इति वाक्यं प्रयुक्तम्। विज्ञानस्य तत्प्राप्तिसाधनत्वस्य।

'यस्तु विज्ञानवान् भवति स मनस्कः सदा शुचिः।
स तु तत्पदमाप्नोति यस्मात् भूयो न जायते॥'

इति पूर्ववाक्येनैव प्रतिपादितत्वात्। तथा च षष्ठ्या मुख्यार्थत्वस्वीकारे वा तस्या आकाङ्क्षाया अपरिपूरणात्। घटस्य स्वरूपं राहोः शिरः शिला-पुत्रकस्य शरीरं ममात्मा ब्रह्मणः पदवेदन इत्यादिवदाकारभेदमादाय वर्णनकृत आकाङ्क्षायाः शान्तेस्तच्छान्त्यर्थं तथैवार्थवर्णनं युक्तम्। अत एव क्लेशात्मक-कर्मविमुखपुरुषप्रवृत्तिजननार्थं प्रवर्तनात्मक विधिप्ररोचना काङ्क्षावशा दर्थवाद-वाक्यानां प्राशस्त्यलक्षणकत्वमङ्गीकृतं मीमांसकैः।

न च विष्णोरिति व्यतिरेकषष्ठ्यङ्गीकारेऽप्यथर्वशिरश्शिखयो रुद्रस्य तत्परत्वप्रतीत्या परमशिवरूपदेवतारूपत्वावगमेन न षष्ठ्या मुख्यार्थो भञ्जनीय इति वाच्यम्। मैत्रेयोपनिषदि – 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्, स नामतैकस्वात्मानमभिध्यायन्' इत्युपक्रमे प्रजापतेः प्रलयकालावस्थानमुक्त्वा, तमो वा इदमासतत्परेस्यातत्परेणैरितं विषमत्वं प्रयाति; तस्य प्रोक्ता अग्र्या-स्तनवो ब्रह्मा विष्णुरुद्र' इति त्रिमूर्ति विभूतिकत्वप्रतिपादनात् प्रजापतीश-वाच्येऽपि विष्णोः परत्वस्य प्रतीयमानत्वेन तेन शिवप्रतीत्यसिद्धेः। न तु चतुर्मुखस्य विभूत्यन्तर्गतत्वात् न तस्य तदुत्तीर्णत्वं युक्तमिति। प्रजापति-शब्दस्यान्यपरत्वमिति चेत्-तुल्यमितरत्रापि। शिवादिशब्दवाच्यस्य विभूत्यन्तस्य प्रतीयमानत्वात्।

ननु विभूतिमानन्यः विभूत्यन्तर्गतत्वेऽपि तदन्य इति न दोष इति चेत् - न। चतुर्मुखस्यापि विभूत्यन्तर्गतातिरेकस्य वक्तुं सुशक्यत्वात्। ननु त्रिमूर्त्युत्तीर्णस्य प्रजापतिशब्दवाच्यत्वे मानाभाव इति चेत् - तस्य शिवादि-

शब्दवाच्यत्वेऽपि प्रमाणाभाव इति चेत् - तुल्यत्वात् । विस्तरस्तूत्तीर्णशरणत्वभङ्गे द्रष्टव्यः । तथा च 'विष्णोः परमि'त्यनेन देवताविशेषप्रतीत्यभावात् विष्णोरिति षष्ठया अमुख्यार्थत्वं स्वीकृत्याकाङ्क्षाशान्तिः कर्तुं सुखेति भगवत एव कठवल्लिप्रतिपाद्यत्वमङ्गीकर्तुं युक्तम् । एवं च 'पुरुषान्नपरं किञ्चित् सा काष्ठा सा परागति'रित्येतत् सुखेन सङ्गच्छते । अन्यथा पुरुषशब्दस्य मुख्यार्थबाधः स्यात् । स च 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधि च वर्तेते वासुदेवे सनातने । यद्वा 'पुरुषशब्दोऽयं रूढ्यावर्ति जनार्दनम् । यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते : तथा शङ्करशब्दोऽयं महादेवे व्यवस्थित ।' इत्यादिप्रमाणसहस्रेण भगवदसाधारणत्वेनागतः, **अथर्वशिखा** - निर्वचनानुसारात् ।

विष्णुशब्दस्य शिवपरत्वमित्यपि तुच्छम् — 'ओमित्येतदक्षरं परं ब्रह्मे त्यादिना पूर्वं प्रणवं प्रशस्य तन्मात्रा देवता वर्णादिकथनानन्तरं 'सकृदुच्चारितमूर्ध्वमुन्नामयती'त्योङ्कारादिना प्रणवतारादिना मनुर्वचनमनुकृत्य 'सर्वे देवा अस्मिन् संविशन्तीति विष्णुरि'त्यादिनिर्वचन प्रवृत्त्या प्रणवनामनिर्वचनत्वावगमात् । वाच्यवाचकयोरभेदमाश्रित्य वाच्यनामान्येव वाचकनामत्वेन निरुच्यन्त इत्यभ्युपगमेऽप्युपक्रमे विष्णुनामनिर्वचनेनानेकेनैकस्य महादेवनामनिर्वचनस्योपसंहारगतस्य स्पर्धितुमशक्तेः । **अथर्वशिखायाः** कृत्स्नाया अपि भगवत्परत्वस्य प्रपञ्चयिष्यमाणत्वाच्च । अपि वाऽ**थर्वशिखा**निर्वचनानुसारात् विष्णुशब्दस्य हरिशब्दस्य यमानिलादाविव शिवे शक्त्यङ्गीकारेऽपि प्रसिद्धिप्राचुर्येण भगवत एव प्रतीत्यातत्र विष्णुशब्दस्य देवतान्तरपरत्वात् कथमस्योपपत्तिश्शून्यत्वात् । 'क्षरं प्रधानममृताक्षरं हर' इति **श्वेताश्वतर**वाक्यस्थहरशब्दबलादस्य शिवपरत्वमिति सङ्गतम् । वैपरीत्यस्य सुवचनात् देवतासन्देहको निर्धारकत्वेन वृत्त्यन्तरकल्पनान्तहरशब्दस्मृत इति चेत् - किं कारणम्; ब्रह्मेत्यस्य संशयस्य देवताविशेषकोटिकत्वासिद्धेः । तत्रत्यस्य हरिशब्दस्य देवताविशेषपरत्वासिद्धेः । प्रपञ्चयिष्यते चायमर्थः **श्वेताश्वतरवाक्य**विचारे । तस्मात् **कठवल्लिका** भगवत्परेति सिद्धम् ।

वेदान्तविजयकृतस्तु — "पूर्वखण्डे कामस्याप्तिः जगतः प्रतिष्ठां क्रतोरनन्तमभयस्यपारम्। स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धीरो नचिकेतोत्यस्राक्षीः। तमीद्दशांगुष्ठमनः प्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति।' इत्युरुगायस्य ज्ञेयत्वेन प्रतिष्ठत्वेन चाभिधानेन तस्यैव प्राप्यत्वात्। उरुगाय शब्दस्य च भगवति सुप्रसिद्धेन न भगवदतिरिक्तपरत्वमस्या उपनिषद" इत्याहुः।

उपबृंहिता चेयमुपनिषत् शङ्खस्मृतौ यतिधर्मे —

"चतुर्विंशतिरेतानि तत्त्वानि कथितानि तु।<br>
ज्ञात्वात्मानं तद्विभिन्नं पुरुषं पञ्चविंशकम्॥<br>
यज्ज्ञात्वा तु विमुच्यन्ते यतयः शान्तबुद्धयः।<br>
यदेतत्परमं गुह्यमेतदक्षरमुत्तमम्॥<br>
अशब्दमस्पर्शमरसमरूपं गन्धवर्जितम्।<br>
निर्दुःखमसुखमशुद्धं तद्विष्णोः परमं पदम्॥<br>
अग्निं निरञ्जनं शान्तमव्यक्तं ध्रुवमक्षरम्।<br>
अनादिनिधनं ब्रह्म तद्विष्णोः परमं पदम्॥<br>
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।<br>
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥<br>
इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः।<br>
मनसः परमा बुद्धिः, बुद्धेरात्मा महान् परः॥<br>
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।<br>
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः॥<br>
स्वं देहमरणिं कृत्वा प्रणवश्चोत्तरारणिः।<br>
ध्याननिर्मथनाभ्यासाद्विष्णुं पश्येत् हृदिस्थितम्॥<br>
रविमध्ये स्थितस्सोमस्तस्य मध्ये हुताशनः।<br>
तेजो मध्ये स्थितं सत्वं सत्वमध्ये स्थितोऽच्युतः॥

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तो ।
तमक्रतुं पश्यति वीतशोको धातुप्रसादान्महिमानमीशम् ॥

एष देवस्तु मर्त्यानां पटैरिव विधीयते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेऽप्सुभिः ॥
एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः ।
एष धाता विधाता च प्रधानं निष्कलश्शिवः ॥

वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् ।
यं वै विदित्वा न बिभेति मृत्योर्नान्यः पन्था विद्यते चायनाय ॥"

इति । ब्राह्मे पुराणे च —

"तथा च भगवान्मृत्युर्नाचिकेतं समागतम् ।
पृच्छन्तं प्राह विप्रं तमप्यमेविरतरोऽपि सन् ॥
यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥
गृहे संहारसमये जगच्च बदराण्डवत् ।
लीलया यस्तु भगवान् तं गच्छ शरणं हरिम् ॥
सर्वभूतात्मभूतस्य विष्णोः को वेदितुं गुणान् ।
शक्तो महेश्वरादन्यः पार्वत्यास्त्वथवा भवेत् ॥"

इत्युपबृंहितेयमुपनिषत् ।

एवं च स्वबुद्धिकल्पितान्न्यायात् गरीयो ह्युपबृंहणं इति वदतः परस्याप्युपबृंहणानुसारेणार्थवर्णनस्य ज्यायस्त्वं सम्मतमिति न तद्विरुद्धम् । कठवल्लीनां देवतान्तरपरत्वमभ्युपगन्तुं युक्तम् । तत्र च 'विज्ञानसारथिरि'त्यादि 'सा परागति'रित्यन्तं कठवल्लीवाक्यमेव पठित्वा,

'स्वं देहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्विष्णुं पश्येद्धृदिस्थितम् ॥'

इत्यादिना तस्य विष्णुपरत्वस्फुटीकरणात् । तथा च 'यस्य च ब्रह्म चेत्यस्य तं गच्छ शरणं हरिम्' इति भगवत्प्रतिपादकत्वावेदनात् देवतान्तरपरत्वे विरोधः स्फुट एव । तदेवं न्यायोपबृंहणाभ्यां कठवल्लीनां भगवत्परत्वं सिद्धम् ।

एवं **श्रीपुरुषसूक्त**मपि परब्रह्मत्वे भगवतः प्रमाणम् । 'पुरुष एवेदं सर्वम् । यद्भूतं यच्च भव्यम् । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यत' इत्यादिवाक्येषु तत्सूक्तप्रतिपाद्ये पुरुषशब्दार्थे नारायणे ब्रह्म धर्माणां सर्वशरीरत्व जगत्कारणत्व मुमुक्षूपास्यत्वादीनां श्रवणात् । न च पुरुषशब्दार्थो नारायण इत्यत्र किं प्रमाणमिति वाच्यम् । 'पुरुषो ह वै नारायणोऽकामयत' (श· ब्रा· 13–6–1) 'संहृत्य लोकान् पुरुषोऽधीशत' इति वैदिकलौकिकप्रयोगवशात् । 'पुरुषसंज्ञे शरीरेऽस्मिन् शयानो हरि'रित्यादिनिर्वचनात् । भगवानिति शब्दोऽयं तथा पुरुष इत्यपि निरुपाधि च वर्तते । 'वासुदेवस्सनातन' इत्यादिपौराणिकवचनेषु असाधारणत्वोक्तेश्च । तस्य शब्दस्य नारायणासाधारणत्वावसायात् ।

किं चाथर्वणेऽष्टादशमहाशान्तिप्रकरणे — 'तत्तद्देवत्यशान्तिषु तत्तद्देवत्य विनियोगानन्तरं 'वैष्णव्यां पुरुषसूक्तमि'ति वैष्णव्यां शान्तौ पुरुषसूक्तं विनियुज्यते । **शौनकीयकल्पे** च 'शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परं' इत्यारभ्य 'आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तममि'ति प्रत्यर्चमुपचारभेदेषु विनियोगः कृतः । तथा **व्यासस्मृता**विदं भगवदर्चने नियुक्तम् ।

'न विष्ण्वाराधनात्पुण्यं विद्यते कर्मवैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेत् हरिम् ॥
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु ।
नैवाभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥'

इति । तस्मात् विनियोगादप्यस्य सूक्तस्य भगवत्परत्वम् ।

महापुरुषशब्दश्च **कल्पसूत्रकारै**र्देवताविशेष एव प्रयुक्तः – 'महादेवं वा महापुरुषं वार्चयेदि'ति । इह च 'वेदाहमेतं पुरुषं महान्तमि'त्युच्यते । अतश्च भगवदसाधारण्यम् । तथा 'पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम्.' इति कण्ठरवेण भगवत्परत्वं स्मर्यते ।

'योऽनूवाचनं द्विजंमर्त्योहतवानर्थलोभतः ।
स पठेत् पौरुषं सूक्तं स्मरन् विष्णुंजलेऽसकृत् ॥'

इति **यमस्मृतौ** रहस्यप्रायश्चित्तेषूक्तम् । तथा **योगवासिष्टे** –

'आसीनः प्राङ्मुखः शुद्धश्चिंन्तयन्मनसा हरिम् ।
पौरुषेणैव सूक्तेन जुहुयाद्धव्यवाहनम् ॥'

इत्युक्तम् । लक्ष्मीपतिप्रतिपादकोत्तर नारायण समानप्रकरणं चेदम् । 'सहस्रशीर्षा पुरुषः । पुरुष एवेदं सर्वम्' इति नारायणानुवाकैक्यार्थं च प्रतीयते । 'पुरुषएवेदं सर्वमि'ति वाक्ये **सुबालोपनिषदै**कार्थ्यं च प्रतीयते । तत्र हि 'दिव्यो देव एको नारायण' इति नारायणपरत्वं गम्यते । तत्र च 'पुरुष एवेदं सर्वमि'त्युपसंहृतम् । एवमुपबृंहणबलादपि सूक्तस्यास्य भगवत्परत्वमवगम्यते ।

तथा हि **महाभारते सभापर्वणि**—

'अव्यक्तोऽव्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ।
पुरा नारायणो देवः स्वयम्भूः प्रपितामहः ॥
सहस्रशीर्षा पुरुषो ध्रुवोऽव्यक्तस्सनातनः ।
सहस्रास्यः सहस्राक्षः सहस्रचरणो विभुः ॥
सहस्रबाहुः सहस्रास्त्रो देवो नामसहस्रवान् ।
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः ॥' इति ।

**भीष्मपर्वणि** —

'असृजन्मुखतो विप्रान्बाहुभ्यः क्षत्रियांस्तथा ।
वैश्यांश्चाप्यूरुतो राजन्यः शूद्रान् पद्भयां तथैव च ॥
एनमाहुर्हृषीकेशं मुनयश्च जनाधिप ॥' इति ।

**मोक्षधर्मे** —

'पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ।' इति ।

तथा —

'ब्राह्मणानां शतं ज्येष्ठं मुखादभ्युत्सृजत् प्रभुः ।
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ॥
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ।
स एव चतुरोवर्णान् समुत्पाद्य महातपाः ॥
अध्यक्षं सर्वभूतानां धातारमकरोत् प्रभुः ॥ 'इति ।

**आश्वमेधिके च** —

'अहं सहस्रशीर्षा तु सहस्रवदनेक्षणः ।
सहस्रबाहूदरदृक्सहस्राक्षः सहस्रपात् ॥
धृत्वोर्वीं चाप्यहं सर्वमत्यतिष्ठद्दशाङ्गुलम् ।
सर्वभूतात्मभूतस्थः सर्वव्यापी ततोऽह्यहम् ॥' इति ।

**हरिवंशे कैलासयात्रायां रुद्रकृतकृष्णस्तोत्रे** —

'सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्रोदरसाहस्री सहस्रात्मादिवस्पतिः ॥
भूमिं सर्वामिमां प्राप्य सप्तद्वीपां ससागराम् ।
अणुस्सर्वत्रगोभूत्वाऽप्यतिष्ठद्दशाङ्गुलम् ॥
त्वमेवेदं जगत्सर्वं यद्भूतं यद्भविष्यति ।
त्वत्तो विराट्प्रादुरभूत् सम्राट् चापि जनार्दनः ॥
तववक्त्राज्जगन्नाथ ब्राह्मणो लोकरक्षकः ।
प्रादुरासीत् पुराणात्मा षट्कर्मनिरतस्सदा ॥
राजन्यस्ते तथा बाह्वोरासीत् संरक्षणे रतः ।
ऊर्वोर्वैश्यस्तथा विष्णोः पादाच्छूद्र उदाहृतः ॥

एवं वाणी जगन्नाथ तव देहात् सनातनात् ।
मनसस्तव देवेश चन्द्रमास्समपद्यत ॥
सुखकृत्सर्वभूतानां शीतांशुरमृतप्रभः ।
अक्ष्णोस्सूर्यस्समुत्पन्नस्सर्वप्राणि विलोचनः ॥
यस्य भासा जगत्सर्वं भासते भानुमानसौ ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥
नाभेर्व्योम समुत्पन्नं तव देव जनार्दन ।
द्यौरासीन्महाघोरः शिरस्तव जगत्पते ॥
पद्भ्यां भूमिस्समुत्पन्ना दिशः श्रोत्राज्जगत्पतेः ।
एवं सृष्ट्वा जगत्सर्वं व्याप्य सर्वं व्यवस्थितम् ॥
व्याप्य सर्वानिमान् लोकान्वेत्सि सर्वत्र केशव ।
ततश्च विष्णुनामासीद्धातोर्व्याप्तेः प्रवेशनात् ॥' इति ।

**श्रीमद्वैष्णवे पुराणे —**

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सर्वव्यापी भुवस्पर्शादत्यतिष्ठद्दशाङ्गुलम् ॥
यद्भूतं यच्च भव्यं वै पुरुषोत्तमतद्भवान् ।
त्वत्तो विराट् स्वराट् सम्राट्त्वत्तश्चाप्यधिपूरुषः ॥
अत्यरिच्यतसोधश्च तिर्यक्चोर्ध्वं च वै पुरा ।
त्वत्तो विश्वमिदं जातं त्वत्तो भूतं भविष्यति ॥
त्वत्तो यज्ञस्सर्वहुतः पृषदाज्यं पशुस्तथा ।
त्वत्तो ऋचोऽथ सामानि त्वत्तश्छंदांसि जज्ञिरे ॥
त्वत्तो यज्ञं विसामानि त्वत्तोऽश्वाः पशवो गजाः ।
गावस्त्वत्तस्समुद्भूता अण्डजाः पशवो मृगाः ॥
त्वन्मुखाद्ब्राह्मणाजाता बाह्वोः क्षत्रमजायत ।
वैश्यास्तवोरुजाः शूद्रास्तव पद्भ्यां समुद्गताः ॥

अक्ष्णोः सूर्यानिलः प्राणाच्चन्द्रमा मनसस्तव ।
प्राणोऽन्तः सुषिराज्जातो मुखादग्निः पुरन्दरः ॥
नाभितो गगनं द्यौश्च शिरसस्समवर्तत ।
दिशः श्रोत्रात् क्षितिः पद्भ्यां त्वत्तस्सर्वमभूत् ॥' इति ।

**भागवते** — 'पश्यत्यदोरूपमदभ्रचक्षुषः

सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्धः श्रवणाक्षि नासिकं
सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥' इति ।

एवं पुराणान्तरेष्वप्युपबृंहणानि द्रष्टव्यानि ॥

यदाह कश्चित् — 'उतामृतत्वस्येशान' इतीशानपदश्रुतिः । रूढ्या शिवमुपस्थाप्य सूक्तयन्नति तद्वशान् ॥' ननु अमृतत्वस्येति ईशितव्यापादानात् । तदैश्वर्यरूपयौगिकार्थविवक्षया प्रयुक्तमीशानपदं केवलयौगिकार्थत्वात् न रूढ्या शिवस्य प्रतिपादकमिति चेत् न । तदनुपादान एव तदुपादानेऽप्यवयवशक्त्या शिवप्रतिपादकस्यौत्सर्गिकस्य दुर्वारत्वात् । इह केवलयौगिकत्वस्यैवासिद्धेः । न हि प्रतिसम्बन्ध्यनुपादान एव समुदायशक्त्युन्मेष इति कश्चित् व्युत्पत्तिसिद्ध-नियमः । 'शब्दादेव प्रमित' (ब्र· सू· 1-3-24) इत्यधिकरणे'ऽङ्गुष्ठ-मात्रःपुरुष' इति मन्त्रप्रतिपाद्यस्य पुरुषस्य 'ईशानो भूतभव्यस्य' इती-शितव्योपादानेऽपीशानश्रुत्या परब्रह्मत्वनिर्णयात् । अन्यथा तत्रापीशान शब्दादैश्वर्यशब्दपरब्रह्मलिङ्गमात्रप्रतिपत्त्या तदभिधानरूपशब्दानिर्णयाभावापा-तात् । न च तत्र लिङ्गादेव निर्णयोऽस्त्विति वाच्यम् । प्रथमश्रुतान्यपरिमाण रूपजीवलिङ्गविरोधिना चरमश्रुतेन लिङ्गमात्रेण निर्णयायोगात् । तस्य जीवलि-ङ्गत्वाभावे पूर्वपक्षबीजाभावेनाधिकरणानारम्भापत्तेः । सूत्रे शब्दपदस्यासामञ्ज-स्यापत्तेश्च । यथाश्रुतार्थसमर्थनसम्भवे तस्य क्लिष्टार्थान्तरकल्पनासहिष्णुत्वात् । विष्णुपरत्वादिभिरपि तस्य स्वामिमते ब्रह्मणि शक्त्यभिमानेन नेश्वरसम्बन्धि-लिङ्गात् निर्णयः, किं त्वीश्वरवाची शब्दादेवेत्येवकाराभिप्राय इत्युक्तत्वाच्च ।

तस्मादङ्गुष्ठमन्त्रवत् पुरुषसूक्तस्यापीशानश्रुतिसमर्पित परब्रह्मणि शिवे पर्यवसान-मिति युक्तम् ।

न च पुरुषशब्दात् नारायणस्योपस्थित्या तत्परत्वमस्तीति वाच्यम् । तस्य नारायणे विशिष्य शक्त्यसिद्धेः । 'पुरुषावात्ममानवावि'त्यभिधानकोश-स्मृतेर्लौकिकवैदिकप्रयोगप्राचुर्याच्च । आत्मसामान्ये तस्य शक्तेरावश्यकत्वेन तत एव विष्णौ प्रयोगोपपत्त्या विशिष्य तत्र शक्तिकल्पनया अनिमेषात् । अन्यथा बर्हिराज्याधिकरणविरोधात् । तत्र हि म्लेच्छैस्तृणघृतादिजातिमात्रे आर्यैः संस्कृततृणादावेव प्रयुज्यमानानां बर्हिराज्यादिशब्दानां यवत्राहाधिकरणन्यायेन शास्त्रस्य प्रसिद्धेर्बलवत्त्वात् संसारनिमित्तकत्वमाशङ्क्य शास्त्रस्य प्रयोगस्य जात्य-व्यभिचारात् जातिमात्रव्यवहारस्य संस्कारव्यभिचारात् । अव्यभिचरितजातिशक्ति-मादाय सर्वप्रयोगोपपादनसम्भवेन विरोधाभावात् जातिवाचित्वैवेति राद्धान्तितम् । उक्तं च तन्त्रवार्तिके — 'एकदेशेऽपि यो दृष्टः शब्दः जातिनिबन्धनः । तद्त्यागात् न तस्यास्तिनिमित्तान्तरकल्पने'ति । एवं च यदाम्लेच्छगतयापि सामान्यप्रसिध्या सामान्यशक्तिसिद्धौ तद्द्वारैवार्यव्यवहारसिद्धविशेषलाभ इति न विशेषशक्तिकल्पनम् । तदा का कथा प्रकृतविषये ! इह सामान्यप्रसिद्धेरप्यार्य-गतत्वेन दौर्बल्यशङ्काया अप्यनवकाशात् ।

नन्वस्तु प्रयोगान्तराणामन्यथासिद्धिः, तथापि अथर्वशिखायां — 'ब्रह्मदेवत्या विष्णुदेवत्या रुद्रदेवत्ये'ति मात्रात्रयदेवताविधानानन्तरं पुरुष-देवत्येत्यर्धमात्रे देवताविधाने पुरुषसामान्यस्य देवतात्वायोगात् । त्रिमूर्तिभ्यः कस्मिन् देवताविशेषे पुरुषशब्दप्रयोगः तत्तद्वाचिशब्दैर्देवताविधानप्रायपाठ-बलात् पुरुषस्य शब्दस्य तत्र विशिष्य शक्तिं कल्पयन्ननेकश्रुत्यादिप्रतिपन्न-नारायणपरप्रयोगानुरोधात् तत्रैव तां पर्यवसाययिष्यतीति चेत् न । सामान्य-शक्त्याऽप्यभिमतविशेषपर्यवसानसम्भवे प्रायपाठमात्रस्य गौरवपराहतशक्त्यन्तर-कल्पकत्वायोगात् । 'एकादेया द्वादशादेयाश्चतुर्विंशतिर्देया सहस्रं देयमपरिमितं देयमि'त्याधानदक्षिणाकल्पभेदश्रुतावपरिमितशब्द-

**स्यापरिमाणे शिष्टस्येत्यधिकरणे एकादितुल्यकल्पान्तरपरत्वोप-**स्थितस्याधिकं वा स्यात् । '**बहर्थमित्यादितैरः** सन्निधानादिति ( जै. सू. 6-7-11 ) विधित्सितसङ्ख्याविशेषवाचिशब्दप्रायपाठेऽपि बहुत्व सामान्य-शक्त्यैव न्यायलभ्ये सहस्राधिकबहुत्वे पर्यवसाननिर्णयात् ।

नन्वत्स्वेवं प्रयोगमात्रस्यान्यथासिद्धिः । तथापि बहुत्वसामान्यशक्त्यैव न्यायलभ्ये सहस्राधिक 'पुरुषसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः' इति पौराणिकानन्तस्येदं नामत्वेन निर्वचनम्, नान्यथासिद्धम् । विशिष्यापि शक्ति कल्पयिष्यतीति चेत् - न । सामान्यशक्तस्यापि पुरुषशब्दस्य श्रुत्यादिषु क्वचित् प्रकरणादिसामर्थ्यात् नारायणे पर्यवसानमस्तीत्येतात्रज्ज्ञायते । न चरितार्थतया अर्थवादप्रधानपौराणिकनिर्वचनस्य **चित्राधिकरणे स्तोत्रविशेषनामत्वेन**

---

**आधाने अपरिमितशब्दस्य संख्यापरत्वाधिकरणम् —**

आधाने श्रूयते - एकादेया, षड्देयाः द्वादशदेयाः चतुर्विंशतिः देयाः शतं देयम्, सहस्रं देयम् अपरिमितं देयं इति । तत्र अपरिमितशब्दगतेन नञा परिमाणं निषिध्यते । तथा सति अपरिमितशब्दव्युत्पत्त्या देय द्रव्यस्य परिमाण शून्यता प्रतीयते । अनेन वाक्येन एकादिका पूर्ववाक्योक्तागतां संख्या निवार्यते इति पूर्वः पक्षः ।

सिद्धांतस्तु :— अपरिमित शब्दस्य रूढ्या बहुत्वं अर्थः, तथैव प्रयोग बाहुल्यात् । ततो न एकादिपक्षाः निवार्यते । किंतु संख्यांतरं विधीयते । अपरिमितशब्देन यद्बहुत्वं विहितम् - तत्र च सहस्रात् अर्वागपि भवति । कुतः । द्विशत त्रिशतादौ बहुत्वसंभवात् - इत्याक्षिप्य एकादिपक्षेषु उत्तरामि-वृद्धिदर्शनेन अत्रापि सहस्र पक्षमुपन्यस्य - पश्चादविधीयमानं बहुत्वं सहस्रात् ऊर्ध्वं पर्यवस्यति । ( जै. सू. 6-7-11 )

सिद्धस्य पृष्ठशब्दस्य क्वचित् पृष्ठैरुपतिष्ठत ( जै. सू. 7-3-3 ) इत्यादौ तत्साधने रथन्तरादावपि लक्षणया प्रवृत्तिरस्तीति तन्निर्वाहेण चरितार्थस्य रथन्तरादौ पृष्ठशब्दप्रवृत्तिनिमित्त प्रतिपादनपरस्य 'आपो ऋत्वियमार्च्छन् तासां वायुः पृष्ठे व्यवर्तत' इत्यादिश्रौतार्थवादस्यैवान्यथा सिद्धत्वात् नानन्यथा सिद्धाभिधानकोश स्मृत्यादिवत् क्लृप्तशक्त्योपपादनीय प्रयोगविषये शक्त्यन्तरकल्पकत्वायोगात् । न हि स्तोत्र-

---

## सर्वपृष्टशब्देन षट्पृष्टानां अतिदेशाधिकरणम् —

विश्वजित् सर्वपृष्ठो भवतीति श्रूयते । तत्र विश्वजित् नाम्नि ज्योतिष्टोमविकारे यागे सर्वेषां पृष्ठानांविधिः भवति । परं तु ज्योतिष्टोमे माध्यंदिन पवमानानंतर भावीनि माहेन्द्रादीनि चत्वारिस्तोत्राणि संति । अभित्वा शूरनो नुमः, कयानश्चित्र आभुवत्, तं वोदस्ममृतीषहम्, तरोभिर्वोविदद्वसु इत्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदशस्तोमतामापाद्य गीयंते । तादृशेषु स्तोत्रेषु सप्तदशाय पृष्टानि इति । तानि च चत्वारि पृष्टानि विश्वजिति चोदक प्राप्तत्वात् सर्वपृष्टेन शब्देनानूद्यंते - इति एकः पक्षः ।

रथंतर बृहत्पृष्ठयोः ज्योतिष्टोमे विकल्पितयोः चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते इति द्वितीयः पक्षः, प्रथमपक्षे चोदकप्राप्तानाम् स्तोत्राणाम् - पुनरनुवादस्य वैयर्थ्यं जायते - एवं प्राप्ते अभिधीयते ।

सर्वत्वं बहुषु मुख्यं न तु द्वयोः, तस्मात् अनेन सर्वपृष्टशब्देन षट्संख्याकानि पृष्टान्येवातिदिश्यंते । षडहे प्रतिदिनमेकैकं पृष्टं विहितम् । तानि षट्पृष्टानि रथंतर, बृहत्, वैरूप, वैराज, शाक्वर, रैवत सामभिः निर्दिष्टानि । तानि सर्वाणि षट्पृष्टानि विश्वजिति अतिदिश्यंते । यद्यपि विश्वजितः - ऐकाहिकत्वात् ज्योतिष्टोमविकृतित्वमेव । न षडहविकृतित्वम् । तथापि सर्वपृष्टोक्तिबलात् - षट्पृष्टानि अतिदिश्यंते । अतः षाडहिक षट्पृष्टानामेवात्र विधिः भवति । ( जै. सू. 7-3-3 )

नामत्वेन सिद्धस्य पृष्ठशब्दस्य रथन्तरादावपि लक्षणा । योग्ये प्रवृत्तिनिमित्त-प्रतिपादनपरोऽर्थवादोऽस्तीत्येतावता तत्र शक्त्यन्तरमुपेयते । भगवता **जैमिनिनैव सप्तमतृतीयान्ते पृष्ठैरुपतिष्ठ** इत्यत्र माहेन्द्रस्तोत्रपरो रथन्तरादि परोवेति विचारे **कर्मणः** पृष्ठशब्दस्या 'तथा भूतोपदेशादि'ति (जै. सू. **7–8–14**) **पूर्वपक्ष सूत्रेण** पृष्ठशब्दोपदेशसामान्यात् स्तोत्रक्रियापरत्वमिति स्तोत्रपरत्वस्यौत्सर्गिकत्वकथनेना'भिधानोपदेशाद्वा विप्रतिषेधात् । द्रव्येषु पृष्ठ-शब्दस्यादि'ति स्तोत्रपरत्वेऽनुपपत्त्युपन्यासपूर्वकं रथन्तरपरत्वव्यवस्थापनेन च तत्र लक्षणाया स्फुटीकरणात् । **भाष्यकारादिभिश्च** सर्वैस्तत्रैकमत्येन लक्षणा-व्यवहारात् । एतेन —

'तथा पुरुषशब्दोऽयं वासुदेवोऽवतिष्ठति ।
तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक् ॥
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधि च वर्तेते वासुदेवे सनातने ॥

---

**पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम्** —

अग्निचयने 'पृष्ठैरुपतिष्ठते' इति श्रुतम् । पृष्ठशब्दश्च ज्योतिष्टोमे माध्यंदिन सवनगतस्य स्तोत्रस्य कर्मणो नामधेयमिति पूर्वमेव (1–4–8) निर्णीतम् । अग्निचयनगतोपस्थानकर्मणि प्रयुज्यमानः पृष्ठशब्दः अग्निहोत्र शब्दन्यायेन पृष्ठधर्मान् उपदिशति । इति प्राप्ते —

पृष्ठशब्दस्य न कर्म परत्वं संभवति । जुहोति यजति इत्यादिधातुभिः सामानाधिकरण्यस्य शब्दस्यैव कर्मपरत्वं युज्यते । यथा अग्निहोत्रं जुहोति इति । अत्र पुनः उपस्थान एव पृष्ठशब्दवाच्यस्य उपयोगः, उपस्थान करणत्वमेव मंत्राणां संभवति । यद्यपि स्तोत्रकर्मवाची पृष्ठशब्दः, तथापि तत्साधनभूतान् रथंतरादिसामोपेतान् 'अभित्वाशूर' इत्यादिमंत्रान् उपलक्ष-यति (जै. सू. 7–3–14)

ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ॥'

इत्यादीनि पुरुषशब्दस्य विष्णावसाधारण्यौत्सर्गिकत्व प्रतिपादनच्छायापन्नानि पौराणिकवचनानिन्य .... व्यप्रत्यवस्थानमपि निरस्तम् । सर्वसंप्रतिपन्नाया अविशेषेणात्मसामान्यदुर्वारत्वेनासाधारण्यायोगात् । अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वानित्यसाधारण्येन गवाश्वानां पशुत्वोक्तिवदुदाहृत-वचनानां स्वातन्त्र्यादिपुरुषधर्मपौष्कल्येन प्रशंसापरत्वोपपत्तेः । तस्मात् न पुरुषशब्दस्य विष्णावसाधारणप्रयोगनिर्वचनैर्विशिष्यशक्तिः ।

यदि स्यात् तदा 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि' 'पुरुषं कृष्णपिङ्गलम्' 'तमीशानं पुरुषं देवमीड्यमि'त्यादि **श्रुतिषु** –

'शूद्राः पादात्पिनाकिनः । प्रस्तुत्य
'पुंसा तु पुरुषो मानज्ञानगम्यो न चान्यथा ॥'

इति **लैङ्गे** च 'शिवे तस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायत' इत्यादि **श्रुतिषु** 'एष संहाररुद्रेऽङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रित' इत्यादौ पिण्डाण्डमूलाङ्गुष्ठ समाश्रयणलिङ्गोपस्थापिते ब्रह्माण्डमूलभूताधार लोकवासिनि कालाग्निरुद्रे 'यत्पुरुषेण हविषे'त्यादिश्रुतिषु 'तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्त्यत' इति **मनुस्मृतौ** च ब्रह्मणि च प्रयोगात् ।

'यस्मात्पुर्यनुशेते च तस्मात्पुरुष उच्यते'

इति **लैङ्गे** शिवनामनिर्वचनप्रस्तावे निर्वचनात् । वेदान्तेषु 'यमाहुरेकपुरुषं व्याप्यस्थितं रोदसी' इत्यभियुक्तोक्तिः शिवस्य वेदान्तेषु पुरुषत्वेन प्रतिपाद्यतया-ऽभिधानात् 'स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत तस्मात् पुरुष' इति **बृहदारण्यके** ब्रह्मनामत्वेन निर्वचनात् ।

'स वै शरीरी प्रथमस्सवै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥'

इत्यनेकपुराणेषु तन्नामत्वेनानुशासनात् ।

'पुरुषो नामः सम्पूर्णश्शिवस्सत्यादिलक्षणः ।
साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥'

इति **स्कान्दे ब्रह्मगीतासु** शिवेऽसाधारण्यप्रतिपादनाच्च अन्यत्रापि स्यात् । तस्मादेकयानेकया वा शक्त्या साधारणत्वात् न पुरुषश्रुत्या देवताविशेषनिर्णयो युक्तः ।

यदि हि ततो निर्णयस्स्यात् तदा 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'दिव्यो ह्यमूर्तः पुरुषः' 'स एतस्मात् जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती'ति श्रुतीनां तत एव परमते ब्रह्मपरत्वासिद्धेः । '**अन्तस्तद्धर्मोपदेशात्** (ब्र· सू· 1-1-25) '**अन्तर उपपत्तेः**' (ब्र· सू· 1-2-13) '**अदृश्यत्वादिगुणको धर्मोक्तेः**' (ब्र· सू· 1-2-22) '**ईक्षति कर्मव्यपदेशात् सः**' (ब्र· सू· 1-3-12) '**शब्दादेव प्रमित**' (ब्र· सू· 1-3-23) इति तद्विचारार्थं सूत्रारम्भो व्यर्थः स्यात् । कथंचिदारम्भसमर्थने वा धर्मोपदेशादित्यादिना लिङ्गैर्ब्रह्मपरत्वनिर्णयोऽसङ्गतः स्यात् । प्रबलश्रुतिसद्भावे तामुपेक्ष्य लिङ्गोपन्यासस्यानुचितत्वात् । परमते ईक्षति कर्म स परमात्मा निरुपाधिशान्तत्वामृतत्वादिव्यपदेशादिति हि तद्व्याख्या भूतयोन्यधिकरणस्याक्षरमित्र दिव्यो ह्यमूर्तः पुरुष इव मन्त्रार्थः । पुरुषोऽपि विषयं ईक्षतिकर्माधिकरणस्य [ ईक्षतिकर्मव्यपदेशात् सः ] ध्यायति कर्मेवेक्षति कर्मापि । किं च त्वन्मते स्वप्नसृष्टिः जीवकर्तृकेति पूर्वपक्षोपमर्देन परमात्मकर्तृकेति निर्णयार्थं प्रवृत्ते 'सन्ध्ये सृष्टिरि'त्याधिकरणे [ सन्ध्ये सृष्टिराहि हि ] (ब्र· सू· 3-2-1) 'निर्मातारं चैक' इति सूत्रव्याख्याने 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति वाक्यमुदाहृत्य पूर्वपक्षोपपादनं कृतं तदप्यसम्बन्धः स्यात् । न हि सिद्धान्तोपपादिन्येव श्रुतिः पूर्वपक्षोपपादिनी भवति । तस्मात् न पुरुषशब्दस्य विष्णावसाधारण्यमिति न तद्बलात् पुरुषसूक्तस्य भगवत्परत्वम् । नापादं विष्णुरित्यादिना वैष्णवमन्त्रमध्ये निवेशात् ।

'नमकं चमकं चैव पुरुषसूक्तं च नित्यशः ।
जपन्नेति महादेवं ग्रहं ग्रहपतिर्यथा ॥'

इति पुराणेषु श्रवणात् । वास्तुशान्तौ,

'आवाह्य कुम्भे देवेशं रुद्रं भुवननायकम्'

इत्युपक्रम्य —

'नमकं चमकं चैव पौरुषं सूक्तमेव च'

इत्यादिना जपे विनियोगात् **लैङ्गादित्यपुराणादिषु** —

'स कूर्चेण स पुष्पेण स्नापयेन्मन्त्रपुष्पकम् ।
मन्त्रांश्च ते प्रवक्ष्यामि शृणु सर्वार्थसिद्धये ॥'

इत्युपक्रम्य —

'ज्येष्ठसाम्नात्रयेणैव तथा देवव्रतैरपि ।
रथन्तरेण पुण्येन सूक्तेन पुरुषेण च ॥'

इति शिवाभिषेकमन्त्रेषु परिगणनाच्च । शिवपरत्वस्यैव ईशानश्रुत्यानुश्रुत्यानुगुण्येन वक्तव्यत्वात् । '**उद्बुध्यस्वाग्ने अग्निर्मूर्धादिवः** ककुदि'त्यादिमन्त्राणां ग्रहयज्ञे तत्तद्ग्रहयज्ञमन्त्रविधानावसरे बुधभौमादि पूजा तु विहितानामपि बहुशस्तदाराधनजपहोमादिषु विनियुज्यमानानामपि विरुद्धविनियोगमात्रेण श्रुति-तदनुकूलविनियोगप्रासाम्येयत्वाद्यत्यागवत् ।

'अथ नारायणाभ्यामुपस्थानं'

'यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम्'

**इत्यापस्तम्बसूत्रशातातपस्मृत्यादि** सिद्धविनियोगान्तरेणैव विष्णुसमाराधने विनियोगे नापि श्रुतिप्राप्ततदनुमोदित शिवपर्यवसायित्वात् त्यागस्यैव युक्तत्वात् ।

नापि उपबृंहणबलात् तत्सूक्तस्य भगवत्परत्वसिद्धिः । मन्त्रविवरण-रूपोपबृंहणानां श्रुतिविनियोगान्तर निर्वाहार्थत्वेनान्यथासिद्धि सम्भवात् । तैः श्रुतितदनुकूलविनियोगावगमितम् —

'द्यौर्मूर्धा तु विभोस्तस्य खन्नाभिः परमेष्ठिनः ।
सोमसूर्याग्नयो नेत्रे दिशश्श्रोत्रे महात्मनः ॥
वक्त्राद्वै ब्राह्मणास्सर्वे ब्रह्मा च भगवान् प्रभुः ।
इन्द्राविष्णूभुजाभ्यां तु क्षत्रियाश्च महात्मनः ॥
वैश्याश्चोरुप्रदेशात्तु पादात् शूद्राः पिनाकिनः ॥'

इत्यादि लैङ्गादिदृष्टो यद्ब्राह्मणानुमोदितं च शिवपरत्वं न हापयितुं शक्यम् ।

इदमत्रावधेयम् - अस्त्यन्यदेवतानामपि मन्त्राणां विधिबलात् देवतान्तरय-जनेऽपि विनियोगः । स च 'मन्त्राधिकरण'न्यायेन मन्त्रविनियोगस्य वाक्यार्थ-प्रतिपादनत्वात् । मन्त्रस्थितदेवतापरेण पदेन मुख्यवृत्त्यभावेऽपि 'ऐन्द्र्यधि-करण'न्यायेन लक्षणयापि यजनीयदेवतायाः प्रतिपादनीयत्वात् । समभिव्याहृत-विशेषपदानां च 'दर्भैस्तृणीत हरितैरितरैरि'त्यत्र दर्भादिषु हरितत्ववत् तत्र सम्भवदर्थानां तद्विशेषणगुणादिप्रकाशनद्वारा 'सोमः पवते जनितामतीना-मि'त्यत्र सोमलतायामिन्द्रादिजनयितृत्ववत् तत्रासम्भावितानामर्थानामसमवेतस्यापि समवेत विशेषणस्याभिधानं मन्त्रश्रुतविशेषण विशिष्टरूपप्रकाशनमभ्युदयकारीति नियमाददृष्टार्थमित्यवचनं तेषामितरार्थे प्रयुज्यत इति नावमिकाधिकरणे व्यव-स्थापनात् अभ्युदयार्थ'मगन्मसुवस्सुवरगन्मे'त्यत्र फलाभिधानवदादरातिशय-जननार्थं वेति तदसमवेतस्यापि गुणजातस्याभिधानद्वारा तत्र पर्यवसानेन च निर्वाह्य इति विदितमेव मीमांसापरिचयशालीनाम् । तदि पुरुषसूक्तस्य श्रुत्यादि-नियमितशिवैकान्त्यस्यापि श्रुतिस्मृतिदृष्टविनियोगान्तरनिर्वाहाय धनदादिप्रतिपादन-प्रकारवत् नारायणप्रतिपादनप्रकारस्यापि कस्यचित् पुराणाद्यभावे पुरुषबुध्यापि कल्पनीयत्वात् । स एव तत्समाराधनतदङ्गतत्फलादिप्रपञ्चनप्रधानेषु पुराणागमेषु

नियमित इत्यन्यथासिद्धान्युपबृंहणानि । दृश्यन्ते ह्यसमवेतार्थविशेषाणामपि मन्त्राणां तथैव पुराणागमेषूपबृंहणानि ।

'सोमं ससर्ज यज्ञार्थं सोमस्सोमादजायत ।
धारा च वह्निसूर्यश्च वज्रपाणिः शचीपतिः ॥
विष्णुर्नारायणः श्रीमान् सर्वं सोममयं जगत् ॥'

इति । तस्मात् न तानि श्रुत्यादिप्राप्तिः शिवपरत्वं ह्यापयितुमीशत इति न विनियोगोपबृंहणाभ्यामपि विष्णुपरत्वम् ।

न चैवमप्यारुणकेतुके 'पूर्वमेवाहमिहासम्' इति कूर्माकृतिलिङ्गोपस्थापितस्य नारायणस्य वचनं प्रदर्श्य तत्पुरुषस्य परत्वमिति तदर्थं तत्र पुरुषशब्दप्रवृत्तिनिमित्तममिधाय 'सहस्रशीर्षा पुरुषः, सहस्राक्षः सहस्रपात्, भूत्वोदतिष्ठत्' इत्यनन्तरं पाठात् सहस्रशीर्षेत्यादिमन्त्रस्य पुरुषशब्दस्य तत्प्रवृत्तिनिमित्तत्वेन नारायणपरत्वनिर्णयात् तस्य चात्र सूक्तादौ श्रवणात् 'महादेवं महापुरुषं वा अर्चयेदि'ति कल्पसूत्रप्रयोगावगमिततदसाधारण्यस्य महापुरुषशब्दस्य वेदाहमिति मन्त्रे पाठात् 'ह्रीश्चते लक्ष्मीश्च पत्न्यावि'ति लक्ष्मीपतित्वलिङ्गोपन्यासेन च 'यमन्तः समुद्रे कवयोवयन्ति' 'विद्युतः पुरुषादधी'ति समुद्रशायित्वात् विद्युद्वर्णीपुरुषत्वलिङ्गितपुराणादि प्रदेशविशेषप्रतिपादितकनकवर्णनारायणमूर्तिप्रतिपादनपरेण 'अम्भस्य पारे' इति सूक्तेन स्मृतिषु तत्समाराधने हविर्निवेदने विनियुक्तैः 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिमन्त्रैश्च सह 'अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टा'विति तदनुवाक्यश्रुतवाक्योपपादितेनैकवाक्येन च नारायणपरतया सिद्धेन समनन्तरानुवाकेन स्वप्रतिपाद्यमहापुरुषमहिमवर्णनप्रवृत्तेनैकवाक्यत्वात् । नारायणानुवाके नारायणे प्रतिपन्नस्य सहस्रशीर्षत्वादिधर्मस्य सुबालोपनिषदि 'चक्षुश्च द्रष्टव्यं च नारायण' इत्यादिनारायणात्मत्वं सर्वस्योक्त्वा तदुपसंहारे पठितस्य 'पुरुष एवेदं सर्वमि'ति मन्त्रस्य च प्रत्यभिज्ञानपुरुषेण नारायणेन यजमान उपतिष्ठत इत्यपास्तम् । वादिभिस्तन्नाम्ना सूक्तव्यपदेशाच्च नारायणत्वमिति वक्तुं युक्तम् । सर्वस्याप्यस्य

गगनतलालेख्यसमानत्वादारुणकेतुके कूर्मपुरुषो भूत्वोदतिष्ठदि'त्यपूर्वपुरुषस्य पुरुषभावादिप्रतिपादनेन '**सहस्रशीर्षे'त्यादिमन्त्रस्य** पुरुषपदस्यानन्तरवाक्यप्रतिपन्न-प्रवृत्तिनिमित्तकव्यतिरेकस्यावसायात् । **अन्यथा तेन** प्रवृत्तिनिमित्तेन प्रागपि तस्य पुरुषशब्दाभिलप्यतया पुरुषो भूत्वेत्युक्तिविरोधापत्तेः ।

**परोक्तरीत्यैव** - ' पुरुषो नाम सम्पूर्णश्शिवस्सत्यादिलक्षणः ।
साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥ '

इति **स्कान्दोक्तेः** पूर्णत्वेन प्रवृत्तिनिमित्तेन पुरुषशब्दस्य शिवसाधारणत्वात् । यत्र यत्र कर्मभ्रंशो यज्ञभ्रंशो वा तत्र पुरुषं चिन्तयन् पुरुषसूक्तं ब्रूयात् । ' पूर्णत्वात्पुरुष इति विज्ञायते ही'ति **वाधूलसूत्रे** पुरुषसूक्तश्रुततत्प्रतिपाद्य-परमपुरुषशब्दस्य प्रवृत्तिनिमित्तकत्वावसायात् । ' सर्वो वै रुद्र ' इत्युक्त्यनन्तर-मौचित्यात् ' पुरुष एवेदं सर्वमि'ति मन्त्रविरोधशङ्कानिराकरणार्थतया ' पुरुषो वै रुद्र ' इति श्रुत्या तस्य रुद्रपरत्वेन व्याख्यानाच्च । तस्य परमशिवत्वश्रुतित्वस्यैव सूपपादत्वात् महापुरुषशब्दस्यापि क्वचिदपि नारायणनामत्वेनानुशासना-भावात् । प्रयोगमात्रस्य **गौतमस्मृतौ** ' मन्त्रेषु महापुरुषाये'ति शिव इव योगेनाप्युपपत्तेरनभिधानत्वात् । तथात्वेऽपि ' पुरुषं महान्तमि'ति पृथक्पदयोरेवेह श्रवणेन तस्याश्रयणादवयवार्थव्यवस्थितिसिद्धौ योगरूढिपद-प्रतिपाद्यावयवार्थपरवाक्यस्यान्यत्रापि प्रयोगस्य दुर्निवारत्वात् । अन्यथा पङ्कजादि-शब्दानां योगरूढिवादिनां केवलयोगवादिनं प्रत्यन्यत्रापि प्रयोगप्रसङ्गस्या-पादकोक्ताम्रकीभावापत्त्या आपादयितुमशक्यत्वापत्तेः । भवादिशिवनामाष्टकमध्ये पठितस्य ' अथाष्टभिर्नामभिरि'त्यादि **बोधायनसूत्रे** तन्नामत्वेन व्यवहृतस्य ,

' पूज्यते यत्सुरैर्नित्यं महान् चैव प्रमाणतः ।
धातुमर्हति पूजायां महादेवस्ततः स्मृतः ॥ '

इति **साम्बपुराणे** तन्नामत्वेन निरुक्तस्य महच्छब्दस्य ' पुरुषं महान्तमि'ति पाठेन ततः शिवपरत्वस्यैव प्रतीतेः । ' अम्भस्य पारे ' इति सूक्ते ' यमन्तः समुद्रे कवयो वयन्ति ' ' विद्युतः पुरुषादधि ' इत्युपन्यस्तयोः ,

‘ लिङ्गमूर्तिमहाज्वाला मालासंवृत्तमव्ययम् ।
लिङ्गस्य मध्ये रुचिरं चन्द्रशेखरविग्रहम् ॥
व्योममार्गे तथा लिङ्गे ब्राह्मणं हंसरूपिणम् ।
विष्णुं वराहरूपेण लिङ्गस्याधस्त्वधोमुखम् ॥
ब्राह्मणं दक्षिणे तस्य कृताञ्जलिपुटं स्थितम् ।
वामे विष्णुं महाबाहुं कृताञ्जलिपुटं तथा ॥
मध्ये लिङ्गं महाघोरं महाब्धेरम्भसंस्थितम् ।
ध्यात्वा प्रदोषकाले तु शिवसायुज्यमाप्नुयात् ॥
एकार्णवे तु त्रैलोक्ये ब्रह्मनारायणात्मकः ।
भोगी शय्यागतः शेते त्रैलोक्यग्रासबृंहितः ॥
जनस्थे योगिभिर्देव चिन्त्यमानोऽब्जसम्भवः ।
ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ॥
सुष्वाप योगशयने एकी भूयाय चक्रिणा ।
ब्रह्मा कमलवर्णाभो रुद्रः कालाग्निसन्निभः ॥
पुरुषः पुण्डरीकाभो रूपं तत्परमात्मनः ।
तं हेमनिकायाभं शितिकण्ठं त्रिलोचनम् ॥
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ॥ ’

इत्यादि पुराणदर्शनात् हिरण्यगर्भ इत्यादिमन्त्राष्टकस्य ‘ य ईशे अस्य द्विपद इत्येतावन्तो वै पशवो द्विपादश्चतुष्पदश्चेति श्रुत्यन्तरप्रतिपन्नात् द्विपाच्चतुष्पाद्रूप-पशुपतित्वलिङ्गोपन्यासेन हिरण्यगर्भश्रुत्या च शिवप्रजापतिसाधारण्यात् तस्य नारायणैकान्त्यासिध्या तदेकवाक्यतया वा । ‘ ह्रीश्चते लक्ष्मीश्च पत्न्या’वित्यत्र ह्रल्लेखावाचकोमापतित्वलिङ्गस्यापि प्रतीत्या लक्ष्मीपतिलिङ्गेन वोत्तरनारायणस्य नारायणपरत्वव्यवस्थित्ययोगेन तदेकवाक्यत्वेनापि परेप्सिता निर्वाहात् ।

‘ अम्भस्य पार ’ इत्यादेरन्ते ‘ पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि , तन्नो रुद्रः प्रचोदयात् ’ इति श्रवणान्मध्येऽपि ‘ नैनमूर्ध्वं न तिर्यक्

च, एष हि देवः प्रदिशोनुसर्वाः, विश्वतश्चक्षुरुत विश्वतोमुख' इत्यादीनां मन्त्रोपनिषदथर्वशिरस्समाम्नातानां मन्त्राणां प्रत्यभिज्ञानात् 'प्रजापतिश्चरति गर्भे अन्तरि'त्यत्र प्रजापतिशब्दस्य परमत इव योगेन।

'पाति यस्मात् प्रजास्सर्वाः प्रजापतिरिति स्मृतः।
देवेषु च महादेवो महादेवः ततस्मृतः॥'

इति लैङ्गे शिवनाम निर्वचनदर्शनेन शिव एव प्रत्युपपन्नेऽभूद्धिरण्यगर्भस्यापि —
'तस्मात् हिरण्यगर्भोऽसौ पुराणेऽस्मिन्निरुच्यत'

इति तत्रैव निर्वचनात्। **बोधायनसूत्रे** शिवशङ्करादीनां मध्ये परिगणनाच्च। 'हिरण्यगर्भस्सवर्तताग्र' इत्यत्र हिरण्यशब्दस्यापि तत्र व्युत्पत्तेः। हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति इति वायव्यपशावैन्द्रे द्वितीयाघारे विनियोगवत् नारायणसमाराधने तद्विनियोगस्याप्यविरोधाच्च। तदेकवाक्यत्वात् 'ह्रीश्चत' इति मन्त्रस्य केषांचित् गृह्ययज्ञे सोमाधिदैवतगौरीपूजायां विनियोगस्य **स्मृत्यर्णवादि**षूक्तत्वात्। अन्यत्र च विनियोगानुपलम्भात् प्रथमश्रुतत्वाच्च। ह्रल्लेखया भुवननायिकापरत्वात्तदनुरोधेन लक्ष्मीशब्दस्य **वायुसंहितायां**

'तत्र माहेश्वरी लक्ष्म्या मूर्तिमूर्तिमतः प्रभोः।'

इत्यारभ्य 'तस्यां कमण्डलारूढा शक्तिर्माहेश्वरी परा।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा॥'

चेति श्रुतायां महेश्वरशक्तिरूपाय मपरशक्त्यंशलीलाया श्रुत्युपपत्तेः।

'श्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति **वाजसनेयि**पाठे श्रीशब्दस्य समानप्रकरणगतह्रल्लेखाश्रुत्यनुरोधादुमायामेव 'श्रियं लक्ष्मीमौपलाम्बिकां गामि'त्यायुष्यसूक्ते तत्र प्रयोगदर्शनात् वृत्त्युपपत्तेः। ह्रल्लेखायाः कमलायां प्रयोगदर्शनेन वैपरीत्यशङ्काऽऽशालैङ्गे ब्रह्मनारायणशिवकृतस्तोत्रे 'नमोऽस्तु लक्ष्मीपतये श्रीपते ह्रीपते नमः' शाखाभिन्न पाठद्वयोपसंहारेणोपबृंहणाच्च 'ह्रीश्च ते लक्ष्मीश्च पत्न्यावि'त्यनेनोमापतित्वालिङ्गाभिधानप्रतीतेः।

'अहोरात्रे पार्श्वे' त्यस्य 'शर्वरीत्वमहंदिनमि'त्युमामहेश्वरसंवादोक्तेर्धनारीश्वररूपे स्वारस्यात्। 'नक्षत्राणि रूपमि'त्यस्य

'स्वरूपं त्रिपुरघ्नस्य वक्ष्ये कालस्वरूपिणम्।
येनाम्बरं मुनिश्रेष्ठ व्याप्तं लोके हितैषिणा॥

यत्राश्विनी वा भरणी कृत्तिकायांस्तथांशकः।
मेषराशिः कुजः क्षेत्रं तच्छरः कालरूपिणः॥'

इत्यादिना 'प्रोष्ठपद्यंश एकश्चोत्तरा रेवती तथा।
द्वितीयं जीवसदनं मीनस्तु चरणावुभौ॥'

इत्यन्तेन **वामनपुराणवचन**जातेन प्रतिपादिते कालात्मके शिवविग्रहे सामञ्जस्यात्। कात्स्न्ये श्रीरुद्राङ्गमन्त्रत्वेन विधानाच्चोत्तरनारायणस्य शिवपरत्वनिर्णयात्। तदेकवाक्यतयापि तत्परत्वस्य सुकरोपपादनत्वात्। श्रुत्यन्तरशब्दार्थप्रत्यभिज्ञानुरोधेऽपि तद्बाहुल्येन शिवपरत्वस्यैव युक्तत्वात्। 'पुरुषेण नारायणेन यजमान उपतिष्ठत' इत्यत्रास्य

'अस्य पौरुषसूक्तस्य ऋषिर्नारायणः स्मृतः'

इति **शौनक** वचनात् देवताद्योतनाय पुरुषेणेति सूक्तप्रतिपाद्यपरपदेन व्यपदेशानन्तरमृषिसूचनाय नारायणेनेति। 'त्रिः पठेदघमर्षणमि'त्यत्राघमर्षणशब्दवत् दृष्टिनाम्ना व्यपदेशोपपत्तेः। 'नारायणदृष्टेन पुरुषसूक्तेनोपहितांचितिमुपतिष्ठमान इहजन्मनि पुरुषो भवेदि'ति **वाधूलसूत्रेण** तथैव स्पष्टीकरणाच्च। नारायणसमाख्यानेनापि तत्परत्वासिद्धेः। 'वेदाहमेतमि'त्यत्राहं शब्दस्य तत्परतया 'कर्मकर्तृव्यपदेशादि'ति सूत्रोक्तन्यायेन सूक्तप्रतिपाद्यस्य स्वरसतो व्यतिरेकस्यैव प्रतीतेश्च। तस्मात् परोक्तन्यायैर्नारायणपरत्वासिद्धेः, तैरेव शिवपरस्य सुसाधनाच्च। अस्मदुक्तरीत्यैव शिवमहिमप्रतिपादनपरमेव पुरुषसूक्तमित्यभ्युपगन्तव्यमिति।

अत्र पश्यामः –

'**विनियोक्त्री वैष्णवीति प्रसिद्धा तद्धितश्रुतिः ।**
**सूक्तस्य श्री**शतात्पर्ये विजयध्वजतां गता ॥'

'**इदं विष्णुः प्लक्षस्य प्रक्**ष्यमुशानेव ब्रुवाण' इति वाराहमन्त्यं पुरुषव्रते च' **एषा वैष्णवी नाम संहि**ता, एतां प्रयुञ्जानो विष्णुं प्रीणाती'ति साम(विधान) **ब्राह्मणे वैष्णवीति तद्धितश्रु**त्या पुरुषसूक्तस्य भगवत्परत्वं स्फुटतरमवगम्यत इति न तदतिरिक्तपरत्वम् ॥ ननु कथं सूक्तस्य भगवत्परत्वं स्फुटतरमवगम्यत इति न तदतिरिक्तपरत्वम् । ननु कथं ततस्सिध्यति वैष्णवीत्यस्य सम्बन्धसामान्यपरत्वे-ऽप्युपपत्तेः । न च 'सा वैश्वदेव्यामिक्षे'त्यत्रैव देवता तद्धितोऽस्त्विति वाच्यम् । 'यागसम्प्रदानं देवता यस्य पुरोडाशादेः स्वामितस्मिन्नभिधेये प्रत्यय' इति **काशिकाया**मभिधानात् । प्रकृते च यागसम्प्रदानत्वाभावेन तस्याप्रत्ययस्या-सम्भवादिति चेत् - न । 'आग्नेयं चतुर्धा करोती' (जै. सू. 3-1-14)

---

## चतुर्धाकरणादीनां आग्नेयमात्रांगताऽधिकरणम् —

(सामान्यस्य विशेषेणोपसंहारः)

दर्शपूर्णमासयोः एवं श्रूयते । आग्नेयं चतुर्धा करोतीति । आग्नेय शब्देन अग्निदेवता संबंधवत् द्रव्यं प्रतीयते । तादृश द्रव्योद्देशेन चतुर्धाकरण विधाने वाक्यभेदः स्यात् । अग्निदेवताकहविष्ट्वमेव उद्देश्यताऽवच्छेदकं भवेत् । विशिष्टोद्देशे वाक्यभेदःस्यात् । अपि तु तद्धितोपात्त हविष्ट्वमेव उद्देश्यता-ऽवच्छेदकम् । कथंचित् हविषः अग्निसंबंध संपादनेऽपि यत्र अग्नेः अन्य-देवतयाऽपि संबंधः वर्तते । अग्नीषोमीयादौ तत्रापि चतुर्धाकरणं संभवति । द्वंद्वांते श्रूयमाणस्य प्रत्येकं अभिसंबंधः इति न्यायेन - अग्निषोमीयहविषि अग्नेः संबंधः अनिवार्यः । पुरोडाशं चतुर्धा करोति इति सामान्यं वचनम् । यद्यपि आग्नेयं चतुर्धा करोति इतिवचनेन उपसंहृतम् - आग्नेय पुरोडाशस्यैव चतुर्धा करणं विदधाति । अथापि एतादृश सामान्य विशेषन्यायेन प्राप्यं फलम् -

त्यत्रैव विशेषसम्बन्धपरत्वे सम्भवति, अव्याकर्तकसामान्यसम्बन्धपरत्वाश्रयणा-योगात्, तदाश्रयणे नैरर्थक्यापाताच्च । 'यागसम्प्रदानं देवमन्त्रस्तुत्याश्चार्थ' इति **कैयटोक्त्या** अस्य देवता तद्धितत्वावसायात् । **काशिकायामपि** 'कथमैन्द्रो वारुणो मन्त्र इत्युक्त्वा मन्त्रस्तुत्यमपि देवतेत्युपचरन्ती'त्युक्तम् । **न्यासकारेण** 'यथा देवता पूजार्हा तथा मन्त्रस्तुत्यमपि वस्तु । अतो देवता साधर्म्येण देवतेत्युपचरन्ति विद्वांसः । इन्द्रश्च मन्त्रस्तुत्यः । तस्मादसंप्रदानमपि देवतेत्युपचरन्ति, देवतेत्युपचारं तत्र कुर्वन्तीत्यर्थः ।

---

आग्नेयाज्यस्य चतुर्धाकरण निवारकं भवेत् । अतः आग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणं इति न नियमोऽस्ति इति पूर्वः पक्षः ।

सिद्धांतस्तु – 'आग्नेयं चतुर्धा करोति' इति वाक्ये आग्नेयमिति पदस्य प्रचुर प्रयोगात् - देवता तद्धित एव शक्तत्वात् यत्र अग्नेः देवतात्वम् - तस्यैव पुरोडाशस्य चतुर्धाकरणम् - इति भवति । द्विदेवत्ये - अग्नीषोमीय - ऐन्द्राग्नि हविष्षु यद्यपि व्यासज्य वृत्ति देवतात्वम् अग्नेरपि संभवति । अथापि तादृश-द्विदेवत्य स्थलेषु अखण्डोपाधिरूप व्यासज्य वृत्ति-एकदेवतात्वस्यैव अंगीकारात् न केवलं अग्नेः देवतात्वमत्र संभवति । द्वंद्वांते श्रूयमाणः इति न्यायः यत्र देवतयोः साहित्याविवक्षा तत्रैव प्रवर्तते ।

अग्निपदादुत्पन्नः तद्धितः अन्यसापेक्षस्य देवतात्वं अभिवदितुं क्षमते । सामर्थ्यविघातापत्तेः । अग्निदैवताकत्वं अविवक्षितमित्यपि न संगच्छते । यतः आग्नेयमिति वाक्ये श्रुतदेवता तद्धितः न प्रकृत द्रव्यमात्रं अपूर्वसाधनकं लक्षयेत् सर्वथा देवतात्वस्यैव उद्देश्यतावच्छेदकत्वम् । तस्य तु अनुयोगि प्रतियोगि सापेक्षत्वात् हविरार्तिन्यायेन 'अर्धमंतर्वेदि' इतिवत् अग्नि-देवताक हविष्ट्वस्यैव उद्देश्यतावच्छेदकत्वसिद्धिः । तेन च पुरोडाशं चतुर्धा-करोति इति सामान्यवचनस्य उपसंहारः । सामान्यस्य विशेषेणोपसंहारः एतदधिकरणलब्धन्यायः । ( जै. सू. 3-1-14 )

नन्वेवमपि नैवात्र भवितव्यं, मुख्ये सति गौणग्रहस्यायुक्तत्वात्। नैष दोषः। यथा हि कश्चिदेकेन यत्नेन तन्त्रेण श्वेतोधावतीत्यादिवाक्यमुच्चारयति तथैवेहाचार्येण तन्त्रेण द्वे वाक्ये उच्चारिते तत्रैकं मुख्यार्थम्। अपरं गौणार्थं भविष्यतीति वर्णितम्। एवं स त्रिवृदग्निष्टोमस्तस्य वायव्यासीत्यत्र वायव्यास्विति निर्देशोपपत्तिः। न च वायव्यास्वित्यत्र सम्बन्धसामान्यतद्धित इति वक्तुं युक्तम्। तथा सति वायुशब्दस्य वृद्धत्वेन वृद्धाच्छेति प्रत्यये वायवीयास्विति रूपापत्तेः। वायव्तुपितृष्वसो यदित्यस्य देवतेत्यधिकारसम्बन्धात्। तस्मात् विष्णुपरत्व एव वैष्णवीत्युपपद्यते। नान्यथेति तत्परत्वसिद्धिः। अत एवोक्तं **तन्त्रवार्तिके** — 'अग्नेत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वाऽयमुपदेशः, तदर्थार्हतां मन्त्रस्य द्योतयति। देवतातद्धितोह्येष स्मर्यतेऽयं चार्थं मन्त्रः प्राधान्येन प्रकाशयति सा तस्य देवता नाभिधानमात्रेणेति।

न चेशानश्रुत्या शिवोपस्थित्या तत्परत्वावसायः। अभिधानश्रुतिजनितायास्तस्या वैष्णवीति निर्वियोगश्रुत्या बाधात्। सूक्तस्य शिवपरत्वं हि नेशानशब्दबलात् सिध्यति। किं तु तद्वाक्यकेशानपदवत्त्वरूपलिङ्गेन। तच्च न श्रुत्या स्पर्धितुं समर्थम्। श्रुतिलिङ्गाधिकरणे तथा निर्णयात्।

अपि च प्रतिसम्बन्ध्युपादाने योगार्थमात्रपरत्वावसानात् नात्रेशानपदवत्त्वं शिवपरत्वं गमयितुमीष्टे। न च तदनुपादान इव तदुपादानेऽप्युभयार्थपरत्वम्। न हि प्रतिसम्बन्ध्युपादाने रूढ्यार्थाविवक्षेति कश्चन व्युत्पत्तिसिद्धेरनियम इति वाच्यम्। रूढ्यर्थस्य विवक्षितत्वे योगार्थस्य तद्विशेषणीभूततया निमग्नस्य 'ऋद्धस्य राजपुरुष' इत्यत्रेव विशेषणान्तरसम्बन्धानर्हतया अमृतत्वस्येत्यस्यासङ्गतत्वप्रसङ्गात्। अत एव '**पद्मानि यस्याग्रसरोरुहाणि**' इत्यत्र पद्मपदप्रयोगः कृतः। गिरेरौन्नत्यव्यञ्जनस्य योगार्थविवक्षाधीनत्वेनेतराविवक्षाधीनत्वाभावात्। तन्मात्रेणोर्ध्वमुखमयूखप्रबोधितत्वेन च सम्भवात्। तस्य रूढ्यर्थाविवक्षायामनियामकत्वात्। प्रतिसम्बन्ध्युपादानस्यैव तन्नियामकत्वेन वाच्यत्वात्। न च योगार्थस्यामृतत्वस्येत्यनेनान्वयानन्तरं रूढ्या अर्थान्वयोऽस्त्विति वाच्यम्।

एकपदोपादानत्वप्रत्यासत्त्या रूढ्यर्थान्वयः प्राथमिकत्वस्य वाच्यत्वात् । तस्मादमृतत्वस्येत्यस्यासङ्गतत्वप्रसङ्गो दुर्वारः । न चान्यत्रानन्वयप्रसङ्गेऽप्यैश्वर्यस्येशितव्यसापेक्षतया देवदत्तस्य गुरुकुलमित्यादिवदर्थान्तर सम्बन्धार्हत्वमस्तीति वाच्यम् । तथाप्येवं विधेष्वपि विशेषाकाङ्क्षानैयत्यादर्शनेन रूढ्यर्थविवक्षाया वक्तुमशक्यत्वात् । अत एव हि जगतामीश्वरः कः, ब्रह्मविष्णुरुद्रोवेति प्रश्नदर्शनमुपपद्यते । नचेश्वरः क इति अभिप्रश्नो दृश्यत इति वाच्यम् । तत्रेशितव्यविशेषान्तर्भावेनैव वाक्यार्थवर्णनाया अवश्यवाच्यत्वात् ईश्वरत्वसामान्यस्य सर्वसाधारण्येन प्रश्नायोगात् । अन्यथा ईशानादिशब्दानां नित्यसापेक्षत्वाभावप्रसङ्गे सत्यनन्वयप्रसङ्गस्य दुर्वारत्वापातात् । तस्मादीश्वर इति प्रश्नस्यापि जगतामीश्वरः क इति प्रश्नतुल्यत्वेन प्रतिसम्बन्ध्यापादने रूढ्यर्थविवक्षायां तत एव शान्ताकाङ्क्षतया विशेष्याकाङ्क्षानुदयेन प्रश्नानुदयप्रसङ्गस्य निवारणात् । प्रतिसम्बन्ध्यपादाने सर्वत्र रूढ्यर्थविवक्षा अवश्यं वाच्या । अमृतत्वस्येशान इत्यस्य न शिवोपस्थापकत्वम् ।

यत्तु 'शब्दादेव प्रमित' इत्यधिकरणविरोध इति तत्तु तदधिकरणशरीराज्ञानविजृम्भितम् । तथा हि एवं हि तदधिकरणं **कठवल्लिषु** श्रूयते — 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्य न ततो विजुगुप्सते, एतद्वैतत्' इति । [श्रु. प्र.] तत्र संशयः किमयमङ्गुष्ठप्रमितो जीव उत परमात्मा । तदर्थं चेयं चिन्ता । किमीशानत्वं देहेन्द्रियाद्यपेक्षं उत सर्वापेक्षमिति । तदर्थं चोपक्रमश्रुतमङ्गुष्ठप्रमितत्वं किमीशानत्वलिङ्गस्वारस्यविरोधी उताविरोधीति । तदर्थं च किमङ्गुष्ठप्रमितत्वजीवे समञ्जसम् उतोभयत्रासमञ्जसमिति । यदा जीवे समञ्जसं तदा स्वसामञ्जस्य सिध्यर्थमुपक्रमगतमङ्गुष्ठप्रमितत्वमीशानत्वलिङ्गस्वारस्य विरोधीतीशानत्वस्य देहेन्द्रियाद्यपेक्षत्वादङ्गुष्ठप्रमितो जीव इति पूर्वपक्षे फलफलिभावः यदोभयताङ्गुष्ठप्रमितत्वमसमञ्जसं तदा प्रत्यगात्मन्यपि स्वारस्यासिद्धेः । तदीशानत्वसर्वापेक्षमित्यङ्गुष्ठप्रमितः परमात्मेति राद्धान्ते फलफलिभावः । तत्र पूर्वपक्षः प्रत्यगात्माङ्गुष्ठप्रमितः कुतः ? अन्यत्र जीवस्याङ्गुष्ठमात्रत्वश्रुतेः । 'प्राणाधिपस्सञ्चरति

स्वकर्मभिः ' 'अङ्गुष्ठमात्रोरवितुल्यरूप ' इति वाक्यान्तरे चाङ्गुष्ठमात्रं पुरुषं निश्चकर्षधर्मबलादिति दृश्यते । न चाराग्रमात्रस्य जीवस्य कथमङ्गुष्ठमात्रमिति, त्वन्मत उपासनार्थं तदिति वक्तव्यम् । तत्परमात्मपरत्वेऽपि उपासनार्थं ह्यल्प-परिमाणत्वमस्य, अन्यत्र श्रुतं तत्कथं जीवपरत्वमिति वाच्यम् । यतः प्राणाधि-पस्य कर्मवश्यस्याङ्गुष्ठमात्रं मुख्यमपि जीवस्याश्रुतम् । न तु परमात्मन उपासनार्थमपि क्वचिदङ्गुष्ठमात्रत्वं श्रुतम् । एवं निश्चिते जीवपरत्वे भूतभव्ये-शितृत्वं देहेन्द्रियाद्यपेक्षया योजनीयमिति ।

सिद्धान्तस्तु — न जीवोऽत्राङ्गुष्ठप्रमितः । स्ववाक्ये भूतभव्यस्ये-शानेत्युक्तेनेशितृत्वलिङ्गेन विरोधात् । न चोपक्रमस्थाङ्गुष्ठप्रमितत्वजीवलिङ्ग-विरोधः उपासनार्थं परमात्मन उपासकहृदये वर्तमानत्वेन तस्य चाङ्गुष्ठप्रमितत्वेन तत्परिच्छिन्नेनाङ्गुष्ठप्रमितत्वोपपत्तेः । जीवस्याप्याराग्रमात्रस्याङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात् तदपेक्षया वाच्यम् । स्वाभाविकस्यासम्भवात् । न चान्यत्र जीववदङ्गुष्ठप्रमितत्वं परमात्मनो न श्रुतमिति वाच्यम् । अश्रुतत्वेऽपि ईशितृत्वस्य सङ्कोचप्रसङ्गेन स्वीकर्तव्यत्वात् । अल्पपरिमाणस्यान्यत्र श्रुतत्वाच्च । अन्यथा जीवपरत्वेऽङ्गुष्ठप्रमितेशानपदयोरुभयोरप्यस्वारस्य प्रसङ्गात् । तस्मात् परमात्माङ्-गुष्ठप्रमितमिति । अत्र नेशानश्रुत्या सिद्धान्तः, येन प्रतिबन्ध्युन्मेषः स्यात् । श्रुत्याश्रयणे लिङ्गेन पूर्वपक्षानुन्मेषप्रसङ्गात् । न स्वरूपप्राबल्यादुपक्रमप्राबल्यस्य ज्यायस्त्वमाश्रित्य पूर्वपक्षप्रवृत्तिसम्भव इति वाच्यम् । तथा सति सिद्धान्तोच्छेद-प्रसङ्गात् ।

न च '**अप्यग्निष्टोमे** राजन्यस्य गृह्णीयादि'त्यत्राग्निष्टोमसंस्थोपमर्देन षोडशिसंस्था विधिवदङ्गुष्ठमात्र इत्यत्र जीवस्वरूपोपमर्देन भूतभव्येशितृत्वं विधीयत इति वाच्यम् । कोऽयमुपमर्दो नाम ? अङ्गुष्ठप्रमितत्वाकारस्यारोपित-तत्त्वज्ञापनमिति चेत् - भूतभव्येशितृत्वस्यापि तथात्वेन तेन तदुपमर्दायोगात् । न च भूतभव्यस्येशान इत्येतत्पारमार्थिकपरमात्मस्वरूपलक्षकमिति वाच्यम् । श्रुत्या सिद्धान्तकरणस्य परित्यागप्रसङ्गात् । जीवेश्वरजीवबोधकश्रुतिविरोधेन

न्दभेदबोधनासम्भवाच्च । तदसम्भवप्रपञ्चप्रकारश्च **श्रीमद्भाष्यादिष्नुसन्धेयः ।** न च त्वत्पक्षेऽपि प्रथमश्रुताङ्गुष्ठप्रमितत्वलिङ्गविरोधिना चरमश्रुतेन लिङ्गेन निर्णयायोग इति वाच्यम् । जीवस्याराग्रमात्रत्वेन तत्राङ्गुष्ठप्रमितत्वरूपलिङ्ग-मात्रस्यायोगेन सिद्धान्तोन्मेषस्योक्तत्वात् ।

यदप्युक्तं तस्य जीवलिङ्गत्वाभावे पूर्वपक्षबीजाभावेनाधिकरणानुपपत्ति-रिति । तन्न-वाक्यान्तरे जीवधर्मत्वश्रवणबलेन पूर्वपक्षसम्भवेनाधिकरणोत्थितेः ।

यदपि चोक्तं यथाश्रुतार्थसमर्थनसम्भवे तस्य क्लिष्टार्थान्तरकल्पनास-हिष्णुत्वादिति । तदपि न । अभिधानश्रुतिपरत्वासम्भवस्योक्तत्वात् । वाक्येऽपि शब्दप्रवृत्तिदर्शनेनेशितृत्वलिङ्गप्रतिपादकवाक्यपरत्वसम्भवेन क्लिष्टार्थान्तरकल्पना-भावाच्च । न च वाक्येन सिद्धान्तकरणमयुक्तमिति वाच्यम् । तत्प्रतिपाद्य-लिङ्गेनैव सिद्धान्तकरणात् । अर्थवदित्यनुक्त्वाशब्दादित्युक्तेरपि तल्लिङ्गोप-स्थापकशब्दसद्भावप्रतिपादनतात्पर्यकत्वात् । अत एवोक्त**माचार्यपादैरधिकरण सारावल्याम्** - 'वाक्यस्थेशानतादे'रिति । तद्व्याख्याया**मधिकरणचिन्तामणौ वरदाचार्यैः** – 'स्ववाक्यस्थितेनेशानो भूतभव्यस्येत्युक्तेनेशानत्वादिना लिङ्गेने'ति व्याख्यातम् । **श्रुतप्रकाशिकायां व्यासाचार्यैरपि** – 'तदर्थसंशयफल-फलिभावोक्तिदशायामीशितृत्वलिङ्गस्यैव सिद्धान्तहेतुत्वोक्तेः लिङ्गादेव सिद्धान्त-करणमभिप्रेतमि'ति गम्यते ।

यद्यपि नेश्वरसम्बन्धिलिङ्गनिर्णयः । किन्त्वीश्वरत्वादिशब्दादेवेत्येवकाराभि-प्राय इति **व्यासाचार्य**वाक्येऽन्यथा प्रतीयते । तथापि निरुपाधिकस्वामित्व-निमित्तकशक्त्यन्तराभ्युपगमेन परमात्मा ईशानशब्देन शक्त्या । उपस्थिति-सम्भवादसङ्गतत्वप्रसङ्गाभावेन भूतभव्येऽस्ति । प्रतिसम्बन्धनिर्देशस्यापि तद्वि-रोधित्वाभावाच्च । ईशानशब्दस्य श्रुतित्वमुपपद्यत इति सम्भवमात्रेण पक्षान्तरो-पन्यासः कृत इत्यवसेयम् । न चैवं त्वया वक्तुं शक्यं नीलकण्ठनिमित्तक-शक्त्यन्तराभ्युपगमे तस्य तेन शब्देनोपस्थितौ योगार्थस्य तद्विशेषणीभूततया निमज्जने च भूतभव्यस्येत्यस्यानन्वयप्रसङ्गात् ।

वस्तुतस्तु पूर्वपक्ष्यभिमतेशानशब्दान्यथासिद्धेः प्रतिक्षेप एवकाराभिप्रेत इति। यदेवेत्यादिना पक्षान्तरोपन्यासात् न तत्र तात्पर्यम्। अत एव हि तैरधिकरणान्ते अङ्गुष्ठप्रमितस्य जीवत्वपक्षेऽङ्गुष्ठप्रमितेशानशब्दयोरुभयोरप्यस्वारस्य परमात्मत्वपक्षेऽङ्गुष्ठप्रमितशब्दस्यैवास्वारस्यमिति सिद्धान्तमूलयुक्तिः कथ्यते। अतो न '**शब्दादेव प्रमित**' इत्यधिकरणविरोध इति नेशानश्रुतिप्रत्याशावकाशः। अतःपुरुषसूक्तं पूर्वोक्तयारीत्या भगवत्परमिति निरवद्यम्।

किं च '**सहस्रशीर्षा पुरुष**' इतीयं पुरुषश्रुतिः 'उपक्रमस्थालक्ष्मीशे सूक्तभक्तिं व्यनक्ति नः। न च पुरुषशब्दस्य भगवदसाधारण्ये मानाभावः, 'प्रयोगाद्यन्यथासिद्धेरुपपादितत्वादिति वाच्यम्। तस्य भगवदसाधारण्याभावे यथा भास्करशब्दोऽयमादित्येप्रतितिष्ठति। यथा चाग्नौ बृहद्भानुः यथा वायौ सदागतिः॥ यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते। तथा शङ्करशब्दोऽयं महादेवेव्यवस्थित॥' इति शङ्करशब्दस्य रुद्रासाधारण्यप्रतिपादनार्थं प्रवृत्ते स्कान्दवचने भगवति पुरुषशब्दासाधारण्यात् दृष्टान्तीकरणस्यासम्बन्धत्वप्रसङ्गात। न ह्यसिद्धं दृष्टान्ततयोपादातुं शक्यते; किन्तु सिद्धं सिद्धिश्च। यद्यप्यन्यत्र न स्यात् तथाप्यत्र प्रसिद्धवन्निर्देशान्यथानुपपत्त्यसाधारण्यं कल्प्यते। अत एव 'सव्यं हि पूर्वं मनुष्या आञ्जत' इत्यत्र प्रसिद्धवन्निर्देशान्यथानुपपत्त्या मानुषीणां सव्याक्षिपूर्वाञ्जनविधिः कल्प्यत इति **मीमांसकानां घण्टाघोषः**। प्रकृते च दृष्टान्ततया पुरुषशब्दमुपादानं तथा निर्देशान्यथानुपपत्त्या पुरुषशब्दस्य भगवत्यसाधारण्यं कल्पयिष्यति। येन विना यस्य कस्यानुपपत्तिः तेन तस्याक्षेपात्। अत एवाश्विनो **बाहुभ्यां सगृभ्यासमि**( जै. सू. 3-2-25 )त्यादि ग्रहणा-

---

## भक्षमंत्राणां यथालिंगम्-ग्रहणादौ विनियोगाधिकरणम्—

ज्योतिष्टोमे हुतस्यसोमस्य शेष भक्षणं विहितम्। 'अभिषुत्याहवनीये हुत्वा प्रत्यंचः परेत्य सदसि सोमं भक्षयंति'। तस्मिन् भक्षणे ग्रहणावेक्षण निगरण सम्यग्जरणरूपाः चत्वारोव्यापाराः संति। **मंत्रश्च** - तैत्तिरीये 'भक्षेहिमाविशे'त्यनुवाके समाम्नातः। **तत्र भक्षणम्** - यथा साक्षाच्चोदितम्-

वेक्षणादिप्रकाशकस्य मन्त्रस्य लिङ्गेन ग्रहणादिषु विनियोगस्य गृण्हादीनां चोदितत्वाभावेनातत्वर्थत्वेन द्वारत्वानुपपत्तिमाशङ्क्य भक्षविध्यन्यथानुपपत्तिकल्प-विधिनैव गृह्णादेश्चोदितत्वं कल्पितमित्युक्तं मीमांसकैः । यद्यप्यगृहीत्वानवेक्ष्यापि परहस्तगतस्य पात्रस्थस्य सोमस्य भक्षयितुं शक्यत्वात् न भक्षविधिः अर्थादपि ग्रहणादिकं विधत्ते, तथापि मन्त्रलिङ्गबलादेव नियमविधिः कल्प्यत इत्यपि तैरेव वर्णितम् । पूर्वस्मिन्पक्षे भक्षविध्यन्यथानुपपत्त्या ग्रहणादिविधिकल्पनं, उत्तरस्मिन्पक्षे तु लिङ्गावगतविनियोगान्यथानुपपत्तिरित्येतावान्विशेषः । भक्षद्वये-ऽप्यनुपपद्यमानार्थेनोपपादकार्थकल्पनं तुल्यमिति कश्चित् विशेषः ।

महाभाष्येऽपि 'न मुन इति सूत्रे इह नेयत्कार्यं प्राप्नोति तत्प्रति-मुभावः सिद्धमित्युच्यते । नाभावश्चेतावत् न प्राप्नोतीत्याशङ्क्य वृद्धकुमारी-वरवाक्यवदिदं द्रष्टव्यम् । वृद्धकुमारी इन्द्रेणोक्तावरं वृणीष्वेति, सा वरमवृणीत, पुत्रा मे बहुक्षीरघृतमोदनं सौवर्णेषु पात्रेषु भुञ्जीरन्' इति । न च तस्यान्यति

---

न तथा ग्रहणावेक्षण निगरण सम्यग्जरणानि चोदितानि न चाविहितेषु मंत्रेषु विनियोगमर्हति । भक्षानुवाकः इति समाख्याऽपि भक्षमात्रविषयादृश्यते । तस्मात् कृत्स्नस्याप्यनुवाकस्य भक्षण एव विनियोगः इति पूर्वः पक्षः ।

सिद्धांतस्तु - अविहितान्यपि ग्रहणादीनि अर्थाक्षिप्तान्येव । तद्व्यतिरेकेण भक्षणासंभवात् । अतः तेष्वनुवाकः यथालिंगं विभज्यविनियोक्तव्यः । भक्षैः इत्यारभ्य — 'अश्विनोस्त्वा बाहुभ्यां सग्ध्यासन्' इत्यंतः ग्रहणं प्रकाशयति । 'नृचक्षसंत्वादेव सोम सुचक्षा अवख्येष'मित्ययं भागः अवेक्षणं प्रकाशयति । 'हिन्वमेगात्रा' इत्यादिः मामेऽवाङ्नामिमतिगाः इत्यंतः सम्यग्जरणं प्रकाशयति । जरणं च नार्थाक्षिप्तं इति न शंकनीयम् । जरणपर्यंतस्यैव सार्थक भक्षणत्वात् । सम्यगुपवेशनादेः जरणार्थत्वात् । मंद्राभिभूतिरित्यादिः भक्षयामि इत्यंतो भागः भक्षणं प्रकाशयति । तस्मात् लिंगेन समाख्यां बाधित्वा विनियोगः कर्तव्यः । (जै. सू. 3-2-25)

भवति कुतः पुत्रात्मतो गावः कुतो धान्यं भोजनं वा तत्र तया एकेन वरेण पतिपुत्रा गावो धान्यं सर्वं सङ्गृहीतं भवति । एवमिहापि नो परतो सिद्धत्वप्रतिषेधं .... वता ना भावोऽपि सङ्गृहीतो भवती'त्युक्तम् । एवं चेदमेव वचनं पुरुषशब्दस्य भगवदसाधारण्ये प्रमाणम् ।

न चेदं वचनं पुरुषधर्मपौष्कल्यप्रतिपादनेन प्रशंसापरमित्यनिमित्तेन वक्तुं शक्यम् । अस्य वचनस्य भगवत्प्रकरणस्थितत्वाभावात् । किं चानुशासनमेव शक्तिग्राहकमिति यदि कश्चिन्मूर्खो ब्रूयात् तं प्रति 'तुष्यतु दुर्जन' इति न्यायात्तदप्यस्तीति ब्रूमः । नानार्थरत्नमालायां 'पुरुषो धातृपुन्नाग नरपुं परमात्मसु' इति विशिष्य परमात्मन्यप्यनुशासनात् । परमात्मशब्दश्च नारायणपरः, नारायणविषयकभूरिप्रयोगशालि पुरुषशब्दविवरणप्रवृत्तत्वरूपसामर्थ्येन तत्परत्वावसायात् । न चान्योन्याश्रयः; पुरुषशब्दस्य नारायणपरत्वसिद्ध्यधीनत्वात् परमात्मशब्दार्थनिर्णयस्येति वाच्यम् । प्रयोगबाहुल्यविद्धनारायणपरत्वस्य पुरुषशब्दस्य विशेषशक्त्यंशकल्पनमात्र एव कोशस्य व्यापारेणान्योन्याश्रयानवकाशात् ।

'परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥'

इति पौराणिकप्रसिध्या च परमात्मशब्दो नारायणपर इत्यवसीयते । प्रयुक्तश्च 'वासुदेवार्जुनाभ्यां वुन्'इति सूत्रगतवासुदेवपदार्थकथनप्रवृत्तं 'नैषा क्षत्रियाख्या संज्ञैषा तत्र भवत' इति भाष्यं व्याचक्षाणेन कैयटेन 'नित्यः परमात्मा देवता विशेषत इह वासुदेवो गृह्यत इत्यर्थ' इति भगवति परमात्मशब्दः । एवमन्येऽपि प्रयोगा द्रष्टव्याः । तस्मात् नारायणस्य परमात्मकत्वे कलिबलसन्धुक्षितपापवासनामुषितशेमुषिकत्वं विना कस्यापि विवादाभावात् । उक्तानुशासनबलात् पुरुषशब्दस्य भगवदसाधारण्यं सिध्यतीत्यनवद्यम् ॥

अपि च,

'ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ॥

निरुपाधि च वर्तेते वासुदेवे सनातने ।
एतत्पुरुषसंज्ञं वै जायते हीयते न च ॥

यद्वा पुरुषशब्दोऽयं रूढ्यावक्ति जनार्दनम् ॥'

इति **योगयाज्ञवल्क्य भीष्मपर्वादि**वचनबलात् भगवदसाधारण्यं पुरुषशब्दस्यावसीयते ।

ननु तेषां पुरुषधर्मपौष्कल्यप्रतिपादनेन प्रशंसापरतयैवमुक्तमिति चेत् - सत्यम् - अस्मदुक्तं दुरुक्तं तु तद्वेदोपबृंहणार्थप्रवृत्तवचनानां वेदस्थपदशक्तिनिर्धारकत्वे सम्भवति बाधकं विना प्रशंसापरत्वकल्पनाया मूर्खव्यपारत्वात् । अन्यथा शिवमाहात्म्यप्रतिपादकवचनानां तावकत्वकल्पने त्वन्मनोरथस्य केवलं क्लेशैकफलत्वप्रसङ्गात् । अपशावो वेऽस्यस्य तु गवांश्व व्यतिरिक्तेषु अजादिषु पशुत्वनिषेधे प्रत्यक्षविरोधात् पशुकार्यनिषेधेऽन्यत्र तेषां कार्यान्तरोपदेशविरोधप्रसङ्गात् । स्ववाक्येऽन्ये गोऽश्वेभ्यः पशव इत्युक्त्या पशुत्वनिषेधासम्भवाच्चार्थवादत्वमाश्रितम् । अत्र तु तथा कल्पनेन किंचित्कारणं पश्यामः ।

यदुक्तं 'पुरुषावात्ममानवावि'ति **कोशबलात्** चेतनसामान्ये शक्त्यभ्युपगमावश्यम्भावात् बर्हिराज्याधिकरणविरोधात् न पुरुषशब्दस्य विष्णौ विशिष्यशक्तिरिति तदसमञ्जसम् । उक्तप्रमाणबलाद्विशेषशक्तिसिद्धेः । प्रयोगमात्रं विषयशब्दविषयत्वात्तन्यायस्य । किं च 'पुरुषावात्ममानवावि'त्यस्य चेतनसामान्यशक्तौ प्रमाणत्वेनोपन्यासोऽप्यसङ्गतः । अत्रात्मशब्दस्य क्षेत्रज्ञ आत्मपुरुष इति जीवपर्याय पठितत्वावसायात् । एवं सति पुरुषाः पुरुषनर इत्यत्र क्षेत्रज्ञ आत्मापुरुष इत्यत्र मनुष्यजीवपर्याययोः पार्थक्येन पठितस्य पुरुषशब्दस्य नानार्थत्वज्ञापनार्थत्वस्यात्मपर्यायतद्वाचकत्वविधायकत्वस्यापि प्रसङ्गेन वैरूप्यं

स्यात् । क्षेत्रज्ञात्मपुरुष इत्यनेन जीववाचकस्यैवास्य 'पुरुषावात्ममानावावि' त्यनेन चेतनसामान्यवाचकत्वस्यापि कल्पनीयतया गौरवप्रसङ्गाच्च । न च,

'प्रधानं पुरुषं चैव प्रविश्यात्मेच्छया हरिः'

इत्यादौ जीवरूपचेतनविशेषप्रयोगं परमात्मनि प्रयोगं च विहायात्मसामान्ये तत्प्रयोगं क्वचित् पश्यामः । परमपुरुषादिशब्दगतविशेषणसार्थक्यं च सामान्य शक्तिमन्तरेणापि जीवप्रतिपत्तिवारकत्वमुपपद्यते । न चोभयत्र प्रयोगादुभय-साधारणशक्तिकल्पनं प्रयोगानुशासनाभ्यां जीवेऽपि शक्तेरवश्यकल्प्यत्वेन गौरव-प्रसङ्गात् । अतो बर्हिराज्याधिकरणन्यायोपन्यासो बालव्यामोहनमात्रम् ।

न च शिवचतुर्मुखयोरपि पुरुषशब्दस्य शक्तिकल्पनप्रसङ्गः । क्वचित्क-प्रयोगस्य लक्षणयाऽप्युपपन्नस्य शक्तिकल्पकत्वाभावात् । 'त्र्यक्षः शूलपाणिः पुरुष' इत्यादौ त्र्यक्षत्वादिविशेषणबलादेव वस्तुविशेषप्रतीत्या तादृशप्रयोगबलात् शक्तिकल्पनस्यासम्भवाच्च । तत्र पुरुषशब्दस्य श्रीप्रतिसम्बन्ध्यात्मकत्वमादायोप-पन्नत्वात् । न च 'सहस्रशीर्षापुरुष' इत्यत्रापि तदर्थकत्वशङ्कावकाशः । यद्वा पुरुषशब्दोऽयं 'रूढ्या वक्ति जनार्दनमि'त्यादि प्रमाणप्रतिपन्नविशेषार्थकत्वस्वी-कारसम्भवे देवताविशेषाकाङ्क्षाजनकार्थपरत्वस्वीकारस्यान्याय्यत्वात् । निर्वचन-बलादपि न शिवचतुर्मुखयोः शक्तिक्लृप्तिप्रसङ्गः । तस्य तेन निमित्तेन तच्छब्द-प्रवृत्तिमात्रे प्रामाण्यात् । तस्या योगमादायाप्युपपत्तेः । 'सर्वशरीरी प्रथमः सैव पुरुष उच्यत' इत्यत्र क्षेत्रज्ञात्मपुरुष इति प्रमाण प्रतिपन्नजीव इत्यभि-प्रायेणोपपन्न इति न तच्चतुर्मुखशक्तिं कल्पयितुमीष्टे ।

एवं 'पुरुषो नाम सम्पूर्ण' इत्यपि न शिवेशक्तिकल्पकम् । तस्य शक्तिकल्पकत्वेनान्यो 'रुद्रो विष्णुरजोऽपि वे'त्यस्य भगवति तच्छब्दवाच्यत्वा-भावत्वाभावपरत्वं वाच्यमिति बहुप्रमाणवैयाकुलिप्रसङ्गात् पूर्णत्वधर्मपौष्कल्य-मादाय प्रशंसापरत्वावसायात् । न च पुरुषशब्दस्य भगवदसाधारण्येऽन्तर तद्धर्माद्यधिकरणोच्छेदः । 'क्षेत्रज्ञ आत्मपुरुषः प्रकृतिं पुरुषं चैव विध्यनादी उभावपी'त्यादिप्रमाणैर्जीवेऽपि शक्त्यङ्गीकारेण 'य एषोऽन्तरादित्ये'त्यादि-

वाक्यानां जीवपरत्वसाधकपूर्वपक्षप्रवृत्तेर्निर्गलत्वात् । अत एव श्रुत्याश्रयणेन सिद्धान्तवर्णनमपि न कृतम् । तस्य जीवसाधारण्यात् । न चैवमपीक्षति कर्माधिकरणे हिरण्यगर्भपरत्वेन पूर्वपक्षवर्णनं कथं घटेतेति वाच्यम् । 'परम-पुरुषमभिध्यायीते'त्यत्र 'परात्परं पुरिशयं पुरुषमीक्षत' इत्यत्र च परमात्व बाम्नानेन पूर्वपक्षप्रवृत्तिसम्भवात् । न चैवमपि पूर्वपक्षोपपादकत्वं तस्य कथं सिद्धान्तसाधारण्यादिति वाच्यम् । सर्वान् कामान् छन्दतः प्रार्थयस्व, शतायुषः पुत्रपौत्रान् वृणीष्वे'ति पुत्रादीनां कामानां प्रकृतत्वेन 'कामं कामं पुरुषो निर्मिमाण' इत्यत्र पुत्रादीनामेव कामशब्दार्थकत्वात् जीव एवात्र प्रतिपाद्यत इति पूर्वपक्षप्रवृत्तेः ततस्सम्भवात् । तस्मात् पुरुषशब्दस्य भगवदसाधारणत्वात् उपक्रमश्रुततच्छब्दबलात् सूक्तस्य पौरुषस्य भगवत्परत्वं सिध्यतीति दिक् ।

एतेन विनियोगोपबृंहणयोर्भगवद्विषययोरन्यथासिद्धिवर्णनं निरस्तम् । ईशानशब्दस्यात्रत्यस्य शिवोपस्थापकत्वाभावस्योपपादितत्वात् अन्यथासिद्धि-वर्णनस्योपपत्तिशून्यत्वात् । पुरुषशब्दस्य प्रत्युत भगवदुपस्थापकस्य सत्वेन भगवति विनियोगोपबृंहणयोरेवाभिधानश्रुत्याऽनुगुण्यात् शिवविषययोरेव तयो-रन्यथासिद्धि सहत्वाच्च ।

यदुक्तमारुणकेतुके प्रजापतिजनककूर्मसंवादे — 'अन्तरतः कूर्मं भूतं सर्पन्तम् । तमब्रवीत् । मम वै त्वं मांसात्समभूत् । नेत्यब्रवीत् । पूर्वमेवाह-मिहासमिति । तत्पुरुषस्य पुरुषत्वम् । स सहस्रशीर्षापुरुषः । भूत्वोदतिष्ठत् ।' इत्यत्र पूर्वमेवासमिति कूर्माकृतिलिङ्गोपस्थापितस्य नारायणस्य वचनं प्रदर्श्य 'तत्पुरुषस्य पुरुषत्वमि'ति तत्र पुरुषशब्दस्य प्रवृत्तिनिमित्तमभिधाय 'सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । भूत्वोदतिष्ठदि'त्यनन्तरं पाठात् । सहस्र-शीर्षेत्यादिमन्त्रस्थपुरुषशब्दस्य तत्प्रवृत्तिनिमित्तकत्वेन नारायणपरत्वनिर्णयात् पुरुषसूक्तस्य नारायणपरत्वमिति वक्तुं शक्यम् । 'पुरुषो भूत्वोदतिष्ठदि'त्यत्र पूर्वपुरुषभावापत्तिप्रतिपादनेन 'सहस्रशीर्षे'त्यादिमन्त्रस्थ पुरुषपदस्यानन्तरवाक्य-प्रतिपन्नप्रवृत्तिनिमित्तकत्वव्यतिरेकस्याक्सायात् । अन्यथा प्रागपि तस्य पुरुष-

शब्दाभिलप्यतया 'पुरुषोभूत्वे'त्युक्तिविरोधादिति तदसम्बन्धप्रलपितम्। निर्वचनानर्थक्यापातात्। न ह्यनन्तरवाक्यस्थपुरुषशब्दस्य तेन निमित्तेन प्रवृत्त्यभावे 'तत्पुरुषस्य पुरुषत्वमि'ति निर्वचनस्य किंचित् प्रयोजनं पश्यामः। सहस्रशीर्षत्वादिवैशिष्ट्यभञ्जन प्रतिपादकतया सहस्रशीर्षेत्यादि वाक्यस्योपपन्नत्वेन प्रवृत्तिनिमित्तकथनपरानन्तरवाक्यविरुद्ध पुरुषभावापत्तिप्रतिपादकत्वं चासिद्धम्। भूत्वेत्यस्य प्राप्त्यर्थकस्य 'स भूमिं विश्वतो वृत्वे'ति वाक्यैकार्थ्याय व्याप्तिपरत्वस्याङ्गीकर्तुं युक्तत्वेन च पुरुषभावापत्तिप्रतिपादकत्वम्। अतो न तद्बलात् प्रवृत्तिनिमित्तव्यतिरेकावसायः। न चैवमपि निर्वचनं न शक्तिकल्पकम्, लक्षणयापि तत्र प्रयोगोपपत्तिकथनपरत्वेनान्यथासिद्धेरिति वाच्यम्। शक्त्यन्तराकल्पनेऽप्यन्यत्य पुरुषशब्दस्य तेन निमित्तेन प्रजापतिजनककूर्मपरत्वावश्यम्। त्रिवृच्चर्वाश्ववालनयादप्युपगन्तव्यत्वात्। तत्र हि त्रिवृच्चर्वादिशब्दानां लोकतस्त्रैगुण्यस्थाल्यादिरूपार्थावगत्या वेदतश्च स्तोत्रिया नवकौदनादिरूपार्थावगत्या को वाऽर्थो ग्राह्य इति संशये लौकिकप्रसिद्धेः वेदनिरपेक्षत्वेन बलीयस्त्वाद्वैदिकप्रसिद्धेश्च। लोकप्रसिद्धपदान्तरसमभिव्याहारगम्यत्वेन विलम्बितत्वादर्थवादस्य प्रशंसामात्रत्वेनाप्युपपत्तेर्लोकप्रसिद्ध एवार्थो ग्राह्य इति पूर्वपक्षं प्राप्यार्थवादस्य स्तावकत्वेऽपि विधिस्तुत्योरेकविषयकत्वात् स्तुतिविषयस्यार्थस्य विध्युद्देशेनाग्रहणे निरालम्बनत्वेनार्थवादानर्थक्यापत्तेः। '**आनर्थक्ये प्रतिहतानां विपरीतं बलाबल**'मिति न्यायेन वाक्यशेषप्रसिद्धेः बलवत्वात् प्रथमतो लोकतोऽर्थान्तरप्रतीतावपि तमर्थमनादृत्य वाक्यशेषसिद्ध एवार्थो ग्राह्य इति राद्धान्तितम्। एवं च यथा तत्र लोकतस्त्रैगुण्यरूपार्थप्रतीतावपि तमर्थमनादृत्य वाक्यशेषप्रसिध्या स्तोत्रिया नवकमेव त्रिवृच्छब्दार्थस्यार्थ इति स्वीक्रियते तद्वदत्रापि लोकप्रसिद्धार्थमनादृत्य वाक्यशेषः प्रदर्शितः। प्रवृत्तिनिमित्तशाली भगवानेव पुरुषशब्दार्थ इति वक्तव्यम्। उक्तं च **तन्त्रवार्तिके** —

'गौणो वा यदि वा मुख्यो वेदेनाश्रीयते हि यः।
स धर्मत्व साधनत्वेन पदार्थोऽध्यवसीयते ॥

त्रिवृच्छब्दः प्रयुक्तोप स्तोत्रिया नवकं प्रति ।
कस्तं शक्तस्ततोऽन्यत्र नेतुं जन्मशतैरपि ॥
गौणं लाक्षणिकं वाऽपि वाक्यमेदेन वा स्वयम् ।
वेदोऽयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥'

इति । न चैवमप्यारुणकेतुकवाक्यस्य पुरुषपदस्य वाक्यशेषप्रदर्शितार्थकत्वेऽपि पुरुषसूक्तस्य तदर्थपरत्वेन प्रमाणमुपन्यस्तमिति वाच्यम् । तस्यैव वाक्यस्य पुरुषसूक्तादौ श्रवणात् । यत्र वाक्यशेषो नास्ति **त्रिवृदग्निष्टुदग्निष्टोम इत्यादौ** (जै. सू. 10-6-22-28) **तत्रापि स एवार्थः स्वीकर्तव्य इति तन्त्रज्ञैर्निर्णीतत्वात् ।**

ननु तत्र बहिष्पवमानमित्युक्त्वा स्तोत्रिया नवकानुक्रमणमाम्नात् नवभिः स्तुवन्तीति वचनाद्वा । बहिष्पवमाने स्तोत्रियानवकप्राप्तेर्नत्रिवृत्पदस्य तत्र प्रयोजनम् । किं त्विदमेव प्रयोजनं यद्वाक्यशेषाभावेऽपि त्रिवृदग्निष्टुदग्निष्टोम' इत्यादौ स्तोत्रियानवकस्यैव त्रिवृत्पदार्थत्वेन ग्रहणमित्युक्तत्वात् । त्रैगुण्य-विषयत्वं त्ववयवप्रसिध्या समुदायप्रसिध्या च स्तोत्रियानवकवचनत्वम्, योगाच्च रूढिर्बलीयसी । अतः स्तोत्रियानवकमेवात्र त्रिवृच्छब्दार्थ इत्युक्तत्वाच्च । तत्र

---

**त्रिवृति स्तोमगत संख्याविकाराधिकरणम्—**

त्रिवृदग्निष्टु दग्निष्टोमः इत्येवं श्रूयते । किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु संबध्यते किं वा स्तोममात्र संबंधितत् । त्रिवृद्रज्जुः इत्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनादत्रापि क्रतु साधनेषु या या संख्या श्रूयते सा सर्वा त्रिवृत्त्वेन विक्रियते — इति प्राप्ते ।

सिद्धांतयति — यद्यपि त्रिवृच्छब्दः अवयव प्रसिद्धया लोके त्रैगुण्यं ब्रूते तथाऽपि वेदरूढ्या स्तोमवाची । त्रिवृद्बहिष्पवमानः इत्युक्त्वा स्तोत्रि-याणां नवाना मृचा मनुक्रमणेन स्तोमविषयमेव त्रिवृत्त्वम् । (जै. सू. 10-6-22, 28)

तथास्वीकारेऽपि प्रकृते उभयत्र रूढ्यशेषात् वाक्यशेषप्रसिध्याऽर्थ एव न स्वीकरणीय इति चेत् - न । वैदिकत्वसामान्यात् वाक्यशेष प्रसिध्याऽर्थस्यैवात्र स्वीकर्तुं युक्तत्वात् । अत एव **न्यायसुधायाम्** - 'अत्रोभयसम्भवेऽपि वैदिकत्व-सामान्यात् स्तोत्रियानवकविषयत्वावधारणात्' इत्यभिहितम् । अत एव 'सौर्यं चरुं निर्वपेदि'त्यत्र वाक्यशेषाभावेऽपि चरुशब्द ओदनवचन इत्युप-गतम् । अत एतद्वाक्यबलात् पुरुषसूक्तस्य भगवत्परत्वमभ्युपगन्तुं युक्तम् ।

यदपि यत्र यत्र कर्मभ्रंशो यज्ञभ्रंशो तत्र पुरुषं चिन्तयन् पुरुषसूक्तं ब्रूयात् । 'पूर्णत्वात् पुरुष इति विज्ञायते' इति वाधूलसूत्रे पुरुषसूक्तश्रुत-तत्प्रतिपाद्यपरपुरुषशब्दस्य पूर्णत्वप्रवृत्तिनिमित्तकत्वावसायात् ।

'पुरुषो नाम सम्पूर्णः शिवः सत्यादिलक्षणः ।
साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा ॥'

इति **स्कान्दोक्तेः** । तेन प्रवृत्तिनिमित्तेन पुरुषशब्दस्य शिवसाधारणत्वात् 'सर्वो वै रुद्र' इत्युक्त्यनन्तरमौचित्यात् । 'पुरुष एवेदं सर्व'मिति मन्त्र-विरोधशङ्कानिराकरणार्थया 'पुरुषो वै रुद्र' इति श्रुत्या तस्य तस्य रुद्रपरत्वेन व्याख्यानात् तस्य परमशिवश्रुतित्वस्यैव सूपपादत्वाच्च न पुरुषसूक्तस्य भगवत् परत्वमिति – तदप्यसमञ्जसम् । सम्पूर्णत्वकथनमात्रेण शिवे शक्तिं कल्पयितु-मशक्यत्वात् । गौरवप्रसङ्गात्, लक्षणादिना तत्र प्रयोगानिर्वाहार्थत्वेनोपपत्तिः । भगवति तु 'यद्वा पुरुषशब्दो धीरूढ्या वक्ति जनार्दनम्' इति प्रमाण-बलात् शक्त्यन्तराङ्गीकारो न दोषः । वाचनिकत्वात् विध्यन्ताधिकरणोक्त-न्यायेन वैदिकत्वसामान्यात् वेदवाक्याश्रुतस्य भगवत एवात्र पुरुषसूक्तप्रतिपाद्य-पुरुषशब्दार्थत्वस्य स्वीकर्तुं युक्तत्वात्, अन्यस्य पुरुषशब्दस्य शक्तत्व प्रति-पादनस्याशामोदकमात्रत्वाच्च । पुरुषसाधारण्यपक्षे शिवेऽपि शक्त्यङ्गीकारपक्षे वा 'पुरुष एवेदं सर्वम्' 'सर्वो वै रुद्र' इत्यनयोर्विरोधाभावेन तन्निरासार्थत्वेन 'पुरुषो वै रुद्र' इति वाक्यप्रवृत्तेर्वर्णयितुमशक्यत्वात् । भगवति पुरुष-शब्दासाधारण्याभ्युपगम एव तद्वाक्यप्रवृत्तेर्वक्तव्यत्वेन, तत्र च प्रथमस्य वै

**शिरस्क**त्वाभ्यां पुरुषशब्दस्योद्दयसमर्पकत्वात् । तत्र रुद्रशब्दवाच्यत्वविधिपर्यव सायिन्याऽनया 'पुरुषो वै रुद्र' इति श्रुत्या पुरुषसूक्तस्य शिवपरत्वासिद्धेश्च ।

यदप्युक्तं महापुरुषशब्दस्य क्वचिदपि नारायणनामत्वेनानुशासना-भावात् प्रयोगमात्रस्य **गौतमस्मृतौ** 'कृच्छ्रमन्त्रेषु महापुरुषाय' इति शिव इव योगेनाप्युपपत्तेः, एतदनभिधानात् तथात्वेऽपि पुरुषं महान्तमिति पृथक्पदयोरेवेह श्रवणेन तस्याश्रवणात् । भवादिशिवनामाष्टकमध्ये पठितस्य महान्तं पुरुषमिति पाठेन शिवपरत्वस्यैव प्रतीतेः न महापुरुषशब्दबलात् भगवदुपस्थितिरिति तदप्ययुक्तम् —

'परमात्मेति यं प्राहुस्साङ्ख्ययोगविदो जनाः ।
महापुरुषसंज्ञां च लभते स्वेन कर्मणा ॥
तस्यैकस्य महत्त्वं हि सचैकः पुरुषः स्मृतः ।
महापुरुषशब्दं हि विभक्त्येष सनातन ॥'

इति **महाभारत**वचनाभ्यां महापुरुषशब्दस्य भगवदसाधारणत्वावगमात् । पृथक्पदश्रवणेऽपि तद्विषयकप्रचुरप्रसिद्धिकमहापुरुषशब्दयोगार्थकथनस्य रूढ्यर्थ-स्मारकतया ततो भगवत्प्रतीतेरनिवार्यत्वात् । भवादिनामाष्टकमध्ये महच्छब्दस्य पठितत्वेऽप्युत्कर्षवति अन्यत्रापि प्रयोगे दर्शनेन तद्रूढत्वाभावेन तस्यैकस्य महत्वमहीति प्रतिपादितरीत्या निरतिशयोत्कर्षवतो भगवत एव प्रतीत्युपपत्त्या ततो रूढ्यर्थस्मरणप्रतिबन्धाभावात् पुरुषशब्दस्य भगवदसाधारण्यव्यवस्थापनात् । तदर्थप्रधानकमहापुरुषशब्दस्य यौगिकत्वेऽपि भगवदसाधारणत्वानपायात् पृथ-क्पदश्रवणेऽपि कांस्य भोजीन्यायेन पुरुषशब्दानुरोधेन महच्छब्दस्य भगवद्वृत्ते-रेवान्याय्यत्वाच्च ।

यदपि 'मध्ये लिङ्गं महाघोरं महाब्धेरम्भसिस्थितम्' इति **लैङ्ग**-वचनात् ।

'एकार्णवे तु त्रैलोक्ये ब्रह्मनारायणात्मकः ।
भोगी शय्यागतः शेत ॥'

इति **वैष्णवादि**वचनैश्च । समुद्रवर्तित्वं साधारणमिति न तद्बलात् 'अम्भस्या'नुवाकस्य भगवत्परत्वमिति - तदप्यसङ्गतम् । क्षीरसमुद्रस्य भगवत्स्थानत्वेन सकलश्रुतिपुराणादिप्रसिध्या समुद्रवर्तित्वस्य भगवदुपस्थापकतया एव वक्तव्यत्वात् । न हि समुद्रवर्तित्वं भगवतोऽन्यत्र प्रसिद्धम् । 'महाब्धेरम्भसि स्थितमि'त्यस्यावान्तरप्रलयविशेषे कस्मिंश्चित् लिङ्गाकारेण प्रलयजलमध्योद्भवप्रतिपादकमात्रेणोपपन्नत्वात्, महाब्धि शब्दबलात् तथावगमात् । न चैतत्प्रलयकालजलवर्तित्वं समुद्रवर्तित्वस्य भगवल्लिङ्गत्वविघातकम् । कथञ्चित् समुद्रवर्तित्वप्रतिपादकत्वेऽपि कदाचित् स्थितिमात्रप्रतिपादकत्वेनोपपन्नतया शिवस्थानप्रतिपादनपरत्वाविद्यासाधारण्योक्त्ययोगात् । न हि माहिष्मती पाटलिपुत्रादिगमनमात्रेण माहिष्मती वासीत्यादि व्यपदेशस्सम्भवति । तस्मात् न शिवसाधारण्यम् । एतेन चतुर्मुखसाधारण्यमपि निरस्तम् । किं च,

'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणा'

इति **कौर्मवचन**बलात् भगवच्छरीरानुप्रवेशप्रतीत्या तन्निमित्तसमुद्रशयनप्रतिपादकत्वेन 'एकार्णवे तु त्रैलोक्य' इत्यादिवचनात् न समुद्रशायित्वप्रतिपादकत्वमिति न तस्य समुद्रवृत्तित्वान्यथाकरणसामर्थ्यम् ।

**वेदान्तविजयकृतस्तु** — 'नारायणानुवाके समुद्रेऽन्तं विश्वशम्भुवमि'ति समुद्रशायित्वस्य नारायणनिष्ठत्वप्रतिपादनात् श्रुतिप्रसिद्धस्यैव सम्भवे ग्राह्यत्वान्मध्ये लिङ्गमित्यादेः ध्यात्वा प्रदोषकाले त्वित्युत्तरवाक्यप्रतिपाद्यमानध्यानशेषतयार्थतयात्वासिद्धेश्च न शिवसाधारणम्' इत्याहुः ।

विद्युद्वर्णीत्वस्य रुद्रसाधारण्योक्तिरपि निष्फला । 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमि'ति 'द्वे विद्ये वेदितव्ये वै' इति चाथर्वणीश्रुतिरित्यादि**वैष्णवपुराण**वचनैर्भगवत्परतयोपबृंहितायां **मुण्डकोपनिषदि** 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इति 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षीणि, तस्योदिति नामे'त्यादिवाक्यावगताक्षिः द्वित्व-

पुण्डरीकाक्षत्वापहतपाप्मत्वैर्भगवत्परतया अवगतेः छान्दोग्ये हिरण्यवर्णत्वस्य भगवन्निष्ठतयाऽवगमेन वैदिकत्वसामान्यात् ततो भगवत एवोपस्थितेः ।

यदपि हिरण्यगर्भश्रुत्या च शिवप्रजापतिसाधारण्यमिति नारायणैकान्त्यमिति - तदप्यनुपपन्नम् — '**अद्भ्यसम्भूतो हिरण्यगर्भ इत्यष्टौ**' इति श्रुत्या अद्भ्यस्सम्भूत इत्यनेन **हिरण्यगर्भ** इत्यष्टर्चस्यैकार्थत्वप्रतिपादनादद्भ्यस्सम्भूत इत्यत्रानन्यथासिद्धलक्ष्मीपतित्वलिङ्गस्य भगवदुपस्थापकस्य सत्वात् हिरण्यगर्भशब्दस्य योगेन लक्षणया वा भगवत्परत्वसम्भवात् कृत्स्नजगत्पतित्वेन श्रुतिसिद्धे भगवति द्विपाच्चतुष्पात्पतित्वसम्भवेन भगवदेकान्तत्वात् ।

**वेदान्तविजयकृतस्तु** — ' विष्णुना विधृते भूमी । व्यस्कभ्नात रोदसी विष्णुरेते, दाधार पृथिवीमभितो मयूखैः इत्याद्युक्तस्य द्यावापृथिवीधारकत्वस्य 'यो अस्कभायदि'ति श्रुतद्युस्तम्भकत्वस्य 'यः पार्थिवानि विममे रजांसि' इति श्रुतरजोविमानस्य च सदाधार पृथिवींद्यामिति सूक्तोपक्रमे उत्तरत्र च 'येन द्यौरुग्रा पृथिवी च दृढेयेन सुवस्तमितं येन नाकः योऽन्तरिक्षे रजसोविमान इति प्रत्यभिज्ञानात् तन्मध्यवर्ति द्विपाच्चतुष्पादीशत्वं सर्वेश्वरे विष्णावेव सङ्गच्छते । 'यस्येमाः प्रदिशो यस्य बाहू' इति वाक्यस्य **चारण्यपर्वण्युदङ्कस्तोत्रे** — ' बाहवस्ते दिशास्सर्वा ' इति **भीष्मपर्वणि** ' दिग्बाहुस्त्रिदिवं शिर ' इति भगवत्परतयोपबृंहणात् ।

किं च '**मानोहासीज्जनिता यः पृथिव्या यो वा** दिवं सत्यधर्मा जानयश्चापश्चन्द्राबृहतीर्जजानकस्मै देवाय हविषा विधेमे'ति मन्त्रो जगत्कर्तृविषयो नारायणपरः । **मैत्रायणीयश्रुतौ** ' विष्णुसंज्ञमि'ति प्रकृते एतत्सत्यधर्म इति सत्यधर्मत्वाभिधानदर्शनात् **योगयाज्ञवल्क्य** '**ईश्वरः पुरुषाख्यं तु** सत्यधर्माणमच्युतम्' इति दर्शनात् । **राजधर्मे** च —

' यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृह्णन्ति सत्यधर्माणं सत्यं सत्येषु ॥'

इति दर्शनात् । 'पुरुषो ह वै **नारायणो**ऽकामयत प्रजास्सृजेयेति तथा आपस्ससर्ज' **इति श्रुतायामम्बूपलक्षितसकलतत्त्वसृष्टेः** 'आपो नारा इति प्रोक्ता' इति **मानवादिस्मृतिभिः** 'नरात् जातानि तत्त्वानि नाराणीति ततो विदुः' **इत्यनुशासनीकवचनै**श्चोप बृंहिताया 'यश्चापरोबृहतीर्जजाने'ति **श्रवणाच्च** । तत्र च श्रुतस्य 'कस्मै देवाय हविषाविधेमे'त्यस्य हिरण्यगर्भो इत्याद्यष्टर्चे श्रवणात् तदैकार्थ्यात् कस्मा इत्यस्य सर्वप्रधानतया विज्ञात-पारमार्थ्यायेति **भास्करादिभि**र्व्याख्यातस्य,

'**नारायणस्य चाङ्गानि सर्वदेवास्तथाऽभवन्** ।
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ॥
त्वं हि लोकगतिर्ब्रह्म न त्वां केचन जानते ।
श्रूयतां परमं दैवं दुर्विज्ञेयं मयापि च ॥'

इत्यादि **भारत रामायणादि** वचनावगमित सर्वदेवताप्राधान्य — 'दुर्विज्ञेय भावे कः पुरुषः स्वयम्भूः विष्णुरि'ति गायत्रीहृदयसिद्धकशब्दवाच्यभावे **नारायण एव सम्भवदर्थकत्वात्** । **तापनीयेऽष्टर्चान्तर्गतस्य** 'य आत्मदे'ति मन्त्रस्य नृसिंहविषयतयोदाहरणात् सिद्धं तस्य नारायणत्वपरत्वम् । अत एव 'अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टावि'ति वाक्यव्याख्यावसरे **यजुर्भाष्यकृ**ता 'एषां मन्त्राणामात्मतत्त्वप्रतिपादनपराणामन्यत्राधीतानामिहातिदेशबलात्**कल्प-सूत्रकार**विनियोगान्तरेण लिङ्गादिना महापुरुषार्चनादौ विनियोग' इत्युक्तम् । स्मृतिविनियोगो लिङ्गमूल इत्याशयः ।

किं च पादेमरियज्ञानन्तरमिन्द्रस्तवे भगवत्परतयैवेयं श्रुतिरुपबृंहिता । यथा —

'अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्तत ।
त्वमेवेकः यति रसि पुरुषत्व त्रिदशैः प्रशिषं जगतां पते ॥

अमृतं चैव मृत्युश्च तवच्छाये सनातने ।

तस्मै देवाय भवते विधेम हविषावयम् ॥'

इति तस्याष्टर्चस्य नारायणपरत्वं सिद्धम्' इत्याहुः ॥

यदपि 'अम्भस्य पारे' इत्यादेरन्ते 'पुरुषस्य विद्मह सहस्राक्षस्य महादेवस्य धीमहि, तन्नो रुद्रः प्रचोदयात्' इत्याम्नानात् नैनमूर्ध्वं एष हि देव' इत्यादिश्वेताश्वतराथर्वशिरः प्रत्यभिज्ञानात् । 'प्रजापतिश्चरति गर्भे अन्त'रित्यत्र प्रजापतिशब्दस्य —

'यान्ति यस्मात्प्रजास्सर्वाः प्रजापतिरिति स्मृतः' इति लैङ्गे शिवनामसु निर्वचनदर्शनेन शिव एव प्रत्युपपत्तेः । हिरण्यगर्भशब्दस्य —

'हिरण्मयस्य गर्भोऽभूत् हिरण्यस्यापि गर्भजः ।

तस्माद्धिरण्यगर्भोऽसौ पुराणेऽस्मिन्निरूप्यते ॥'

इति तत्रैवनिर्वचनाच्च । हिरण्यगर्भशब्दस्यापि तत्र प्रत्युपपत्तेः शिवपरत्वमिति — तन्न — पुरुषस्य विद्मह इत्यतः पूर्वं 'उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिंममे'त्याद्यग्निप्रतिपादकमन्त्रदर्शनेनोत्तरत्र परमात्मप्रकरणानुवृत्त्यभावाच्च । पुरुषस्य विद्मेत्यनेनानुवाकस्य शिवपरत्वसाधनायोगात् । एतदनन्तरं तत्तद्देवतोपासनोपयोगि तत्तन्मन्त्रे तत्सन्निधिपठितस्यास्य प्रकरणार्थव्यवस्थापकत्वासिद्धेश्च । समुद्रशायित्वादिलिङ्गविरुद्धायाः प्रत्यभिज्ञाया अकिंचित्करत्वात् 'तदेवभूतं तदुभव्य मा इदमि'त्यत्र नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम्' 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमि'ति नारायणोपनिषत् - सुबालोपनिषत् - प्रत्यभिज्ञासद्भावात् । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम्, हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' इति कठवल्लिप्रत्यभिज्ञानाच्च भगवत्परत्वावसायात् । 'सप्तदशप्राजापत्यान् पशूनालभत' इत्येतद्वाक्यशेषे 'श्यामा एकरूपा भवन्ती'ति श्रवणेन आश्रावयेदिति चतुरक्षरमित्यारभ्य 'एष वै सप्तदशः प्रजापतिरि'त्यन्तस्य वाक्यस्य,

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु ॥'

इति **महाभारते** भगवत्परतयोपबृंहणेन च भगवति प्रजापतिशब्दस्य प्रयुक्तत्वात् । 'हिरण्यगर्भोद्युतिमानेष छन्दसी पश्यत' इति प्रमाणबलात् हिरण्यगर्भशब्दस्यापि तत्र प्रयोगसम्भवात् शिवपरत्वोक्त्ययोगात् । अपि च 'ह्रीश्चत' इति मन्त्रस्य केषांचित् गृहयज्ञे सोमाद्यधिदैवत गौरीपूजायां विनियोगस्य **स्मृत्यर्णवादि**षूक्तत्वादन्यत्र विनियोगानुपलम्भात्प्रथमश्रुतत्वाच्च । हृल्लेखाया भुवननायिकापरत्वात्तदनुरोधेन लक्ष्मीशब्दस्य **वायुसंहितायां** 'तत्र माहेश्वरी लक्ष्म्या मूर्तिर्मूर्तिमतः प्रभोः' इत्यारभ्य 'महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा' इति श्रुतायां महेश्वरशक्तिरूपायामपरशक्त्यंशलीलायां वृत्त्युपपत्तेः । 'श्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति **वाजसनेयि**पाठे समानप्रकरणगतहृल्लेखश्रुत्यनुरोधादुमायामेव श्रीशब्दस्य श्रियं लक्ष्मीमौपलाम्बिकांगामिति प्रयोगावृत्त्युपपत्तेः नैतद्बलात् भगवत्परत्वमिति —

तदप्यसम्बन्धम् — **गौरीपूजायां ह्रीश्चत इति** मन्त्रविनियोगकथनस्य प्रकृतानुपयुक्तत्वात् किं मन्त्रस्य गौरीपरत्वं सिध्यतीत्यभिमतम्? किं वा ह्रीशब्दस्य लक्ष्मीशब्दयोः । नाद्यः, मन्त्रः प्रकाश्यगौरीपत्नीकत्वस्य वा गौर्यामनन्वयेन तत्परत्वासिद्धेः । न द्वितीयः; प्राधान्येन मन्त्रप्रकाश्यार्थप्रतिपादकशब्दस्यैव विनियोगबलात् विनियोगसम्बन्ध्यर्थपरत्वस्य वाच्यत्वादन्येषां शब्दानां तदर्थपरत्वासिद्धेः । ह्रीशब्दस्य गौरीपरत्वसाधकप्रमाणान्तरानुपलम्भात् मन्त्रशास्त्रमर्यादाया एतादृशस्थलेषु प्रमाणान्तराभावेऽपि निरुक्तादिकमादाय कथञ्चिदुपपन्नत्वेन तस्य सार्वत्रिकसर्वार्थव्यवस्थापकत्वायोगाल्लक्ष्मीपदसमभिव्याहारेण भूपरत्वस्यैवात्र कल्पयितुं युक्तत्वात् । 'श्रीभूमिसङ्गीतं हरिमिति' प्रसिद्धेः **वायुसंहिता**वचने तत्र माहेश्वरी लक्ष्म्यामूर्तिरित्युक्त्वा लक्ष्मीतनुत्वप्रतीत्या तदभिव्यक्तिनिबन्धनत्वावगमात् महालक्ष्मीति ख्यातेति व्यपदेशस्य तद्बलादपि लक्ष्मीशब्दस्यान्यथयितुमशक्यत्वात् । 'लक्ष्मीमौपलाम्बिकां गामि'त्यस्य गौरीपरत्व-

साधकप्रमाणाभावात् तत्प्रयोगबलात् श्रीशब्दस्य पार्वतीपरत्वोक्त्ययोगेन वाजस-नेयिपाठान्यथासिद्धिवर्णनस्याप्युपपत्तिशून्यत्वात् । उपक्रमश्रुतश्रीलक्ष्मीशब्दयो-रनुसरणीयत्वेन —

'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
त्वं माता सर्वलोकानां देवदेवो हरिः पिता ॥'

इत्यादिषु मातृत्वोक्त्या तदादाय लक्ष्म्यामपि सम्भवात् प्रवृत्तिके नाम्बिकाशब्देन पार्वतीपरत्वोक्त्ययोगात् उपलशब्दस्य पर्वतपरत्वासिद्धेरौपलाशब्दस्य त्वत्पक्षेऽपि कथंचिद्वर्णनीयत्वेन मन्दरमथनसम्भूत्या लक्ष्म्यामपि तच्छब्दप्रवृत्तेर्वर्णयितुं सुश-कत्वात् ।

वेदान्तविजयकृतस्तु — 'अग्न्ययसम्भूत' इत्यत्र 'ह्रीश्चते लक्ष्मीश्च पत्न्याविति' श्रीभूमिपतित्वमाम्नायते । तत्र श्रीशब्दस्य

'रामस्य दक्षिणे पार्श्वे पद्मा श्रीःसमुपस्थितौ ।
सव्ये तु ह्री विशालाक्षी व्यवसायस्तथाग्रतः ॥'

इति परिशेषात् सव्यपार्श्वान्वयलिङ्गेन च रामायणे भूदेव्यां प्रयोगेण पाद्मे च सव्ये तु ह्रीरित्यस्य सादक्षिणेतरपार्श्वगेत्यभिधानाच्च । अत्रत्यह्रीशब्दस्योपबृंहणेन भूमिपरत्वात् व्यवसाय इति सङ्कल्प सुदर्शनमित्यर्थः ।

यद्वा लक्ष्मीतन्त्राद्यनुसारात् श्रीवाचको ह्रीशब्दः । तथा हि । तत्र

'परमात्मानमादाय योजयेत् कालवह्निना ।
त्रैलोक्यैश्वर्यदोपेत मायामस्मिन्नियोजयेत् ॥
इयं सा परमा शक्तिर्वैष्णवी सर्वकामदा ॥'

इति परमात्मकालानलत्रैलोक्यैश्वर्यद मायाशब्दवाच्यतया पूर्वाध्यायसिद्धेः । उत्तराध्याये च,

'तं विधि प्रथमं वर्णं हकारं पुरुषोत्तमम्'

इत्यादिना पुरुषोत्तमस्य तत्तेजसस्तस्यैव परमव्योमेशरूपस्य तदिच्छाज्ञान-क्रियारूपाया लक्ष्म्याश्च वाचकतया वक्ष्यमाणैर्हकाररेफानुस्वारैकारैर्हृल्लेखामन्त्र-मुद्धृत्य ।

'हृल्लेखा परमा दिव्या मत्स्वरूपं पुरन्दर ।
अनयैव सदा सौख्यसंख्येयाहं सनातनि ॥

अनयैव सदा योगैस्समाधिष्ये समाधिना ।
अभिधियैनयैवाहं शैवे षड्विंशदन्तिमे ॥'

इत्यादिना लक्ष्मीवाचकत्वस्य प्रपञ्चनात् ।

'अस्या रूपाणि पञ्चेह तत्त्वज्ञास्सम्प्रचक्षत'

इत्यादिनानुस्वारान्तत्वेकारान्तत्वबिन्दुनादान्तत्वमकारान्तत्वैश्चतुरः पक्षानागमादि-सिद्धान्प्रदर्श्य वेदे ह्रीश्चत इत्यादि विसर्जनीयान्ताम्नामिप्रायेण सृष्टिकारणमु-तेन्ये वैदिकास्समाधीयत पञ्चमपक्षोपन्यासाच्च ।

'विसर्गसृष्टिकृत् ख्यातो ह्यकारः परमेश्वर'

इति तत्रत्यवर्णनिघण्ट्वनुसारेण सृष्टिकारणशब्दस्य विसर्गवाचित्वात् स एव स्त्रीवाचको ह्रीशब्दोऽन्तरङ्गलक्षणया भूमिपरसृष्टा विष्णुरियं सृष्टि श्रीभूमिधरो हरिरिति श्रूयते । तत्र लक्ष्मीशब्देन पौनरुक्त्यप्रसङ्गात् लक्ष्म्या सहैकवत्यन्वय-लिङ्गात् 'श्रीभूमिधरो हरिरि'त्युदाहृत वैष्णववचनानुसारात् । गन्धद्वारामिति मन्त्रे 'त्वामिहोपह्वयेश्रियमि'ति भूम्यां दृष्टप्रयोगत्वात् श्रीशब्दो भूमिपरः । न त्वैश्वर्यादिपरः । तत्स्थानापन्नस्तैत्तिरीये ह्री शब्दोऽपि तथा । यद्यपि 'श्रीश्चते लक्ष्मीश्च पत्न्यावि'त्यत्र श्रीशब्दस्य प्रथमश्रुतत्वात् चरमश्रुतलक्ष्मीपदस्यान्यपरत्वं न्याय्यम्, तथापि श्रौतभूमिविषयप्रयोगान्तरानुसारादुपबृंहणानुरोधाच्च भूप-रत्वम् । न च 'श्रियं लक्ष्मीमौपलाम्बिकां गामि'त्यायुष्यसूक्ते श्रीशब्द-लक्ष्मीशब्दयोर्गौर्यामपि दृष्टप्रयोगत्वादत्रापि तत्परत्वमिति केनचिदुक्तं युक्तम् । तत्र हरिहरविरिञ्चस्कन्दपत्नीनामभिधानात् । **आरण्यपर्वणि** स्कन्दपत्न्या-

षष्ठीति यदि देवतात्वेन षष्ठीनामत्वदेवीमाहात्म्ये चेन्द्रसेनेत्यभिधानं प्रसिद्धम् । बह्वीनां पत्नीनामभिधानादेव षष्ठिं चेति समुच्चयोपपत्तिः । यामिन्द्रसेनेत्युदाहुः तां षष्ठिं चेत्यन्वयः । षष्ठिं जया मिति पाठसामानाधिकरणेनान्वयेऽप्यपौन-रुक्त्यायैकत्तरपदानां तच्छब्दवाच्यता लक्षणाया वाच्यत्वादुपक्रमगतश्रीपदस्य मुख्यार्थत्वमङ्गीकृत्य इतरेषु पदेषूक्तलक्षणा अङ्गीकार्या । न तु चरम-श्रुतस्याम्बिकापदस्य मुख्यार्थता । तस्मादेतेषां सर्वेषां नाम्नां लक्ष्मीवाचकत्वमेव सिध्यति । अत एव पूर्वतापनीये तृतीयोपनिषदि नृसिंहशक्तिरूपां माया-शब्दवाच्यां लक्ष्मीमधिकृत्य 'श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्र-सेनेत्युदाहुः । तां विद्यां ब्रह्मयोनिं सरूपां इहायुषे शरणमहं प्रपद्ये ॥' इति श्रूयते ।

वस्तुतस्तु तत्र तथात्वेऽप्यत्र नाम्नां स्वारस्यस्यानुरोध्यत्वादौचित्याच्च । बह्वीनामेव देवानां इहाभिधानमौचित्यं च चतुर्णां देवानां पूर्वमिहाभिधानात् । तथा हि 'यो ब्रह्मे'ति चतुर्मुखोऽभिधीयते स्वारस्यात् । 'यो ब्रह्मा स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेने'त्यन्वयः । 'प्राणेश्वरः कृत्तिवासाः पिनाकी' 'ईशानो देवः' ब्रह्मणश्चतुर्मुखादुज्जहार - उद्बभूव । धातूनामने-कार्थत्वात् कर्मानुक्तेश्च अयमीशानश्चतुर्मुखादुज्जहार स ईशान आयुर्दधातु तस्मै जुहोमि हविषा घृतेनेत्यन्वयः । तनूर्वर्षिष्ठेतिवत् यो ब्रह्मेत्यनन्तरमेव स न आयुर्दधात्विति वक्तव्येऽपि उभयोरन्वयविवक्षयेवोभयानन्तरं पाठः । तनू-र्वर्षिष्ठेतिवदेव । अथवा यो ब्रह्मा चतुर्मुखब्रह्मणः परमात्मन उज्जहार स न आयुर्दधातु । यः प्राणेश्वरः कृत्तिवासाः पिनाकी ईशानोदेवः ब्रह्मण उज्जहार स न आयुर्दधात्वित्यर्थः । यो ब्रह्मा ब्रह्मण उज्जहारेत्यत्रापि ब्रह्मपदं परमात्म-परम् । विभ्राजमान इत्यादिना भगवानभिधीयते । विभ्राजमान इति नैसर्गिकं तेजोऽभिधीयते । रोचमान इत्यवतारदशायां तदप्रच्युतिः सरिरस्य सलिलस्य समुद्रस्य मध्यात् रोचमान एवागात् अवतीर्णः । दुष्कृद्विनाशनार्थत्वादवतारस्य धर्मरुचिः अत्युष्णदीधितिः ब्रह्मज्योतिरित्यादिना सुब्रह्मण्योऽभिधीयते । ब्रह्मज्योतिश्चतुर्मुखपुत्रो रुद्रः ब्रह्मपत्नीषु । अत्रिसुतत्वेन ब्राह्मणस्य पत्नीषु

कृत्तिकासु यं गर्भमधात् बहुरूपमत्र सङ्ख्यानुरोधाय मुखतो बहुरूपं जयन्तं सुब्रह्मण्यमसुरविजयाय देवसेनापतिपदाभिषेकात् जयशीलं, वैजयन्त सिद्धसेन इति **वैजयन्ती, किंचिद्विकारेऽपि न दोषः** । **अतः** चतुर्णां देवानामभिधानात् तेषां पत्नीनामभिधानं युक्तम् । श्रियं लक्ष्मीमिहायुषा वर्धयामो घृतेन । औपलामम्बिकामिहायुषी वर्धयामो घृतेन यामिहायुषी वर्धयामो घृतेन । षष्ठीं च यामिन्द्रसेनेत्युदाहुः तामिहायुषी वर्धयामो घृतेन। ब्रह्मयोनिं विद्यात् निरुक्तदेवताप्रतिपादकवेदाधिदेवतां इहायुषी वर्धयामो घृतेनेत्यन्वयः । एकः पुरस्तादिति पुनर्भगवन्तमाह । **अत एवोत्तरतापनीये** एकः पुरस्तादित्यारभ्य साम्पराय इत्यन्तनृसिंहपरत्वेन पठितमित्याहुः ।

नन्वेवमपि लज्जावाचक ह्रीशब्दसमभिव्याहाराल्लक्ष्मीशब्दस्य पुरुषविशेष गुणभूतकान्तिपरत्वमङ्गीकृत्यार्थवर्णनसम्भवात् न लक्ष्मीपतित्वमत्रवाक्ये प्रतिपाद्यत इति चेत् - न । पत्न्याविल्यस्यानन्वयापत्तेः अनन्वयाद्वरं मुख्यार्थभङ्ग इत्यस्य उत्तिष्ठन्नन्वाहाग्नीन्विहरेत्यत्र प्रैषानन्वयभयादुत्थानकाललक्षणाङ्गीकारेण सम्प्रतिपन्नत्वात् ह्रीशब्दप्रसिद्धिभङ्गस्यादोषत्वात् । न च लज्जाकान्त्योः पत्नीत्वरूपिणं क्रियत इति नान्वय इति वाच्यम् । **पत्नीत्वरूपणस्य** निष्प्रयोजनत्वेन पत्न्याविल्यस्यानर्थक्यापातात् । आनर्थक्यात् वरं मुख्यार्थभङ्ग इति न्यायेन ह्रीशब्दस्य लक्षणया योगेन वा भूपरत्वात् । 'शृणोत ग्रावाण' इत्यत्रेव सम्बोध्यत्वारोपेणार्थवर्णनस्य अग्निदग्नीन्विहरेत्यत्रापि सम्भवेन तत्राप्युत्थानकाललक्षणाभावप्रसङ्गाच्च । तस्मात् लक्ष्मीशब्दह्रीशब्दयोः श्रीभूपरत्वमेव न्याय्यम् ।

**वाजसनेयि**पाठेऽपि श्रीशब्दो भूपरः । न च प्रथमश्रुतश्रीशब्दानुसारात् चरमश्रुतलक्ष्मीशब्दस्य भूपरत्वमस्त्विति वाच्यम् । किञ्चिद्विकारेऽप्येकदेशविकृतस्यानन्यत्वमिति न्यायेनाभिन्ने तस्मिन् मन्त्रे लक्ष्मीशब्दस्य मुख्यार्थत्वलाक्षणिकत्वस्वीकारेवैरूप्यापातात् ।

'अहोरात्रे पार्श्वे' इत्येतत् 'शर्वरीत्वमहं दिनम्' इत्युक्त्या अर्धनारीश्वररूपप्रतिपादकमित्युक्तमविचारितरमणीयम् । कालविशेषशरीरकत्व-

दनपरत्वात् । अन्यथा अहोरात्रशब्दस्यामुख्यार्थत्वापातात् । न च ान्वमहं दिनमि'त्युक्तिमात्रात् पार्वत्या रात्रिशब्दवाच्यत्वं, शिवस्याहः ाच्यत्वं वा सिध्यति । अतो नास्य वाक्यस्य शिवपरत्वे स्वारस्यम् ।

**वेदान्तविजयकृतस्तु** — '**अहोरात्रे** पार्श्वे इत्येतत् चार्धलक्ष्मीभृतिरूपविशेषाभिप्रायेण,

'विष्णुस्वरसंसिता रात्रिर्दिवा भवान्'

**ाद्मपुराणवचनेन** लक्ष्मीनारायणयोः रात्रिंदिनत्वेनोक्ततयार्धलक्ष्मीरूपस्यापार्श्वकत्वात् । तच्च रूपं दर्शितम् —

'हस्तैर्बिभ्रत्सरसिजगदा शङ्खचक्राणिविद्यां
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामो तुङ्गस्तनमविरलाकल्पमाश्लेषलोभा-
देकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्म्याः ॥'

देना । वस्तुतस्त्वहोरात्र इत्येतत्कालनिर्वाहकत्वपरम्' इत्याहुः ॥

ननु 'नक्षत्राणि रूपमि'त्यस्य कालात्मके शिवविग्रहे सामञ्जस्यात् । ्भ्यस्सम्भूत' इत्यस्य **शिवपरत्वमेव युक्तमित्युक्तमिति चेत्** —

अत्र वेदान्तविजयकृतः — '**नक्षत्राणि रूपमित्येतच्च आरण्यपर्वणि**–

'पुं सूक्तार्थमनुक्रम्य तारारूपाणि दृश्यन्ते ।
तान्येतानि नभस्थले मम रूपाणि तान्येवेति ॥'

ण्डेयं प्रति भगवद्वचनेनोपबृंहितम् । मार्कण्डेयेन च ततः श्रुत्वा ;किं प्रति भुवनकोशं वर्णयता **मार्कण्डेयपुराणे** तत्प्रपञ्चितम् । तत्र हि,

'हितभद्राश्वशिराविष्णुर्भारते कूर्मसंस्थितिः ।
वाराहः केतुमाले च मत्स्यरूपस्तथोत्तरः ॥'

**कूर्मरूपमुपक्षिप्य**,

'किं तु कूर्मस्त्वया पूर्वं भरते भगवान् हरिः ।
कथितस्तस्य संस्थानं श्रोतुमिच्छाम्यशेषतः ॥

इति क्रोष्टुकिप्रश्नमुद्भाव्य,

'नवधाऽवस्थितान्यस्य क्षेत्राणि च समन्ततः'

इत्युपक्रम्य मध्ये 'सारस्वता मत्स्या' इत्यादिना देशविशेषान्मध्याद्यवयव-विशेषस्थानमभिधाय —

'कृत्तिका रोहिणी सौम्यं तेषां मध्यनिवासतः ।
नक्षत्रत्रितयं विप्र शुभाशुभ विपाकदम् ॥
रौद्रं पुनर्वसुपुष्यनक्षत्रत्रितयं मुखे ।
आश्लेषं च तथा पौत्रं फल्गुन्यः प्रथमास्तथा ॥
नक्षत्रत्रितयं पादमाश्रितं पूर्वदक्षिणम् ।
फल्गुन्यश्चोत्तरा हस्तश्चित्रापार्श्वं तथा परः ॥
एते जनपदाः पादेस्थिता ये दक्षिणापथे ।
स्वातिर्विशाखामैत्रं च नक्षत्रत्रयमत्र च ॥
अश्वकेशास्तथा पुच्छे जनाः कूर्मस्य संस्थिताः ।
ऐन्द्रं मूलं तथाऽषाढं नक्षत्रत्रयमत्र च ॥
कूर्मस्य पदमेते वै पश्चिमोत्तरमाश्रिताः ।
आषाढ श्रवणे चोभे श्रविष्ठा च तथाश्रयाः ॥
क्षेमधूर्ताश्च कूर्मस्य वामं कुक्षिमुपाश्रिताः ।
रेवती चाश्वदैवत्यं याम्यं चर्क्षमिति त्रयः ॥
एष कूर्मो मयाऽऽख्यातो भारते भगवान्विभुः ।
नारायणोह्यचिन्त्यात्मा यत्र सर्वं प्रतिष्ठितम् ॥
मेषादयस्त्रयो मध्ये मुखं द्वौ मिथुनादिकौ ।
सिंहः कन्यातुला चैव कुक्षौ राशित्रयं स्मृतम् ॥

तुला च वृश्चिकाचौपादक्षिणपश्चिमे ।
पूर्वे च वृश्चिकेनैव सहधन्वाव्यवस्थिम् ॥
वायव्ये चास्य वै पादे धनुर्मकरकुम्भकाः ।
कुम्भमीनौ तथा चास्योत्तरं कुक्षिं समाश्रितौ ॥'

इति नक्षत्रतनुं कूर्मरूपं भगवन्तमभिधाय

'पूर्वेण यत्स्थितं वर्षं भद्राश्वं तन्निबोधत'

इति वर्षान्तरं प्रस्तुत्य

'तत्र चाश्वशिरा देवः चतुर्बाहुर्जनार्दनः ।
शिरो हृदय मेढ्राङ्घ्रि हस्तै ऋक्षत्रयान्वितः ॥'

इत्युक्त्वा 'केतुमालमथोवर्षं तं निबोधत पश्चिमम्' इति प्रस्तुत्य –

'अत्रापि भगवान् हरिः ।
वराहरूपीपादस्य हृत्पृष्ठे पार्श्वतस्स्थितः ॥
त्रिनक्षत्रयुतो देशैर्नक्षत्राणि युतानि च ॥'

इत्यभिधाय 'अतः परं कुरून् वक्ष्ये निबोधेह ममोत्तरान्' इत्युत्तरकुरूनधिकृत्य

'तत्रापि भगवान्विष्णुः प्राक्शिरा मत्स्यरूपवान् ।
विभक्तो नवधा विप्रनक्षत्राणि त्रयत्रयः ॥'

इति भूयसा ग्रन्थेन भूयसां विग्रहाणां नक्षत्ररूपकत्वं प्रपञ्चितम् ।

एवं वैष्णवेऽपि पुराणे नक्षत्ररूपत्वं

भगवत उक्तम् — 'तारामयं भगवतः शिशुमाराकृतिः प्रभोः ।
दिवि रूपं हरेर्यत्तु तस्य पुच्छे ध्रुवः स्थितः ॥'

इति । भागवते च शिंशुमारं प्रस्तुत्य 'पुनर्वसुपुष्ट्ये दक्षिणवामयोः श्रोण्योरुत्तरलाश्लेषं च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोः' इत्यादि ।

एवं च यत्पुराणान्तरेषु देवतान्तरस्यापि नक्षत्ररूपत्वकीर्तनं 'तद्राजभृत्ये राजत्व-कीर्तनवत् प्रशंसार्थम्' इत्याहुः ।

यदप्यस्य पुरुषसूक्तस्य 'ऋषिर्नारायणस्मृत' इति शौनकस्मृत्या नारायणस्य ऋषित्वावगमात्, वेदाहमित्यत्राहं शब्देन तत्परामर्शात् 'कर्मकर्तृ-व्यपदेशादि'ति सूत्रोक्तन्यायेन सूक्तप्रतिपाद्यस्य नारायणभिन्नत्वं प्रतीयत इति—तदप्यनुपपन्नम् —

'परमव्योमवासी च पुरुषो देवता भवेत् ।'

इति पुरुषशब्दार्थस्य देवतात्वेन तदतिरिक्तपरत्वासम्भवात् । स्वे महिम्नीत्याद्यनन्याधारत्वात् तात्पर्यकव्यपदेशवत् दुर्ज्ञानत्वतात्पर्येणाहं वेदेति व्यपदेशोपपत्तेः । अन्यथा,

श्रीमत्पुरुषसूक्तस्य श्रीमन्नारायणो मुनिः ।
छन्दोऽनुष्टुभं च दशार्चां तिसृणां त्रिष्टुबन्ततः ॥
नारायणोऽस्य भगवान्परमात्मा तु देवता ॥

इति तद्देवताकत्वप्रतिपादकवचनविरोधप्रसङ्गः । एवं च नारायणसमाख्यापि नारायणदेवताकत्वनिबन्धनैवेति तद्बलादपि सूक्तस्य भगवत्परत्वम् ।

न चाघमर्षणमिति तद्दृष्टिनाम्नाव्यपदेश इति वाच्यम् । लाक्षणिकत्वापत्तेः । दृष्टं सामेति दृष्टार्थे साम्न्येव तद्धितविधानात् । तस्येदमिति विवक्षायां 'वृद्धाच्छन्द' इति छप्रत्ययापत्तेः । साऽस्य देवतेति विहितप्राग्दिव्यतिर्याणं तत्त्वावसायात् । न च पुरुषेण नारायणेनेत्यत्र पुरुषेणेत्यनेन देवता-व्यपदेशानन्तरं नारायणेनेति व्यपदेशात् लाक्षणिकोऽपि ऋषिसम्बन्धोऽङ्गी-क्रियत इति वाच्यम् । तत्र तथात्वेऽपि नारायणाभ्यां ब्राह्मण एकहोतेति चोपस्थान इत्यादौ लाक्षणिकत्वाङ्गीकारस्याप्रामाणिकत्वात् । पुरुषेणेत्यनेन देवतासम्बन्धं प्रतिपाद्य तद्धेतुकनारायण समाख्याया नारायणेनेति व्यपदिश्यत इति वक्तुं युक्तत्वेन तत्रापि लाक्षणिकत्वं विना निर्वाहसम्भवाच्च । अतः पुरुषसूक्तस्य भगवत्परत्वम् ।

इममर्थं भगवान्बादरायणो नारायणीये स्फुटतरं प्रकाशयति —

'बहूनां पुरुषाणां हि यथैकायो निरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यात्मगुणातिगम् ॥
बहवः पुरुषालोके साङ्ख्ययोगविचारिणाम् ।
नैतमिच्छन्ति पुरुषं एकं कुरुकुलोद्वह ॥
इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।
ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तितम् ॥'

पुरुषसूक्तप्रतिपाद्यत्वेन सर्वजीवविलक्षणत्वेन कथितस्य पुरुषस्य ।

'तत्र यःपरमात्मा तु स नित्यो निर्गुणः स्मृतः ।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥' इति
'चतुर्विभक्तः पुरुषः संक्रीडति यथेच्छति ।
एवं स भगवान्विष्णुः स्वेन ज्ञानेन बोधयन् ॥'

नारायणविष्णुशब्दाभ्यां अभिधेयत्वस्फोरणत्वात् । इदं हि नारायणे
योगस्य निर्वाहार्थं तत्प्रतिपादनप्रकारप्रदर्शनार्थमित्यन्यथासिद्ध्युत्प्रेक्षात् न
। पुरुषप्रतिपाद्यं जगद्विलक्षणं पुरुषम् । तत्र यः परमात्मात्विति निर्दिश्य
ई नारायण इति नारायणत्वविधानात् । तस्मात् पुरुषसूक्तस्यापि भगवति
यण एव परमतात्पर्यमिति सिद्धम् ॥ श्रीमन्नारायणाय नमः ॥

एवं मुण्डकोपनिषदपि भगवति सर्वोत्कर्षमाविष्करोति । 'सूर्यद्वारेण
विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मायेनाक्षरं पुरुषं वेद सत्यं
चतां तत्त्वतो ब्रह्मविद्यां पुरुष एवेदं विश्वमुपासते पुरुषं ये ह्यकामाः ते
मेतदतिवर्तन्ति धीराः' इत्यादिषु मुक्तप्राप्यत्वेन मुमुक्षुजिज्ञास्यत्वेन पुरुष-
ार्थस्य प्रतिपादनात् । 'पुरुष एवेदं विश्वं स्वस्ति वः पाराय तमसः
ादि'त्यादिषु पुरुषसूक्तप्रत्यभिज्ञानात् । 'नायमात्मा प्रवचनेन लभ्यो न
ा बहुना श्रुतेने'त्यत्र कठवल्लिप्रत्यभिज्ञानात् । 'धनुर्गृहीत्वौपनिषदं

महास्त्रं शरं ह्युपासानिशितं सन्धयीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्यविद्धी'ति वाक्ये चेतसो भावगतत्व विशेषणेन भगवत्प्रणवत्व-स्फोरणात्। भगवच्छब्दवाच्यस्य नारायणस्योपास्यत्वापगमाच्च । भगवच्छब्दो हि ।

'एवमेष महाशब्दो मैत्रेय भगवानिति । इति
परब्रह्मस्वरूपस्य वासुदेवस्य नान्यगः ॥'
'तत्र पूज्यपदार्थोक्ति परिभाषा समन्वितः ।
शब्दोऽयं नोपचारेणान्यत्र ह्युपचारतः ॥' ( वि. पु. )

इति प्रमाणबलेन नारायणसाधारणत्वेनावसीयते ॥

ननु 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप'

इत्यत्र सर्वज्ञशब्दस्य सर्वविच्छब्देनापौनरुक्त्याय 'कृशानुरेताः सर्वज्ञ' इति निघण्टुसिद्धशिवरूढितन्नामभूतशब्दत्वावसायात । 'यत्रामृतस्य पुरुषो ह्यव्य-यात्मा' इत्यादावमृतशब्दस्य श्रवणात्। तस्य च जाबालश्रुतौ 'किं जप्येना-मृतत्वं ब्रूहि सहोवाच याज्ञवल्क्यश्शतरुद्रियेणे'ति 'एतानि हवामृतस्य नामधेयानी' त्युक्त्वा शतरुद्रियान्तर्गत शिवादीनामपर्यायत्वाम्नामात्। 'जुष्टं यदा पश्यत्यन्य-मीशमस्य महिमानमि'ति वीतशोक इत्यत्र शब्दाम्नानात् पुरुषशब्दस्यान्यत्रापि 'पुरुषस्यविद्महे'त्यादौ प्रयोगात्। भगवच्छब्दस्य चाथर्वशिरसि निर्वचनेन शिवपरत्वसम्भवादस्या उपनिषदश्शिवपरत्वमेव युक्तमिति चेत् — त्वत्पक्षेऽपि सर्वज्ञशब्दस्य योगरूढत्वेन पौनरुक्त्यमनिवार्यमिति न तच्छिवपरतयोपन्यासार्हम्। न च सर्वज्ञशब्दस्य रूढ्यर्थभूतशिवमात्रोपस्थापकत्वमिति न दोष इति वाच्यम्। अस्मत्पक्षेऽपि सर्वविषयकज्ञानवत्व सर्वप्रकारकज्ञानवत्वरूपार्थद्वयमादाय पौन-रुक्त्यपरिहार सम्भवात् । न चैकेनैवार्थद्वयबोधसम्भवेऽन्यतरत् व्यर्थमिति वाच्यम्। त्वत्पक्षेऽपि सर्वज्ञशब्दस्य योगेनाभिलषितसिद्धिसम्भवेन वैयर्थ्यस्या-निवारेण तुल्यत्वात्। सर्वविच्छब्दस्य विदिर्लाभ इति धातुनिष्पन्नत्वाङ्गीकारेण पौनरुक्तस्य सुपरिहारत्वाच्च । न चैवमपि सर्वज्ञशब्दरूढित्यागप्रसङ्ग इति वाच्यम्। पुरुषशब्दरूढित्यागस्य त्वत्पक्षेऽपि तुल्यत्वात्। सर्वज्ञशब्दस्य रुद्रे

रूढौ भानाभावाच्च । न च कोशबलात् रूढिकल्पनं, शतशोऽव्यभिचारस्य दर्शितत्वात् । 'सर्वज्ञस्सुगतोबुद्ध' इति बुद्धावतारेऽपि तद्दर्शनाच्च । 'एष सर्वज्ञ एष सर्वेश्वर एषोऽन्तर्यामी' इति सौबालप्रयोगेण,

'सर्वस्य तु तदा ज्ञानात् सर्वज्ञं च प्रचक्षते'

इत्युद्योगपर्वणि नामनिर्वचनाध्याये वासुदेववृष्णीमाधवमधुसूदनकृष्णपुण्डरीकाक्ष जनार्दन सात्वताज दामोदर हृषीकेशाधोक्षज नारायण पुरुषशब्दानां भगवन्नाम-त्वाभ्युपेतानां निर्वचनानन्तरं तथाभूतस्य सत्यविष्णुजिष्णवनन्तगोविन्दशब्द-निर्वचनेभ्यः पूर्वं निर्वचनेन सर्वज्ञशब्दस्य भगवत्परत्वसम्भवाच्च । अमृतशब्दो-ऽपि न रुद्रनामत्वेन लोकसिद्धः । न च तथात्वे किंचित् प्रमाणमस्ति । 'सप्तदशारत्निर्वाजपेयस्य यूप (जै. सू. 3-1-18) इत्यत्र यूपस्य

---

**सप्तदशारत्निनयः । आनर्थक्य तदंगन्यायाधिकरणम् —**

वाजपेयप्रकरणे - सप्तदशारत्निर्वाजपेयस्य यूपो भवति - इति श्रूयते । तत्र यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेयकर्मणोंगम् । सप्तदशारत्निशब्द वाजपेयशब्दयोरानंतर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत् - तर्हि वाजपेयगतं खादिरमूर्ध्वं यत् षोडशि-पात्रं तस्मिन्नद उन्मानं प्रथमं संबध्य तद्द्वारा कर्मणाऽन्वेति - इति पूर्वः पक्षः ।

सिद्धांतस्त्वेवं - सप्तदशारत्निर्यूपः इति सामानाधिकरण्याद्यूपेन साक्षात् संबध्यते । तस्य यूपस्य पश्वंगत्वादुन्मानं यूपद्वारापशोरंगं भवति । तस्यापि पशोर्वाजपेयांगत्वात् पशुद्वाराकर्मणः अंगम् । यद्यपि वाजपेय यूप शब्द योरानंतर्यमस्ति, तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबंधाभावात् - पशुव्यवधानमभ्युपेयम् । 'वाजपेयस्य' इति षष्ठयाः संबंधमात्र वाचित्वेन व्यवहित संबंधमपि असावभिधत्ते । देवदत्तस्य नप्ता इति प्रयोगात् । यत् सप्तदशारत्निवाजपेयशब्दयोरानंतर्यम् - यच्च प्रकरणम् - तदुभयमप्यविरुद्धम् । पश्वंगत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किंच पूर्वपक्षे यूपशब्देन षोडशि-पात्रं लक्षणीयम् । सिद्धांते तु नासौ दोषः । (जै. सू. 3-1-18)

वाजपेयेन साक्षात्सम्बन्धराहित्येऽपि तदङ्गपशुयागाङ्गत्वमादाय षष्ठ्याप्युप-पन्नत्वादमृतस्य नामधेयानीत्यत्र षष्ठ्याः परम्परया मोक्षसम्बन्धमादाय वर्णन-सम्भवेन जाबालश्रुतेस्तत्र प्रामाण्यासम्भवात् । अन्यथा 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद तस्यायमात्मा शरीरं य आत्मानमन्तरो यमयति एष आत्मा अन्तर्याम्यमृत' इत्यादिष्वमृतशब्दाम्नानेन शिवपरत्वस्य निष्प्रत्यूह-प्रवृत्त्या अन्तर्याम्यधिकरणपूर्वपक्षानुत्थानेन तदधिकरणवैयर्थ्यप्रसङ्गः ।

ईशशब्दोऽपि न रुद्रोपस्थापकः । 'समाने वृक्षे पुरुषो निमग्नो-ऽनीशया शोचति मुह्यमान' इत्यत्र सामर्थ्याभावेन मुह्यमानत्वस्य कथितत्वेन तत्प्रतिसम्बन्धिसामर्थ्योपस्थापनमात्रोपक्षयात् । अन्यथा प्रतिकोटित्वभङ्गप्रसङ्गात् । अथर्वशिरसा भगवच्छब्दनिर्वचनेऽपि न तस्य शब्दस्य तत्र रूढिः कल्पयितुं शक्या । अन्यत्र ह्युपचारत इत्युक्त्यार्थनिर्वाहकत्वेनापि तदुपपत्तेः । अन्यथा तद्वचनप्रसङ्गविरोधप्रसङ्गात् । किं चाथर्वशिरसो विष्णुपरत्वस्य वक्ष्यमाणत्वाच्च । न तस्य शब्दस्य तत्र निर्वचनात् शिवपरत्वम् । अपि च निर्वचनस्य तत्र शक्त्यन्तरकल्पकत्वेऽपि हरिशब्दस्येव नारायणे प्रसिद्धिप्राचुर्यात् । ततस्तस्यैवोप-स्थितिरिति लाक्षणिकतुल्यत्वमेव । (तस्यान्यत्र,) अत एव हि श्रीकृष्ण-वचनत्वप्रतिपादनाय श्रीभगवानुवाचेति महाभारत-भागवत-वैष्णवादिषु निरर्गलं प्रयोगा दृश्यन्ते । अत एव पुराणस्य विष्णुपरत्वद्योतनाय वैष्णवमिति भागवत इत्यपि व्यपदेशो दृश्यते । तस्मात् नास्या उपनिषदो देवतान्तर-परत्वम् ।

उपबृंहिता चेयमुपनिषत् वैष्णवे पुराणे —

'द्वे ब्रह्मणी वेदितव्ये शब्द ब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥'
'द्वे विद्ये वेदितव्ये' इति चाथर्वणी श्रुतिः ।
परायात्वक्षरप्राप्ति ऋग्वेदादि मया पुरा ॥

यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपं च पाणिपादाद्य संयुतम् ॥
विभुं सर्वगतं नित्यं भूतयोनिमकारणम् ।
व्याप्यं व्याप्तं यतस्सर्वं तद्वै पश्यन्ति सूरयः ॥
तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ।
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥
तदेव भगवद्वाच्यस्वरूपं परमात्मनः ।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥'

'द्वे विद्ये वेदितव्ये वै' इति चाथर्वणीश्रुतिरित्यादिना 'द्वे विद्येवेदि-
' इति ह स्मयत् ब्रह्मविदो वदन्ति पराचैवापरा च ।' तत्रापरा ऋग्वेदो
दस्सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमि'ति ।

अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः
तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति
: । इति वाक्यमुपबृंहितम् । तदनन्तरं ;

'तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः'

श्लोकेन तत्प्रतिपाद्यस्य वैष्णवस्वरूपत्वं प्रकटितम् । न च 'तद्विष्णोः
पदमि'ति व्यतिरेकनिर्देशात् देवतान्तरपरत्वं शङ्क्यम् । तदेव भगवद्वाच्यं
पं परमात्मन' इत्युत्तरत्र भगवद्वासुदेव शब्दवाच्यत्वेन प्रतिपादनात् ।
ब्दस्य स्वरूपपरत्वप्रतिपादनाच्च । न चात्रापि भगवच्छब्दस्यान्यपरत्वशङ्का,

'एवमेष महान् शब्दो मैत्रेय भगवानिति ।
परब्रह्मस्वरूपस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभाषा समन्वितः ।
शब्दोऽयं नोपचारेणान्यत्र ह्युपचारतः ॥'

इति विष्णोरेव मुख्यत्वस्यान्यत्रामुख्यत्वस्योत्तरत्र प्रतिपादनात् । अनेन भगवच्छब्दनिर्वचनेन 'आयम्य तद्भावगतेन चेतसे'ति वाक्यस्थभगवच्छब्दार्थो विवृत: । तदेवान्यायोपबृंहणाभ्यामियमुपनिषत् नारायणोत्कर्षप्रतिपादनपरेणेति सङ्क्षेप: ।

एवं **तापनीयोपनिषदपि** भगवदुत्कर्षं प्रथयति । तस्य भगवदवतार-नृसिंहविषयकत्वात् । तत्र पूर्वतापनीयोपनिषन्मन्त्रराजभूतानुष्टुभवाच्यत्वमुखेन तदतिशयं प्रतिपादयति । **उत्तरतापिन्यां** तु प्रणवप्राप्यत्वमुखेन प्रणवस्य च परब्रह्मवाचकत्वम् । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविध:स्मृत' इति प्रसिद्धम् । मन्त्रराजस्य 'त्वनुष्टुभो वा इमानि भूतानि जायन्ते, अनुष्टुभा जातानि जीवन्ति, अनुष्टुभं प्रत्यभिसंविशन्ति' इत्यनेन शब्दस्य जगत्कारणत्वाभावेन प्रतिपाद्य प्रतिपादकाभेदनिबन्धनतादृशव्यपदेशवत्तयाऽवगम्यमानेन जगत्कारणत्व-विशिष्टपरब्रह्मपरत्वं स्फुटमवगम्यते । न चोग्रशब्दस्य मन्त्रादौ श्रवणात्, तस्य 'चोग्र: कपर्दि: श्रीकण्ठ' इति शिववाचकत्वावगमात् देवतान्तरपरत्वं मन्त्रस्य शङ्कितुं शक्यम् । महाविष्णुनृसिंहशब्दयो: तन्मन्त्रगतयोर्मुख्यार्थसंरक्षणाय कांस्यभोजिन्यायेन शृङ्गाराद्यन्तर्गतरसविशेषनिमित्तकत्वावसायात । न चैवं भीषणशब्दपौनरुक्त्यप्रसङ्ग इति भ्रमितव्यम् ।

शृङ्गारवीरकरुणाद्भुतहास्यभयानका: ।
बीभत्स रौद्र शांता: च रसा: ॥'

इति पृथक्परिगणने भयानकरौद्ररसयोर्भिन्नत्वेन तदुभयनिमित्तकयोर्भीषणोग्र-शब्दयो: पौनरुक्त्यस्य शङ्कितुमशक्यत्वात् । अत एव दारुणं भीषणं इत्याद्य-नन्तरत्वं तथा दिनपूर्वभामित्युक्तरीत्या भिन्नपर्यायत्वद्योतकतुशब्दघटिततया 'रौद्रंतु प्रमि' त्यमरकोशे पाठो दृश्यते ।

किं च स एवं मन्त्रराजं नारसिंहमनुष्टुभमपश्यत् शिवपरत्वस्योग्रपदवत्त्व रूपलिङ्गेन कल्पनीयत्वात् श्रुतिलिङ्गाधिकरणन्यायेन कल्पनानुन्मेषां न देवतान्तर-परत्वम् । न च, ऋतं सत्यं परं ब्रह्म पुरुषं नृकेसरिविग्रहम् ।' 'कृष्णपिङ्गलं

ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्। उमापतिः पशुपतिः पिनाकीत्वमित-कौ्जाः।' ईशानः सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः यो यजुर्वेदवाच्यस्तं सामजानीयादिति वाक्यपर्यालोचनया शिवपरत्वमवगम्यत इति वाच्यम्। महावाक्यस्वारस्यानुसारेणावान्तर वाक्यार्थवर्णनस्य न्याय्यत्वेन कृत्स्नोपनिषत्पर्यालोचने नृसिंहपरत्वप्रतीत्या तदनुसारेण शङ्करादिपदानां यौगिकत्वं गौणत्वमपर्यवसानवृत्तिं वा आश्रित्यास्य वाक्यस्यान्यथा नेयत्वात्। 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्' (ब्र. सू. 1–1–29) इति सूत्रे भगवता बादरायणेन तथा निर्णयात्। अत एव हि त्वाष्ट्रवधादिलिङ्गसद्भावेऽपि प्रदर्शनविद्यायाः परमात्मपरत्वमभ्युपगन्तव्यम्। एवं सत्येतद्वाक्योपक्रमगतं क्षीरोदार्णवशायिनं नृकेसरिं योगिध्येयमि'ति वाक्यश्रुतं क्षीरोदार्णवशायित्वलिंगमप्यनुगृहीतं भवति। न चैवं 'यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नम' इति वाक्यानुसारात् नृसिंहस्य तुरीयत्वाभ्युपगमे शिवस्य तथात्व प्रतिपादकाथर्वशिरः शिवादिव्याकोपप्रसङ्ग इति वाच्यम्। त्यज तस्याथर्वशिरश्शिखयो रुद्रपरत्वभ्रमम्। तथा सति तत्रत्यशंभ्वादिविरोधप्रसङ्ग इति चेत् - अत्र नृसिंहपदाभ्यासक्षीरोदार्णवशायित्वयोः स विष्णुरेव भवतीति विष्णुसाम्यप्राप्तेः फलत्वप्रतिपादनस्य च विरोधप्रसङ्ग इति तुल्यत्वात् तत्क्रतुन्यायेन तदुपासनस्यैव तत्प्राप्तिसाधनत्वात्। अथर्वशिरश्शिखयोर्भगवत्परत्वस्य वक्ष्यमाणत्वेन विरोधासिद्धेश्च।

**उत्तरतापनीयस्य** सगुणब्रह्मपरत्वं तु सगुणत्वप्रतिपादकश्रुत्यन्तरविरोधात् न वक्तुं शक्यम्। सगुणवाक्यप्राबल्यप्रपञ्चप्रकारस्तु **भाष्यश्रुतप्रकाशिकयोर**नुसन्धेयः।

एतेन 'पादौ वैश्वानरादिना तुर्यो निर्गुण-स्मृतः। उत्तरस्मिन् तपनीयेन गुणिभ्यः परो हरिः।' इति परस्य प्रलपितमपास्तम्। तुरीयस्य नृसिंहानुष्टुभ प्रतिपाद्यत्वस्य तत्रैवोत्तरतापनीये नरसिंहेनवाऽनुष्टुभामन्त्रराजेन तुरीयं विद्या देवस्यात्मानं प्रकाशयतीत्यादाववगमात्। तस्मात् तापनीयोपनिषत् भगवत्परत्वप्रतिपादनपरेति सिद्धम्। तदुक्त**माचार्यपादैः**—

'तापनीयरहस्यानां सारः कामासिको हरिः ।'

इति एवं भूयसीभिः श्रुतिभिर्भगवत्पारम्यप्रतिपादनात् कासुचित् श्रुतिषु शिवहिरण्यगर्भेन्द्रादिकारणत्वप्रतिपादनेऽपि तेषां जनिमत्त्वादिश्रवणेन तासामयोग्यार्थत्वात् नारायणस्यैव सर्वोत्तमत्वं सिद्धम् ।

ननु विष्णोर्जगत्कारणत्वप्रतिपादकाः श्रुतयोऽप्ययोग्यार्थाः तस्य कर्मवश्यत्वश्रवणात् । तथा हि **वाजसनेयिशाखायां शतपथब्राह्मणे** — 'पुरुषो ह वै नारायणोऽकामयतातितिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यामिति स एवं पुरुषमेधमपश्यत् अनेनात्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेदं सर्वमि'ति पुरुषसूक्तोक्तमहिमशालित्वैष्णवं पदं यज्ञानुष्ठानफलमिति स्पष्टं प्रतिपादितम् । छन्दोगानामृगन्ते 'सोमं राजानं वरुणमग्निमन्वारभामहे । आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिमि'ति मन्त्रानन्तरं ,इत एत उदारुहाः तिदिवः पृष्टान्यारुहत् । 'प्रभुर्जयोयथापयोद्यामङ्गिरसोययुरि'ति मन्त्र आम्नायते । तत्रैत इत्यनेन पूर्वमन्त्रप्रकृतान् सोमवरुणादीन् परामृश्य तेषामितः क्षितीत ऊर्ध्वमारोहणमुक्त्वा किमारुरुक्षन् इत्याकाङ्क्षायां तत्तदधिकारानुसारेण दिव उपरिभागान् आरुरुक्षन्नित्युक्तमर्थं विशदीकृत्य यथाङ्गीरस उपयुरिति दृष्टान्तकथनेन 'अङ्गिरसो वै सत्रमासत, अङ्गिरसः सुवर्गं लोकं यन्तः अङ्गिरस, इमे सत्रमासते ते सुवर्गं लोकं न प्रजानन्ति तेभ्य इदं ब्राह्मणं ब्रूहीत्या'दि श्रवणादङ्गिरसो यथाऽनुष्ठानेन स्वर्गमारुहन् एवमेतेपीत्ययमर्थः प्रतिपादितः । प्रभुर्जय इति विशेषणेन प्रकर्षेणयज्ञेषु हविषां भजनं कृतवन्त इत्यर्थकेन चैते देवा यज्ञानुष्ठानेन द्यामारुरुक्षन्नित्ययमर्थो दर्शितः । उदाहृतमन्त्रब्राह्मणोक्तमर्थं 'येन देवा ज्योतिषोर्ध्वा उदायन् येनादित्या वसवो येन रुद्राः येनाङ्गिरसो महिमानमानशुः तेनैतु यजमान स्वस्ती'ति **यजुर्वेदाम्नाता** ऋगनुवदति । अत्र हि यच्छब्दयोगेनोद्यमनस्यार्थस्य प्राप्तिसापेक्षत्वादित उदारुहन्निति मन्त्रः पुरुषमेधब्राह्मणं च प्रापकमेष्टव्यमिति तदनुसारेण देवशब्दः सोमवरुणविष्ण्वादिपरः । देवा इत्यनेन सम्भवद्ग्रहणानामादित्यवसुरुद्रगणानां पृथग्ग्रहणमादित्यं विष्णुं च सूर्यमिति पुरोवादगतादित्यशब्देनैकस्यार्थस्य वाचकः । सूर्यशब्देन तस्य

पृथग्ग्रहणात् । किन्त्वादित्यगणवाचकः । एकवचनं तु बहुपत्नीकेष्टिप्रयोगे पत्नीं सन्नह्येति मन्त्रगतं पत्नीमित्येकवचनमिव प्रत्येकगतैकत्वाभिप्रायं आदित्यगणग्रहणं च श्रुत्यन्तरेषु तत्समभिव्याहृतत्वेन प्रसिद्धयोर्वसुरुद्रगणयोरप्युपलक्षणमिति ख्यापनार्थम् । तत्रादित्यशब्दस्यादित्यगणपरत्वम् । आदित्याविष्णुसूर्यमिति ऋग्यजुःपाठेनाप्यवगम्यते । गणान्तरोपलक्षणत्वं तु 'अग्ने यन्मे तनुवां ऊनं तन्म आवृणे'ति मन्त्रस्य 'यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावै तदाहे'ति व्याख्यानेन स्वकीयो न ग्रहणस्य प्रजापशूपलक्षणत्वतद्व्याख्यानेनैवावगन्तव्यम् । ज्योतिः पदमग्निपरम् । येन देवा ज्योतिषोर्ध्वा उदायन्नित्यस्य उखाग्निसमिन्धने विनियुक्तत्वात् । तथा चाहवनीयाग्निसाध्येन कर्मणोर्ध्वलोकगमनं तद्द्वारा अग्निसाध्यं भवतीत्यनेन मन्त्रेण सामादिदेवपदानां यज्ञानुष्ठानं फलत्वमेवोदाहृतमन्त्रब्राह्मणप्रतिपन्नमनूद्यत इति विष्णोरपि कर्माधीनैश्वर्यवत्त्वाज्जीवत्वमवगम्यते ।

किं च 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वा इमांल्लोकानभिजयति । यद्विष्णुः क्रमान् क्रमते विष्णुरेव भूत्वा यजमानच्छन्दोभिरिमान् लोकाननपजय्यमभिजयती'ति **यजुर्वेदे** समाम्नायते । अग्निव्रर्चमित्यनेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानः त्रयाणां लोकानामाधिपत्यं गच्छतीति **सामवेदे** समाम्नायते । अत्र त्रैलोक्याधिपत्यं विष्णुपदमेव विष्णुरेव भूत्वेमांल्लोकानभिजयतीति तस्य विष्णुधर्मत्वश्रवणात् । किं च विष्णुना स्वैश्वर्यं शिवाराधनरूपेण बहुविधेन तपसा प्राप्तमिति 'तव श्रीयेमरुतो मर्जयन्ति रुद्रयत्तेजनेम चारु चित्रं पदम् । यद्विष्णोरूपन्निधायितेन पासि गुह्यं नामगो नाम रौद्रं लिङ्गम्'

'महाविष्णुर्भक्त्या शुद्धं शिलामयम् ।
चारुचित्रं समभ्यर्च्य लब्धवान् परमं पदम् ॥'

इत्यादि श्रुतिपुराणवचनैरवगतम् । **काशीखण्डे** च विष्णुपट्टाभिषेकाध्याये स्पष्टं प्रतिपादितम् । **भारते**ऽप्येवमुक्तम् —

'ततो गच्छेत् सुपर्णाक्षं त्रिषुलोकेषु विश्रुतम् ।
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयेत् पुरा ॥

वरांश्च सुबहून् लेभे देवतैरपि दुर्लभान् ।
उक्तं त्रिपुरघ्नेन परितुष्टेन भारत ॥
अन्येभ्यः प्रियतममान्येभ्यः प्रियतमो ।
लोके कृष्ण भविष्यसि .... .... ॥
.... चार्जवत्त्यागैस्तपसा नियमेन च ।
क्षान्त्या भक्त्या च धृत्या च कर्मणामनसा गिरा ॥
अहं यथावदाराध्य कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमं कृष्णा दन्योमेन तु विद्यते ॥'

इति हरिवंशेऽपि शिववचनेनोक्तार्थः दृढीकृतः ।

'इति संस्तूयमानस्तु भगवान् गोवृषध्वजः ।
प्रसार्य दक्षिणं हस्तं वासुदेवमथाब्रवीत् ॥
मनीषितानामर्थानां प्राप्तितस्तु सुरोत्तमः ।
पारिजातं च हर्ताऽसि माभूत् ते मनसो व्यथा ॥
पुरा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो ।
तदा मम वचः कृष्णः संस्मृत्यस्थैर्यमाप्नुयात् ॥
अवध्यस्त्वमजय्यश्च मत्तशूरस्तथा ।
भविता सत्यवोचं यत्तत्तथा न तदन्यथा ॥' इति ।

एवं बहुश्रुति पुराणाद्यवगतं विष्णोर्जीवत्वं प्रत्याख्यातुमशक्यम् ॥ यद्यपि विष्णुत्वप्राप्त्यर्थत्वेन विहितानां तादर्थ्येन विष्णुनाऽनुष्ठितानां च क्रतु(जिपतयः) प्रभृति कर्मणां मध्ये एकैकेन कर्मणा तत्परिप्राप्तिर्न सम्भवति तथापि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति श्रुतौ यज्ञादिषु प्रत्येकं तृतीयाश्रवणेऽपि किंचिद्यज्ञानुष्ठानमात्रेण ब्रह्मज्ञानासिद्धेः । समुदितानां चिरकालमभ्यस्तानां च तत्प्राप्तिसाधनत्वम् । तथा हि विष्णुभाव-प्राप्त्यर्थं विष्णुनाऽनुष्ठितत्वेन तत्प्राप्तिसाधनत्वेन च श्रुतानां सर्वेषां कर्मणां

म्मुदितानां यथावच्चिरकालमभ्यस्तानां च तत्प्राप्तिसाधनत्वं भविष्यतीति न काचिदनुपपत्तिः ।

ननु **भारत** एव **भगवद्गीतासु** मोक्षधर्मगते नारायणीयेऽन्यत्रापि तत्र तत्र प्रदेशे **विष्णुपुराणादिषु** च विष्णोः परब्रह्मभावः सुप्रसिद्धः । सर्वेषामप्यास्तिकानामनुमतश्च । तस्य का गतिरिति - मैवम् - सत्यमस्ति-विष्णोः परब्रह्मभावसिद्धिः । ब्रह्मरुद्रयोरप्यस्त्येव । सा ब्राह्मशैवपुराणतदागमादिसिद्धा । सा तयोस्सृष्टिसंहाररूपजगद्व्यापारार्थादिन्द्रादिदेवतान्तरापेक्षया-तदतिशयतत्परब्रह्माभिव्यक्तिभेदादुपपादनीया । तथेयमपि पालनजगद्रूपव्यापारार्थात्तदभिव्यक्तिभेदादुपपादनीया । अन्यथा तस्य जननमरणभयक्रोधशोकाज्ञानादिरूपसांसारिकदोष विलासोऽपि **भारतरामायण विष्णुपुराणादिभ्य** एवावगतः कथमुपपादयितुं शक्यः । परब्रह्मशक्त्यधिष्ठितजीवविशेषत्वाभ्युपगमे तद्द्वयमप्यविरोधेनोपपद्यते । न चैच्छिकत्वे विरोधपरिहारः । हेयेषु जननमरणादिष्विच्छायामपि कर्मकृतत्वात् । उक्तं हि **वायुसंहितायाम्**—

'न हि स्वेच्छाशरीरत्वं स्वातन्त्र्यं चोपपद्यते ।
इच्छैव यत्र हि पुंसां यस्मात्कर्मानुसारिणी ॥
स्वीकर्तुं स्वेच्छया देहं हातुं च प्रभवन्ति हि ।
ब्रह्मादयः पिशाचान्ताः किं ते कर्मान्तवर्तिनः ॥'

इति । न च शोकाज्ञानादीनामभिनयमात्रसिद्धत्वाङ्गीकारेणाविरोधः । तथा सति रामावतारे —

'न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च ।
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥'

इत्यादि तदीयवचनानां कृष्णावतारे सौभद्रवधवृत्तान्तवर्णनगततदीयशोकाज्ञानादि वचनानां चानृतत्वापत्त्या 'सत्य वाक्यो दृढव्रतः' 'सत्यसन्धो जितेन्द्रियः'

'धर्मज्ञस्सत्यसन्धश्च रामो दाशरथिः यदि ।
यदि मे ब्रह्मचर्यं स्यात्सत्यं त्व मधितिष्ठसि ॥'

इत्याद्यनेक वचनविरोधापत्तेः । अतो जीवत्वमेव विष्णोरभ्युपगन्तुं युक्तम् ।

अपि च **गीता**स्वपि कृष्णस्य जीवत्वं प्रतीयते । तथा हि —

'ततः परं तत् परिमर्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥'

इति भगवतः कृष्णस्य वचनं दृश्यते । तत्राद्यमिति विशेषणेन

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः ॥'

इति यः क्षराक्षरपरत्वेन गीतासूपदिष्ट उत्तमः पुरुषः स एवोच्यत इति स्मारितम् । 'यस्मिन् गता न निवर्तन्ति भूय' इति विशेषणेन

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात् परां शान्ति स्थानं प्राप्स्यसि शाश्वतम् ॥'

इति यत्प्रपदनात्परमवैराग्यरूपोपायलाभपूर्वकमनिवर्तनस्थानप्राप्तिरुपदिश्यते स एवेश्वर इह पुरुषशब्देन स्वप्रपदनीयो निर्दिष्ट इति स्मारितम् । तेनैव स्वप्रपत्तिरियं स्वस्य तथाभूतस्थान प्राप्त्यर्थं इत्यपि सूचितम । तदर्थं स्वप्रपदनीयम् ईश्वरः शिव एवेति यदा तमो मन्त्र चतुर्थपादार्थानुवादकेन 'यतः प्रवृत्तिः प्रसृता पुराणी'ति विशेषणेन द्योतितम् । तत्र प्रवृत्तिशब्देन प्रज्ञा च तस्मात् प्रसृता पुराणीति । यदा तमो मन्त्र चतुर्थपादोपन्यस्ता प्रज्ञैवोच्यते 'स्वाभाविकी ज्ञान-

क्लक्रियाचे'ति तस्याः क्रियारूपत्वस्यापि श्रुतत्वात्। एवं च मुक्त्यर्थमन्यस्य भजनीयत्वप्रतीत्या कृष्णस्य जीवत्वं स्फुटतरमवगम्यते।

ननु **गीतासु** 'ईश्वरस्सर्वभूतानामि'त्यनन्तरं 'सर्वगुह्यतमं भूयः शृणु मे परमं वचः' इत्युपक्रम्य

'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥'

इत्युपदिश्य रहस्योपदेश विश्रान्तिभूमित्वमभिप्रेत्य तदनन्तरमेव गीताशास्त्रं समापितम्। अर्जुनेनापि तच्छ्रवणानन्तरमेव 'स्थितोस्मि गतसन्देहः करिष्येवचनं तव' इति तदुपदिष्टार्थः स्वानुष्ठेयत्वेनाङ्गीकृतः तदेतत्सर्वं कृष्णस्यैव मुक्त्यर्थं प्रपदनीयत्वे सङ्गच्छते। कृष्णस्यैव गीतासु परब्रह्मभावस्तत्र तत्राध्याये बहुभिः प्रकारैः प्रपञ्चितः। स मुक्त्यर्थं सर्वैः प्रपदनीय परब्रह्मभूतः स्वयं मुक्त्यर्थमन्यं प्रपन्न इति कथमिदं श्रद्धेयम्। न च वाच्यम्

'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्य देवताः।
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्॥'

इत्यादिकं कृष्णस्य सर्वेतरदेवताभजननिन्दावचनजातं श्रुत्वापि 'सर्वधर्मान् परित्यज्ये'त्याद्यन्तिमोपदेशानन्तरं 'स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तवे'ति प्रतिज्ञायाऽप्यर्जुनः शिवभजन पर एव यावज्जीवमवर्तत अतस्तदनुसारेण कृष्णविषयपरब्रह्मभावमुक्त्यर्थप्रपदनीयत्वपरगीतावचनानां शिवपर्यन्ततात्पर्यं कल्पनीयमिति उपदिष्टार्थविस्मरणेनापि देवतान्तरभजनोपपत्तेः। अत **एवाश्वमेधिकपर्वणि** युद्धारम्भसमयोपदिष्टार्थो विस्मृत इति पुनः पृष्टवन्तमर्जुनं प्रति भगवता कृष्णेन पुनरपि सोऽर्थ उपदिष्ट इत्यनुगीतासु श्रूयते। तस्मात् कृष्णस्यान्यप्रपत्तिवर्णनमनुचितमिति चेत् —

उच्यते — अनुगीतावचनान्यपि कार्त्स्न्येन गीतासु भगवद्वचनानां शिवपरत्वम्। तथा हि **अनुगीतो**पक्रमे ह्येवं प्रस्तावः —

विदितं ते महाबाहो सङ्ग्रामे समुपस्थिते ।
माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् ॥
यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात् ।
तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः ॥
मम कौतूहलं चास्ति तेष्वर्थेषु पुनः पुनः ।
भवांश्च द्वारकां गन्ता नचिरादेव केशव ॥

इति पृष्टवन्तमर्जुनं प्रति,

श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ।
अबुद्ध्या यन्न गृह्णीयास्तन्मे सुमहदप्रियम् ॥
नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डव ।
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ॥
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ।
परं हि धर्मं कथितं योगयुक्तेन तन्मया ॥

इति । अत्र पूर्वं

'पारमेश्वरयोगमास्थाय तदेकाग्रमनसा मया ।
तत्स्वरूपमुपवसितमिदानीं बहिर्मनसा मया ॥

तथा वक्तुं न शक्यत' इति यत्कृष्णेनोक्तं तेन ज्ञायते कृष्णेन स्वस्ययात्रान् परब्रह्म भावगमकोवर्णितः । यच्च स्वस्यानन्यया भक्त्योपास्यत्वमुक्तत्वं तत्सर्वं शिवाहंभाव-भावनारूपं योगमास्थाय प्रवर्तितं शिवपर्यन्तम् । 'प्राणोऽस्मि प्रज्ञात्मा तं मामा-युरमृत तदुपास्स्व' तीन्द्रवर्णित स्वमहिमस्योपास्यत्ववदिति । इदं तु गीतास्वप्येव-मुक्त्वा—

ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥

इति श्लोके महायोगेश्वर इति कृष्णविशेषेण प्रदर्श्यमाने रूपे ईश्वरत्व विशेषणे न च प्रदर्श्यमानरूपवद्वर्णितवर्णयिष्यमाण परब्रह्मभावगमकमहिमादिकमपि शिवाहं-भावभावनया स्वीयत्वेन वर्णनविषयभूतं वस्तुतः शैवमेवेत्यनया भङ्ग्या सूचितम् ।

**अत एव कूर्मपुराणे** —

> ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया ।
> स्वयमेव हृषीकेशः प्रीत्योवाच सनातनम् ॥
> गच्छ गच्छ स्वकं स्थानं न शोकं कर्तुमर्हसि ।
> भजस्व परयाभक्त्या शरण्यं शरणं शिवम् ॥

इत्यर्जुनं प्रति व्यासवचनेन, तत्रैव

> नारायणोऽपि भगवान् देवकीतनयो हरिः ।
> अर्जुनाय स्वयं साक्षात् दत्तवानिदमुत्तमम् ॥

**इतीश्वरगीतान्ते** कृत्स्नस्यापि भगवद्गीताशास्त्रस्य शिवविषयत्वं स्पष्टमेवोक्तम् । **अनुगीतासु**

> 'न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः'

इत्युक्त्यनन्तरं भगवान् कृष्णः केनचित् सिद्धपुरुषेणायमेवार्थः कश्यपनाम्ने ब्राह्मणायोपदिष्टो मया श्रुतोऽस्ति । तत्सिद्धात्तमहमर्थमहं पुनरुपदेक्ष्यामीति प्रतिज्ञाय

> कथंशरीरात् च्यवते कथं चैवोपपद्यते
> कथं कष्टाच्च संसारात्संसारी परिमुच्यते ॥

इत्यादिना काश्यपसिद्धपुरुषप्रश्नोत्तररूपेणेतिहासेन पूर्वदेहपरित्यागं देहान्तरप्रवेशमिह परत्र संसारिणो दुःखबाहुल्यं वैराग्यदृढीकरणार्थं भावनाविशेषान्विरक्तस्य संसारान्मोक्षोपाययोगं चोपदिश्य

> 'कश्च देव त्वया पार्थ श्रुतमेवाप्रचेतसा ।
> तथापि हि रथस्थस्त्वं श्रुतवानेतदेव हि ॥'

इत्युपसंहृतम् । तदनन्तरं कृष्णः सिद्धपुरुषोपदिष्टमर्थजातं मनसा सप्रपञ्चमालोच्य सर्वमिदमित्थमेवेति निश्चिकायेत्ययमर्थः, कयोश्चित् ब्राह्मणदम्पत्योः गुरुशिष्यभावकल्पनया प्रवृत्तेन ,

'ब्राह्मणी ब्राह्मणं किंचिज्ज्ञानविज्ञानपारगम् ।
दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् ॥'

इत्यादिनेतिहासविस्तरेण दर्शितः । तदवसाने,

यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति संज्ञितम् ।
गृहीतुं येन तच्छक्यं लक्षणं तस्य तद्वद ॥

इति बन्धमुक्तिफलभाजः शरीरातिरिक्तस्य क्षेत्रज्ञस्य ग्रहणोपायप्रश्नमवतार्य भर्तृकृतस्तदुपायोपदेशोऽपि दर्शितः । तदनन्तरं,

'क्व नु सा ब्राह्मणी कृष्ण क्व वाऽसौ ब्राह्मणर्षभः ।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वदमेऽच्युत ॥'

इत्यर्जुनेन पृष्टस्य कृष्णस्योत्तरमुपवर्णितम् ।

'मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् ।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय ॥'

इत्यनेनेतिहासकल्पनाभिप्रायः स्फुटीकृतः । तदेतत्सर्वमर्थजातं श्रुत्वा मुक्त्यर्थं ब्रह्म बुभुत्समानस्यार्जुनस्य तदनन्तरमेवैषप्रश्नः —

ब्रह्म यत्परमं वेद्यं तन्मे व्याख्यातुमर्हसि ।
भगवतो हि प्रसादेन सुसूक्ष्मे रमते मतिः ॥

तस्मै परब्रह्मस्वरूपमुपदेष्टुकामेन कृष्णेन शिष्याचार्यसंवादरूपः कश्चनेतिहासः कल्पितः । तत्र,

'किंचिद्ब्राह्मणमासीनमाचार्यं संशितव्रतम् ।
शिष्यं पप्रच्छ मेधावी किंस्वित्परतरं तत् ॥'

इत्युपक्रम्य,

'कुतश्चाहं कुतश्च त्वं तत्सर्वं ब्रूहि यत्परम् ।
कुतो जातानि भूतानि स्थावराणि चराणि च ॥
केन जीवन्ति भूतानि तेषां स्यात् कुत्र वा लयः ॥'

ना शिष्यकृताः केचन प्रश्ना उपन्यस्ताः । तेषामुत्तरं वक्तुकामस्या-
म,

'ब्रह्मप्रोक्तमिदं धर्ममृषिप्रवरसेवितम् ।
वेदवेद्यासमं वाप्तुं तत्त्वभूतार्थभावनम् ॥
भूतभव्यविशिष्यादि धर्मकामार्थनिश्चयम् ।
सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनम् ॥
प्रवक्ष्यामि महाप्राज्ञ पदमुक्तं ममाद्यते ।
बुद्ध्वा यदिह संसिद्धा भविष्यन्ति मनीषिणाः ॥

तदुत्तरोक्ति प्रतिज्ञामुपन्यस्य तत्र श्रोतुरत्यादरसिद्धये महर्षीणां चतुर्मुखस्य रूपमत्रविषये महदुपाख्यानमाचार्येणोपदिष्टमिति तदुपाख्यानमुपक्रान्तम् —

उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम् ।
बृहस्पतिर्भरद्वाजो गौतमो नारदस्तथा ॥
वसिष्ठः काश्यपश्चैव विश्वामित्रोऽत्रिरेव च ।
मार्गान् सर्वान् परित्यज्य परिक्रान्ताः स्वकर्मभिः ॥
ऋषिमङ्गिरसं वृद्धं पुरस्कृत्य मते द्विजाः ।
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषाः ॥
तं प्रणम्य महात्मानं सुखासीना महर्षयः ।
पप्रच्छुर्विनयोपेता निश्श्रेयसमिदं परम् ॥

देना ऋषीणां प्रश्नानुपन्यस्य ब्रह्मणस्तदुत्तरवचनप्रपञ्चेन सपरिकरं परब्रह्म-
ं निरूपितम् । तदवसाने,

एतच्च सर्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततस्सिद्धिमवाप्स्यथ ॥
इत्युक्ता गुरुणा ते तु ब्रह्मणा मुनयस्तथा ।
कृतवन्तो महात्मानस्ततो लोकानवाप्नुवन् ॥

त्वमप्येवं महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचारशुद्धात्मा ततस्सिद्धिमवाप्स्यसि ॥
इत्युक्तस्स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥
कृतकृत्यश्च तदा शिष्यः कुरुकुलोद्वह ।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ॥ इति
'त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचारशुद्धात्मा ततस्सिद्धिमवाप्स्यसि ॥'

इति ब्रह्मबृहस्पत्यादिसंवादस्य गुरुशिष्यसंवादस्यार्जुनं प्रति कृष्णवचनरूपनानन्तरं,

कोन्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
श्रोतव्यं यन्मयैतद्वै तन्ममाचक्ष्व मे विभो ॥

इत्यर्जुनस्य प्रश्नः

'अहं गुरुः महाबाहो न शिष्यं त्विह विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं वै धनञ्जय ॥
मयि चेदस्ति वै प्रीतिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥
ततस्त्वं सम्यगाचीर्णे धर्मोऽसि कुरुनन्दन ।
सर्वपापविशुद्धात्मा मोक्षं प्राप्स्यसि केवलम् ॥
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु ॥

इति भगवता कृष्णेन गुरुशिष्यसंवादरूपेतिहासकल्पनाभिप्रायमाविष्कृत्य एव पूर्वमपि गीतोपदेशकाले प्रदर्शित इति तदैकार्थ्यं स्थिरीकृतम् ।

एवं च गीतासु मुक्त्यर्थं शिवं प्रपन्नोऽहमिति कृष्णवचनात् स्वयं मुक्त्यर्थमन्यं प्रपन्नस्य गीतास्वेव तत्र कथं परंभाववर्णनमिति शङ्कातदनुगीतासु ।

'परं हि धर्मं कथितं योगयुक्तेन तन्मया'

इति तद्वचनात्तदनन्तरं मया सिद्धपुरुषोपदिष्टः सर्वोऽपि विरक्तमार्गः सम्यङ्मनसाऽऽलोच्य बुद्ध्येदमिति निश्चित इत्येतदर्थद्योतनात् स्वबुद्धिमनः समारोपितब्राह्मणदम्पति संवादपरेतिहासविषयात् तद्वचनात्तदनन्तरं मया ब्रह्म-स्वरूपं सम्यगालोच्य ज्ञानाङ्गकर्माण्यप्यनुष्ठाय तज्ज्ञानं लब्ध्वा सिद्धिः प्राप्तेत्ये-तदर्थद्योतनात् स्वात्मनिसमारोपितगुरुशिष्यसंवादरूपेतिहासविषयात् तद्वचनाच्च जीवभावनिश्चयात् स्थिर एव। तस्मिन् ब्रह्माभिव्यक्तिविशेषकृतं क्वचित् क्वचित् तस्य ब्रह्मभाववर्णनमित्येव व्यवस्थाङ्गीकरणीयेति युक्तम् ।

ननु विष्णोः परब्रह्मभावे गीतावचनान्येव सर्वैः प्रमाणीक्रियन्ते । कथं तान्यन्यपराणि स्युः । कथं च तासु किञ्चिद्वचनं तस्य मुक्त्यर्थमन्यप्रपत्तिं ब्रवीतीति वचः श्रद्धेयमिति चेत् – मैवम् – आपाददर्शिनां शिवयोगमास्थाय प्रवर्तितानि गीतानि वचनानि कृष्णस्य साक्षात्परभावप्रतिपादकान्येव भासन्ते । अनुगीता वचनानि तेषामपि न भासन्ते । किन्तु काश्यपसिद्धपुरुष संवादादि रूपेति-हासत्रय श्रवणमात्रेण यत्कृष्णेन प्रेप्सितं स्वरूप प्रमाण साधनबलैः सह श्रुतं धर्मंतंच ज्ञानार्थकर्मानुष्ठानेन सहोपासितं च तदन्यदेव कृष्णात् परं ब्रह्मेति प्रतीयते । अतो गीतावचनानां अप्यत्रैव तात्पर्यं सर्वैरभ्युपगन्तव्यम् । अर्जुनेन गीतार्थ एव पुनः पृष्टेऽनुगीतानुसरणादनुगीतावसानेऽयमेवार्थः 'तुभ्यं प्रागुपदिष्ट' इत्युपसंहृतत्वाच्च । एवं च गीताभ्युपगतपरभावप्रतिपादनं क्वचित् क्वचित् भगवद्विषयमेव , क्वचिदन्यविषयमेव च स्फुटीकृतम् । भगवतः पुनः पुनः स्वयं योगरूढत्वोपन्यासेनान्यविषयककोटेरुत्कटत्वेऽपि तत्तथा भगवन्मुखादेव विविच्याव-गन्तव्यम् । तदर्थं तदाविविच्य प्रष्टुमवसरो नासीत् तदानीं प्रष्टव्यम् । तस्य चागृहीतत्वोद्घटनायामुपदेशायोग्यत्वधीः स्यादित्याशयवताऽर्जुनेन निगृह्य युद्धा-रम्भव्यग्रेण चेतसा गृहीतत्वात् विस्मृतं गीतार्थं जातं पुनरुपदेष्टव्यमिति प्रश्नः

कृत: । तदशायामिज्ञानेन भगवता पूर्वमेव सूक्ष्मोऽर्थः समाधियोग-मास्थायोपदेष्टव्य इति योगाधिक्येन मयोपदिष्टार्थस्त्वया मन्माहात्म्यश्रद्धावै-कल्यात्मधीधूर्वहे जाग्रति किमपि वैयग्रं नास्थेयमिति अजानत: स्वेनैव युद्धं निर्वहणीयमिति दुर्बुद्धिशालिना तत एव तद्वैयग्रयाक्रान्तमनसा नाञ्जसा गृहीतः । इदानीं योगमार्गं विहायाहम्भावासंवलित: सोऽर्थ उपदिश्यत इति प्रतिज्ञाय सिद्धपुरुषकाश्यपसंवादाद्यवतारणेनाहम्भावास्पृष्ट एव सोऽर्थ उपदिष्ट इत्यनुगीतानुसरणाभिप्रायोऽवसीयते ।

ननु अनुगीतासु गीतास्विव यद्यपि कृष्णेन स्वस्य परभावो न प्रति-पादित: तथापि गुरुशिष्यसंवादान्तर्गतैश्च कूर्ममुखवचनैः —

'सर्वेऽहमेव भूतानां अहं ब्रह्ममयो महान् ।
भूतं परतरं मत्तो विष्णुर्वापि न विद्यते ॥
राजाधिराज: सर्वेषां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीम: स विभु: स प्रजापति: ॥
देवदानवभूतानां पिशाचोरगराक्षसाम् ।
नरकिन्नरयक्षाणां सर्वेषामीश्वर: प्रभु: ॥
आदिर्विश्वस्य जगतो विष्णु: ब्रह्ममयो महान् ।
तत: परतरं नान्यत्त्रिषु लोकेषु किंचन ॥'

इत्येवं रूपैर्विष्णोः परब्रह्मभाव: प्रतिपादितो दृश्यत इति चेत् - न । तदीय-वचनेषु ब्रह्ममय इति मयटा विष्णोर्ब्रह्मसृज्यत्वस्यैव प्रतिपादनात् मयटस्तत्र नैरर्थक्यायोगेनार्थान्तरासम्भवेन चतुर्मुखविषयब्रह्मसृज्यत्वपरब्रह्ममयशब्दप्रायपाठेन 'कुतश्चाहं कुतश्चत्वमि'ति समारोपितगुरुशिष्यभाव: कृष्णस्तदीयमन:संवादरूपेति-हासोपक्रमगतशिष्यप्रश्नानुसारेण च विकारार्थत्वावश्यम्भावात् । तस्मादनु-गीतासु नारायणादन्यदेव परब्रह्मप्रतिपाद्यमिति निश्चयात् तदनुरोधेन गीतासु कृष्णवचनानि तस्य परभावप्रतिपादकतयावभासमानानि योगरूढवचनत्वात् 'वृष्णीनां वासुदेवोऽस्मी'ति कृष्णस्य नारदादिवद्विभूतिषु परिगणनात्

व । ब्रह्माहंभावभावनाप्रयुक्तानि तद्व्यतिरिक्तब्रह्मपर्यवसायीनीतिस्थिते तदति-
ब्रह्म शिव एवेति पर्यवस्यति । महायोगेश्वरेण तेन प्रदर्शितस्य विश्वरूप-
स्य प्रतिपादकेषु परमं रूपमैश्वरमित्यादिषु वचनेष्वैश्वरत्वविशेषणेन विश्वरूप-
प्रदर्शनसमये 'मयैवैते निहताः पूर्वमेव' 'निमित्तमात्रं भवसव्य-
न्नि'ति कृष्णेन स्वनिहतत्वेनोक्तानां रिपूणां पश्चात् स्वरूपमवस्थायार्जुनेन
षमाणस्य तस्य वचनेषु ।

निहतास्तेन पूर्वं त्वं हतवानसि वै रिपून् ।
अप्रमेयप्रभावं तद्देवदेवमुमापतिम् ॥
भजस्व नित्यं प्रयतो विश्वेशं हरमव्ययम् ॥

मोक्षधर्मपठितेषु शिवनिहतत्वप्रतिपादनात् उदाहृतवचनोपदिष्टप्रकारेणार्जु-
सर्वदा शिवभजनपरत्वेनैवावस्थानाच्चेति ।

ननु 'तमेव चाद्यं पुरुषं प्रपद्य' इति गीतावचनस्य प्रतीतार्थो न
: । महाभारत एवाश्वमेधिकपर्वणि वैष्णवधर्मशास्त्रे विष्णुभक्तैरनुष्ठेयान्
न् पृष्टवन्तं युधिष्ठिरं प्रति भगवता कृष्णेनैव यावत्पृष्टवैष्णवधर्मोपदेशानन्तरं
ाश्रियच्छ्रेयो नास्ति मुख्यमाश्रियमाश्रयेत् ।

'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो राजन्नाहं किञ्चिदुपाश्रितः ॥'

स्वस्यान्यभजनाभावस्योपदिष्टत्वादिति चेत्—न । वैष्णवधर्मशास्त्रे त्वद्भक्ताय
त्वद्धर्मविशेषा उपदेष्टव्या इति पुनः पुनः पृष्टवन्तं युधिष्ठिरं प्रति हि
ता वैष्णवधर्मा उपदिष्टाः तं प्रति 'न बुद्धिभेदं जनयेदि'ति न्यायेन तस्य
सद्धां स्वस्मिन् भक्तिमधिकां कर्तुमित्यमात्मप्रशंसा कृतेति प्रशंसारूपोऽयं
य्यमाश्रयमाश्रयेदि'ति विधेः स्वाश्रयणपर्यवसायित्वं सूचयितुमयमर्थवादः ।
तस्मिन्नेव भगवद्युधिष्ठिरसंवादरूपे वैष्णवधर्मशास्त्रे युधिष्ठिरेण वैष्णव-
वि पुनः पुनः पृच्छ्यमानेष्वपि तैस्सह शैवधर्मा अपि तुल्यकल्पतया
फलतया च दर्शिताः । यथा —

निवेशयति यन्मूर्त्या आत्मानं मानवः शुचिः ।
रुद्रं दक्षिणामूर्त्या वा चतुर्दश्यां विशेषतः ॥
सिद्धब्रह्मर्षिभिश्चैव देवलोकैश्च पूजितः ।
गन्धर्वैर्भूतसङ्घैश्च नीयमानो महातपाः ॥
प्रविशेत् स महातेजा मांवा शङ्करमेव वा ।
न स्यात् पुनर्भवो राजन् नात्र कार्या विचारणा ॥
विषुवे तपनं यस्तु मम कुर्यात् हरस्य वा ।
अर्चनं च यथा न्यायं तथा पुण्यफलं शृणु ॥
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ।
दशानामश्वमेधानामिष्टानां लभते फलम् ॥
विमानं दिव्यमारूढः कामरूपी यथासुखम् ।
दिव्यवर्ष सहस्राणां कोटिमेकं तु मोदते ॥
ततश्चापि च्युतः कालादिह लोके द्विजोत्तमः ।
चतुर्णामपि वेदानां पारगो वेदवित् भवेत् ॥
चन्द्रसूर्यग्रहे धाम्नि मम वा शङ्करस्य वा ।
गायत्रीं मामिकां वाऽपि जपेत् यः शङ्करस्य वा ॥
शङ्खतुल्यनिनादैश्च कांस्यघण्टारवैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु ॥
स गच्छेद्दक्षिणामूर्तिं मां वा नात्रविचारणा ॥

इति एवं सर्वत्र विष्णु भजन शिव भजनयोः साम्यं वर्णितवतापि पुनर्वस्तु-तत्त्वमनुसरता तत्रैव शिवभजनस्याधिक्यमप्युक्तम् । तत्र हि — ' विशेषतीर्थं सर्वेषामशक्तानामनुग्रहात् ।

भक्तानां तरणार्थं वै वक्तुमर्हसि धर्मतः ॥

इति साक्षाद्भगवत्सेवां कर्तुमशक्तानामनुकल्पतया सेवनीयं तीर्थं किमिति प्रश्ने

'सत्यस्य वचनं तीर्थमहिंसा तीर्थमुच्यते ।
तपस्तीर्थं दयातीर्थं शीलतीर्थं युधिष्ठिर ॥
मद्भक्ताः सततं तीर्थं शङ्करस्य विशेषतः ॥'

इति स्वभक्तापेक्षयापि शिवभक्तस्य विष्णुभक्तान् प्रत्यधिकतीर्थत्वमुक्तम् । एवं विधोपक्रमविरोधादौपसंहारिकं तद्वचनं स्वभक्तप्ररोचनार्थमर्थवादतया नेतव्यमिति न तद्विरोधः । 'तमेव चाद्यं पुरुषं प्रपद्य' इत्यनेन गणनीया । अतोऽनुगीतावचनबलात् विष्णोर्जीवत्वप्रतीतिर्निर्बाधैव ।

किं च **वैष्णवेऽपि पुराणे** विष्णावैकान्तिकभक्तिसिद्ध्यै अमृतमथनकथादिप्रसक्तकालकूटसंहरणादिशिवमहिमनिगूहनेन प्रवृत्तेऽपि क्वचिद्वस्तुतत्त्वं किञ्चित्प्रकाशनीयम् । अन्यथा विष्णुभक्तिसिद्ध्यै सर्वथा तत्त्वार्थनिगूहने वेदोपबृंहणता न स्यादित्यभिप्रेत्य प्रथमांशावसाने पुराणप्रतिपाद्यं महाविष्णुं प्रस्तुत्य ।

'स परः सर्वशक्तीनां ब्रह्मणस्समनन्तरः'

इति ब्रह्मविभूतिभूतसर्वापेक्षायां 'महाविष्णुः पर' इत्येतावदेव परब्रह्मणस्त्वयं कनीयानिति तस्य ब्रह्मकोटिबहिर्भावेन प्रथमं जीवभावो दर्शितः । प्रदेशान्तरेषु कृतस्य परभावो वर्णित इत्युभयाविरोधार्थं जीवरूपे एतस्मिन् ब्रह्माभिव्यक्तिविशेषात् परब्रह्मभाववर्णनमित्युपपत्त्यवश्यमङ्गीकरणीया ।

अपि च विरिञ्चिस्तावज्जीवः; सृज्यत्वसम्भाव्यत्वादिश्रवणादिति विष्णुब्रह्मवादिभिरप्यभ्युपगम्यते । विरिञ्च एव विष्णुरिति श्रुतिस्मृतिपुराणेष्ववगतम् । तथा हि - **यजुस्संहितायां** तावत् आपो वा इदमग्रे सलिलमासीत् । तस्मिन् प्रजापतिर्वायुर्भूत्वाचरत् स उमामपश्यत् तां वराहो भूत्वा व्यमार्ड्'ति प्रजापतिशब्दोक्तस्य विरिञ्चस्यैव वराहभावापत्तिः । पुनस्तस्यैव विश्वनिर्मातृविरिञ्चिभावापत्तिश्च श्रूयते । एवमाधानमन्त्रेष्वपि 'यस्य रूपं बिभ्रति माम-विन्दत् गुहां प्रविष्टां सरिरस्य मध्ये तस्येदं विहतमाभरन्तः अच्छं वट्कार

मस्यां विधेमे'ति वराहविहतसम्भरणमन्त्रे विरिञ्चस्य वराहरूपग्रहणं श्रूयते। यद्यपि तस्मिन् मन्त्रे तत्र कर्तृनिर्देशो नास्ति, तथापि प्रजापतिसृष्टानां प्रजानामिति पूर्वमन्त्रे प्रजापतिशब्दोक्तिः विरिञ्चि एव गृह्यते। कर्त्रपेक्षायां सन्निहितग्रहणौचित्यात्। 'आपो वा इदमग्रे सलिलमासीत्, तेन प्रजापतिरश्राम्यत्' कथमिदं स्यादिति सोऽपश्यत् पुष्करपर्णं तिष्ठत्। सोऽमन्यत अस्ति वै तत् यस्मिन्निदमधितिष्ठती'ति 'स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्च्छत् तस्या उपहत्योदमज्जदि'ति तद्ब्राह्मणवाक्यानुरोधाच्च। वराहं च रूपं वैष्णवमित्यसन्दिग्धम् 'उद्धृतासि वराहेण कृष्णेन शतबाहुने'ति श्रवणात् सकलपुराणैककण्ठ्याच्च। तथा **मानवे धर्मशास्त्रे** —

'ततस्स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासुवीर्यमपासृजत्॥
तदण्डमभवद्धैमं सहस्रांशु सम्प्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
तायदस्यायतनं पूर्वं तेन नारायणःस्मृतः॥'

इति नारायणस्य स्वयमेव विरिञ्चिरूपेण जनिरुक्ता। पुराणेष्वपि **स्कान्दे सूतसंहितायां** विष्णोर्वराहावतारकृत्यमुक्त्वा 'वराहरूपमुत्सृज्य स्वयं ब्रह्माऽभवत् हरिः' इति तस्यैव ब्रह्मभावापत्तिरुक्ता। **विष्णुपुराणे** च —

'एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः।
भोगीशय्यागतः शेते त्रैलोक्यग्रासबृंहितः॥
जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः॥'

इति कमलसम्भवस्य विरिञ्चस्यैव नारायणात्मना समुद्रशायित्वमुक्तम्। **कूर्मपुराणे** —

'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ।
सुष्वाप योगशयने एकीभूयाथ चक्रिणा ॥'

इति तस्य देहान्तरोपाधिकभेदमपहाय विष्णुनैकीभूय समुद्रशयनत्वमुक्तम् । एवमन्येष्वपि बहुपुराणेष्वयमर्थो वर्णितः । विस्तरभयात् न लिख्यते । तदेवं कर्मवश्यत्वावगमात् न विष्णोर्जगत्कारणत्वमभ्युपगन्तुं युक्तमिति ।

अत्रोच्यते—यत्तावदुक्तं वाजसनेयिशाखावाक्यात् नारायणस्य महिमा कर्मवश्यत्वेनावसीयत इति - तदनुपपन्नम् - 'ऐतदात्म्यमिदं सर्वमेवेदं सर्वं खल्विदं ब्रह्मे'त्यादौ ब्रह्मधर्मतयाऽवगम्यमानस्य सार्वात्म्यस्य कर्माधीनत्वासम्भवात् । तद्धि सर्वोपादनत्वकारणत्वमादायोपादानोपादेययोरैक्ये वा सर्वान्तः प्रवेशेन नियामकतया सर्वशरीरकत्वेन व्याख्यानात् तदुभयमपि न कर्मफलानि वक्तुं शक्यम् । प्रकृत्यधिकरणयोरन्तर्याम्यधिकरणयोस्तयोर्ब्रह्मधर्मतया स्थापनात् ।

अपि चोपादानकारणत्वस्य ब्रह्मान्यगामित्वे जगज्जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वभङ्गप्रसङ्गः । न च निमित्तकारणत्वमेव तल्लक्षणमस्त्विति वाच्यम् । 'यत्प्रयन्त्यभिसंविशन्ती'ति लयस्थानत्वोक्त्या उपादानकारणभूतस्य तथात्वावगमात् । तस्मात् नारायणस्य स्वाभाविकमेव सार्वात्म्याप्राकृतकर्मणि प्रवृत्तिजननार्थं तदधीनतया स्तूयत इति न तद्बलात् नारायणस्य कर्मवश्यत्वप्रसङ्गः ।

यदप्युक्तं 'इत एतदुदारुहन्नि'त्यादिवाक्यात् कर्मवश्यत्वमवगम्यत इति तदप्यनुपपन्नम् । एत इत्यस्य प्रकृतपरामर्शिनोऽपि सोमादिपरामर्शमात्रेण चरितार्थस्य विष्णुपरामर्शकत्वानवश्यम्भावात् । 'अपहतपाप्मा दिव्यो देव एको नारायण' इति तस्यापहतपाप्मत्वश्रवणात् ।

नन्वपहतपाप्मत्वोक्त्या पापसम्बन्धाभावमात्रप्रतिपादनेन पुण्यकर्मबलादूर्ध्वलोकप्राप्तिं प्रतिपादयन्त्या अस्या श्रुतेस्तद्विरोधादेव सङ्कोचेन प्रवृत्त्या विष्णोरपि कर्मवश्यत्वं सिद्धमिति चेत् - न । 'न सुकृतदुष्कृतमि'त्यारभ्य 'सर्वे पाप्मानातोनिवर्तन्त' इति प्रयोगात् । अलौकिकत्वे सत्यनिष्ट-

फलसाधनत्वरूपलक्षणस्य मुमुक्ष्वपेक्षणनिष्टफलसाधनत्वेन सुकृतेऽपि सत्वाच्च। वेदान्तशास्त्रे पाप्मशब्देन सुकृतदुष्कृतयोरुभयोरपि ग्रहणात्। **शिवादित्यमणिदीपिकायामन्तस्तद्धर्माधिकरणे**ऽसङ्कुचित सकलपापराहित्यं तु परमेश्वर एव सम्भवति, नाधिकारपुरुषेष्विति वदता परेणाप्यपहतपाप्मत्वप्रतिपादनादेव पुण्य-सम्बन्धराहित्यस्यापि सिद्धेरभ्युपगतत्वात्। अन्यथोपचितपुण्येषु जीवेषु संभावि-तत्वे तस्य पारमेश्वर धर्मत्वासम्भव प्रसङ्गात्। 'अतोऽपहतपाप्मा दिव्यो देव एको नारायण' इति श्रुत्या कर्मवश्यत्वाभावप्रतिपादनादेत इत्यस्य विष्ण्वतिरिक्त-सोमादिपरत्वमेव युक्तम्। **यत्किंचित्** 'प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्तीति 'वाक्ये यत्किञ्चिच्छब्दस्य यावत्या वाचा कामयते तावत्या दीक्षणीया-मनुब्रूयादिति वाक्यबलात् दीक्षणीयां व्यतिरिक्तपरत्वस्य दर्शनात्।

किं च सोमादीनामूर्ध्वलोकप्राप्तिप्रतिपादनमात्रमनेन मन्त्रेण क्रियते। न तु तस्य कर्माधीनत्वप्रतिपादनम्।

अपि च प्रभुर्जय इत्यस्योत्तरपादस्थस्याङ्गीरस इत्येतद्विशेषणत्वेन एत इत्येतद्विशेषणत्वाभावात्। न च 'येन देवा ज्योतिषोर्ध्वा उदायन्नि'त्यनुवाद-बलात् प्रभुर्जय इत्यस्य सोमादिविशेषणत्वकल्पनं युक्तम्। **यथा मनुष्या एवं देवा अग्र आसन्** तेऽकामयन्तावर्ति पाप्मानमि'त्यादिवाक्ये देवानां यज्ञानुष्ठानेन स्वर्गलोकप्राप्तिप्रतिपादनात् तदनुवादसम्भवात्। **सूत्रकारेण** संसदाच्चतुर्विंशतिरात्रेण स्वर्गे लोके सिध्यन्तीति प्रतिपादनात्। अत्र दैवी संसत् स्वर्गरूपेत्यवसीयते। वैष्णवं वामनमालभेत तस्य धर्मानो विष्णुरेवेति वाक्यमपि न विष्णुत्वस्य कर्माधीनत्वे प्रमाणम्। तत्र एवकारस्य इवार्थकत्वा-दिववत् वैवमेवेति **निघण्टुकोक्तेः**। अन्यथा एव शब्दवैयर्थ्यात् विष्णु-र्भूत्वेत्यनेनैव विष्णुत्वप्राप्तिप्रतिपादनस्य सिद्धत्वात्। एतेन विष्णुक्रमान् क्रमत इति वाक्यमपि व्याख्यातम्। मयि इत्येतस्य जयेन त्रैलोक्याधिपत्यप्राप्तिं प्रतिपादय। मयि वर्च इत्येतेन चत्वारि वर्षाणि प्रयुञ्जानस्त्रयाणां लोकानामधिपत्यं गच्छतीति वाक्यमपि न विष्णुत्वस्य कर्माधीनत्वस्य गमकम्; त्रैलोक्याधिपत्यस्य चतुर्मुखादि साधारण्यात्।

यदपि 'तव श्रिये मरुतो वर्जयन्ती'त्यादिश्रुतेर्लिङ्गार्चनेन विष्णुः स्वपदं प्राप्तवानित्यत्र प्रमाणत्ववर्णनं तदप्यव्युत्पन्नजनव्यामोहमात्रम्। लिङ्गवाचकपदाभावात्, विष्णुना तदर्चनं कृत्यमित्येतदर्थ प्रतिपादकपदाभावाच्च। 'न च रुद्राय ते जनि प्रचारु चित्रमिति' लिङ्गाभिव्यक्तिः प्रतिपाद्यते पदं विष्णोरूपं निधार्यत्यनेन, तस्मात् लिङ्गाद्विष्णुपदप्राप्तिः प्रतिपाद्यत इति वाच्यम्। जनिमशब्दस्योत्पत्तिपरत्वेन लिङ्गाभिव्यक्तिपरत्वाभावात्। न च चित्रशब्दसमभिव्याहारात् तथावगतिरिति वाच्यम्। तस्य 'ललाटात् क्रोधजोरुद्र' इत्यनेन ललाट जन्मत्वावगमेन लोकविलक्षणतादृशजनन प्रतिपादकत्वेनोपपत्तौ जनिमशब्दमुख्यार्थ भङ्गायोगात्। न च तव श्रिय इत्यादेः ते यज्जन्म तन्मार्जयन्तीत्यर्थकत्वेन जनिमशब्दस्य मार्जनकर्मप्रतिपादकत्वसमर्थं लिङ्गाभिव्यक्तिपरत्वं वाच्यम्। लिङ्गस्यैव मार्जनकर्मत्वेन तव शिवाभिव्यक्तेः मार्जनकर्मत्वाभावात्। न च यतो लिङ्गाभिव्यक्तिरूपं जन्मचित्रमतस्त्वां लिङ्गात्मकं मार्जयन्तीत्यर्थ इति वाच्यम्। एवमपि जनिमशब्दस्य लिङ्गाभिव्यक्तिपरत्वे प्रमाणानुपन्यासात्। जनिमशब्दस्य मुख्यार्थत्वेऽपि यतस्ते जन्मचित्रमतस्त्वामार्जयन्तीत्यर्थवर्णनसम्भवात्। एवमपि पदं यदित्यादेर्लिङ्गार्चना विष्णुपदप्राप्तिप्रतिपादकत्वासिद्धेश्च। यस्मात् विष्णोः पदं चरणमुपमाशब्दस्य प्रमापरत्वात्। बुद्धिसमीपे हृदय इति यावन्निधायि निहितं अतस्त्वां भगवदुक्तत्व बुध्यामार्जयन्तीत्यर्थवर्णनासम्भवात्।

वेदान्तविजयकृतस्तु—'अक्षरपर्यालोचनेनार्थस्वीकारे रुद्रस्य भगवदायत्त श्रीकत्वमेवैतन्मतार्थतया स्वीकारार्हं। रुद्र। यस्मात् ते चारुचित्रं तस्मात् तवश्रियैर्मरुतो देवाः। ब्रह्माद्या क्षालितवन्तः कर्मचार्जयन्त इत्यपेक्षायामाह - पदं यदिति। उपमेयतुल्यं, यद्वा शब्दो भूमिपरः। मा विश्वा पृथिवीत्यभिधानात्। उपमित्यव्ययीभावः। भूम्याः समीप इत्यत्रविक्रमसौकरस्य प्रतिपादनायायमित्युक्तम्। तेन द्वितीयः क्रमो लभ्यते। यद्विष्णोः पदं निधायि 'त्रेधा निदधे पदमिति' श्रुत्यन्तरम् किं च तेन पुण्येन जन्मना गोनां गिरां प्रकृतस्य विष्णोर्नाम्ना मध्ये गुह्यं नाम तारकाख्यमपासि सर्वदा गोपायतीत्यर्थप्रतिपत्तेरि'त्याहुः।

'रौद्रं लिङ्गं महाविष्णुर्भक्त्या शुद्धं शिलामयम् ।
चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम् ॥'

इत्युपबृंहणानुसारात्तु तथा वर्णनं कृतमिति चेत् - न । अस्य तदुपबृंहणरूपत्वे मानाभावात् । न हि चारुचित्रशब्दसद्भावमात्रात् तदुपबृंहणत्वनिर्णयः । अप्रयोजकत्वात् । तत्र श्रिय इत्यस्य तेन पासि गुह्यं नामेत्यस्य तत्र प्रतिपादनात् ।

ननु मास्तु तदुपबृंहणत्वं तथाप्येतद्वचनबलादेव कर्माधीनैश्वर्यकत्वं सिध्यतीति चेत् - न । अस्य लिङ्गार्चनप्रशंसापरत्वात् ।

'अन्यथा तत्र यः परमात्मा तु सन्नित्यो निर्गुणस्स्मृतः ।
स तु नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥
न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्ववरोधोऽसौ मोक्षसङ्घैः स पूज्यत ॥'

इत्यादि बहुप्रमाणव्याकोपप्रसङ्गात् । आरण्यपर्वसौप्तिकपर्वहरिवंशवचनबलादपि न कर्माधीनैश्वर्यकत्वं सिध्यति । तस्यावतारेषु 'त्वामाराधयिष्यामि त्वत्तो वरं लप्स्य' इति भगवता रुद्राय वरप्रदानमिति तत्सत्यत्व सम्पादनाय, यत्तपश्चरणं यच्च वरप्रदानं तदर्थप्रतिपादनपरत्वात्तादृशवरप्रदानं च वराहे सप्ततितमेऽध्यायेऽवगतम् । तत्रत्यानि चेमानि वचनानि । भगवन्तं प्रति रुद्रः—

'एवमुक्त्वा पुनर्वाक्यं उवाचोमापतिं मुदा ।
अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु ॥
मर्त्यो भूत्वा भवान् देव मामाराधय केशव ।
मां वहस्व च देवेश वरं मत्तो गृहाण च ॥
येनाहं सर्वदेवानां पूज्यात्पूज्यतमोऽभवम् ॥'

भगवान् — 'देवकार्यावतारेषु मानुषत्वमुपागतः ।
त्वामेवाराधयिष्यामि त्वमेव वरदो भव ॥

यत्त्वयोक्तं वहस्वेति देवदेव उमापते ।
सोऽहं वहामि त्वां देव मेघो भूत्वा शतं समाः ॥
मदंशो द्वादशो यस्तु विष्णुनामा हि भूतले ।
अवतीर्णो भवन्तं त्वाराधयिष्यति शङ्कर ॥' इति ।

यत्तु **शिवतत्त्वविवेके** —

'ततोऽस्य पश्यतु गिरीशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् ।
स्तुवन्तमीशं बहुभिर्वचोभिः शङ्खासि चक्रावृतहस्तमाद्यम् ॥'

इति **कौर्मे** कृष्णतपश्चर्यायां शिवप्रत्यक्षकरणसमये विष्णोरादिमूर्त्याऽपि शिवाराधनपरत्वप्रदर्शनात् वराहवचनं वस्तुसमुत्कर्षख्यापनार्थं विष्णोः शिवाराधनमित्येतत्परत्वेनोपपन्नमिति जल्पितम् — तत्तुच्छम् — कृष्णावतारेषु युधिष्ठिरादिसमीपवर्तित्वजगद्रक्षणतद्धितत्वेन त्रिमूर्तिमध्येऽवतीर्णस्य भगवतो रुद्रविषयकस्नेहातिशयेन तत्समीपवर्तित्वस्य युधिष्ठिर प्रशंसावत् तत्प्रशंसाया अपि उपपत्त्या तन्मात्रेण भगवतः शिवोपसर्जनकत्वकल्पनाया अनुन्मेषात् । अन्यथोपेन्द्रादिरूपेणावतीर्णस्येन्द्रादिपार्श्ववर्तित्वेन तत्र तत्र वर्णनदर्शनात् । इन्द्राद्यपेक्षयाऽप्यवरत्वकल्पनाप्रसङ्गः । न चात्रेष्टापत्तिवचनं हिरण्यकशिपु रावण-दुर्योधन-जरासन्धप्रमुखसर्वांशसम्भूतिरहितस्य कुम्भीपाक प्रभृतिदुर्गतिवर्गपातयोग्यता विहीनस्य बहुजन्मसहस्रसमार्जितदुरन्तदुरितवासनासमृद्ध भगवदेन्द्राद्यानुमितां त्यजति जनानुगुणसाहसकृतमहातमतिरस्कृतिव्यपेतधिषणस्य सम्मतपदवीमधिरोहति, किं तु भवादृशस्यैव । न चात्राद्यमिति विशेषणादादि नारायणस्य तत्पार्श्ववर्तित्वं कथ्यत इति वाच्यम् । आद्यमित्यस्य किमित्याकाङ्क्षायां सन्निहितस्य कृष्णस्यैव प्रतिसम्बन्धित्वेनान्वयात् । न च वस्तु सदुत्कर्षख्यापनार्थं विष्णोश्शिवाराधनमित्येतत्परं **वाराहवचन**मित्यपि युज्यते । वरप्रदानकृतकृत्योक्त्यसामञ्जस्यात् । नियोगकृतत्वोक्तौ हि घटते । अतो न भगवदैश्वर्यस्य कर्माधीनत्वसिद्धिः ।

मोक्षधर्मेषु नारायणीये च भगवत्कृतशिवोपासनं न यत्किञ्चित्फललाभाय किन्तु लोकसंग्रहार्येत्युपपादितम् : तथा हि —

ब्राह्मे रात्रौ क्षये प्राप्ते तस्य ह्यमिततेजसः ।
प्रसादात् प्रादुरभवत्पद्मं पद्मनिभेक्षणः ॥

तत्र ब्रह्मा समभवत् स तस्यै सम्प्रसादजः ।
अह्नभक्षये ललाटाच्च सुतो देवस्य वै तथा ॥

कोऽसाविष्टस्य सञ्जज्ञे रुद्रः संहारकारकः ।
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ॥

तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ ।
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ॥

कपर्दी जटिलो मुण्डी श्मशानेभाग सेवकः ।
उग्रव्रतधरो रुद्रो योगी त्रिपुरदारुणः ॥

दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ।
नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे ॥

तस्मिन् हि पूज्यमाने वै भूतेशे तु महेश्वरे ।
सम्पूजितो भवेत् पार्थ देवो नारायणः प्रभुः ॥

यस्तं वेत्ति समावेत्ति योनुतं स हि मामनु ।
रुद्रो नारायणश्चेति तत्त्वमेकं द्विधा कृतम् ॥

लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ।
अहमात्मा हि लोकानां विष्णवेषां पाण्डुनन्दन ॥

तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ।
यद्यहं तं नार्चयेयमीशानं वरदं शिवम् ॥

आत्मानं नार्चयेत् कश्चिदिति मे भावितं मनः ।
मया प्रमाणं हि कृतं लोकस्समनुवर्तते ॥

प्रमाणैर्हितु पूज्यानि ततस्तं पूजयाम्यहम् ।
न हि मे केनचित् देयो वरः पाण्डवनन्दन ॥

इति संचिन्त्य मनसा पुराऽहं विश्वमीश्वरम् ।
पुत्रार्थमाराधितवानहमात्मानमात्मना ॥
न हि विष्णुः प्रणमति कस्मैचिद् विबुधाय तु ।
ऋत आत्मानमेवेति ततो रुद्रं नमाम्यहम् ॥
स ब्रह्मकाः स रुद्राश्च सेन्द्रा देवाः सहर्षिभिः ।
अर्चयन्ति नरश्रेष्ठं देवं नारायणं हरिम् ॥
भविष्यतां वर्तितां च भूतानां चैव भारत ।
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ॥
नमस्व हव्यदं विष्णुं तथा शरणदं नम ।
वरदं मम कौन्तेय हव्यकव्यभुजं नमः ॥
चतुर्विधा मम जना भक्ता एव हि ते श्रुताः ।
तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ॥
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् ।
ये तु शिष्टास्त्रयो भक्ता फलकामा हि ते मताः ॥
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ।
ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ॥
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ।
भक्तं प्रति विशेषस्तु एष पार्थानुकीर्तितः ॥

हि तत्र वचनजातम् ।

न च 'तस्मिन् हि पूज्यमाने वै तद्देशे तु महेश्वरे ।
रुद्रो नारायणश्चेति तत्त्वमेकं द्विधा कृतम् ॥'

देवचनबलात् रुद्रनारायणयोरभेदश्शङ्कनीयः । उपक्रमे

'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥'

इति भगवत्प्रसादावाप्तसंहारकरणसामर्थ्यप्रतिपादनेन स्वाभाविकसामर्थ्याभावाव-गमेन उपसंहारे —

स ब्रह्मकास्स रुद्राश्च सेन्द्रा देवा महर्षिभिः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥
ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥

इति भगवदेकत्वस्य च रुद्रैः स्फुटतरं प्रतीयमानत्वेनाभेदव्यपदेशस्य भगव-च्छक्त्यधिष्ठानमादायैव वर्णयितुं युक्तत्वात् ।

अन्यथा मोक्षधर्मे भृगुभारद्वाजसंवादे ।

'प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै ।
तौ तु नूनं न जानीतः मम माया विमोहितौ ॥'

इति ब्रह्मरुद्रसंवादे —

'न स शक्यस्त्वया द्रष्टुं ममान्यैरपि सत्तम ।
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥
तवान्तरात्मा मम च ये चान्ये देहि संज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥'

इति मायाविमोहितत्वादिप्रतिपादनविरोधप्रसङ्गः । ब्रह्मरुद्रवचने हि ये च देहि संज्ञिता इत्युक्त्यैव चारितार्थ्ये अन्य इत्युक्त्या देहिसंज्ञितत्वं प्रतीयते ।

एवं श्रीविष्णुधर्मे —

'न यस्य रूपं न बलप्रभावौ न च स्वभावं परमस्य पुंसः ।
विज्ञायते सर्वपितामहाद्यैस्तं वासुदेवं प्रणमाम्यचिन्त्यम् ॥'

इति । श्रीवैष्णवे —

'यं न देवा न मुनयो न चाहं न च शङ्करः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥'

क्ते । श्रीज्ञाराहे —

'यदेतत्परमं ब्रह्म वेदवादेषु पठ्यते ।
स देवः पुण्डरीकाक्षः स्वयं नारायणो हरिः ॥
अद्यापि मां न जानन्ति रुद्रेन्द्राद्यास्स पितामहाः ॥'

क्ते भगवन्महिमानभिज्ञत्वं प्रतिपाद्यते ॥

अपि च 'नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे' इति नारायणात्म-कत्वोक्तिपूर्वकमुच्यमानस्याभेदव्यपदेशस्यान्तर्यामिभावनिबन्धनत्वमेव वक्तुं युक्तम् । अन्यथा तदात्मकत्वोक्तिवैयर्थ्य प्रसङ्गात् । न चैवं भगवतः स्वात्मकरुद्रोपासनस्य कें प्रयोजनमिति वाच्यम् ।

'मया प्रमाणमचिकृतं लोकस्तमनुवर्तत'

इति वचनेन स्वात्मकशिवोपासनरूपधर्मप्रवर्तनार्थत्वस्य कथ्यमानत्वात् । न चैवं तन्मात्रोक्त्यैव वारितार्थे स्वात्मकत्वकीर्तनस्य किं प्रयोजनमिति वाच्यम् । तत्पूजन प्रसक्तिनिकर्षपरिहाररूपप्रयोजनस्य स्फुटत्वात् ।

'येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति .... .... ॥'

इत्युक्तया रीत्या शिवाद्यन्यदेवताराधनमपि स्वपर्यन्तमिति ज्ञापनार्थत्वाच्च । एवं चात्मानं नार्चयेदित्यस्य तदात्मभूतमात्मानमित्यभिप्रायः । 'रुद्रो नारायणश्चेति तत्त्वमेव द्विधा कृतम्' इत्येतदपि रुद्रस्य भगवदावेशावतारत्वमादायोपपादनीयम् ॥

यत्तु यद्यहं नार्चयेयमित्यादिना शिवस्य सर्वाराध्यत्वापह्नानात्सर्वोत्कर्षः सिध्यतीति तदाराधनात् एतैर्वचनैस्स्वव्यतिरिक्ताराध्यत्वस्यैव प्रतीतेः ।

'न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ।
न हि मे केनचित् देयो वरः पाण्डवनन्दन ॥'

इत्यत्र स्वाराध्यत्वाभावस्यैव प्रतीतेः । न हि धर्मसंस्थापनार्थमनुष्ठिताव् शिवा-राधनात् शिवस्य भगवदपेक्षया उत्कर्षः सिध्यति । तथा सत्यवतारदशानुष्ठित-सन्ध्यावन्दनादिसम्बन्धिनां सूर्यादीनामपि भगवदपेक्षयोत्कर्षप्रसङ्गात् ।

किं च,

'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥'

इति नारायणवचने शिवस्य नियम्यत्ववचनमपि विभूति विषयमित्येतत् तत्क्रोधजत्वविशेषणेन दर्शितमित्युक्त्वा तदुत्तरसन्दर्भस्थवचनेषु तमधिक्रम्य प्रवृत्तेषु परमशिवस्याराध्यत्वं ज्ञाप्यत इति वक्तुं कथं न लज्जसे । अपि च भगवदतिरिक्तसर्वाराध्यमपि न ततोऽवगन्तुं शक्यते ।

'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥
भक्तं प्रति विशेषस्तु एष पार्थानुकीर्तितः ॥'

इत्युत्तरसन्दर्भस्थवचनबलात्, प्रतिबुद्धेतरविषयत्वावगमात् सामान्यशास्त्रस्य विशेषशास्त्रबलात् सङ्कोचस्य सकलन्यायवित्सम्मतत्वात् ।

यत्तु कलिराजमहासेनासिरविरणमहामोहसिद्धान्तानुरागसिन्धुपानजनित-मदमन्थरचेतसा जल्पितमल्पेन प्रतिबुद्धावुत्पन्न ब्रह्मसाक्षात्कारा सामान्यतो विशेषतश्च गृहीतदेवता न सेवन्ते । यस्मात् सेवामात्रं परिमितं वैषयिकभोगादि रूपत्वात् परिच्छिन्नमपरिच्छिन्न ब्रह्मानन्दामृत जलधिवेलोपगतानुत्पन्न साक्षात्का-रात् प्रतीतिनिदिध्यासने सिद्ध्येत । तदर्थमपि न सेवन्त इत्यभिप्रायः । ननु विष्णवति-रिक्तान् देवान्प्रतिबुद्धा न सेवन्त इति याश्चान्या इत्यन्यश्रुतेर्विशिष्य प्रहीतेतर सकलदेवताग्राहिण्य सङ्कुचित वृत्त्यापादक प्रबलप्रमाणादर्शनादिति तदसम्बद्ध प्रलपितम् । चतुर्धा विभक्तभक्तजनान्तर्गतं जनश्रैष्ठ्य प्रतिपादकवचनगतस्य परिमितफलकामप्रतिसम्बन्धिनि प्रयुक्तस्य प्रतिबुद्धशब्दस्य मुमुक्षुमात्रपरत्वा-

न्यम्भावेन तमतिक्रम्य यत्किंचिदर्थविधायकवचनगतस्यापि तस्य शब्दस्य तत्परत्वस्यैवमुक्ततया कृत्स्नदेवता सेवानिषेधकत्वोक्तेर्मूढकृत्यत्वाच्च । प्रतिबुद्ध-शब्दस्य भगवद्भक्तविशेषपरतया तत्सेव्यत्वेन भगवत उपस्थिता । अन्या देवता इत्यत्रान्यश्रुतेस्तदसेव्यविषयिण्या भगवत्क्रोडीकरणासामर्थ्येन सङ्कुचित-वृत्त्यापादकप्रबलप्रमाणदर्शनादित्यस्याप्यम्युत्पन्नजनव्यापारत्वात् । अपि च भक्तं प्रति विशेषस्तु 'एवं पार्थानुकीर्तित' इत्युत्तरवाक्यविरोधप्रसङ्गः । एतेनास्य प्रशंसामात्रत्वकल्पनं गलहस्तितम् । तथा सति सर्वत्र प्रशंसारूपकल्पनाया असारत्वेऽप्यभिलषितासिद्धिप्रसङ्गाच्च । अत एतेषां वचनानां शिवस्य भगव-दाराध्यत्वतात्पर्यकत्वाभावात् । भगवत्कृतशिवोपासनं शिवाच्च न रूपधर्म-स्थापनार्थमित्येवं तात्पर्यकथैवेत्यनवद्यम् ।

किं च **हरिवंशे** कैलासयात्राप्रघट्टकपर्यालोचनेनापि भगवत एव सर्वोत्कर्षप्रतीत्या भगवत्कृतशिवोपासनं न भगवन्निकर्षापादकमिति सिध्यति । तत्र हि महता प्रबन्धेन श्रीकृष्णस्य तपश्चर्योद्योगः कैलासयात्राबदरिकाश्रम-प्रवेशघण्टाकर्णमोक्षप्रदानकैलासप्रवेशद्वादशवार्षिकतपश्चर्यानुष्ठानानि वर्णयित्वा ।

'किमुद्दिश्य जगन्नाथस्तपश्चरति मानदः ।
तन्न विद्मो यथाकामं दुर्ज्ञेयेश्वरचिन्तनं ॥'

इत्युपास्याभावं च स्फुटीकृत्य तत्रेन्द्रयमप्रचेतादित्यादिसकलदेवमुनिसमागम-मभिधाय ।

'कोऽन्यत्र विस्मयो भूयादिति ते मेनिरे गणाः ।
आश्चर्यं किल पश्यध्वं न भूतं च भविष्यति ॥
योगिध्येयः स्वयं कृष्णो यत्तप्यति हरिस्स्वयम् ॥'

इति तेषां तत्त्वजिज्ञासा प्रदर्श्यते ।

'ततस्समाप्ते सकले जगत्पतेः व्रते समूले सकलेश्वरः शिवः ।
द्रष्टुं हरिं लोकहितैषिणं प्रभुं ययौ भवान्या सह भूतसङ्घैः ॥'

इतीन्द्रादितुल्ययोगक्षेमतया शिवस्यागमनं प्रतिपाद्य लोकहितैषिगमिति तपश्चरणस्य लोकहितार्थमभि व्यज्य तद्दर्शनस्तोत्रवरप्रदानानि वर्णयित्वा सकलमुनिगणजिज्ञासापगमाय शिवस्य भगवत्परत्व वर्णनोद्योगो दर्शितः ।

'इत्युक्त्वा पुनराहेदं याथात्म्यं दर्शयन्निव ।
मुनीनां श्रोतुकामानां याथात्म्यं कुरुसत्तम ॥
अञ्जलिं सम्पुटं कृत्वा विष्णुमुद्दिश्य शङ्करः ।
उमया सार्धमीशानो याथात्म्यं वक्तुमैहत ॥'

इति पुनराहेदमिति सामान्यत उक्तोऽर्थः स्वं या अपगमहेतुक्रिया विशेषपूर्वकत्वरूपविशेषकथनार्थं पुनरभिधीयते — 'याथात्म्यं दर्शयन्नि'त्यादिना याथात्म्यं वक्तुमैहतेत्यन्तेन याथात्म्यं श्रोतुकामानां याथात्म्यं दर्शयन्निव अञ्जलिं कृत्वा सम्पुटं कृत्वा याथात्म्यं वक्तुमैहतेत्यन्वयः । तदनन्तरं ।

'हरे कुर्वितितत्रैवाञ्जलिं कुरुसत्तम ।
मुनयो देवगन्धर्वसिद्धाश्च सह किन्नराः ॥
अञ्जलिं चक्रिरे विष्णुं देवदेवेश्वरं हरौ ॥'

इति मुनिप्रभृतीनां विचिकित्सानिवृत्तिं कृत्वा कार्यमुखेन दर्शयित्वा रुद्रकृतस्तोत्रेण सकलजगत्कारणादिब्रह्मासाधारणधर्मकथनपरेण पुरुषसूक्ताद्यनेकोपबृम्हणगर्हितेन भगवतः परब्रह्मत्वं स्फुटीकृतम् । तदनन्तरं —

'इत्युक्त्वा देवदेवेशं मुनीनाह पुनश्शिवः ।
एवं जानीत ये विप्रा ये भक्ता द्रष्टुमागताः ॥
एतदेव परं वस्तु नैतस्माद्विद्यते परम् ।
एतदेव विजानीध्वमेतद्वः परमं तपः ॥
एतदेव सदा विप्राःध्येयं परममानसैः ।
एतद्वः परमं ज्ञेयं एतद्वा परमं तपः ॥
एतद्वो जन्मनः कृत्यमेतद्वस्तपसः फलम् ।
एषः वः पुण्यनिचय एष धर्मः सनातनः ॥

एष त्रो मोक्षदाता च एष मार्ग उदाहृतः ।
एष पुण्यप्रदस्साक्षादेतद्वः कर्मणां फलम् ॥
एतदेव प्रशंसन्ति विद्वांसो ब्रह्मवादिनः ।
एषा त्रयी गतिः विप्राः प्राप्यो ब्रह्मविदां सदा ॥
एतदेव प्रशंसन्ति साङ्ख्ययोगं समाश्रिताः ।
एष ब्रह्मविदां मार्गः कथितो ब्रह्मवादिभिः ॥
एवमेव विजानीत नात्र कार्या विचारणा ।
हरिरेकस्सदाध्येयो भवद्भिस्सत्वसंस्थितैः ॥
ओमित्येवं सदा विप्रा पठत ध्यात केशवम् ।
ततो वा श्रेयसः प्राप्तिर्भविष्यति न संशयः ॥
एवं ध्यातो हरिस्साक्षात्प्रसन्नो वो भविष्यति ।
सदा ध्यात हरिं विप्रा यदीच्छा प्राप्तुमीश्वरम् ॥
एष संसारविभवं व्यपोहति जगद्गुरुः ॥
स्मरध्वं सततं विष्णुं पठध्वं त्रिशरीरिणम् ।
मनसस्संयमनं विप्राः कुरुध्वं यत्नतस्सदा ॥
शुद्धेऽन्तःकरणे विष्णुः प्रसीदति तपोधनाः ।
ध्यात्वा मां सर्वयत्नेन ततो जानीत केशवम् ॥
उपास्योऽयं सदा विप्रा उपायोऽस्मि हरेःस्मृतौ ।
उपायोयं मया प्रोक्तो नात्र सन्देह इत्यपि ॥
अयं मायी सदा विप्रा यतध्वमघनाशने ।
यथा वो बुद्धिरखिन्ना शुद्धा भवति यत्नतः ॥
तथा कुरुत विप्रेन्द्राः यथा देवः प्रसीदति ।
एवमुक्तास्ततस्सर्वे यतयः पुण्यशालिनः ॥
यथावदुपगृह्णाना निरस्ताखिलसंशयाः ।
एवमेवेति ते विप्राः प्रोचुः प्राञ्जलयो हरिम् ॥

छिन्ना नः संशयाः सर्वे गृहीतोऽर्थः स तादृशः ।
एतदर्थं समायाता वयमत्रतवालयम् ॥
संगमाद्युवयोस्सर्वो नष्टो मोहो महानिह ।
यथा वदसि देवेश तथा नः श्रेयसे परम् ॥
यथाऽऽह भगवान् रुद्रो यताम: सततं हरौ ।
इति ते मुनयः प्रीताः प्रणेमुः केशवं हरिम् ॥'

इत्येकनवतितमेऽध्याये मुनीन् प्रति साक्षादेव शिवोपदेशेन भगवदधिकतत्त्वान्तरा भावं तन्मुमुक्षुध्येयत्व सर्वकर्माराध्यत्व मुक्तप्राप्यत्व प्रणववाच्यत्वादिकमाविष्कृत्य भगवत एव मुख्योपास्यत्वं शिवस्य भगवदुपासन हेतुतयोपास्यत्वं चाभिधाय मुनीनां संशयनिवृत्तिपूर्वकं यथोपदेशेऽनुष्ठानोद्योगमभिधायोत्तरोत्तरस्मिन्नध्याये भगवत्परत्वं बहुकृत्वापि पर्यंत्रेदितव्यमिति न्यायेन स्तोत्रव्याजेन विशदीकृत्य

'अवश्यं मनसा ध्यात केशवं भक्तवत्सलम् ।
श्रेयः प्राप्तुं यदीच्छन्ति भवन्तः संशित व्रताः ॥'

इत्युक्तमेवार्थमावश्यकतोक्तिपूर्वकं दृढीकृत्योपसंहृतम् । अत्र याथात्म्यं जिज्ञासून्मुनीन्प्रति स्वस्य भावः शेषत्वाभिव्यञ्जकमुद्राविधानेन क्रियातो याथात्म्यं दर्शयित्वा वाचाऽपि भगवत्स्तोत्रव्याजेन तदेव स्पष्टीकृत्य साक्षादुपदेशेनापि भगवदुत्कर्षस्य च स्वस्मिन् सदवरत्वस्य च शिवेन प्रतिपादनात् , भगवत्कृत शिवोपासनमवतारदशाभाविमुनिजननमस्कारवद्धर्म संस्थापनार्थमवतीर्णस्य कृत्यमिव सिध्यतीति तत्सामान्यादितरेषु तथात्वमिति न्यायेन यत्र यत्र भगवता शिवोपासनं कृतं तत्र तत्रानयैव रीत्या नेयमिति न भगवत्कृतोपासन बलाच्छिवस्य तदपेक्षयोत्कर्षः सिध्यतीति दिक् ।

ननु शिवकृतभगवत्स्तोत्रे —

'अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥

नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥

त्वदुपासाजगन्नाथ सैवास्तु मम गोपते ।
यश्च त्वां द्वेष्टि देवेश स मां द्वेष्टि न संशयः ॥

शिवनारायणयोरभेद प्रतिपादनात् ।

'शङ्करोऽपि सदा देव सदा शङ्करनामवान्'

देना भगवत्यपि शिवनाम निर्वचनदर्शनादुभयोरेकनामत्व प्रतिपादनाच्चा-
सिध्यतीति चेत् - न । 'अहं त्वं सर्वगो देवे'ति सर्वगत्वादनन्तस्य

'स एवाहमवस्थितः ।
मत्तस्सर्वमहं मयि सर्वं सनातन ॥'

प्रह्लादवाक्यगताभेदव्यपदेशवदन्तर्यामित्वनिबन्धनत्वावसायात् । एवं हि तस्य
रणस्य सार्थक्यं हेतुसमर्पकत्वात् । अन्यथा

'यदा सिध्यश्च वर्तेत यच्च भावि जगत्पते ।
सर्वं त्वं देवदेवेश विना किञ्चित्त्वया न हि ॥

नापि सर्वाभेद सिध्यापत्तेः । न चैवं विशिष्य 'अहं त्वं सर्वगो देव'त्युक्तेः
प्रयोजनमिति वाच्यम् । वसूनां पावकोभवात् इन्द्रो देवेश्वरो भावात
त्थस्सर्ववृक्षाणामितिवद्विशेषाभिव्यक्ति प्रतिपादनार्थत्वात् । न च रुद्राणा-
मीत्यनेन चरितार्थे पुनरुक्तेः किं प्रयोजनमिति वाच्यम् । पावकेन्द्राद्यभि-
यपेक्षयातिशयिताभिव्यक्त प्रतिपादकतयोपपन्नत्वात् । शङ्करादिनाम निर्व-
तु 'मनान्मुनिरेवावेश्य यतनाद्यतिरुच्यत' इति मुन्यादिना मुनिवचनवदुप-
नामैक्यस्योपदेशस्तथाभेद साधकः 'घनसारश्चन्द्रसंज्ञ' इतिवद्भेदेऽप्युपपत्तेः ।

वस्तुतस्तु सर्वस्य भगवतः शिवान्तर्यामित्वेन तत्स्वरूपस्य विशेष्यत्वात्
न्नाम्नां शिवशरीरक भगवन्नामत्वमादाय तान्येव मम नामानीति निर्वाह्यम् ।
महत्वस्यार्थ महत्वीनिबन्धनतया 'यद्यत् विभूतिमत्सत्वमि'ति न्यायेन तादृशा-

नामर्थानां भगवदभिव्यक्तिमत्वेन यानि लोकमहान्त्यपीत्यपि व्यपदेश उपपद्यते। एतेन नारायणादिनाम्ना साक्षादेव शिवनामत्वमनेन वचनेन बोध्यत इत्यल्प जल्पितम्।

**वेदान्तविजयकृतस्तु**-लोक्यतेऽनेनेति लोकः। प्रमाणं यानि त्वदाभि-धायकतया प्रमाण सिद्धानि परतत्त्व गमकानि च भवन्ति तान्येव ममनामानि तानि ईश्वरमहेश्वरपरमेश्वरे महादेवशिवादीनि। अत्र भगवन्नामत्वमहत्त्वरूप विशेषणद्वयविशिष्टेतर व्यवच्छेदकेनावधारणे नाप्युभय विशेषण विधुरान्निर्व्या वर्त्यते।

'उग्रो भस्मधरो नग्नो कपालीति शिवस्य च'

इति वचनविरोधात्। एवं चैकैक विशेषणयुक्तस्य व्यवच्छेद्यत्वे वाच्ये महत्वा विशेषणता 'त्वदीयं नाम मे नास्ती'त्येवं केवल भगवतीयत्व विशेषण एव अतो व्यवच्छेदेन प्राकरणिक भगवत्प्रशंसाया असिद्धेः। भगवतस्तोत्रे रुद्रनामदर्शनेन जनिताया विवेकिन् साधानिरास्तेस्याहेतुत्वात् व्यवच्छेदस्यैवोक्त प्रधान प्रतिपाद्य-तया स्वनामसु केषांचित् भगवत्सम्बन्ध प्रतिपादनमात्रे तात्पर्यासिद्धेश्च। केवल महत्वविशेषणवतो व्यवच्छेदात् मदीयमहानामसु त्वदनभिधायकं किमपि नाम नास्तीत्यर्थः।

ननु 'यानि तत्र नामानि यानि च महान्ति एतान्युभयविधाध्येन मम नामानीत्यर्थः किं न स्यात्? यच्छब्दान्तर नामानिति पदान्तरयोरध्याहारो न स्यात्। 'येनसारश्चन्द्रमस' इतिवत् भगवन्नाम्ना कार्त्स्न्येन रुद्रनामत्वे विधानं किं न स्यात्। विधिशक्त्याकर्षक प्रकरणाध्याहारचलनैः न स्यात्। एवकारेण हि विधिशक्तिराकृष्टव्यवच्छेदविषयं नीता। प्रकरणं च भगवत्परत्वपरम्। त्वदी-यान्यपि मम महान्त्यपि, ममेत्यत्राध्याहारमत्ता एव नामान्येवेत्यन्वये स्थानचलनं एवमनेन वचनेन रुद्रेणैव शिवादिनाम्ना भगवतीयत्वं मम समर्भितमित्याहुः।

तस्मा'दहं त्वं सर्वगो देवे'त्यादीनि न शिनारायणाभेद प्रतिपादकानि। उत्तरस्मिन्नध्याये शिवस्यापरत्व प्रतिपादनमेवं सुघटितमेव भवति। तदेवमन्यत्र

वृद्धनं भगवत उपासकत्व जनितापकर्ष परिहारस्त्वप्यवसान इति न भगवतो ब्रह्मत्वसिद्धिः ।

यदुक्तं ब्रह्मरुद्रयोर्ब्रह्मशैवपुराणागमादिषु परब्रह्म भगवत्प्रसिद्धिः यथा सृष्टिसंहारादिरूप जगद्व्यापारादित्यादिदैवतान्तरापेक्षयाऽतिशयितात् परब्रह्मा-भिव्यक्तिभेदादुपपानीया तथा विष्णोरपि तादृशप्रसिद्धः पालनरूपजगद्व्यापारार्थात् ब्रह्माभिव्यक्तिभेदोपपादनाय इति — तदसङ्गतम् — ब्रह्मरुद्रयोः कर्मवश्यत्व-ग्राहक प्रमाणबलात् तथात्वेऽपि भगवतः परब्रह्मभावे बाधकाभावात् । तस्यैव सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इत्यकर्मवश्यत्व श्रवणात् ।

यत्तु जननमरणभयक्रोधशोकाज्ञानादिरूपसांसारिकदोषाणां भारतरामा-यण विष्णुपुराणादिष्वेव प्रतिपादनात् परब्रह्मभाव इति । तत्र न तावत् जननं स्व ब्रह्मभावबाधकं भवितुमर्हति । तस्य कर्मकृतत्वात् । तत्र हि श्रुतस्तावत् प्रमाणं ' अजायमानो बहुधा विजायत । तस्य धीराः परिजानन्ति योनिमि'ति ॥

' नन्वजायमान ' इत्यनेन स्वरूपस्याजत्वं शरीरद्वारा बहुभवनं चोच्यत इति चेत् - न । स्वरूपनित्यत्वस्य देहद्वारा जन्मनो जीवानामपि समानतया ' तस्य धीराः परिजानन्ति योनिमि'त्यनन्तरवाक्यप्रतिपन्नवैलक्षण्यानुपपत्तेः । सर्व साधारणलोकविदित जन्मप्रकारवैजात्ये सत्येवैवं वक्तुं युक्तम् । न हि देव-दत्तस्य जन्मधीरैवमपरिज्ञायत इति वक्तव्यम् । यज्ञदत्तजन्मनो वैलक्षण्याभावात् । स्वरूपेणाजस्य विचित्रजगद्रूपेण भवनमुच्यते । तद्धि जीवेषु न सम्भवतीति चेत् - न । ' सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्यदास्त ' इति पूर्वानुवाकेऽभिधाय ' तस्य त्वष्टा विदधद्रूपमेति ' इत्यस्मिन्नप्यनुवाके जगद्रूपेण बहुभवनस्योक्तत्वात् । एवमर्थान्तरपरत्वे सत्यानर्थक्य प्रसङ्गात् । अस्याः श्रुते ' रजायमान ' इति कर्महेतुसुखाद्यर्थप्राकृतदेहसङ्गतिरूप जन्मनिषेधः । विजायत इतीच्छाहेतु जगद्रक्षणार्थ प्राकृविग्रहाधिष्ठान रूपजन्मविधिरित्येवार्थोऽभ्युपगन्तुं युक्त इति भगवज्जन्मनो कर्मकृतत्वमनया श्रुत्य बोध्यते । इममर्थमुपबृंहणान्यप्यनु-रुन्धन्ति । **भगवद्गीतासु** —

'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥'

इति कर्मकृतत्वाभावः प्रतिपाद्यते। भूतानामीश्वरोऽपि सन्निति परमेश्वरस्वभावोक्तेः। धर्मग्लानिकालस्य स्वावतारकालत्वोक्तेश्च। न हि जननस्य कर्मकृतत्वे परमेश्वरभावः संगतो न वा, धर्मग्लानिकालत्वं कर्मपरिपाककालत्वात्। एवं साधुपरित्राणादेः प्रयोजनत्वकीर्तनमपि। 'सर्वं वाक्यं सावधारणमि'ति न्यायेन तस्यैव प्रयोजनतात्पर्यकमिति कर्मफलानुभवस्य प्रयोजनत्वं व्यावर्तयतीत्यकर्मवश्यत्वसिद्धिः। तथा भगवज्जन्मरहस्यज्ञानस्य मुक्तिहेतुत्वोक्तेरपि तथात्वे प्रमाणम्। देवदत्तादिजन्मसाधारणस्य तस्य मुक्तिसाधनत्वासम्भवात्। **संभवपर्वणि** पञ्चमेऽध्याये —

'अनुग्रहार्थं लोकानां विष्णुर्लोकमतस्तु सः।
वसुदेवात्मादेवक्यां प्रादुर्भूतो महायशाः ॥
अनादिनिधनो देवः साक्षाल्लोकेश्वरः प्रभुः।
आदेरादिस्समस्तानां स कर्ता न कृतः प्रभुः ॥
अव्यक्तमक्षरं ब्रह्म प्रधानं निर्गुणात्मकम्।
आत्मानमव्ययं चैव प्रकृतेः प्रभवं परम् ॥
पुरुषं विश्वकर्माणं सत्ययोगं ध्रुवाक्षरम्।
अनन्तमचलं देवं हंसं नारायणं प्रभुम् ॥

धातारमचलं नित्यं यमाहुः परमव्ययम् ।
पुरुषः स विभुः कर्ता सर्वभूतपितामहः ॥
धर्मसंस्थापनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ॥' इति ।

ऽध्याये फल्गुनं प्रति द्रोणः—

'एकस्त्वाधिको लोके यो हि वृष्णिकुलोद्भवः ।
कृष्णः कमलपत्राक्षः कंसकालीयमर्दनः ॥
स जेता सर्वलोकानां सर्वप्रहरणायुधः ।
नैतावताऽहं ते पार्थ भवाम्यनृतवागिह ॥
तदधीनं जगत्सर्वं तत्प्रलीनं तदुद्भवम् ॥
तत्पदं न विजानन्ति ब्रह्मेशानादयोऽपि च ॥
तन्नाभिप्रभवो ब्रह्मा सर्वभूतानि निर्ममे ।
स एव कर्ता भोक्ता च संहर्ता च जगन्मयः ॥
स एव भूतं भव्यं च भवच्च पुरुषः परः ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥
प्रादुर्भवति योगात्मा पालनार्थं स्वलीलया ॥' इति ।

चतुर्दशेऽध्याये —

'स निश्चयार्थं कार्यस्य कृष्णमेवं जनार्दनम् ।
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् ॥
अप्रमेयमनाद्यन्तं कामात् जातमजं नृषु ॥' इति ।

मेऽध्याये —

'नैव गर्भत्वमापेदे न योन्यामवसत् प्रभुः ।
आत्मनस्तेजसा कृष्णः सर्वेषां कुरुते गतिम् ॥' इति ।

भागवते —

'जन्म कर्म च विश्वात्मन्नजस्याऽकर्तुरात्मनः ।
तिर्यङ्नृषु च यादस्सु तदत्यन्तविडम्बनम् ॥'

'न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे ॥'

इत्यादि - विस्तरभयात् न लिख्यन्ते ।

मरणमपि हेयं न भगवति विद्यते —

'प्रदर्शातप्ततपसामपि तृप्तदृशां नृणाम् ।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥'

इति भागवद्वचनबलादन्तर्धानस्य प्रतीयमानत्वात् ।

**स्कान्दे** च 'पृथिवीलोकसंत्यागो देहत्यागो हरेः स्मृतः ।
नित्यानन्दस्वरूपत्वादन्यत् नैवोपपद्यते ॥
दर्शयेत् जनमोहाय सदृशीं मृतकाकृतिम् ।
नटवत् भगवान्विष्णुः परज्ञानाकृतिः सदा ॥ इति ।

तथा 'जगतो मोहनार्थाय भगवान् पुरुषोत्तमः ।
दर्शयन् मानुषीं चेष्टां तथा मृतकवद्वपुः ॥
करोति कृतकान्नास्य मृत्याभावान्महात्मनः ।
नाऽयं दशरथाज्जातो न चापि वसुदेवतः ॥
नास्याऽज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभौ ।
प्रादुर्भूतश्चिदानन्दशरीरो राघवः स्वयम् ॥
स्तम्भाद्वा नरदेहाद्वा नैव स्यात्प्राकृता तनुः ।
कृष्णो ह्ययुक्तदेहोऽपि त्यक्तदेहवदेव च ॥
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ॥'

इति प्रतिपादितम् ।

'अनित्यत्वदेहहानिदुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तः तदभावो हरेस्सदा ॥
तदन्येषां तु सर्वेषां नाशाः केचित् भवन्ति हि ॥'

ातं वाराहे । एवमन्येष्वपि पुराणेषु प्रमाणान्यनुसन्धेयानि ।

एतेन हेयेषु जननमरणादिषु अपि कर्मकर्तृत्वादिति कस्यचित् प्रलपितम् । कथं तर्हि शोकादिकमवतारेषु दृश्यमानत्वमुपपद्येत । न चाभिनयपैद्धत्वेनाविरोधवर्णनम् । तथा सति रामावतारे —

'न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च ।
एतदेवानुशोचामि वयोऽस्याः ह्यतिवर्तते ॥'

वचनानां, कृष्णावतारे सौभद्रवधवृत्तान्तवर्णनगततदीयशोकाज्ञानादिवचनानां ात्वापत्त्या ,

' .... .... .... सत्यवाक्यो दृढव्रतः ।
यदि मे ब्रह्मचर्यं स्यात्सत्यं त्वमधितिष्ठति ॥'

ानेकवचनविरोधापत्तेरिति चेत् - न —

'कालस्य हि च मृत्योश्च जङ्गमस्थावरस्य च ।
ईशिता भगवानेकः सत्यमेतद् ब्रवीमि वै ॥
ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः ।
कर्माण्यारभते कर्तुं किं नाश इव दुर्बल ॥
तेन वञ्चयते लोकान्मायायोगेन केशवः ।
एतमेव प्रपद्यन्ते नैते मुह्यन्ति मानवाः ॥
कृत्वा भारावतरणं पृथिव्यां पृथुलोचनः ।
मोहयित्वा जगत्सर्वं जगत्स्वस्थानमुत्तमम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते ।
लीलाजगत्पतेस्तस्य छन्दतः सम्प्रवर्तते ॥

धर्मसेतुं च बध्नामि चलिते च युगे युगे ।
तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ॥
पुनस्त्वाहं देवयोनौ वर्तामि भृगुनन्दन ।
तदेह देववत्सर्वमाचरामि न संशयः ॥
तथा गन्धर्वयोनौ तु वर्तामि भृगुनन्दन ।
तथा गन्धर्ववच्चेष्टा सर्वान् चेष्टामि भार्गव ॥
नागयोनौ यदा चैव तदा वर्तामि नागवत् ।
यक्षराक्षसयोनौ तु यथावद्विचराम्यहम् ॥
मानुष्ये वर्तमाने तु कृपणं याचितं मया ।
न च ते जय सूमोहाद्वचो गृह्णन्ति मोहिताः ॥'

इत्याद्युद्योगपर्वाश्वमेधिकपर्वादिवचनैरमिनयमात्रसिद्धत्वाङ्गीकारात्। न चैवं शोकाज्ञानादिवचनानामनृतत्वापत्त्या 'सत्यवाक्यो दृढव्रतः' इत्यादिप्रमाणविरोधः स्यादिति वाच्यम् । उक्तप्रमाणबलेनावतारदशासु परत्वग्रहणार्थवचनव्यतिरिक्तविषयत्वस्य सत्यवाक्य इत्यादेः कल्पनात् । अन्यथा

'अपहृतपाप्मा दिव्यो देव एको नारायणः ।
तत्र यः परमात्मा तु सन्नित्यो निर्गुणः स्मृतः ।
स तु नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥
न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा ।
कर्मत्वस्य विरोधोऽसौ मोक्षबन्धैस्स युज्यते ॥'

इत्यादिबहुप्रमाणव्याकोपप्रसङ्गः । 'सत्यसन्ध' इत्यादिवचनविरोधकथनं तु भ्रान्तिविलसितम् । सन्ध शब्दस्य प्रतिज्ञात्वपरत्वात् । अतः शोकादेरभावात् जननस्य प्रादुर्भावरूपत्वं, न जीवत्वं भगवतस्तद्बलात् वक्तुं शक्यम् ।

यदुक्तं — 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी'ति गीतासु 'मुक्त्यर्थं शिवं प्रपन्नोऽस्मी'ति कृष्णवचनात् कृष्णस्य जीवत्वमेव गम्यत इति — तदसम्बद्धम् । एतदध्यायान्ते —

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥'

इति कृष्णस्य बद्धमुक्तोभयावस्थजीवविलक्षणत्वेन प्रतिपादनविरोधापत्तेः । एतेन 'आद्यं पुरुषमि'त्यत्र ।

'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते'

इत्यारभ्य 'यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः' इति य उक्तः तस्यैव परामर्शात् शिव एव कथ्यत इति गलहस्तितम् । तस्यैव 'यस्मात् क्षरमि'त्यादि-पर्यालोचनया भगवत्परत्वावसायात् । ईश्वरशब्दानुसारात् रुद्रपरमिति चेत्-न । निरुपाधिकैश्वर्यस्य भगवद्धर्मत्वात् । 'ईश्वरः प्रतिरीशिते'ति निघण्टुनुसारात् ।

'ग्रामे ग्रामे ईश्वर आज्ञापयती'ति महाभाष्यकारप्रयोगात् ।
'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः'

इति जीवेऽपि प्रयोगाच्च । प्रभुमात्रशक्तित्वाङ्गीकारेण 'यस्मात् क्षरमतीतः' इति सङ्कल्पार्थनिखिलजगत्पतित्वमादाय तस्यापि भगवत्परत्वात् । अन्यथा गीतास्वेव सकलजगत्कारणत्वादिप्रतिपादनविरोधप्रसङ्गः । न च शिवोऽहं भावनया कृष्णेन तदुपदिष्टमिति वक्तुं युक्तम् । एकदेशस्य किंचित्पदस्वारस्यानु-सारेण महावाक्यस्यान्यथाकारणस्यायोगात् । 'तमेव चाद्यमि'त्यादेः कथं सङ्गतिरिति चेत् - न । तमेव चाद्यं पुरुषं प्रपद्ये शरणमुपगम्य ईप्सत अज्ञान-निवृत्त्यादेः कृत्स्नस्यैतस्य साधनभूताप्रवृत्तिः । पुराणि पुरातनानि प्रसृता पुरातनानां मुमुक्षूणां प्रवृत्तिः । पुराणादिपुरातना मुमुक्षवो हि मामेव शरण-मुपगम्य निर्मुक्तबन्धाः सञ्जाताः इत्यर्थ इति भाष्यकारैर्गीताभाष्ये वर्णितया रीत्या सुसङ्गतत्वात् । शङ्करस्तु 'कथं परिमार्गितव्यमित्यत्राह तमेव चेति । यः परशब्देनोक्तः आदौ भवमाद्यं तं पुरुषं प्रपद्य इत्येवं परिमार्गितव्यमि'ति व्याचख्यौ ।

यदपि 'यस्मिन् गतानि निर्वर्तन्ति भूय' इत्युक्त्या 'ईश्वरस्सर्वभूतानामि'त्यादि 'तत् प्रसादात्परं शान्तिस्थानं प्राप्स्यसि शाश्वतमि'त्यन्तवाक्यप्रतिपाद्यमानः पुरुषशब्देनोच्यत इति गम्यत इति—तदप्याशामात्रविजृम्भितम्—'सर्वस्य चाहं हृदि सन्निविष्टः' इत्यनेन 'हृद्देशेऽर्जुन तिष्ठती'त्यस्यार्थस्य भगवन्निष्ठत्वावगमेन ।

'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥'

इति । पूर्वत्र 'मन्मना भवे'त्युत्तरत्र भगवत एव प्रस्तुतत्वेन च तस्यापि तदतिरिक्तपरत्वस्य वक्तुमयुक्तत्वात् । न चेश्वरशब्दानुसारात् तथार्थवर्णनमिति युक्तम् । कृत्स्नजगत्पतित्वमादाय भगवत्त्वस्य प्रवृत्तिसम्भवात् । न चेश्वरशब्दरूढिभङ्गापत्तिः । उपक्रमोपसंहारपर्यालोचनया भगवत्परत्वावगमेन तदनुसारेण रूढिभङ्गस्यादोषत्वात् । न चेश्वरशब्दरूढ्यनुसारादन्तर्यामिपर्यन्तत्वं 'मन्मना भवे'त्यादेरिति वाच्यम् । वेदान्त सापेक्षत्वेनापर्यवसानवृत्तेर्विलम्बितत्वेन जघन्यवृत्तित्वाविशेषात् 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इत्यादिष्वावृत्ताऽस्मच्छब्दस्य जघन्यवृत्तिकल्पनापेक्षया रूढिभङ्गस्यैव युक्तत्वात् ।

एतेन 'दर्शयामास पार्थाय परमं रूपमैश्वरमि'ति दर्शनात् भगवता प्रदर्शितं रूपं शैवमित्यल्पजल्पितं निरस्तम् । 'पश्य मे पार्थ रूपाणि' 'मम देहे गुडाकेश' 'अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा',

'पश्यामि देवान् तव देव देहे'

'अनेकबाहूदरवक्त्रनेत्र

पश्यामि त्वा सर्वतोऽनन्तरूपम् ।'

'दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदम् ।'

'गन्धर्वयक्षासुरसिद्धसङ्घा: वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥' 'रूपं हत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ॥' 'वक्त्राणि ते त्वरमाणा शन्ति' 'तथा तवामी नरलोकवीराः' 'विशन्ति वक्त्राण्यभिविज्वलन्ति' तवापि वक्त्राणि समृद्धवेगाः' 'लेलिह्यसे ग्रसमानस्समन्ताल्लोकान्समग्रान्वदनै-र्ज्वलद्भिः' 'आख्याहि मे को भवानुग्ररूपः' 'एवं रूपं शक्योऽहं नृलोके ष्ट्वा रूपं घोरं ईदृङ्ममेदम् ।'

'सुदर्शनमिदं रूपं दृष्टवानसि यन्मम'

त्येतेषु वचनेषु तस्य रूपस्य भगवत्सम्बन्धित्वावगमेन तदतिरिक्तसम्बन्धित्वा-गादीश्वरशब्दस्य पूर्वोक्तरीत्या भगवत्यपि वृत्तिसम्भवाच्च ।

अपि च पूर्वस्मिन्नध्याये, 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' ति, अस्मिन्नपि 'एवमेतद्यथार्थत्वमात्मानं परमेश्वरम्' इति च दर्शनेन ऐश्वर-रूपस्य कृष्णसम्बन्धित्वमेव युक्तम् ।

'दृष्ट्वेदं मानुषं रूपं न च सौम्य जनार्दन'

त्युच्यमानावतारदशाकृति मनुष्यसदृशाकृतिविलक्षणरूपप्रदर्शनार्थत्वेनैश्वरमित्यस्य योजनत्वात् । न च 'यो मामि'त्यत्र यथार्थत्वमित्यत्र वाऽन्तर्यामिपर्यन्तत्व-श्वरशब्दरूढ्यनुसारात् कल्प्यते । एवं 'पश्य मे पार्थ रूपाणि' इत्यत्रापि । द्वा 'पश्य मे पार्थ' इत्यादौ षष्ठ्याः 'सप्तदशारत्निर्वाजपेयस्य यूप' इत्यत्रेव रम्परासम्बन्धमादायोपपत्तिः कल्प्यत इति वाच्यम् । अनेकेषां शब्दानां थान्यवृत्तिकल्पनापत्तेः । 'तेनैव रूपेण चतुर्भुजेन सह बाहो भव विश्वमूर्ते' त्युच्यमानरूपप्रतिसम्बन्धिनो रूपस्य भगवदन्यसम्बन्धित्वायोगेन 'पश्य मे ार्थ' इत्यादौ षष्ठ्या परम्परासम्बन्धार्थत्वकल्पनाया अनुन्मेषाच्च ।

'सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥'

इत्यर्जुनदृष्टरूपसम्बन्धिनो,

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥'

इति दर्शनकर्मत्वोक्तेः । मामित्येतदन्तर्यामिपरमिति चेत् तथाकल्पनस्य जघन्यत्वात् । अपि च,

'एवमेतद्यथार्थत्वमात्मनः पुरुषोत्तमम् ।
द्रष्टुमिच्छामि ते रूपम् .... .... ॥'

इति वचनेन भगवतः पूर्वप्रतिपादितप्रकारेण अर्जुनदिदृक्षाविषयत्वमवगम्यते । तथा च पूर्वं 'अहं सर्वस्य प्रभवः' इत्यादिना ।

'विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्'

इत्यन्तेन प्रतिपादित एकार्थो विग्रहविशेषानुबन्धितया प्रत्यक्षीक्रियत इति तत्र कृष्णस्यैव सर्वाधारत्वादिप्रतिपादनात् तदीयं रूपमिति निश्चीयते । न च तत्रान्यपरत्वशङ्का —

'आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स वयं चैव ब्रवीषि मे ॥'

इति भगवतोच्यमानस्यार्थस्य नारदाद्युक्तस्य चार्थस्य चैकत्वप्रतिपादिनात् । भगवतः सर्वोत्कर्षः प्रतिपादित इत्यस्यार्थस्यारण्यपर्वगतेन —

वासुदेव वसूनां त्वं वासवो वरदाऽच्युत ।
देवदेवोऽसि देवानामिति द्वैपायनोऽब्रवीत् ॥
पूर्वं प्रजानिसर्गे त्वामाहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ॥
विष्णुः त्वमसि सर्वज्ञः त्वं यज्ञो मधुसूदन ।
यष्टा त्वमेव यष्टव्यो जामदग्न्यो यथाऽब्रवीत् ॥

ऋषयस्त्वां क्षमामाहुस्सत्यस्त्वं पुरुषोत्तम ।
यज्ञोऽसि यज्ञसम्भूतः काश्यपस्त्वां यथाऽब्रवीत् ॥
साध्यानामपि देवानां वसूनामीश्वरेश्वर ।
लोकभावन लोकेश यथा त्वं नारदोऽब्रवीत् ॥

पदीवाक्यजातेनात्रगम्यमानत्वात् । किं च ,

ततस्स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान् ददृशेऽयं धनञ्जयः ॥

**श्वमेधिके** कृष्णोदङ्कसंवादेऽर्जुनदृष्टस्य रूपस्य वैष्णवत्वोक्तिः तत्पक्षे-
ना स्यात् ।

यदत्रोक्तं **शिवादित्यमणिदीपिकायाम्** —

' द्रष्टुमिच्छामि ते रूपमैश्वरं तन्निदर्शय '

क्रमगतैश्वर्यशब्दानुरोधात् विष्णुशब्दस्य भवादिनामाष्टकमध्यगतत्वेन च
त्वसम्भवात् न शैवत्वं प्रतिक्षेप्तुं शक्यमिति — तदसारम् —

' द्रष्टुमिच्छामि ते रूपं वैष्णवं त्वं निदर्शय '

बहुषु कोशेषु दर्शनात् । ऐश्वर्यमिति पाठे वा ईश्वरः पतिरीशितेति
ण्येन , अन्यत्र प्रभुमात्रशक्तेन भगवत्यपि बहुधा प्रयुक्तेन तेन शब्देन
साधारणतया सकललोकशब्दस्य विष्णुशब्दस्यापलपितुमयुक्तत्वात् ।
नामाष्टकमध्यपरिगणनस्य क्रतुपराग्न्यादिशब्दवत् गौणत्वेऽप्युपपन्नत्वात् ।

यदपि — ' तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् ' इत्युत्तरत्र
रित्यनेनैव वैष्णवत्वे सिद्धे वैष्णवमित्यस्य शैवत्वपरतयैवापौनरुक्त्यं वक्तव्य-
— तदसम्बद्धम् । अवतारदशावर्तिमानुषरूपविलक्षणरूपत्वस्फुटीकरणार्थं-
वैष्णवशब्दस्यार्थवत्त्वसम्भवे प्रसिद्धिभङ्गस्यायुक्तत्वात् । अतः कृष्णप्रदर्शि-
रूपस्य शैवत्वप्रसाधनबलात् तत्तदतिरिक्तत्वप्रतिपादनप्रत्याशावकाशम् ।

यदुक्तं - गीतार्थश्रवणानन्तरमपि यावज्जीवमर्जुनस्य शिवभजनपरत्वेन वर्णनात् कृष्णविषयपरब्रह्मभावमुक्त्यर्थप्रपदनीयत्वपरगीतावचनानां शिवपर्यन्ततात्पर्यं कल्पनीयमिति—तत्तुच्छम्—यावज्जीवं शिवभजनपरत्वस्यासिद्धेः। सिद्धावति-तीव्रमुमुक्षाभावे तीव्रतरैहिकफलाभिलाषेण च पाशुपतास्त्रप्रदानमहोपकारकरणेन वा तद्भजनोपपत्तेः।

यदुक्तमनुगीतावचनान्यपि कार्त्स्न्येन गीतासु भगवद्वचनानां शिवपर्यन्ततात्पर्यगमकानीति — तदयुक्तम् — सिद्धपुरुषकाश्यपसंवादे योगोपदेशदशायां,

'यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत्।
तदाऽस्य केशवे भक्तिस्त्रैलोक्यस्यापि यः प्रभुः॥'

इत्यनेन 'योगिनिष्पन्दमात्मानं सम्यक्संपश्यते तनौ' इति पूर्वोक्तरीत्या देहवियुक्त परिशुद्धात्मस्वरूपज्ञाने तस्य भगवच्छेषतैकस्वभावत्वात् भगवद्भक्त्यभिवृद्धिर्भवती-त्यर्थकेन नारायणयोगिध्येयत्वस्फोरणात्। **ब्रह्मणि ब्राह्मणसंवादे** ज्ञानयज्ञ-निरूपणप्रस्तावे —

'ऋचश्चाप्यत्र शंशन्ति नारायणविदो जनाः।
नारायणाय देवाय यदबध्नन् पशून् पुरा॥
तत्र सामानि गायन्ति तानि चाहुर्निदर्शनम्।
देवं नारायणं भीरु सर्वात्मानं निबोध मा॥'

इत्युक्ते, **ब्रह्मबृहस्पत्यादिसंवादे** —

'विष्णुरेवाऽदिसर्गेषु स्वयम्भूर्भवति प्रभुः।
एवं हि यो वेद गुहाशयं प्रभुं नरः पुराणं पुरुषं विश्वरूपम्।
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान्बुद्धिमतीत्य तिष्ठति॥'

इति वचनाच्च भगवत्परत्वावेदनेन शिवतात्पर्यगमकत्वासम्भवात्। यदपि,

'न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः।
परं हि धर्मं कथितं योगयुक्तेन तन्मया॥'

प्रमनसा कथितत्वोक्तिपूर्वकं बहिर्मनसा वक्तुमशक्यमित्युक्त्या गीतार्थस्य
भाव भावनया प्रवृत्तित्वमवगम्यत इति – तदप्यसङ्गतम् – अर्जुनस्य
विस्मरणवत्पुनरुपदेक्ष्यमाणार्थविस्मरणं मा भूदिति श्रद्धावकल्यनिवृत्त्यर्थं
तमार्थत्वज्ञापनाय तथोक्तेरुपपन्नत्वेन स्वार्थतात्पर्यकत्वाभावात् । न हीदानीं
गो विस्मृतः ; येनेदानीमशक्यत्वं स्यात् तथा स्वीकरिष्यमाणोपदेशानु-
तः । न च सिद्धपुरुषोपदेशबलात् पुनरुपदेशो युज्यत इति वाच्यम् ।
तत एव योगस्याविस्मृतत्वे 'न शक्यम् तन्मया भूय' इत्युक्त्ययोगात् । न
तथा विरोधपदहेतुयोगे 'विस्मृत' इति तथोक्तेस्तात्पर्यमिति वाच्यम् ।
सति ,

'तथापि हि रथस्थस्त्वं श्रुतवानेतदेव हि' इत्युक्तेरसङ्गतत्वापत्तेः । न
शिवाहम्भावसंवलितयोगो विस्मृत इत्यत्र न शक्यमित्यादेस्तात्पर्यतदसं-
लेतमात्रवैषम्योऽपि । वस्तुतस्तु न विस्मरणयोग्यः । इदानीं कात्स्न्येन मयापि
क्तुमशक्य इत्युच्यमाने सोऽर्थ उपदिष्ट इत्यत्र 'तथापि हि रथस्थस्त्वं-
त्यादेस्तात्पर्यमेवं वाच्यम् । अर्जुनकृतप्रश्नेन सुसङ्गत्वाभावापत्तेः । पूर्वोप-
देष्टार्थस्य विस्मृतत्वे कथिते , अस्तु न विस्मरणयोग्यः । इदानीं कात्स्न्येन मयापि
वक्तुमशक्य इत्युच्यमाने हि तेन सङ्गतिः । न तु वृत्तं वर्तिष्यमाणोपदेश-
प्रकारभेदकथने । किं च त्वदीया तत्र ते रूपमैश्वरमिति तदाऽर्जुनेन
शिवाहम्भाववलितत्वं पूर्वोपदिष्टानामर्थानां ज्ञातमेवेति तस्य जिज्ञासाबहिर्भूतत्वात्
तथावक्तुमशक्यत्वोक्तिर्वृथैव ।

अपि चेतरेषामर्थानां यथोपदेशः तथा शिवाहम्भावेनापि तेषामुपदेशः
सम्भवत्येव । शास्त्रजन्यज्ञानमात्रेणोपदेशे साक्षात्कारपूर्वकमुपदेशे वा वैषम्यस्य
दुर्वचत्वात् । न च सिद्धपुरुषोपदेशाभावे विस्मृतत्वं न वक्तुं शक्यम् ।
'तत्त्विदानीं मयोच्यत' इति सन्दर्भतात्पर्यमिति वाच्यम् । तद्बलात् वक्ष्यामीत्यस्या-
ऽदर्शनात् ।

'न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः।
परं हि धर्मं कथितं योगयुक्तेन तन्मया॥
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम्।
यां तां बुद्धिं समास्थाय गतिमग्र्यां गमिष्यसि॥
शृणु धर्मभृतां श्रेष्ठ गदतः सर्वमेव मे।
आगच्छत् ब्राह्मणः कश्चित् शर्वलोकादरिन्दमः॥
ब्रह्मलोकाच्च दुर्धर्ष सोऽस्माभिः पूजितोऽवसत्।
परिपृष्टश्च स तदा यदाऽहं द्विजसत्तम॥
दिव्येन विधिना पार्थ तच्छृणुष्व विचारयन्॥'

इत्येव हि तत्र दृश्यते। न च 'न शक्यमि'त्यनन्तरमन्यत्र श्रुतत्वोक्तौ अशक्यमित्यस्य विस्मृतत्वे तात्पर्यं, अन्यत्र श्रुतत्वोक्तेः तस्योपदेशहेतुत्वे तात्पर्यं कल्प्यत इति वाच्यम्। तस्य विस्मृतत्वतात्पर्ये कैमुतिकन्यायेनार्जुनविस्मरणं सिद्धमिति, तेन विस्मृतत्वे कथिते 'अज्ञश्चाश्रद्दधानश्चे'त्यादिना तन्निन्दाया असामञ्जस्यापातात्। तस्मादतिसावधानेन मनसा उपदिष्टमर्थं कथं विस्मृतवानसीति तथा निन्दावधानस्तुतिपरमेवेदं वचनम्। न चैतावता चित्तैकाग्र्यं पुनरुपदेशकाले नास्तीति वक्तुं शक्यत्वेनान्वयः। मध्यनिवेशदशायां भक्त्यैकाग्र्यस्यान्यथाभावस्य चोक्त्ययोगात्। प्रत्युत युद्धारम्भव्यग्रमनस्कत्वेन तदानीमेव हि चित्तैकाग्र्यभावोऽपि वक्तुं युज्यते। तत एव ह्यर्जुनस्यावधानं ब्रूषे। न च पुनरुपदेशकाले योगयुक्तत्वाभावोक्तेः अर्थतथात्वाभावेऽपि गीतोपदेशकालभावियोगयुक्तत्वांशे तथात्वमस्त्विति वाच्यम्। कृत्स्नगीताशास्त्रपर्यालोचनया श्रीकृष्णस्य परब्रह्मत्वावगमेन तद्विरुद्धयोगयुक्तत्ववर्णनासम्भवात्। न चैतादृशान्यपरवचनगतायोगयुक्तत्वोक्तिर्बहूनां वचनानां गीतोपनिषत्स्थानामन्यथासिद्धिः सम्पादयितुमीष्टे। न च गीतास्वप्येवमुक्त्वा 'ततो राजन् महायोगेश्वरो हरिरि'ति कृष्णवचनेन योगनिष्ठत्वं गम्यत इति वाच्यम्। तस्य योगाराध्यत्वतात्पर्यकत्वात् 'महायोगपरो हरिरि'त्याद्यनुक्त्वा योगेश्वर इत्युक्त्या तदाराध्यत्वपरत्वावसायात्।

यदपि सिद्धपुरुषोपदिष्टार्थश्रुतत्वोक्तिबलात् तदुपदिष्टस्सर्वोऽपि निरुक्त-मार्गः सम्यक् मनसाऽऽलोच्य बुद्ध्या इदमिति निश्चित इत्येतदर्थद्योतकात् स्वात्म .... मनः समारोपित गुरुशिष्यसंवादरूपेतिहासविषयात्, तद्वचनाच्च, श्रीकृष्णेन श्रुतं मतमुपासितं च ब्रह्म अन्यदेव कृष्णादिति प्रतीयते इति तस्य जीवत्वमवगम्यत इति-तदप्यनुपपन्नम्—तत्र प्रतिपाद्यमानपराक्लोकगतिज्ञ महा-महिमशालिसिद्धपुरुषमात्रावगततत्त्वज्ञापनार्थत्वेन, तदुपदेशाश्रवणोक्तेः स्वमनसा निष्कर्षप्रापितोऽयमर्थस्सारतमांश इति ज्ञापनार्थत्वेन 'मनो मे ब्राह्मणं विद्धी'त्युक्ते दृढनिहितोऽयमर्थ इति ज्ञापनार्थत्वे 'अहं गुरुर्महाबाहो मनश्शिष्यं च बुद्धि म' इत्याद्युक्तेश्चान्यथासिद्धत्वेनानेन वचनान्तरबाधपूर्वकं कृष्णस्य जीवत्वनिर्णय-योगात्। किं चावतारदशामर्यादामनुसृत्य योगयुक्तत्वात् युक्तिमात्रात् न जीवत्वं कृष्णस्यैव तद्वचनबलात् सिध्यति।

ननु 'तमेव चाद्यं पुरुषं प्रपद्ये' 'ईश्वरः सर्वभूतानामि'त्यादिषु कृष्णादन्यत् ब्रह्मेति प्रतिपन्नम्। अन्यत्र च कृष्णस्य जगत्कारणत्वादि-प्रतिपादनात् 'कृष्ण एव परं ब्रह्मे'ति प्रतिपन्नमिति संशयात् पृष्टवन्तमर्जुनं प्रति तदन्यतरकोटिनिर्धारकेणोत्तरेण भवितव्यमित्यनया वचोभङ्ग्या स्वातिरिक्तमेव परं ब्रह्म, स्वमहिमवर्णनं तु तदहंभावकृतमिति श्रीकृष्णेन विभावितमिति सिद्ध्यतीत्यवश्यमभ्युपगन्तव्यमिति। तन्न। त्वद्रीत्या —

'विदितं ते महाबाहो संग्रामे समुपस्थिते।
माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम्॥'

इति पूर्वं कृष्णप्रदर्शितरूपेऽपीश्वरत्वं वर्णयतोऽर्जुनस्य सर्वं शिवाहंभावभावनया प्रदर्शितमिति निर्णयो वृत्तः इत्यभ्युपगन्तव्यत्वेन, संशयस्य परतत्वविषयकत्वा-सिध्या गीतोपदिष्टकर्मयोगज्ञानयोगजीवस्वरूपगतविशेषविषयत्वावसायात्। मद्रीत्या तु परतत्वविषयकसंशयो नास्तीति स्फुटमेव। ईश्वरशब्दस्य भगवत्यति सम्भवद्-वृत्तिकत्वात्। यत्रेत्यत्राऽन्यथा तस्य वर्णितत्वाच्च।

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'

इत्येवमाकारकनिर्देशोऽपि 'करिष्ये प्रतिजाने च' 'रामो द्विर्नाभिभाषते' इत्यादिवदुपपद्यते ।

अपि च 'ईश्वरस्सर्वभूतानामि'त्यादिना शिवस्य ब्रह्मत्वप्रतीत्या कृष्णकारणत्वादिनिरूपणात् कृष्णस्य तथात्वप्रतीत्या च संशयात्, प्रश्नेनाऽनुगीतावतरणे —

'तदास्य केशवे भक्तिस्त्रैलोक्यस्यापि यः प्रभुः ।
नारायणाय देवाय यदबध्नन् पशून् पुरा ॥
देवं नारायणं भीरु सर्वात्मानं निबोध मे ॥'

इति नारायणस्य परत्वप्रतिपादनात् कृष्णस्यैव सर्वोत्कर्षः सिध्यति । न च योगयुक्तत्वात् युक्तिबलाज्जीवत्वमपि प्रतीयत इति वाच्यम् । तर्हि निर्धारणापत्तेरनुगीतावचनबलात् कृष्णादन्यदेव ब्रह्मेति सिध्यतीति त्वन्मनोरथास्यापि भङ्गप्रसङ्गात् । न च योगयुक्तत्वाद्युक्तिः कृष्णविषयिणी, सर्वात्मत्वाद्युक्तिस्तु नारायणविषयिणीति न विरोध इति वाच्यम् ।

**शिवानन्दलहर्यां** विष्णुजीवत्वस्थापनप्रकरणे, **भारतसारे** परमशिवपरतात्पर्यवर्णनप्रकरणे चैतेषां वचनानां त्वया उपादानस्योन्मत्तव्यापारत्वप्रसङ्गात् । न च श्रीकृष्णस्य नारायणाभिन्नत्वात् तत्र तदुपादानं युज्यत इति वाच्यम् । तत एव संशयस्याप्यनिवारणमिति .... । तस्मात् गीतोपनिषत्प्रतिपादितपरभावस्य कृष्णविषयकत्वशिवविषयकत्वसन्देहे सति तन्निराकरणार्थमनुगीतावतरणे प्राधान्येन तस्य सन्देहस्य निराकरणतया वैराग्यहेतुमोक्षोपाययोगाद्युपदेशदर्शनवत्परभावविषयकस्फुटतरान्यतरकोटिनिर्धारकवाक्यदर्शनप्रसङ्गात् । उक्तरीत्याऽनुगीतास्वपि संशयस्यैवोदयाच्च न तन्निराकरणार्थत्वेनानुगीतावतारः; किं तु तदतिरिक्तमोक्षोपायादिवैशद्यसम्पादनार्थत्वेनैवेत्यवतारमर्यादामनुसृत्य श्रुतत्वात्, युक्तिपूर्वकं वैराग्यहेतुमोक्षोपायादिकमुपदिशन्नेव नारायणपरत्वमपि 'तदास्य केशवे भक्तिरि'त्यादिना स्फुटीकृतत्वस्य गीतोपदिष्ट परभावस्य च अत्रोपदिश्यमाननारायणपरभावस्य विरोधप्रतिभासे तन्निराकरणार्थमेकविषयत्वमपि ।

'तथापि हि रथस्थस्त्वं श्रुतवानेतदेव हि'

इत्यनेन पूर्वमप्येतदेवोक्तम्। युद्धकाल उपस्थिते —

'धिया तव महाबाहो तस्मादत्र मनः कुरु'

इत्यनेन चेतरावस्थैक्येन सह तत्र स्फुटीकृतवानित्यवगम्यते। अत एव गीतान्ते—

'इत्युक्तवचनं कृष्णं प्रत्युवाच धनञ्जयः।
यदिष्टं कुरु सर्वेषामीश्वरोऽस्मान्प्रपालय॥

नमस्ते सर्वलोकात्मन् नारायण परापर॥'

**इत्यनुगीतासु** परत्वेन प्रतिपादिता नारायणाभिन्नत्वेन स्तुतिः कृष्णस्यार्जुनकृते इममर्थमभिव्यनक्ति। अनुगीतासमाप्त्यनन्तरम्—

'विश्वकर्मन् नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव।
यथा चाहं विजानामि तथा चाहं भवन्मनाः॥

तत्तेजा .... नित्यं हुताशो मधुसूदनः।
रात्रिः क्रीडामयी तुभ्यं मया ते रोदसी विभो॥

त्वयि सर्वमिदं स्थाणु जङ्गमं .... ....।
त्वं हि सर्वं विकुरुषे भूतग्रामं सनातनम्॥

असितं तेऽमला ज्योत्स्ना मनवश्चेन्द्रियास्तव।
प्राणे वायुः सतत .... को यो मृत्युस्सनातनः॥

प्रसादे चाप्यनित्या....र्नित्यं तव महामते।
रतिस्तुष्टिर्धृतिः क्षान्तिस्त्वयि चेदं चराचरम्॥

त्वमेवेह युगान्तेषु निधनं प्रोच्यते ....।
सुदीर्घेणापि कालेन न ते शक्या गुणा मया॥

आत्मा तु परमो वक्तुं नमस्ते नलिनेक्षण।
विदितोऽसि हि दुर्धर्ष नारदादेर्बलात्तथा॥

कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात्।
त्वयि सर्वं समायुक्तं त्वमेवैको जनार्दनः॥'

इत्युक्तभङ्ग्यापि कृष्णपरभाव एवार्जुनेन दृढतरं निर्णीत इत्यवगम्यते।

यदि च गीतासु कृष्णरुद्रयोरुभयोः परब्रह्मभावप्रतीतेस्तज्जनितसंशयाऽपनोदनाय भगवत्कृतोपदेशस्य शिवाहम्भावजनितत्वस्फोरणपुरस्सरं शिवस्य परब्रह्मत्वमनेनाविष्क्रियत इति परस्य दुर्बुद्धिमनुसृत्य कथंचिदिदं अनुगीताप्रकरणं योजितं स्यात्, तर्हि तत्समाप्त्यनन्तरभाविस्वकीयस्तुत्यभिप्रायस्य कुरुपितामहोपदेशेन सुघटितत्वोक्तिरसङ्गता स्यात्। तेजो हि सर्वकारणत्व सर्वान्तर्यामित्वमुमुक्षूपास्यत्वादिभिर्ब्रह्मलिङ्गैः परं ब्रह्मेति भगवानेव सहस्रकृत्वः समावेदितः। तानि च वचनानि **महाभारत**परिचयशालिनां सुगमानीति विस्तरभयात् न लिख्यन्ते।

यदपि भगवतः पुनः पुनः स्वयं योगरूढत्वोपन्यासेनान्यविषयत्वकोटिरुत्कटत्वेऽपि तत्तया भगवन्मुखादेव विविच्यावगन्तव्यम्। तदर्थं तदा विविच्य प्रष्टुमवसरो नासीत्। तदिदानीं प्रष्टव्यं, तस्य चागृहीतत्वोद्घाटनान्वामुपदेशायोग्यत्वधीः स्यादित्याशयवताऽर्जुनेन विग्रहस्य युद्धारम्भव्यग्रेण चेतसा गृहीत्वा विस्मृतं गीतार्थजातं पुनरुपदेष्टव्यमिति प्रश्नः कृत इति — तदप्यतितुच्छम् — योगेश्वर इत्याद्युक्तेर्योगाराध्यत्वपरत्वादन्यविषयकत्वकोटयनुदयात्। तदनुदयो वा महावाक्यस्वारस्यानुसारेण भगवद्विषयकत्वकोटेरुत्कटत्वस्यैव वक्तुं युक्तत्वेनान्यविषयकत्वकोट्यौत्कट्यस्यासिद्धेश्च। अष्टादशाध्यायीप्रतिपाद्यानर्थान् पृष्टवतोऽर्जुनस्य कृष्णविषयकत्वान्यविषयकत्वानवसरग्रस्त इत्युक्तेरसम्भवग्रस्तत्वात्। अगृहीतत्वोक्तावपि श्रद्धावैकल्यबुद्ध्या उपदेशायोग्यत्वधियस्तुल्यत्वात्। एतेन

इत्थं ह्यनुगीतास्वर्जुनप्रश्नस्योत्तरारम्भः श्रावितः।

'स त्वं मया गुह्यं ज्ञापितश्च सनातनम्।
धर्मस्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्॥

बुद्ध्या यं न गृह्णीयास्तन्मे सुमहदप्रियम् ।
नूनमश्रद्दधानोऽसि दुर्मेधाश्चासि पाण्डव ॥ '

स हि धर्मस्सुपर्याप्तो भावस्यान्यविषयकत्वं गलहस्तितम् । श्रीकृष्ण-प्रतिपादितार्थस्य नारदाद्युक्तिवचनद्वयपर्यालोचनो नायं कुर्वीत महत्सिद्धान्तैक्य-त्वावगमात् । कृष्णारम्भस्यैव तत्सिद्धान्तत्वं तु महाभारतपरिचयशालिनां सुगमम् ।

श्रीकृष्णेनागृहीतत्वकथनादग्रहणेन वार्जुनस्य निर्णीयत इत्यत्यन्ता-ऽनुपपन्नम् । उपक्रमगतप्रश्नस्य विस्तृतत्वोक्त्यनुसारेणोपसंहारगतागृहीतत्वोक्तेर-विस्मरणहेतुग्रहणाभावपरत्वस्य वक्तुं युक्तत्वात् । सर्वथा ग्रहणाभावसंशयस्यैवानु-दयात् निश्चयरूपग्रहणाभावपरत्वस्य त्वयाऽपि वाच्यत्वेनागृहीतत्वोक्त्या स्वारस्यं त्वत्पक्षेऽपि तुल्यत्वात् । उपदेशायोग्यत्वेऽपि भवेदिति भीत्या सीदन्तमित्युक्त्वा पुनः प्रश्नावसरार्थं नष्टमित्याहेत्यप्यत्यन्तासम्बद्धम् । 'विदितं ते महाबाहो' इत्यनेन माहात्म्यादिभ्यः रूपयोर्विदितत्वोक्त्यनन्तरमर्थान्तरप्रतिपादकत्वेनायं क्रतु-शब्दघटितत्वेन ।

'यत्तु तद्भवता प्रोक्तमि'ति विदिताभिन्नपरामर्शपूर्वकं विस्तृतत्वकथनेन विदितत्वविस्तृतत्वयोर्निर्विषयकत्वात् । न च विस्तृतत्वरूपार्थान्तरप्रतिपादन-मात्रात् तु शब्दस्योपपन्नत्वे नार्थान्तरोद्देशोऽपि न ततोऽवसीयत इति वाच्यम् । माहात्म्यदिव्यरूपे उद्दिश्ये । विदितत्वोक्त्यनन्तरं 'यत्तु तद्भवता प्रोक्तमि'त्युक्त्या अर्थान्तरोद्देशप्रतीतेः । माहात्म्यादिरूपविदितत्वोक्त्यनन्तरं किन्तु नष्टमित्युक्त्या नेव हि त्वदभिलषितसिद्धिः । अतो विदितव्यतिरिक्तविषयिन्येव विस्तृतत्वोक्त्या रीत्या गृहीतत्वोक्तेरपि तथात्वात् । भगवत्पारम्यविषयिके संशयोऽर्जुनस्य दूरापास्त इत्यनुगीतावतरणस्य तत्संशये, निराकरणप्रयोजनप्रवृत्तिकथनमुन्मत्त-प्रलपिततुल्यमिति दिक् ॥

अयमत्र निष्कर्षः —

'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी' इत्यत्र तुल्यबलतया पदविभागेन वाक्यार्थः। वर्णानामुत्तमपुरुषत्वात् तथा, तथात्वेन वा ततःपरं तत्परिमार्गितव्यमित्युपदिष्टपरिमार्गणकारणविशेषोपदेशपरत्वेन, प्रपद्य इति परिमार्गितव्यमित्यर्थकत्वेनास्य कृष्णभजनीयदेवतान्तरसाधकत्वाभावात्। 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्यत्र प्रभुमात्रसाधारणेश्वरशब्दघटितस्य

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥'

इत्युक्तिभङ्ग्या प्रसिद्धपुरुषोत्तमशब्दार्थकथनपरतयाऽवसीयमानत्वेन विधेय-पुरुषोत्तमत्वस्यान्यगामित्वशङ्कां निराकुर्वता भगवदन्तर्यामिणः क्षराऽक्षरातीतत्वेन भगवतः पुरुषोत्तमत्वविधाने सङ्गतिप्रसङ्गात्। क्षराक्षरावित्यस्य तथात्वं दूरी-कुर्वता सङ्गत्यर्थं भगवत्परत्वं वक्तुं युक्तमिति आद्यमिति विशेषणेन तत्परामर्शात् प्रतियुक्तेः गुञ्जापुञ्जभ्रमेण वह्निस्पर्शतुल्यत्वात् 'ईश्वरः सर्वभूतानामि'त्यस्यापि साधारणशब्दघटितस्य 'करिष्ये प्रतिजाने च' 'रामो द्विर्नाभिभाषते' इत्यादि-वदुपपन्नप्रथमपुरुषनिर्देशस्य 'भक्त्या मामभिजानाति' 'मन्मना भवे'ति पूर्वोत्तर-सन्देशेन 'सर्वस्य चाहं हृदि सन्निविष्ट' इति तदर्थस्य भगवन्निष्ठत्वावगमेन भगवत्परतया 'यस्मिन् गता न निवर्तन्ति भूय' इत्यनेन तत्परामर्शप्रतियुक्तेरपि परप्रतिकूलत्वात्।

'आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥'

इत्यत्र गीताप्रतिपादित परभावस्य।

'.... .... मुनीनां भावितात्मनाम्।
स वासुदेवं कथयतां समवाये पुरातनम्॥
रामस्य जामदग्न्यस्य मार्कण्डेयस्य धीमतः।
व्यासनारदयोश्चैव श्रुतं श्रुतिमतां वर॥

श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥
असितो देवलस्ताता वाल्मीकोयं महायशाः ।
मार्कण्डेयश्च गोविन्दं कथयन्त्यद्भुतं महत् ॥
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥'

भीष्मपर्वशान्तिपर्वादि गतवचनावगम्यमानभगवत्पारम्यत्वादि शिखामणि
कृष्णद्वैपायनप्रभृतिसिद्धान्तैः प्रतिपादनान्महावाक्यसारस्य विरुद्धकृष्णान्य-
परत्वशङ्काया दूरोत्सारितत्वात् न भगवद्गीतासु कृष्णनिष्कर्षप्रतिपत्तिः ।
रीत्या गीतोपदिष्टपरभावस्याऽन्यविषयकत्वशङ्काऽनुदयादन्यस्य तदुभये वा
शा 'तच्च ते रूपमैश्वरमि'ति कृष्णप्रदर्शितरूपेणेश्वरत्वं वर्णयतोऽर्जुनस्य
रत्वनिर्णयसिद्धान्तमर्यादया च विदितम् ।

'विदितं ते महाबाहो सङ्ग्रामे समुपस्थिते ।
माहात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् ॥
यत्तु तद्भवता प्रोक्तं तदा केशव सौहृदात् ।
तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः ॥'

वाक्यशैल्यनुरोधेन प्रश्नोत्तरयोः परतत्वव्यतिरिक्तपरत्वावसायात् । पारम्य-
कशङ्कानिराकरणप्रयोजकत्वेन योगयुक्तत्वोक्तेः । स्वार्थतात्पर्यकत्वस्य
तुमशक्यत्वात् । अर्जुनस्य तादृशशङ्कोदये तन्निराकरणस्य कर्तव्यत्वे-
यथासिद्धस्फुटतरवाक्यान्तरदर्शनप्रसङ्गात्, योगयुक्तत्वोक्तेः परतत्त्वनिर्धारण-
े नारायणपरात्परेत्यनुगीतान्तस्थार्जुनवचनविरोधप्रसङ्गात् । तत्र चेष्टा-
चने ।

'मन्ये त्वां राक्षसं क्रूरमथवा तामसात्मकम् ।
यस्माद्दिष्टं .... .... .... धनञ्जय ॥
नरनारायणौ देवौ कोऽन्यो द्वेष्टीह मानवः ॥'

इति भीष्मोक्तस्वभावविशेषस्य सर्वजनविदितत्वप्रसङ्गात् । योगयुक्तत्वश्रुतत्व-युक्तीनां श्रद्धाजननार्थं तेनार्थवादतयाऽवतारमर्यादानुसरणेन चोपपन्नत्वेनानु-गीतास्वपि शिवपरत्वभगवन्निष्ठसाधनप्रत्याशाऽवकाश इति ।

यच्च 'नारायणोऽपि भगवान् देवकीतनयो हरिः ।
अर्जुनाय स्वयं साक्षाद्दत्तवानिदं मतम् ॥'

इति **कौर्मोक्त्या** गीताशास्त्रस्य शिवविषयत्वमवगम्यत इति, तदयुक्तम् — एतद्वचनबलात् **कूर्मपुराणे ईश्वरगीतायाः** कृष्णविषयत्वं बोध्यत इति वैपरीत्यस्य वक्तुं सुशकत्वात् ।

यदपि 'सर्वेषामेव भूतानामहं ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमः स विभुः स प्रजापतिः ॥
नरकिन्नरयक्षानां गन्धर्वोरगरक्षसाम् ।
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥'

तथा 'अहं प्रजापतीनां च सर्वेषां नात्र संशयः ।
मम विष्णुरचिन्त्यात्मा स्वयम्भूरिति संस्मृतः ॥
पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः ।
तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता ॥
देवदानवभूतानां पिशाचोरगरक्षसाम् ।
नरकिन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥
आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् ।
ततः परतरं नास्ति त्रिषु लोकेषु भारत ॥'

इत्यनुगीतावचनानि विष्णोः परब्रह्मत्वं प्रतिपादयितुं शक्नुवन्ति । तत्र ब्रह्ममय इति मयटो विष्णोः ब्रह्मसृज्यत्वस्यैव प्रतिपादनान्मयटस्तत्र नैरर्थक्यायोगेनार्थान्तरा-सम्भवेन च चतुर्मुखविषयब्रह्मसृज्यत्व परब्रह्ममयशब्दप्रायपाठेन 'कुतश्चाहं कुतश्च त्वमि'ति समारोपितगुरुशिष्यभावकृष्णतदीयमनस्संवादरूपेतिहासोपक्रमगतशिष्य-

प्रश्नानुसारेण विकारार्थकत्वावश्यम्भावात् । तस्मात् तदनुगीतासु नारायणादन्यदेव ब्रह्म प्रतिपाद्यत इति —

तदप्यविचारितरमणीयम् —

'ईश्वरं तु विजानीमः स विभुः स प्रजापतिः ।
नरकिन्नरयक्षाणां गन्धर्वोरगरक्षसाम् ॥
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥'

इत्युत्तरवाक्यैकार्थ्याय ब्रह्ममय इति मयटः सार्थत्वाश्रयणात् सर्वेषामेव भूतानामि'त्येतत्प्रतिपाद्य चतुर्मुखसर्वैश्वर्यापेक्षयोत्कृष्टैश्वर्यमहिष्णुत्वं 'स राजाधिराजः सर्वेषां विष्णुरि'त्येतत्प्रतिपाद्य विश्वैश्वर्यस्य वारयितुं प्रवृत्तावेव हीश्वरत्वं विजानीमहे इत्यस्य सार्थक्यम् । तथा 'आदिर्विश्वस्य जगत' इत्यनेन चारितार्थे विश्वस्येत्युक्तिरसङ्कोचेन कृत्स्नजगत्कारणत्वं प्रतिपादयति । तच्च ब्रह्मलक्षणमिति 'यतो वा इमानि भूतानि' 'जन्माद्यस्य यतः' इति श्रुतिसूत्राभ्यामवगतम् । तथा चैतस्य जगत्कारणस्य विष्णुनिष्ठत्वप्रतिपादनात्, 'परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य' इत्यधिकरणे जगत्कारणातिरिक्तत्वनिषेधके वर्णितया रीत्या 'ततः परतरं नास्ती'ति तत्त्वान्तरनिषेधाच्च । ब्रह्ममय इत्यत्र स्वार्थप्रत्ययात्त्वमङ्गीकर्तुं युक्तम्; उक्तप्रमाणबलेन चतुर्मुखविषयकब्रह्ममयशब्दवैरूप्यमपि न दोषः । 'कुतश्चाहं कुतश्च त्वं' इत्यत्र त्वं कृत इति प्रश्नानुसारेण न विकारार्थमङ्गीकर्तुं युज्यते । तस्य केवलमर्थवादरूपत्वेन स्वार्थतात्पर्याभावात् । न हि मनसः प्रष्टृत्वं सम्भवति ।

यदपि 'वृष्णीनां वासुदेवोऽस्मीति कृष्णस्य नारदादिवद्विभूतिषु परिगणनात् लिङ्गात् गीतावचनानि ब्रह्माहम्भावभावनाप्रयुक्तानीति — तदप्यनुपपन्नम्—कृष्णस्य स्वतः परब्रह्मत्वेऽप्यवतारदशामादाय विभूत्यन्तर्गतत्वसम्भवात् ।

यदपि 'मयैव निहताः पूर्वमेवे'ति कृष्णेन स्वनिहतत्वेनोक्तानामेव रिपूणां,

'निहतास्तेन पूर्वं च हतवानसि वै रिपून् ।
अप्रमेयप्रभावं तं देवदेवमुमापतिम् ॥'

इति शिवनिहतत्वोक्त्या शिवपर्यन्ततात्पर्यमिति – तदति तुच्छम् – रुद्रस्यापि संहाराधिकृतत्वेन तन्निहतत्वेऽपि भगवन्निहतत्वसम्भवेन तत्प्रतिक्षेपकस्य कर्तुमशक्यत्वात् ।

यदपि 'अनाश्रयाच्छ्रेयो नास्ति मुख्यमाश्रयमाश्रयेत्' इति विधेः स्वाश्रयपर्यवसायित्वं सूचयितुं,

'रुद्रं समाश्रिता देवाः रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं किञ्चिदुपाश्रितः ॥'

इत्ययमर्थवाद इति – तत्सत्यमेव – अत एव भगवद्भजनीयाभावसिद्धिः 'नहि भिक्षुको भिक्षुकान्तरं याचते सत्यन्यस्मिन्नभिक्षुके' इति न्यायेन स्वाश्रयणीयान्तरतो मुख्याश्रयत्वेनानन्याश्रयस्यैव मुख्याश्रयतया । स च मुख्यः को वेत्याकाङ्क्षायां 'सन्दिग्धे तु वाक्यशेषादि'ति न्यायेन 'नाहं किञ्चिदुपाश्रित' इति वाक्यशेषे भगवतोऽनन्याश्रयत्वोपपादनेन भगवतो मुख्याश्रयत्वसिद्धेः ।

ननु न ब्रूमः 'मुख्याश्रयमाश्रयेदि'त्यस्य न भगवति नियमोऽभिमत उतार्थतथात्वसाधकत्वनियमाभावः । नाद्यः, प्रमाणाभावात् । अन्यथा शैवपुराणानां शिवभक्त्यभिवृद्धिजननार्थत्वेनार्थतथात्वाभावप्रसङ्गात् । वैराग्यजननार्थत्वेन नरकादिप्रतिपादकशास्त्राणामर्थतथात्वाभावप्रसङ्गात् । न द्वितीयः,

'मतिमन्थानमाविध्य येनासौ श्रुतिसागरात् ।
जगद्धिताय जनितो महाभारतचन्द्रमाः ॥
बिभेति गगनाच्छास्त्रं नर .... .... ।
भारतश्शास्त्रसारोऽयं मत्तः काव्यात्मना कृतः ॥
व्यासवाक्यजलौघेन कुतर्कतरुहारिणा ।
वेदशैलावतीर्णेन निरतस्का मही कृता ॥'

इत्यादिशैवभविष्यमार्कण्डेयपुराणप्रमाणतत्त्वेन परिग्रहस्यैव तन्नियमसाधकत्वात् तदभावस्य वक्तुमशक्यत्वम् । न च,

'मद्भक्तस्सततं तीर्थं शङ्करस्य विशेषतः'

स्वभक्तापेक्षया शिवभक्तस्य विष्णुभक्तान् प्रत्यधिकातीर्थत्वोक्त्या ऽऽधिक्यं प्रतीयत इति तद्विरोधादौपसंहारिकवचनमन्यथा नेयमिति शिवभजनस्याधिक्योक्तेः शिवस्य भगवद्भजनीयत्व साधकत्वाभावात् ।

'मद्भक्तभक्तेषु प्रीतिरप्यधिका भवेत् ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥'

वैष्णवधर्मशास्त्रे उक्तत्वेन भगवद्भक्तानामपि भगवद्भजनीयत्वप्रसङ्गात् ।

'इदं मे मानुषं जन्म कृतमात्मनि मायया ।
धर्मसंस्थापनार्थाय दुष्टानां शासनाय च ॥
मानुषं भावमापन्नं ये मां गृह्णन्त्यवज्ञया ।
संसरन्ति हि ते मूढास्तिर्यग्योनावनेकशः ॥
ये च मां सर्वभूतस्थं पश्यन्ति ज्ञानचक्षुषा ।
मद्भक्तास्तान् यथा युक्तं मत्समीपं नयाम्यहम् ॥
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्तानां तु मानुष्यं सफलं जन्म पाण्डव ॥
अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन ।
मुच्यन्ते पातकैस्सर्वैः पद्मपत्रमिवाम्भसा ॥
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।
भक्तिरुत्पद्यते तात मनुष्याणां न संशयः ॥
यच्च रूपं परं गुह्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते तथा देवैर्मद्भक्तैर्दृश्यते यथा ॥
अपरं यच्च मे रूपं प्रादुर्भावेषु दृश्यते ।
तदर्चयन्ति सर्वार्थे सर्वभूतानि पाण्डव ॥

कल्पकोटिसहस्रेषु व्यतीतेष्वागतेषु च ।
दर्शयामीह यद्रूपं तच्च पश्यन्ति मे सुराः ॥
स्थित्युत्पत्तिव्ययकरं यो मां ज्ञात्वा प्रपद्यते ।
अनुगृह्णाम्यहं तं वै संसारान्मोचयामि च ॥
अहमादिर्हि देवानां सृष्टा ब्रह्मादयो मया ।
प्रकृतिं स्वामवष्टभ्य जगत्सर्वं सृजाम्यहम् ॥'

इत्यादि 'संहृत्याहं जगत्सर्वं कृत्वा वै गर्भमात्मनः ।
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर ॥
न च मानं विजानन्ति मायया मोहितानि मे ।
.... चैवान्धकारस्य मार्गितस्य नित्यशः ॥
प्रशान्तस्यैव दीपस्य गतिर्नैवोपलभ्यते ।
न तदस्तित्वविद्राजन् यत्राहं न प्रतिष्ठितः ॥
न च तद्विद्यते भूतं मयि यन्न प्रतिष्ठितम् ।
यावन्मात्रं भवेद्भूतं स्थूलसूक्ष्ममिदं जगत् ॥
जीवभूतो ह्यहं तस्मिंस्तावन्मात्रं प्रतिष्ठितः ।
किं चात्र बहुनोक्तेन सत्यमेतद्ब्रवीमि ते ॥
यद्भूतं यद्भविष्यच्च तत्सर्वमहमेव तु ।
मया सृष्टानि भूतानि मन्मयानि च भारत ॥
मामेव न विजानन्ति मायया मोहितानि मे ।
एवं सर्वं जगदिदं सदेवासुरमानुषम् ॥
मत्तः प्रभविता राजन् मय्येव प्रविलीयते ॥'

इत्यन्तपरमोपक्रमगतभगवदुत्कर्षप्रतिपादकवचनविरोधापत्तेः । न चात्र तथाभावशङ्कोन्मेषमर्हति । वैष्णवधर्मान् पृष्टवन्तं युधिष्ठिरं प्रति —

इष्टस्त्वमसि मत्यर्थं प्रपन्नश्चासि मां सदा ।
पारमार्थमपि ब्रूयात् किं पुनर्धर्मसंहिताम् ॥'

वक्ष्यमाणकृत्स्नधर्माराध्यत्वं स्वस्य ज्ञापयितुं स्वकीयं सर्वोत्कर्षमुपदेष्टुं
ान भगवता वक्ष्यमाणस्य परमरहस्यार्थस्योक्तत्वात् । एवमुपक्रमे —

'ऋग्वेदेनैव होता च यजुषाऽध्वर्युरेव च ।
सामवेदेन चोद्गाता पुण्येनाभिष्टुवन्ति माम् ॥
अथर्वशिरसा चैव नित्यमाथर्वणो द्विजाः ।
स्तुवन्ति सततं ये मां तेऽपि भागवताः स्मृताः ॥
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं किंचिदुपाश्रितः ॥
ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् ॥'

संहारे च प्रतिपादितस्य भगवदुत्कर्षस्य सम्भाव्याऽन्यथासिद्धिकेन वचन-
त्रेन कथं बाधितार्थत्व वर्णनात् न्यायविदोऽनुमन्यन्ते ?

किं च भगवद्भक्तव्यतिरिक्ततीर्थान्तरापेक्षया शिवभक्तस्याधिकतीर्थत्व-
र्येणोपपन्नत्वात् न भगवद्भक्तापेक्षया शिवभक्तस्याऽधिकतीर्थत्वप्रतिपादनायेदं
समर्थम् ।

'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम् ॥'

शिवभजनस्याप्रबुद्धविषयत्वस्य मोक्षधर्मेषु नारायणीये कथनात् । अत्रापि
ावधर्मशास्त्रे —

'मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्तानां तु मानुष्यं सफलं जन्म पाण्डव ॥
अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन ।
मुच्यन्ते पातकैस्सर्वैः पद्मपत्रमिवाम्भसा ॥
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।
भक्तिरुत्पद्यते तात मनुष्याणां न संशयः ॥

यच्च रूपं परं गुह्यं कूटस्थमचलं ध्रुवम् ।
न दृश्यते तथा देवैर्मद्भक्तैर्दृश्यते यथा ॥
मद्भक्तान् शूद्रसामान्यादवमन्यन्ति ये द्विजाः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥
चण्डालमपि भक्तानां नावमन्येत बुद्धिमान् ।
अवमानात्पतन्त्येव रौरवे नरके नराः ॥
विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति चण्डालसदृशा हि ते ॥
वृथा दत्तं वृथा तप्तं वृथैवेष्टं वृथाहुतम् ।
वृथाऽऽतिथ्यं च तत्तस्य यो न भक्तो मम द्विजः ॥
न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ।
सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥'

इत्यादिमध्यान्तवचनेषु भगवद्भक्तेर्दुर्लभत्वस्य भगवद्भक्तस्य देवदुर्दर्शतदीय-परमरहस्यरूपदर्शित्वस्य, तद्भक्तावमाने प्रत्यवायस्य, तद्भक्तिवैधुर्ये प्रत्यवायस्य च कथनेन स्वभक्तोत्कर्षे तात्पर्यातिरेकख्यापनाच्च । तस्मात्,

'मद्भक्तिः सततं तीर्थं शङ्करस्य वा .... ।
भक्तो विशेषतस्तीर्थं .... .... ॥
शङ्करस्य तु यो भक्तः सप्तजन्मान्तरं .... ।
तस्यैव तु प्रसादेन विष्णुभक्तः प्रजायते ॥'

इत्यादिप्रमाणबलेन तद्भक्तेर्भगवद्भक्त्युत्पादकत्वात् साक्षान्मुक्तिसाधनीभूत-भगवद्भक्त्याभाननतोऽपि साधनसाधनीभूतशङ्करभक्तिमत्त्वादित्याभिप्रायेण भगव-द्भक्तिरूपतीर्थापेक्षयाऽनुकल्पभूततीर्थकथनपरमिदं वचनम् ।

अपि च तद्भक्तस्सततं तीर्थं शङ्करभक्तस्तु विशेषतः । कालविशेषे भगवदपेक्षया तत्परत्वादिज्ञानवैधुर्ये इति तदा शङ्करस्य विशेषत इति तद्गत-

विशेषो भगवद्भक्तातिशयानुमितौ हेतुरित्यर्थः । यतस्तस्य भगवद्भक्त्यतिशय-निबन्धनोऽतिशय इति चाभिप्रायवर्णनसम्भवात् कथमस्य भगवद्भक्तापेक्षया शिवभक्तस्याधिक्यकथने निरर्गलं सामर्थ्यम् ।

एतेन वैष्णवैर्धर्मैस्सह शैवधर्माणां तुल्यत्वकीर्तनात् भगवता शिवस्य साम्यमित्यपि निरस्तम् ।

'मम वा शङ्करस्यापि ब्रह्मणो वा युधिष्ठिर ।
अथवा ब्राह्मणानां चैतद्भक्ता नराधमाः ॥
वृथा जन्मान्यथा तेषां पापिनां विद्धि पाण्डव ।
जीवितं तु वृथा येषां तच्छृणुष्व युधिष्ठिर ॥
ये मां न प्रतिपद्यन्ते शङ्करं वा नराधमाः ।
ब्राह्मणान्यान्महीदेवान् वृथा जीवन्ति ते नराः ॥
मम रुद्रस्य सवितुः त्रिदशानां तथैव च ।
प्रीतये वृद्धिराजेन्द्र भूमिर्दत्ता द्विजाय वै ॥
एवमग्निं तु सः कुर्यात् नित्यमेवार्चयेत्तु माम् ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥
तेनाहं शङ्करश्चैव पितरो ह्यग्नयस्तथा ।
यास्यामः परमां प्रीतिं नात्र कार्या विचारणा ॥'

इत्यादिषु चतुर्मुखादिनापि तथा कीर्तनेन चतुर्मुखब्राह्मणादित्यादिसाम्यस्यापि प्रसङ्गात् । 'नाहं किंचिदुपाश्रितः' इति वचनविरोधात् 'तमेव चाद्यं पुरुषं प्रपद्ये' इति नोत्तमपुरुषत्ववर्णनं युक्तमिति भगवत एवोत्तमपुरुषत्ववर्णनं साधीयः ।

यदपि 'स परः सर्वशक्तीनां ब्रह्मणः समनन्तर'

इति वैष्णवपुराणवचनं विष्णोर्ब्रह्मातिरिक्तत्वं प्रतिपादयतीति-तदप्यनुपपन्नम्—

'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ।
तद्ब्रह्म परमं योगी यतो नाऽऽवर्तते पुनः ॥'

इत्यनन्तरोपक्रमविरोधात् । प्रपञ्चयिष्यते चायमर्थः त्रिमूर्त्युत्तीर्णशिवकारणत्वभङ्ग इति तत्रैवानुसन्धेयः ।

यदपि 'स परः' इत्यादिवचनविरोधाय प्रदेशान्तरे परभाववर्णनं ब्रह्माभिव्यक्तिविशेषकृतमिति कल्प्यते तदप्यसम्बद्धप्रलपितम् । बहुवाक्यानुसारेणैकवाक्यान्यथाकरणस्यैव न्यायवित्सम्मतत्वेनैकवचनानुसारेण बहूनां वचनानां अस्वारस्येनास्य मूढकल्प्यत्वात् ।

यदपि '**आपो वा इदमग्रे सलिलमासीत्** । तस्मिन् प्रजापति**र्वायुर्भूत्वा** चलादि'त्यादिषु प्रजापतिशब्दवाच्यस्य वराहभावापत्तेः श्रवणात् वराहरूपस्य 'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति वैष्णवत्वावगमात् विष्णुचतुर्मुखयोः अभेदप्रतीतेः चतुर्मुखे जीवत्वस्याऽसन्दिग्धत्वात् विष्णोर्जीवत्वमिति - तदप्यसारम् - तथैव वराहभावापत्त्या तत्रत्यप्रजापतिशब्दस्य भगवत्परत्वाभ्युपगमेन तच्छ्रुत्यर्थवर्णनसम्भवे

'प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै ।
तौ तु मां नैव जानीतो मम माया विमोहितौ ॥'

इत्यादिषु भगवन्मायाविमोहितत्वेनोक्तचतुर्मुखाभेदपर्यवसायित्वकल्पनानुन्मेषात् । **आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कार, एष वै सप्तदशः प्रजापतिरि( तै. सं. 1-6-11-5 )'त्यस्यां श्रुतौ** ।

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु ॥'

इति **भारत**वचनोपबृंहितायां 'श्यामा एकरूपाभवन्ति, एवमिव हि प्रजापतिस्समृद्ध्यै' इति श्रुतौ प्राजापत्यपशुषु श्यामत्वरूपगुणविधायिन्यां 'एकरूपा भवन्ती'त्युक्त्या भगवत्परतयाऽवगम्यमानायां 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रुतौ च प्रयुक्तश्चायं शब्दो भगवति ।

'तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः'

इति मनुवचनाच्च । विष्णोश्चतुर्मुखाभिन्नत्वे प्रमाणत्वेनोपन्यासमपि न युक्तम् । 'सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्भवौ' इति स्वयमेव भूतरूपेणाऽऽविर्भावोक्तिवत् ब्रह्मशरीरकत्वेनाऽविर्भाववर्णनेन ततो ब्रह्माभेदासिद्धेः । अन्यथा,

'यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टस्स पुरुषो लोके ब्रह्मेति कीर्तितः ॥'

इति कारणत्वेन प्रस्तुतनारायणजन्यत्वोक्तिविरोधात् । तेन 'वराहरूपमुत्सृज्य स्वयं ब्रह्माऽभवत् हरिः' इति सूतसंहितावचनमपि व्याख्यातम् ।

यदपि 'एकार्णवे तु त्रैलोक्ये' इति वचनेनाभेदोऽवगम्यत इति — तदप्यनुपपन्नम् — चतुर्मुखे भोगि शय्यागतत्ववचनस्य भगवतो अपृच्छयनस्य भोगिशय्याद्वारकत्वपरत्वात्, कुशस्थाने निवृत्युक्तेः प्रासाद खट्वापर्यङ्कादिद्वारसहत्ववत् पद्मद्वारकत्वेनोपपन्नत्वात् । नारायणात्मक इत्युक्तेर्नारायणात्मा यस्येति नारायणान्तर्यामिकत्वपरत्वात् । भगवतश्चतुर्मुखाऽभेदप्रमाणत्वासम्भवात् । परशुरामादिवत् ब्रह्मणोऽपि भगवदंशावतारत्वेन तत्कृतमभेदमादायैव मुक्तेरुपपन्नत्वेन भगवतो जीवत्वासाधनासम्भवाच्च ।

यद्वा **कौर्मे** —

'ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ।
सुष्वाप योगशयने एकीभूयाथ चक्रिणा ॥'

इति चतुर्मुखस्य भगवच्छरीरानुप्रवेशोक्त्या नारायणान्तर्गतत्वेन भोगिशय्यागतत्वोक्तिः नारायणात्मकत्वोक्तिश्चोपपद्येत इति नैतद्वचनबलादभेदः ।

यत्तु 'ततोवतीर्ये'ति वचने देहान्तरोपाधिकभेदमपहाय विष्णुनैकीभूय समुद्रे शयनमुक्तमित्यस्यैव वचनस्य विष्णोश्चतुर्मुखाभिन्नत्वे प्रामाण्यमिति —

तत्तुच्छम्—' पूर्णे युगसहस्रे तु कल्पो निश्शेष उच्यते ।
तत्र भूतानि सर्वाणि दग्धान्यादित्यरश्मिभिः ॥
ब्रह्माणमग्रतः कृत्वा सहादित्यगणैः प्रभोः ।
प्रविशन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम् ॥'

इति **हरिवंशे** आदित्यादीनां प्रवेशोक्तिवदस्यापि वचनस्य चतुर्मुखभगवच्छरीरानुप्रवेशमात्रप्रतिपादकत्वेन तदैक्यप्रतिपादकत्वाभावात् । एकशरीरानुप्रवेशमात्रेणैकीभूयेत्युक्तेरुपपन्नत्वात् । अन्यथैक्यस्य देहानुप्रवेशपूर्वकत्वोक्तिवैयर्थ्यात् ।

अथोच्येत देहान्तरोपाधिकभेदनिवृत्तिप्रतिपादकत्वेन सार्थक्यमिति, तदप्यभेदस्यैकदेहप्रवेशनिबन्धनत्वासिध्या न युक्तम् । अद्वैतवादिभिरप्येकस्मिन् देहे जीवात्मपरमात्मनोरवस्थानस्याभ्युपगतत्वात् । तस्मात् न विष्णोर्जीवत्वसिद्धिरिति दिक् ।

स्यादेतत् — 'विष्णुर्वा अकामयत । पुण्यं श्लोकं शृण्वीय न मा पापि कीर्तिरागच्छेदिति । स एतं विष्णवे श्रोणायै पुरोडाशं त्रिकपालं निरवपत्' इत्यादिवाक्ये विष्णोरपि पापसम्बन्धः श्रूयत इति कथं तस्य परब्रह्मत्वम् । न च प्रकृतकर्मविधिशेषत्वेन प्राशस्त्यमात्रपरस्यनार्थतथात्वमिति वाच्यम् । 'अनपहतपाप्मा वा अह मस्मिनामधेही'त्यस्यापि 'तस्मात्पुत्रस्य जातस्य नाम कुर्यादि'ति विधिशेषत्वेनार्थतथात्वं नास्तीति वक्तुं शक्यत्वात् । न 'चाऽजायमान' इति विष्णोः कर्मकृतजननराहित्योक्त्या कर्मसम्बन्धराहित्यमवगम्यत इति वाच्यम् । 'अजात इत्येव कश्चित् भीरुः प्रपद्ये रुद्रपते दक्षिणमुखं तेन मां पाही'ति रुद्रस्य जननराहित्यप्रतिपादनेन तत्रापि कर्मसम्बन्धाभावतौल्यादिति चेत् —

उच्यते — 'अपहतपाप्मा दिव्यो देव एको नारायण' इत्याहत्य पापसम्बन्धरहितस्यानन्यशेषभूतेन वाक्येन प्रतिपादनात्, तद्विरोधेनास्य वाक्यस्य कर्मविधिशेषभूतस्य स्वार्थतात्पर्याभावात् । अनपहतपाप्मा वा अहमस्मीति वाक्यस्य तु **अष्टमूर्तिब्राह्मणगतत्वेन** रुद्रस्वरूपप्रतिपादनतात्पर्यकत्वादाहत्य पापसम्बन्धराहित्य प्रतिपादकवाक्यविरोधासिध्या च नैतद्वाक्यतुल्य-

योगक्षेमत्वम् । तस्मात् पुत्रस्य जातस्य नाम कुर्यात् इति **दर्शपूर्णमास-प्रकरणगत मलवद्वासो** व्रतविधानात्मक प्रकरणगतविधिरूपत्वेनाप्युपपन्नम् । यदपि अजात इत्येवेति वाक्ये जननाभावप्रतिपादकमिति — तन्न — भीरुः प्रपद्यितव्य इति प्रतिपाद्यमानस्य **प्रपदनस्य** अजातस्यामित्यर्थकतया रुद्रजन-नाभावप्रतिपादकत्वासिद्धेः । **फलाकाङ्क्षाया** उत्कटत्वेन तत्समर्पकत्वस्यैवो-चितत्वात् । कश्चित् भीरुः प्रपद्य इत्यनेन मलिनःस्नायादित्यत्र मालिन्य-निवृत्तिवत् भीरुत्वनिवृत्तेः फलतयाऽऽगमेऽपि सैव किं रूपेति विशेषाकाङ्क्षाया उत्कटत्वेन तद्विषयसमर्पकत्वेनाऽजात इत्यस्य प्रकृतवाक्येऽन्वय उचितः । आकाङ्क्षौत्कट्याद्धि प्रथमं वाक्यगम्योऽपि फलविशेषसम्बन्धो भावनाया स्वीकृतः । न चैत्रमित्यस्याध्याहारापत्तिः दोषत्वपक्षेऽप्यसिध्याहर्तव्यत्वात् विश्वजिदधिकरणन्यायेनाकाङ्क्षानुसारिणोऽध्याहारस्य प्रमाणिकत्वाच्च । अतः शिवकर्मवश्यत्वाभावस्य नानयाश्रुत्या सिद्धिः । भगवतस्तु कर्मवश्यत्वाभावे 'अजायमानो बहुधा विजायते' इत्यादिभिः प्रमाणैः सिध्यतीत्युपपादितमिति भगवत्कारणत्वा वेदकानां नायोग्यार्थत्वप्रसक्ति गन्धोऽपीति निष्कण्टकोऽयं घण्टापथः ॥

इति श्रीशठमर्षणकुलतिलकनिखिलवेदान्तविद्या निषेवितहृदयकमल-
श्रीताताचार्यनन्दनस्य हयवदन करुणाकटाक्षवीक्षालब्धपदवाक्यप्रमाण-
सारस्य श्रीमन्निगमशिखरगुरुचरणसरसीरुहचञ्चरीकायमाणमानसस्य
श्रीवेङ्कटदेशिकपादसेवासमधिगत श्रीमच्छारीरकमीमांसाभाष्य-
हृदयस्य वेङ्कटाचार्यकृतिषु सिद्धान्तरत्नावल्यां

**प्रथमः परिच्छेदः**

श्रीवेङ्कटेशाय नमः

---

## द्वितीयः परिच्छेदः

### ओं नमो वासुदेवाय ।

समुद्यत्कस्तूरीतिलकसमुदञ्चन्मुखरुचिं
किरीटप्रागल्भ्यस्फुरितमैश्वर्यविभवम् ।
रमापादाम्भोजद्वितयगतलाक्षारसलस-
द्भुजा मध्यं नित्यं मनसि कलये रङ्गनिलयम् ॥

प्रपञ्चितं भगवत्कारणत्वमसहमानस्य परस्य प्रक्रिया निराक्रियते —

यदाह कश्चित् न विष्णोः परमकारणत्वं सिध्यति ; विष्णोरपि जनकीभूतस्य परमशिवस्य सर्वैश्वर्यमुमुक्षूपास्यत्वकारणत्वप्रतीतेः । तथा हि — **अथर्वशिखायां** 'किं तत् ध्यानं को वा ध्याता कश्च ध्येयः' इत्युपक्रमस्य प्रश्नत्रयानुरोधेन ध्यानध्यातृनिरूपणानन्तरं ध्येयनिर्धारणार्थमिदमाम्नायते । 'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते, सर्वाणि चेन्द्रियाणि हि सहभूतैर्न कारणं कारणानां ध्याता, कारणं तु ध्येयः । सर्वैश्वर्यसम्पन्नः सर्वेश्वरः, शम्भुराकाशमध्ये शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य समस्ताथर्वशिखे'त्यन्तम् । अत्र योगरूढ्या परमशिवे वर्तमानस्येशानशब्दस्य ताच्छील्यार्थे चानशश्शक्ततया योगेन स्वाभाविकैश्वर्यपरत्वात् रूढ्या परमशिववाच्यत्वाच्च । सर्वोत्कृष्टफलार्थिनि सर्वातिशाय्यैश्वर्यः परमशिवो ध्यातव्य इति भावेनेशानपदेन विशेष्य निर्देशः कृतः । प्रध्यायितव्यमित्याधिक्येन ध्यानार्हत्वेन स्तुतिः । अतः किमन्येन तादृशाः .... नवमावधारणमत्राथितार्थमित्याशङ्क्य तत् ध्वनयितुं देवमनुष्यादिरूपे सर्वप्रपञ्चे ब्रह्मादीनां चतुर्णां प्रामुख्यात् तेषां मध्ये ऐश्वर्यपरिच्छेदसूचनाय सोपपत्तितया दीपकेन सहोक्त्या च भूतेन्द्रियादितौल्येन तेषामुत्पत्तिमत्वं दर्शितं 'सर्वमिदमि'त्यारम्य 'सहभूतैरि'त्यन्तेन । यत् ध्येयं परमशिवस्यापि स्यात् न स्यात् तस्यापि तद्वदेव ध्येयत्वमित्याशङ्क्योक्तम् कारणं कारणानां धाता ध्यातेति

प्रसूयत इति वचनविपरिणामेनानुषङ्गः । तथा चायमर्थः — ब्रह्मादीनां प्रसूत्युक्तिसामर्थ्यात् तेषामर्थसिद्धम् । कारणं तद्रूपं कारणानां ब्रह्मविष्णु-रुद्राणां मन्त्रोपनिषदुक्तानां कालादीनां वा धाता स्रष्टा ध्याता चादिसर्गसङ्कल्प-कर्ता चैवम्भूतमीशानः कुतोऽपि न संप्रसूयत इति। यद्यप्यनेन ब्रह्मादीनां यदर्थलब्धं कारणं तन्न प्रसूयत इत्येतावदेव प्रतीयते, न त्वीशान इति ; तथापि तस्य ध्येयत्वं विधाय ब्रह्मादीनां ध्येयत्वव्यवच्छेदार्थं तेषु दोषोद्भावनानन्तरं तर्हि तद्दोषसम्भवे तस्यापि ध्येयत्वं न स्यादित्यवसरप्राप्तशङ्काव्यवच्छेदाय तत्रैव दोषस्य प्रत्याख्यातव्यत्वात् । अन्यथान्तरालवाक्यं परित्यज्य विष्णुरुपांशुयष्टव्य इत्यादिवाक्यानां यागविधायकत्वस्वीकारे उपक्रमसङ्कीर्तित पुरोडाशद्वयनैरन्तर्य-प्रयुक्तजामितादोषपरिहारालाभात् तत्र वाक्यच्छायाया इहाप्यसङ्गत्यापत्तेः । प्रागेव वाक्याप्रवृत्तिभङ्ग्या ईशाने ब्रह्मादिषूद्भावितदोषपरिहारे तात्पर्याव-सायात् । ब्रह्मादीनामर्थलब्धे कारणे तत्परिहारसामर्थ्यादीशान एव ब्रह्मादीनां कारणमिति गमयतीति तत्रैव तस्य प्रसूत्यभाव उपन्यस्त इति निर्णीयते ।

किं च केवलयौगिकत्वेनेह प्रयुक्तयोर्ध्यातृध्यानशब्दयोः कारणंत्वित्यत्र तु शब्दस्वारस्येन वाक्यान्तरारम्भप्रतीतेरिहैव वाक्येऽन्वितयोर्लिङ्गव्यवस्थाशून्य-तया अन्यलिङ्गग्राहिणो स्वसमानाधिकृतव्यवस्थितलिङ्गकारणशब्दलिङ्गग्राहित्वे नपुंसकलिङ्गापत्तेः । श्रुतपुल्लिङ्गनिर्वाहाय पुल्लिङ्गविशेषापेक्षायामाकाङ्क्षितार्थ-सङ्घटनानुकूलसन्निधिश्रुतशब्दानुषङ्गे सम्भवत्यश्रुतशब्दान्तराध्याहार योगादीशान शब्दानुषङ्गस्यावश्यकत्वेन शिवस्यैव सामर्थ्यसिद्धब्रह्मादिकारणत्वस्य असिद्ध-त्वकारेण तत्र प्रसूत्यभाव उपन्यस्त इति निर्णीयते। अत एवानन्तरवाक्ये कारणमित्यस्य शम्भुपदसामानाधिकरण्यं दृश्यते । तत्र चाकाशमध्य इत्युपासन-स्थानकथनं परमाकाशरूपपरशिवलोकाभिप्रायः। तेन हृदयकमलरविबिम्बादिषु यत्र यत्र शिवस्य ध्यानं तत्र सर्वत्रापि ज्योतिर्मयं कैलासं विभाव्य तन्मध्य-वर्तित्वेन शिवो ध्येय इति विहितं भवति । सर्वेश्वर इति शिवनामत्वेन प्रयोगः

'ओङ्कारं सर्वेश्वरं द्वादशान्त' इति **तापनीय**प्रयोगेण पुराणप्रसिद्धया च तन्नामत्वावसायात्। न तु सर्वैश्वर्यपरत्वेन प्राचीनविशेषणेन पौनरुक्त्यापत्तेः। यद्वा यौगिकत्वे पूर्वपदेन रूढत्वे उत्तरपदेन योगरूढिमत्वे पदद्वयेन पौनरुक्त्यापत्तेः। तत्स्ववाच्यत्वं लक्षयति रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानीत्यत्र द्वितीयकमलपदमिव कमलगुणम्, ततश्च शम्भुर्न केवलं प्रसूतिरहितब्रह्मादिकारणत्वादपरिच्छिन्नैश्वर्यः। अपित्वनन्यसाधारणसर्वेश्वरशब्दवाच्यत्वादपीति सर्वेश्वरश्चेत्यस्याभिप्राय इति सोपपत्तिकः सर्वैश्वर्यानुवादः। एवमुक्तिभङ्ग्या ब्रह्मादीन् परित्यज्य 'शिव एवध्येय' इति दर्शितं भवति। अमुमेवार्थमादरार्थं कण्ठोक्त्या स्फुटयति श्रुतिः 'शिव एको ध्येय' इत्यादिना। तस्मादथर्वशिखानुसारात् शिवस्यैव मुमुक्षुध्येयत्वसर्वेश्वरत्वकारणत्वसिद्धिरिति।

अत्र प्रतिभाति – न तावत् 'ध्यायीतेशानमि'ति ध्येयस्य प्रश्नोत्तरम्। प्राप्तध्यानानुवादेनेशानमिति ध्येयविशेषविधौ, प्राणं मनसि सहकरणैरित्याद्यर्थस्यान्यतोऽप्राप्तत्वेनानुवादासम्भवात् विधानावश्याभावे वाक्यभेदापातात् विशिष्टविध्याक्षिप्तविशेषणविधिविधेयत्वम्, प्रधानतस्तु ध्यानस्यैवेति। कश्च ध्येय इत्यस्य कारणं तु ध्येय इत्यस्योत्तरत्वकल्पनमिति क्लिष्टतरम्।

किं चास्यामुपनिषदि मुमुक्षुणा किं कार्यमिति मोक्षोपायविषयकप्रश्नस्यादर्शनात्। ध्यानस्य मोक्षोपायत्वानिश्चये कश्च ध्येयः, को वा ध्याता, किं च ध्यानमित्यादिप्रश्नप्रतिवचनानुदयप्रसङ्गाच्च। ध्यायीतेशानमिति मोक्षरूपफलोद्देशेन न ध्यानविधिः शक्यः। किं तु पूर्वं विशिष्टध्यानध्यात्रोर्विष्ण्वादिभावेन निरूपणात् विशेषणवैशिष्ट्यम्। 'प्राणं मनसि सहकरणैर्नादान्ते परमात्मनि सम्प्रतिष्ठाप्य ध्यायीतेति ध्यानोद्देशेनापेक्षितत्वात् विधीयते। तत्र ध्यान ईशानविषयकत्वस्यापि विधौ विध्यावृत्तिलक्षणवाक्यभेदो दुर्वारः। न च तत्रापि करणसहभावरूपार्थस्यापि विधानावश्यम्भावात् वाक्यभेदो दुर्वार इति

वाच्यम् । 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वे'त्यस्मिन् वाक्ये (जै. सू. 2-2-12) कृत्वा शब्दान्तसन्दर्भेणैव रेवत्याधारत्वस्य सिद्धेर्न वारवन्तीयत्वात् न फलाय विधौ वाक्यभेदप्रसङ्ग इति रेवत्यधिकरण-पूर्वपक्षोक्तन्यायेनल्यबन्तसन्दर्भेण तत्सिध्या वाक्यभेदप्रसङ्गाभावात् ।

---

## रेवत्यधिकरणम् (वारवन्तीयादीनां कर्मान्तराधिकरणम्)

त्रिवृदग्निष्टुदित्यारभ्य ब्रह्मवर्चसकामो यजेत इत्यन्तंपठितेषु मन्त्रेषु श्रूयते— एतस्यैव रेवतीषु वारवंतीयमग्निष्टोम साम कृत्वा पशुकामोह्येतेन यजेत इति । अग्निष्टोमस्य विकृतिषु अग्निष्टुन्नामकः, एकाहः । पृष्टस्तोत्रे त्रिवृत्स्तोम युक्ततया त्रिवृत् इत्युच्यते । सप्तसोमसंस्थानां मध्ये अग्निष्टोम संस्थारूपत्वात् अग्निष्टोमः इत्युच्यते । प्रकृतौ तृतीयसवने - आर्भवपवमानस्योपरि यज्ञायज्ञीयं साम गीयते । तेन च साम्नाऽग्निष्टोमयागस्य समाप्यमानत्वात् - अग्निष्टोम-सामेत्युच्यते । तच्च प्रकृतौ 'यज्ञायज्ञावो अग्नयः' इत्याद्याग्नेयीष्वृक्षुगीयते । अग्निष्टुति तु ब्रह्मवर्चसकामेन वायव्यास्वृक्षु तत्साम गातव्यम् । तच्च प्रकृता-विवैकविंशत्स्तोमयुतम् । पशुकामस्य तु रेवतीर्नः सधमादः इत्यादिषु रेवतीष्वृक्षु वारवन्तीयं सामगायेत् इति । तत्र रेवतीनामृचां वारवंतीयनामकेन साम्ना यः संबंधः सोऽयं पशुफलायाग्निष्टुतिविधीयते । एतस्यैव इति प्रकृत-परामर्शकैतच्छब्देन, अन्यव्यावर्तकेनैव कारेण चाग्निष्टुतः समर्प्यमाणत्वात् । यथा पूर्वाधिकरण इन्द्रियफलाय प्रकृतेऽग्निहोत्रेदधिगुणोविहितः तद्वत् इति पूर्वः पक्षः ।

दृष्टान्तोऽयं विषमः । दध्नो होमजनकत्वं न शास्त्रेण बोधनीयम् । लोकतोऽवगन्तुं शक्यत्वात् । फलसंबंध एव शास्त्रबोध्यः इति न तत्र वाक्यभेदः । इह तु रेवत्यृगाधारक वारवंतीयसाम्नोऽग्निष्टुत्कर्म साधनत्वं, फलसाधनत्वं चेत्युभयस्य शास्त्रैक बोध्यत्वात् दुर्वारो वाक्यभेदः । तेन पशु फलकं यथोक्त गुणविशिष्टं कर्मान्तरमत्र विधीयते । एतच्छब्दः एवकारश्च विधीयमान कर्मान्तर विषयतया योजनीयौ (जै. सू. 2-2-12)

ननु त्वत्पक्षेऽपि 'प्राणं मनसी'त्यादिवाक्यविशेषणवैशिष्टयस्य कारणं तु ध्येय इत्यत्र ध्येयत्वस्य शम्भुराकाशमध्य इत्यत्रोपासनास्थानस्य च विधेयत्वाङ्गीकारात् वाक्यत्रयम् । मत्पक्षेऽपि तथैवार्थत्रयविधानात् वाक्यत्रयमिति को विशेष इति चेत् - न । 'औदुम्बरस्सोमचमसो दक्षिणा स प्रियाय स गोत्राय ब्रह्मणे देय' ( जै. सू. 10-3-68 ) इत्यत्र स प्रियायेत्यादेः तच्छब्दबलात् भिन्नवाक्यत्वाङ्गीकारवत् **भूमाधिकरणोक्त**रीत्या [ ब्र. सू. ] प्रकरणविच्छेदकत्वशब्दस्वारस्यसिद्धार्थान्तरप्रतिपादकत्वावगतिबलात् भिन्नवाक्यानामङ्गीकारस्यादोषत्वात् । त्वत्पक्षे कारणं तु ध्येय इत्यादेः पूर्वप्रतिपादितार्थप्रतियोग्यर्थान्तरप्रतिपादकत्वाभावेन वाक्यान्तरत्वस्य तु शब्दप्रमाणकत्वाभावेनोपासनास्थानश्रवणागततद्विधानावश्यम्भावनिबन्धनतया तद्वत् मत्पक्षेऽप्युपासनास्थानविधायकवाक्यान्तराङ्गीकारसम्भवात् । पूर्वं विशिष्टध्यानध्यातोरुक्तत्वेनविशेषण

---

## सोमचमसेन कृष्णदक्षिणा पुरुषांतरयोः बाधाधिकरणम् —

ऋतपेये श्रूयते – औदुंबरः सोम चमसो दक्षिणा । सः प्रियाय सगोत्राय ब्रह्मणेदेयः । इति । अत्र विहितः सोमचमसः ब्रह्मभागमेव बाधते । अथवा कृत्स्नाऽपि दक्षिणा इति विषये ब्रह्म भागमेव निषेधति । यतः यत्पशून् दद्यात् सोऽनृतं कुर्यादिति वाक्येन पशुदान निंदया सर्वदान प्रसक्तेः । अतः सोमचमसः अत्र विहितः न सर्वबाधकः । ब्रह्म भागविषये एव तस्य नैर्भर्यात् इति प्राप्ते —

निषेधाय नात्र पशुनिंदा उच्यते । किंतु विधित्सित सोमचमस स्तुत्यर्थत्वेन अर्थवादत्वमेव युज्यते । तेन निंदायाः सर्वसमञ्जकत्वं नास्ति । तस्मात् सोमचमसेन प्राकृत कृत्स्नदक्षिणायाः बाधः एव । तथा सप्रियाय सगोत्राय ब्रह्मणे देयः इति सगोत्रस्यैव ब्रह्मत्वम् । आनत्यर्थं तस्यैव दानं च प्रतिपाद्यते । तेन पुरुषान्तराणां निवृत्तिर्भवति । अत्र वाक्यद्वयं अस्ति । प्रथमेन वाक्येन सोमचमसातिरिक्त दक्षिणाबाधः । द्वितीयवाक्येन पुरुषान्तरबाधश्च । ( जै. सू. 10-3-68 )

वैशिष्ट्यस्य तदपेक्षिततया विधानात्त्रयम्भावात् वाक्यत्रयाङ्गीकारस्य युक्तत्वात्। त्वत्पक्षे तु विधेयश्रवणातिरिक्तस्य वाक्यान्तरावेदकस्य क्वचिदप्यभावात् न वाक्य-त्रयाङ्गीकारो युक्तः।

अपि च 'ध्यायीतेशानमि'त्यत्र ध्येयनिर्धारणाङ्गीकारेऽपि स वा एष एवं पश्यन्नेवं मन्वानः एवं विजानन्नतिवादी भवतीति प्राणातिवादिनोऽति वादित्वोक्त्यनन्तरं 'एष तु वाऽतिवदति यः सत्येनातिवदति' इत्युक्तौ तु शब्दबलादतिवाद्यन्तरप्रतीत्या प्राणातिरिक्तातिवाद्यन्तरप्रतीतिवत् कारणं तु ध्येय इत्यत्र पूर्वप्रतिपन्नध्येयविलक्षणध्येय प्रतीतिरनिवार्येति ध्येयनिर्धारणमकामेनापि स्वीकरणीयमिति। 'ध्यायीतेशान'मित्यत्रापि ध्येयनिर्धारणाङ्गीकारे ईशानशब्द-वाच्यस्य शिवस्य कारणत्वाभाव एवापततीति घट्टकुट्यां प्रभातम्।

किं च कश्च ध्येय इत्यस्य कारणं तु ध्येय इति स्वरूपे उत्तरे सम्भवति ध्यायीतेशानमित्यस्योत्तरत्वकल्पनमप्यसमञ्जसम्। किं च ब्रह्माविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते, कारणं न प्रसूयते। अतः 'कारणं तु ध्येय इत्युक्तावेव विध्यर्थवादैकरस्यं स्यात्। ब्रह्मादयः संप्रसूयन्ते न तु कारणम्। कुत ईशानो ध्येय इत्युक्ते किं केन सङ्गतं स्यात् ईशानस्य ध्येयत्वं विधाय तत्सिध्यर्थं कारणे प्रसूत्यभावोपन्यासादीशानस्य कारणत्व सिद्धेरर्थवादसामञ्जस्यात् इत्युपपादनं त्वितरेतराश्रयग्रस्तम्। ईशानवाक्यस्य विधायकत्वे सति तद्वाक्यविधीयमानार्थो-पपादकत्वेन कारणे प्रसूत्यभावोपन्यासादीशानस्य कारणत्वसिद्धिः, तस्य कारणत्वे सिद्धे कारणपदघटितार्थवादसामञ्जस्यात् ईशानवाक्यस्य विधायकत्व सिद्धिरिति।

किं च कारणत्वेन कारणोपस्थितिपूर्वक विधिप्रवृत्तावेव कारणे प्रसूत्य-भाव प्रतिपादकार्थवाद सामञ्जस्यम्। न तु कथंचित्कारणसङ्गतौ। अत एवान्तरालत्वेनान्तरालोपस्थितिपूर्वकविधि प्रवृत्तावर्थवादसामञ्जस्यादन्तरालवाक्यस्य विधायकत्वम्। न तु यया कथंचिदन्तरालपर्यवसायिनां विष्णवादिवाक्याना-

मित्युक्तमुपांशुयाजाधिकरणे। (जै. सू. 2-2-4) एवं च परस्य स्वसाधक-तयोपांशुयाजाधिकरणन्यायोपन्यसनं स्वयातनायैव पर्यवसन्नमिति स्वबन्धनार्थं

---

**उपांशुयाजाधिकरणम् —**

इदमाम्नायते। जामिवा एतद्यज्ञस्य क्रियते। यदन्वञ्चौ पुरोडाशौ उपांशुयाजमंतरा यजति। विष्णुः उपांशु यष्टव्यः। अजामित्वाय। प्रजापतिः उपांशुयष्टव्यः अजामित्वाय। अग्नीषोमीयौ उपांशुयष्टव्यौ अजामित्वाय। इति। तत्र विष्ण्वादिवाक्येषु विहितस्य यागत्रय समुदायस्य उपांशुयागमंतरायजति इति अनुवादः एव इति पूर्वः पक्षः।

सिद्धांतस्तु — आग्नेयाग्नीषोमीय पुरोडाशद्वय नैरंतर्यकृतस्य जामित्व-दोषस्य वाक्योपक्रमे उपान्यासात् पुरोडाशयोरन्तराले किंचिद्विधित्सितम्। न ह्यन्तरालगुणविशिष्टम् विधेयम् विष्ण्वादिवाक्येषु प्रतीयते। पूर्ववाक्येतु तत्प्रतीयते इति विधायकं तद्वाक्यम् - पंचमलकारस्य आश्रयणात्। यजति इति वर्तमानोपदेशः न शंकनीयः।

अंतरालकालवत् उपांशुत्वगुणस्यापि तद्विशिष्ट कर्मणः उपांशु-याजनामकत्वम्। सत्येवं गुणद्वयविशिष्टकर्मणि आद्येन वाक्येन विहिते विष्ण्वादिवाक्यं अर्थवादः स्यात्। न चात्र विहित यागानुवादेन देवताविधिः शंकनीयः। समाधातव्यत्वेन जामित्व दोषेणोपक्रमात् अजामित्वेनसमाधानेनोप-संहारस्य जामिवै इत्यादेः अजामित्वे तस्य सर्वस्य महावाक्यस्य एकत्व प्रतीतेः। न खलु एकस्मिन् वाक्ये विधेय बाहुल्यम् संभवति। न चात्र विधित्सितस्य उपांशु याजस्य द्रव्याभावः। ध्रौवस्य आज्यस्य तद्द्रव्यत्वात्। नापि देवतायाः अभावः। नाना शाखासु उपांशुयाजक्रमे पठितैः वैष्णव प्राजापत्या ग्नीषोमीय मंत्रैः विकल्पेन देवतात्रयस्य प्रतीयमानत्वात्। तस्मात् उपांशुयाजमंतरा यजति इत्येतदेव विधायकम्। न तु विष्णुरुपांशु यष्टव्यः अजामित्वाय इत्यादिकं वाक्यम्। (जै. सू. 2-2-4)

रज्वानयनन्यायं सूचयति । एतेनेशानस्य ध्येयत्वं विधाय ब्रह्मादीनां ध्येयत्व-व्यवच्छेदाय तेषु दोषोद्भावनानन्तरं तस्य दोषत्वस्येशानएव प्रत्याख्यातव्यत्वात् ब्रह्मादीनामर्थलब्धकारणे तत्परिहार सामर्थ्यादीशान एव कारणमिति गमयतीति निरस्तम् । ध्यायीतेशानमित्यस्य ध्येयनिर्धारकत्वाभावस्योपपादितत्वात् । पुरोडाशद्वयनैरन्तर्यप्रयुक्तजामितादोषसङ्कीर्तनेनान्तराले किञ्चिद्विधित्सितमित्यव-गमेन 'विष्णुरुपांशुयष्टव्य' इत्यस्याप्यन्तरालसम्बन्धिताविधायकत्वस्य वक्तु-मशक्यत्वापत्तेश्च । न चान्तरालसंयुक्तवाक्ये विधिस्वीकारे सम्भवति, कथंचित्सम्पादनीयतत्पर्यवसानं वाक्यं विधायकमिति वाच्यम् । तर्हि कारणं तु ध्येय इत्यस्य कारणविषयकार्थवादसङ्गतस्य सत्वात् । कथंचित्सम्पादनीयार्थ-वादसङ्गते: 'ध्यायीतेशानमि'ति वाक्यस्य विधायकत्वपक्षस्यासङ्गतत्वापत्ते: । न चेशानपदानुषङ्गपक्षे विध्यर्थवादैकस्य ईशानवाक्यविधायकत्वाभ्युपगमेऽप्यस्तीति वाच्यम् । धातृशब्दस्य डुधाञ्धारणपोषणयोरिति धातूत्पन्नत्वेन धारकोपस्थाप-कत्वात् । शरीरलक्षणस्य यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यम्, तत्तस्य शरीरमित्युक्ताधार्यत्वघटितत्वावसायात् । तत्प्रतिसम्बन्धिनो धारकस्यैवात्मशब्दत्वात् । तेन धातृशब्देन नादान्ते परमात्मनीत्युक्तस्य परमात्मन उपस्थित्या विशेषाकाङ्क्षाया अभावादीशानपदानुषङ्ग कल्पनायोगात् । परमात्मा च .... .... चतुर्थ्यर्धमात्रा सा विद्युन्मती सर्ववर्णा पुरुषदेवत्येति पूर्वोक्तार्धमात्रावाच्यनारायणत्वेन नादान्ते परमात्मन इत्यनेनावगम्यते इति परमात्मा क इत्याकाङ्क्षाशान्त्यर्थमपि नेशानपदानुषङ्ग: कल्पनीय: । न च भवत्पक्षे कथमर्थवादसामञ्जस्यम् 'कारणं तु ध्येय' इत्यत्र तु शब्दबलात् वाक्यान्तरत्वप्रतीत्या सर्वमित्यादेस्तच्छेषत्वेन वर्णनासम्भवादिति वाच्यम् । तु शब्दस्य हि न साक्षाद्वाक्यान्तरत्वबोधकत्वम् । किन्त्वर्थान्तरत्वसूचकत्वेन । तथा च पूर्वोक्तार्थादर्थान्तरं विदधातीत्येतावन्मात्रे तेन सूचिते पूर्वविहितार्थे प्रतिपादकवाक्यापेक्षयैव वाक्यान्तरत्वं ततोऽवगम्यत इति न सर्वमित्यादेर्भिन्न-वाक्यत्वप्रतिपत्तिरिति विध्यर्थवादैकरस्यमप्यहतम् । तस्मात् न ध्यायीतेशान-मिति वाक्यादस्य कारणत्वध्येयत्वसिद्धि: ।

न च शम्भुपदसामानाधिकरण्यात् तत्सिद्धिः । 'शम्भुराकाशमध्य' इत्यत्राकाशमध्य इत्युपासनास्थानस्य कारणे शम्भुत्वस्य च विधौ वाक्यभेद-प्रसङ्गात् । शम्भुशब्दस्यानुवादत्वेन श्रुत्यन्तरसिद्धस्य नारायणस्यैव तेनानु-वादात् । प्रयुक्तश्च शम्भुशब्दो नारायणे **सभापर्वणि** —

'इति नारायणश्शम्भुर्भगवान् जगतः प्रभुः ।
तथाऽन्यद्रूपमास्थाय शम्भुर्नारायणो हरिः ॥'

'विश्वाक्षं विश्वशम्भुवमि'ति च । 'शम्भुष्यात्हरीशेष्वि'ति **कोशात्** **प्रसिद्धश्च** शम्भुशब्दः । कोशस्य शक्तिग्राहकमूर्धन्यत्वं च त्वयाङ्गीकृतम् । सर्वेश्वरशब्दसामानाधिकरण्याच्चात्रत्यशम्भुशब्दो भगवत्परः । सर्वेश्वरशब्दस्य भगवन्नामत्वात् । **सुबालोपनिषदि** –'एष सर्वज्ञ एष सर्वेश्वर एषोऽन्तर्यामी'ति भगवति प्रयुक्तत्वात् । 'अजस्सर्वेश्वरस्सिद्ध' इति **तन्नामपाठात्** । सर्वेश्वर-स्सर्वदृक् सर्ववेत्ते'ति **श्रीवैष्णवे पुराणे** भगवति प्रयोगात् । 'पतिं विश्वस्यात्मे-श्वरम्' 'विष्णवे सर्वाधिपतये स्वाहा, विष्णवे स्वाहा, सर्वाधिपतये स्वाहा, चक्रपाणये स्वाहा' 'राजाधिराजस्सर्वेषामि'त्यादौ तदर्थस्य भगवद्धर्मत्व-व्यपदेशाच्च । एवं सर्वेश्वरशब्दस्य मुख्यवृत्तत्वं लभ्यते । पक्षे तु न केवलं ब्रह्मादिकारणत्वादपरिच्छिन्नैश्वर्यम् । अपि तु सर्वेश्वरशब्दवाच्यत्वादपीति सर्वैश्वर्यानुवादोपपत्त्यभिप्रायेण सर्वेश्वरशब्दप्रयोग इत्यङ्गीकारात् स्ववाच्यत्व-लक्षकत्वं स्यात् ।

यदप्युक्तं सर्वेश्वर इति शिवनामत्वेन प्रयोग इति तन्न – तस्य तन्नामत्वे प्रमाणाभावात् । न च 'ओङ्कारं सर्वेश्वरं द्वादशान्तं' इति **तापनीय** प्रयोगात् तन्नामत्वसिद्धिः । तापनीयस्य भगवदवतारनृसिंहविषयत्वेन शिवपरत्वासिद्धेः । **लिङ्गादि** पुराणे प्रसिध्या तन्नामत्वमित्यपि न । सात्विकपुराण प्रसिध्या भगवन्नामत्वानिगमेन तदितर प्रसिद्धेर्बाधात् । श्रुतिषु विरोधाधिकरणन्यायेन बाधाच्च । किं चास्मिन् पक्षे सर्वेश्वर शब्दस्य यौगिकत्वे सर्वैश्वर्यसम्पन्न इत्यनेन पौनरुक्त्या रूढत्वे शम्भुशब्देन योगरूढत्वे पदद्वयेन च पौनरुक्त्यमिति

दूषणं त्वयैव दत्तम्। तस्मादस्मदुक्तरीत्या भगवन्नामत्व एव सर्वैश्वर्यसम्पन्न इत्यस्य ध्येयत्वोपयोगि सर्वैश्वर्यानुवादत्वेन सर्वेश्वर इत्यस्य शम्भुशब्देऽर्थान्तर-भ्रमव्युदसनेन च सार्थक्यं लभ्यत इत्ययमेव पक्षस्साधीयान्। नापि 'शिव एकोऽव्यय' इति शिवशब्दात् देवतान्तरप्रतीतिः। तस्यापि वाक्यस्यानुवादत्वेन शिवशब्देन पूर्वप्रकृतकारणस्यैवानुवादात्। अतो नाथर्वशिखावाक्यबलात् शिवस्य मुमुक्षुध्येयत्वसर्वेश्वरत्वसिद्धिः।

**वेदान्तविजयकृतस्तु** — 'अथर्वशिखायामपि भगवतः कारणत्वं प्रतिपन्नम्। तथा हि — किमादौ प्रयुक्तं ध्यानम्? ध्यायितव्यं किं तत् ध्यानम्? को वा ध्याता? कश्च ध्येय इत्यत्र किं तत् ध्यानं, को वा ध्यातेति ध्यात्रभिमानदेवताप्रश्नः। आद्यप्रश्नस्योत्तरमाह - ओमित्येतदक्षरमादौ प्रयुक्तं ध्यान ध्यायितव्यमिति। द्वितीयस्योत्तरमाह - सर्वकरणानि च मनसि संप्रतिष्ठाप्य ध्यानं विष्णुरिति ध्यानमात्रस्य तद्देवताकत्वाभावाभिप्रायेण; सर्वकारणानि च मनसि संप्रतिष्ठाप्येति विशेषणम्। तृतीयस्योत्तरमाह - मनसि सह करणै-स्संप्रतिष्ठाप्य ध्याता रुद्र इति। अत्रापि विशेषणप्रयोजनं पूर्ववत्। तथा विशेषितयोरेव ध्यानध्यात्रोर्मोक्षोपयोगित्वात् तादृशयोरेव तयोस्तद्देवताकत्वमिति भावः। तदेव विशेषणं विदधाति। प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेति चतुर्थप्रश्नस्योत्तरमाह - ईशानं प्रध्यायितव्यमिति। कश्च ध्येय इति प्रश्नसारूप्यात् पूर्वप्रश्नोत्तरवदिदमेव चतुर्थप्रश्नस्योत्तरं, न तु ध्यायी-तेशानमिति प्रश्नवैरूप्यात् पूर्वप्रश्नोत्तर ईशान इति पुल्लिङ्गनिर्देशे कृते देवतान्त-रस्य बुद्धौ विपरिवृत्त्या परमात्मबुद्धिप्रतिबन्धो भवितेति नपुंसकनिर्देशः कृतः। ईशितव्यविशेषानिर्देशात् सर्वेशानं वस्तु ध्यातव्यमित्यर्थः। प्रधानेषु प्राधान्य-मुपास्यस्य वक्तुं ब्रह्मादीनां प्राधान्यमाह। सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रा इतीदं प्रमाणप्रसिद्धं सर्वमपि ब्रह्मविष्णुरुद्रेन्द्राः राजा राष्ट्रमिति निर्वाह्य निर्वाहभाव-निबन्धनं सामानाधिकरण्यम्। ते सर्वे संप्रसूयन्ते इति वाक्यन्तरम्। एवं इति तच्छब्दस्य प्रयोजनलाभं भगवतः प्राधान्यं व्यञ्जयितुं इदमुत्तरवाक्यं च। एषु भगवतः प्रसूत्यभावस्य वक्ष्यमाणत्वात् तद्वत्तेषु तदन्यकस्य कस्यचित् तदाशङ्का

मा भूदिति सर्वे इत्युक्तम् । एवं सत्येव ह्यस्य प्रयोजनलाभः । न च सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रा इत्युक्तराशिद्वयपरामर्शितया ते सर्वे इत्यस्य प्रयोजनलाभं चकाराभावेन ते सर्वे इति समुदायपरामर्शित्वस्यापेक्षितत्वादिति वाच्यम् । नपुंसकैकशेषापत्तेरिन्द्रादिपाठात् तत्तुल्या परायत्ता प्रसूतिर्ब्रह्मादेरिति स्वरसतोऽवगम्यते । भगवतः प्रसूतिं निषेधति । न कारणं कारणानां ध्याता - कारणानां त्रयाणां मध्ये कारणध्याता धाता न प्रसूयत इति विपरिणामेणानुषङ्गः । विपरिणामेनानुषङ्गपरपक्षेऽपि समानकारणं ध्यातेति, कारणावस्थावान् ध्यातृत्वेन प्रसिद्ध इत्यवगम्यते । तथा प्रसिद्धश्च प्रागत्रा .... नारायणोऽकामयत, सोऽन्यं कामं मनसा ध्यायीतेति । धातृशब्दश्च 'अणोरणीयानि'त्यत्र भगवत्परतया शङ्खलिखितोपबृंहिते प्रसिद्धः । सहस्रनामसु च 'अनादिनिधनो धाते'ति कारणानां कारणमिति शेषे षष्ठयेवाऽस्तु । अर्थात्तु निर्धारणलाभः । विष्णुरिति संप्रसूतिः 'अजायमानो बहुधा विजायते' तस्य धीराः परिजानन्ति योनिम् ।' 'न सा कर्मनिमित्तजा' 'जननं स्वेच्छयैव च' इत्यादिप्रतिपन्ना स्वाधीना ; न तु ब्रह्मरुद्रादिवत् कर्माधीना च । ते संप्रसूयन्त इति षूञ् प्रेरणे इति धातोः कर्मणि लकारे रूपम् । न तु षूञ् प्राणिप्रसवे इत्यस्य षुञ् । प्राणिगर्भमोचने इत्यस्य वा तस्य प्राणिविषयतया सर्वाणि चेन्द्रियाणि सहभूतैरित्यत्रानुषङ्गेणाप्यन्वयायोगात् जायन्त इत्यध्याहारप्रसङ्गादीशानं प्रध्यायितव्यमिति पूर्ववाक्येऽसङ्कोचलब्धसर्वेश्वरत्वस्य साक्षादुपपादकतया प्रेरणार्थस्यैव धातोरत्र ग्राह्यत्वाच्च । परमकारणभूतो ध्याता, ध्याता तु न केनचित् प्रेर्यत इति न कारणमिति वाक्यस्यर्थः । कश्च ध्येय इति विशेषणस्यापि विवक्षितत्वात् । ध्यातव्यस्य हृदयाधिकरणं तु ध्येयस्सर्वैश्वर्य सम्पन्नः सर्वेश्वरः शम्भुराकाशमध्य इति हर्वैश्वर्यसम्पन्न इत्यल सर्वं च तदैश्वर्यं चेति कर्मधारयः । न तु सर्वेश्वरशब्दात् षष्ठीसमासात् ष्यञ् । आदिवृद्धिप्रसङ्गादनेन सर्वप्रकारमीशानं विवक्षितं अस्ति च नियमने प्रकारभेदः । यथा अन्तः प्रविश्य नियमनम् । राजादिवत् बहिस्स्थित्वानियमनम् । धारणप्रवृत्त्यादिविषयवद्दामद्वारं च । इदं च सर्वप्रकारमैश्वर्यं न कतिपयविषय-

मित्युच्यते । सर्वेश्वर इति । एवं च सर्वैश्वर्यसम्पन्न सर्वेश्वरशब्दयोरैकार्थ्य-भ्रमात् सर्वेश्वरशब्दे तच्छब्दवाच्यत्वलक्षणामङ्गीकृत्य पौनरुक्त्यपरिहारः केनचित् कृतोनिरस्तः । वस्तुवृत्तमुक्तम् तथाऽर्थेऽपि सिद्धान्ते न दोषः । सर्वेश्वर-शब्दस्य देवतान्तरे रूढ्यसिद्धेः । इहैव कल्पनायां भगवत्येवास्तु । अत्र च सर्वाणि चेन्द्रियाणीति पृथगिन्द्रियग्रहणमिन्द्रियप्रेरणरूपं हृषीकेशशब्दार्थं नारायणलिङ्गमुपस्थापयितुम् । तस्मादथर्वशिखावाक्यैर्भगवत एवोत्कर्षः सिध्यती'त्याहुः ॥

किं चोपक्रमे प्रणवस्य तिसृणां मात्राणां पीतशुक्लकृष्णवर्णत्वं त्रिमूर्ति-देवताकत्वं चेत्युक्त्वा तस्य चतुर्थ्या अर्धमात्रायाः पुरुषदेवत्यत्वं सर्ववर्णत्वं चोक्तम् । पुरुषशब्दश्च भगवति रूढः । भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ' निरुपाधि च वर्तेते वासुदेवे सनातने ।

यद्वा पुरुषशब्दोऽयं रूढ्या वक्ति जनार्दनम् ।' इति रूढिप्रति-पादकं प्रमाणसहस्रबलात् , सर्ववर्णत्वं च भगवद्धर्मं **भगवद्गीतासु** विश्वरूप-विग्रहे ' नानावर्णाकृतीनिचे'ति नानावर्णत्वोक्तेः । ' तस्य है तस्य पुरुषस्य रूपं यथा माहारजनं वासः यथा पाण्डवादिकं यथेन्द्रकोप ' इति श्रुतेश्च । अत उपक्रमे भगवत्प्रतीतेर्नादान्ते परमात्मनीत्युपक्रमप्रतीतस्य नादान्तवाच्यस्य मध्ये ध्येयत्व प्रतीतेश्चेयमुपनिषत् भगवत्परा ।

यत्तु कश्चिदाह – उपक्रमस्थयोः श्रुतिलिङ्गयोरसाधारण्येऽपि नेहोपक्रम-प्राबल्यावकाशः । उपसंहारे ईशानशम्भुशिवसर्वेश्वरश्रुतीनां चतसृणां शिवाभि-धायिकानां श्रवणात् बहुप्रमाणकस्योपसंहारस्यैव बलीयस्त्वात् । **अत एव पूर्वमीमांसायां** ( जै. सू. 11-4-8 ) ' ऐन्द्र एकादशकपालं प्राजापत्यं

---

**अवेष्ट्यधिकरणम् —**

राजसूयप्रकरणे श्रूयते – दिशां अवेष्टयो भवंति - इति । ताश्चावेष्टयः उत्पत्तिवाक्यैः एवं आम्नायंते । आग्नेयमष्टाकपालं निर्वपति - हिरण्यं दक्षिणा ।

दधिमधुघृतमाप ' इति पञ्चानां हविषा मन्ययोरैन्द्राग्नसान्नाय्यविकारत्वेनामावास्या विध्यन्ते प्राप्तोपांशुयाजविकाराणां मधूदकघृतानां चरमश्रुतत्वेऽपि भूयस्तया तदनु-प्रहाय पौर्णमास्य विध्यन्त ' इति निर्णीतम् । **विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स्व धर्मत्वं** ( जै. सू. 12-2-7 ) क्वचित्क्वचिदुपक्रमानुरोधे-

---

ऐन्द्रमेकादशकपालं - ऋषभो दक्षिणा । वैश्वदेवं चरुं - पिशंगी पष्ठौहि दक्षिणा । मैत्रावरुणीयं आमिक्षां - वशा दक्षिणा । बार्हस्पत्यं चरुं - शिति पृष्ठो दक्षिणा - इति । तासु अवेष्टिषु तंत्रेणांगानामनुष्ठानम् । कुतः । तल्लिंगात् । यदिब्राह्मणो यजेत बार्हस्पत्यं मध्ये विधाय आहुतिमाहुतिं हुत्वा तमभिधारयेत् । यदि राजन्यः । ऐन्द्रम् । यदि वैश्यः वैश्वदेवम् इति । तत्र मध्यनिधानं प्रयोगैक्येलिंगम् । तदैक्याच्च तंत्रमिति पूर्वः पक्षः ।

सिद्धांतस्तु – उत्पत्तिगतेन दक्षिणा भेदेन प्रयोग भेदावगमात् अंगानां भेदः । लिंगंतु बहिष्प्रयोग विषयम् । अस्ति च प्रयोगद्वयम् । राजसूय-प्रकरणपाठात् अंतः प्रयोगः एकः । न च प्रकरणात् - उत्कर्षं कर्तुं शक्यः । राजसूयांगभूतदिव्यस्थापननिमित्तोन्मादपरिहाररूपेणार्थवादेन तत्संबंधावगमात् । तथा च श्रूयते – ईश्वरो वा एषदिशोऽनून्मादितोः । यंदिशोऽनुव्यवस्थापयंति । दिशामवेष्टयो भवन्ति । दिक्ष्वेव प्रतितिष्ठति । अनुन्मादाय । इति । राज-सूयात् बहिष्प्रयोगस्तु एतयाऽन्नाद्यकामं याजयेत् इति विहितः । न च असौ राजसूयांतः पाती । ' यदि ब्राह्मणः ' इत्यादिवर्णसंयोगावगमात् । राजसूये च ब्राह्मण वैश्ययोरनधिकारात् । बहिष्प्रयोगे तन्त्रम् । राजसूयांतः प्रयोगे तु भेदः । ( जै. सू. 11-4-8 )

## भूयसां स्वधर्मत्वाधिकरणम् —

पञ्चदशरात्रस्य अग्निष्टुत्प्रथममहः । तस्यैकाहरूपा अग्निष्टुत्-प्रकृतिः । तत्रोपसत्कालीन सुब्रह्मण्याह्वानार्थं आग्नेयी विहिता । तदेतत् विकृतिरूपे प्रथमेऽहनि चोदकतः प्राप्नोति । इतरेषु चतुर्ष्वहस्सु स्वस्वप्रकृत्यनुसारेण ऐन्द्री

ऽप्यस्याः शिवपरत्वमेव सिद्ध्यति । तथा हि—मात्राणां देवताविभागात् प्रागेव लोकादि 'पृथिव्यन्तरिक्षं द्यौरि'ति मात्रात्रयस्य लोकानुपदिश्यो पदिष्टं अवसेनेस्य चतुर्थ्यर्धमात्रा सा सोमलोक इति । नात्र सोमलोकशब्दश्चन्द्रलोकपरः । तस्य द्युलोकान्तर्गतत्वेन पृथग्ग्रहणायोगात् । किं तु महाकैलासाख्यशिवलोकपरः । एवं चोपक्रमोपसंहारयोरैकार्थ्ये मध्यस्थ नारायणलिङ्गादिकमन्यथा नेयमिति तदेतत्पामरजनलोभनमात्रम् । न हि सोमलोकशब्दः शिवलोकेरूढः असिद्धेः । किं तु 'उमया सहितस्सोमरुद्रस्य लोक' इति यौगिकः : न च रूढिसम्भवे योगाङ्गीकारो युक्तः । न च चन्द्रलोकस्य द्युलोकान्तर्गतत्वेन पूर्वमात्रासम्बन्धि-लोककथनेनैव कथितत्वात् । पुनरेतन्मात्रासम्बन्धिलोकत्वेनाभिधानं न सम्भव-तीति वाच्यम् । विशेषपदसन्निधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वावसायात् । अत '**एवोपांशुयजुषोचैर्निगदेने**'त्यत्र निगदेतरयजुः परत्वं यजुश्शब्दस्याभ्यु-पगतम् । अन्यथैतन्निर्देशान्यथानुपपत्त्या निगदानां यजुर्भ्यो भेदप्रसङ्गात् **निगदाधिकरणोच्छेदः** स्यात् । किं बहुना - एवं सति **ब्राह्मणशब्देन परिव्राजकानामप्युक्ततया परिव्राजकशब्दस्य योगेन ब्राह्मणातिरिक्त-परत्वाद्युपगमे ब्राह्मणपरिव्राजकन्यायोच्छेदः** (जै. सू. 2-1-13)

---

प्राप्ता । उपसत्कालीनायाश्च सुब्रह्मण्यायाः अहर्गणेषु तंत्रं निर्णीतम् । तथा सति अत्र उपसत्कालीन सुब्रह्मण्यायाम् आग्नेयैन्द्रयोः कलहप्राप्तौ असंजात-विरोधितया प्रबलस्य प्रथमस्याह्नः आनुगुण्येन आग्नेयी कार्या इति पूर्वः पक्षः ।

सिद्धांतस्तु - बहूनां अह्नां अनुग्रहाय ऐन्द्री कार्या । 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन बहुत्वमपि प्राबल्यकारणम् । अतः पंचदशरात्रस्य प्रथमस्य अह्नः अग्निष्टुद्यागेऽपि उपसत्कालीन सुब्रह्मण्याह्वाने ऐन्द्रेण सुब्रह्मण्या कार्या । भूयसांस्यात् बलीयस्त्वम् - इति न्यायः अत्र उत्पद्यते । (जै. सू. 12-2-7)

**निगदानां यजुष्ट्वाधिकरणम्** —

प्रोक्षणीरासादय - इध्मं बर्हिरुपसादय - अग्नीदग्नीन्विहर - बर्हिस्तृणीहि । इन्द्र आगच्छ । हरिव आगच्छ । इत्यादयः निगदाः आम्नाताः । परप्रत्या

स्यात् । न च परिव्राजकशब्दस्य ब्राह्मणविशेषरूढ्या तद्बलात् ब्राह्मणशब्दसङ्कोचः क्रियत इति वाच्यम् । तस्यात्रापि सोमशब्दरूढ्यनुसारेण चन्द्रलोकव्यतिरिक्तपरत्वं सम्भवेत्, किमर्थं तत्त्यागः। रूढित्यागे वा न त्वदभीष्टलाभः । न हि तत्तन्मात्रासम्बन्धिलोकस्तत्तद्देवताधिष्ठानभूत इति नियमोऽस्ति येनोपक्रमे शिवप्रतीतिः स्यात् । तथा च 'भक्षितेऽपि लशुने न शान्तोव्याधिरि'ति न्यायेन रूढित्यागदोषोऽधिकः । न च लोक्यत इति व्युत्पत्त्या लोकशब्दः सोमशब्दसामानाधिकरणे शिवप्रत्यायक इति वाच्यम् । तथा सति तत्तन्मात्रासम्बन्धिलोकप्रायपाठविरोधात् 'प्रैतुहोतृश्चमसः प्रब्रह्मणः प्रोद्गातृणामि'त्यत्र ( जै. सू. 3-5-6,7 ) प्रोद्गातृशब्दस्योच्चैर्गानकर्तृत्वयोगेनो-

---

यनार्थाः निगदाः । एते च पूर्वोक्तेभ्यः ऋग्यजुः सामभ्यः बहिर्भूताः चतुर्थ-प्रकाराः । कुतः पाद गीत्योः ऋक्सामलक्षणयोः अभावात् । प्रश्लिष्ट पाठस्य यजुर्लक्षणस्य सत्वेऽपि धर्मभेदेन यजुषि अंतर्भावानुपपत्तेः । उपांशुयजुषा उच्चैः निगदेन । इति हि धर्म भेदः । इति पूर्वः पक्षः ।

सिद्धांतस्तु — बहिर्ब्राह्मणाः भोज्यंताम् । परिव्राजकास्त्वंतः । इत्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो यथा - तथा निगदानां यजुर्लक्षणोपेतत्वेन - यजुषामेव सतां परप्रत्यायन निमित्तः उच्चैष्ट्वधर्मः । ततः मन्त्राणां त्रैविध्यमेव सुस्थितम् । निगदानां यजुष्ट्वमेव । ( जै. सू. 2-1-13 )

## शेषभक्षणाधिकरणम् —

सोमयागेषु सोमहोमो विहितः । ग्रहेण, चमसैः च सोमहोमो विहितः । कृत्स्नस्यैव सोमद्रव्यस्य हुतत्वात् हुतशेषस्य प्रसक्तिरेव नास्ति । यद्यपि अल्पं जुहोति इति वचनेन गृहीत सोमरसात् अल्पभागस्यैव होमो विहितः । तथाऽपि भक्षणविध्य भावात् होमानंतरं भक्षणं नास्ति इति पूर्वः पक्षः ।

सिद्धांतस्तु — शिष्टसोम भक्षणविधायक वचनैः भक्षणं सिद्ध्यति । अवशिष्टस्य सोमस्य कृत्स्नस्य भक्षणमेव । आश्विनं भक्षयति - द्विः ऐन्द्रवायवस्य

द्गातृप्रस्तोतृप्रतिहर्तृषु वर्तनेन बहुवचनाबाधसम्भवेऽपि रूढिपूर्वकलक्षणया स सुब्रह्मण्येषु तेषु वृत्तिरित्यध्वरमीमांसाभाष्य एकस्तोत्रसम्बन्धस्सदस्संनिधान-भक्षवेलाव्यापृतिबद्ध .... .... सामान्यमादाय तयैव लक्षणया त्रिष्वेव वर्तनस्य तद्वार्तिककृताचाभ्युपगतत्वेन तन्नयायेन रूढपूर्वकलक्षणायां ज्यायस्त्वात् सोमवत् प्रियदर्शन इत्याद्युक्तधर्ममादाय भगवत्यपि सोमशब्दस्य प्रत्यया-विरोधाच्च ।

यदप्युक्तं उपसंहारस्य बहुप्रमाणत्वात् प्राबल्यमिति — तन्न — असिद्धेः । अत्र किं सर्वेश्वरशब्दस्य समुदायरूढ्या शिवपरत्वं उतेश्वरशब्दरूढ्या । नाद्यः' प्रमाणाभावात् । न हि सर्वेश्वरशब्दो रुद्राणां स्वनुशिष्टः । न द्वितीयः; प्रतिसम्बंध्यपादाने रूढ्यनुन्मेषात् । अन्यथा 'पद्मानि यस्याग्रसरोरुहाणी'त्यत्र

---

भक्षयंति - सदसि भक्षयंति - इत्यादिवचनानि भक्षणे प्रमाणानि । अतः वचनात् हुतशिष्ट सोमस्य भक्षणम् अस्त्येव । ( जै. सू. 3-5-6 )

## समाख्यायाः विनियोजकताधिकरणम् —

ज्योतिष्टोमे प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातृणां प्रयजमानस्य प्रयंतु सदस्यानाम् - इति श्रूयते । यद्यपि होत्रादीनां चमस संबन्धेन श्रुतिरस्ति तथा अपि वचनाभावात् होत्रादीनां भक्षोनास्ति इति पूर्वः पक्षः । पूर्वाधिकरणेन होमशिष्टस्य सोमरसस्य भक्षणं आश्विनं भक्षयतीत्यादि वचनात् प्रतिपादितम् । तथाऽपि तादृशवचनाभावात् इह होत्रादीनां भक्षणं नास्त्येव ।

सिद्धांतस्तु — भक्षणे यथा वचनं प्रमाणं तथा होतृचमसः ब्रह्मचमसः इति समाख्या बलात् तत्तच्चमसिनां भक्षणं प्राप्नोत्येव । अत्र हि होतुश्चमसः इति निर्देशेन होत्रा चमसस्य संबंधः निश्चीयते । चम्यते - भक्ष्यते सोमः अस्मिन् पात्रविशेषे इति व्युत्पत्त्या पातुः आकाङ्क्षावर्तते । परंतु तत्र तत्र होत्रादिकर्तृणां निर्देशात् त एव पानकर्तारः इति निर्णीयते । समाख्या अपि भक्षणे हेतुः भवति । ( जै. सू. 3-5-7 )

'आकण्ठवारिधरमन्थरमेघदेश्यमि'त्यत्र च पद्ममेघशब्दयोरानर्थक्यापातात्। न चात्र योगार्थस्य रूढ्यर्थविशेषणत्वे मित्रमस्य राजपुरुष इत्यत्रेवानन्वयप्रसङ्गात्, रूढ्यर्थ विवक्षायामपि ईशानस्य नित्यसापेक्षत्वात् देवदत्तस्य गुरुकुलमित्यादाविवान्वयसम्भवात् न रूढिविवक्षायां किंचित् बाधकमिति वाच्यम्। एवं विधेष्वपि शब्देषु विशेष्याकाङ्क्षानुसारात् 'ईशानमस्य जगतः सर्वदृशमीशानमिन्द्र तस्थुष' इत्यादौ रूढित्वं मित्रेन्द्रादिविशेषणत्वेन प्रयोगदर्शनात्।

'ततस्समाप्ते सकले जगत्पतेः।
धृते समूले सकलेश्वरः शिव॥'

इति रूढ्यर्थप्रतिपादकपादान्तरप्रयोगदर्शनाच्च। प्रतिसम्बन्ध्युपादानवत् पदान्तरतुल्ययोगक्षेमतया रूढ्यर्थाविवक्षाया एव कल्पनात्। ईशानं प्रख्यापितव्यमित्यत्रेशानशब्दोऽपि प्रख्यापितव्यमिति विशेष्य समर्पकत्वेनेशानशब्दस्य यौगिकत्वेन विशिष्य रुद्रे रूढित्वे प्रमाणाभावात् न शिवश्रुतिभूतः। न चैवं पङ्कजादिति पदानामपि योगरूढत्वं न स्यादिति वाच्यम्। पद्मव्यतिरिक्ते द्रव्ये पङ्कजनिकर्तृत्वरूपयोगात् सद्भावेऽपि प्रयोगादर्शनेन रूढेरवश्यमङ्गीकरणीयत्वात्। न चेशानशब्दस्यापि नियतः प्रयोग इति शङ्क्यम्। तस्यान्यत्रापि प्रयोगदर्शनात्। तथा हि **महाभारते** —

'द्रव्यपुरुषमीशानं पुरुहूतं पुरुष्टुतम्।' हरिवंशे शततमेऽध्याये —

'तुष्टुवुर्देवमीशानं मन्त्रैर्भागवतैस्तथा।' श्रुतौ च 'धाता ददातु नो रयिमीशानो जगतः पतिः'। **शाबरे च भाष्ये** यदुक्त मनात्वदर्शनमीशाना देवताख्यापयति इन्द्रोदिव इन्द्र ईशे पृथिव्यामित्यादित्येवमादीति तत्प्रत्यक्षमीशानं देवतांमुपलभ्याध्यवस्यामो(द्याप्त)एष शब्द इति अभ्युपगतं न त्वया ईशानादिशब्दानामन्यत्र प्रयुक्तत्वम्। एतेनान्यत्र प्रयुज्यमानानामीश्वरमहेश्वरादिशब्दानामसाधारण्यं व्याख्यातमिति वदता शिवशब्दस्यापि न विशिष्यशक्तिः। तत्प्रदर्शित **बर्हिराज्याधिकरणविरो**धात्। शम्भुशब्दोऽपि शम्भुव्यात्हरीशेष्वित्यनुशासनेन भगवत्यपि। सम्भवद्वृत्तित्वे भगवति हरिशब्दवत्

प्राचुर्यस्य शिवे सत्वेऽप्युपक्रमगतपुरुषशब्दानुरोधेन भगवत्पर इत्येव चितः ।

किं च नालोपसंहारस्य बहुप्रमाणकत्वं शङ्कितुमपि शक्यम् । ईशानादि ां कोशबलादन्तर्गते रूढत्वेऽप्यत्र तस्य ब्रह्मादितुल्ययोगक्षेमतया ध्येयत्वा- रूढ्युपस्थितस्यायोग्यतापराहतत्वात् । न चोत्तीर्णविषयकं कोशस्य वक्तुं । यत् 'प्राये श्रूयते यच्च तत्तादृगत्रगम्यत' इति न्यायस्य त्वयैव तत्वात् । पुराणप्रसिद्धिबलादुत्तीर्णे शक्तिः शिवादिशब्दानां कल्प्यत तु स्ववचनाघातग्रस्तम् । पुरुषशब्दस्य प्रयोगदर्शनासाधारणोक्तयः ाक्यो न भगवति शक्तिग्राहका इति त्वयोक्तत्वात् । किं च जगत्कारणत्वादि दकप्रकरणस्थ वाक्यगतशिवादिशब्दानां कोशबलाद्रूढत्ववर्णनं तव सर्वथा- तम् ।

अपि चैवं सति 'शाश्वतं शिवमच्युतम्' । 'यमन्ततो एष वै पुरुषो पीताम्बरं शिवं चतुर्भुजं सुगम्भीरं निश्चलं सर्वगं शिवम्,

'तपश्चक्रेहरिः कृष्णो विष्णुस्सर्वेश्वरशिवः ।'

श्रीवाराहे तृतीयेऽध्याये,

'तत्र गत्वा मया विष्णुः पुराणपुरुषश्शिवः ।'

द्वादशेऽध्याये, 'शिवं स्वरूपं पुरुषं महेश्वरं
सदा प्रपन्नार्तिहरं व्रतप्रियम् ।'

हाभारते, 'आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।'

ांशे शततमेऽध्याये, 'तुष्टुवुर्देवमीशानं मन्त्रैर्भागवतैस्तदा' ।

नपञ्चाशच्छततमे,

'इत्यादिभिस्तथा देवं वाग्भिरीशानमव्ययम् ।'

**भारतसारसमुच्चये**, 'आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् ।
न चिन्तयति यो विष्णुं नारायणमनन्यधीः ॥
इति नारायणश्शम्भुर्भगवान् ज्ञातः प्रभुः ॥'

**हरिवंशे**, 'तथाऽन्यद्रूपमास्थाय शम्भुर्नारायणोऽव्ययः' ।
इत्याद्यस्य .... .... .... .... .... ॥
ईशस्त्वं सर्वभूतानां ईश्वरोऽसि ततो हरे ॥'

इत्यादिनिर्वचनानां,

'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।
सर्वनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः ॥
ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं प्रभुम् ॥
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।
चतुर्मुखश्शतानन्दो ब्रह्मणो पद्मभूः .... ॥'

इत्याद्यसाधारण्योक्तेश्च सत्वे तत्र शक्तिसद्भावे सति विरोधाभावेनाग्रयणेष्ट्या-मैन्द्राग्न वैश्वदेव द्यावापृथिव्याङ्गेषु द्यावापृथिव्यौ वैश्वदेवसम्बन्धि द्यावा-पृथिव्येककपालविकृतित्वात् प्रसूनं बर्हिर्नियमप्राप्तावैन्द्राग्नादेरश्च प्रसूनं वेत्य-नियमप्राप्तौ समानतन्त्रत्वाच्च । प्रबलत्वात्तदनुग्रहाय विरोधि किं प्रसूनमप्रसूनं वोपादेयमुत प्रसूनमेवेति संशये चैककपालस्य जघन्यत्वादेकत्वाच्च । दुर्बलत्वा-दैन्द्राग्नादेश्च मुख्यत्वादेकत्वाच्च प्रबलत्वात् तदनुग्रहाय प्रसूनमप्रसूनं वोपादेय-मिति पूर्वपक्षं प्राप्य ऐन्द्रादेः प्रसूनोपादानेऽप्युपपत्त्या एककपालयागस्या-प्रसूनोपादाने वेत्यादिदर्शितप्रसूननियमबाधप्रसङ्गादेकं जघन्यमपि द्यावापृथिव्यैक-कपालमनुसृत्य कांस्यभोजिन्यायेन प्रसूनं बर्हिरेवोपादेयमित्यधिकारश्च गुणसाधा-रण्ये विरोधात् । **कांस्यभोजिवदमुख्ये वेत्यधिकरणे निर्णीतत्वे-**नोपक्रमस्थपुरुषशब्दानुरोधेनात्र भगवत्परत्ववर्णनमेव न्यायसौक्ष्म्यविदां हृदया-ह्लादजनकम् ।

ननु चेतनसामान्यशक्तिरपि पुरुषशब्दस्यास्ति चेत् किं ततः ब्रह्मदेवत्या-विष्णुदेवत्या रुद्रदेवत्येतत्प्रायपाठे पुरुषदेवत्येति देवतात्वोक्तेश्च । अस्वत्यस्य सामान्यशक्त्यतिरिक्तत्वावसायात् । ननु विष्णुदेवत्येत्युक्तं विष्णुरूढव्यतिरिक्तत्व-मवसीयत इति चेत् - न । ब्रह्मादिमध्यपाठेन त्रिमूर्त्यन्तर्गत भगवद्दवतारस्य । देवतात्वोक्तावपि मूलभूतस्य पृथगर्धमात्रा देवतात्वस्य वक्तुमुचितत्वात् तस्य भगवत्परत्वे बाधकाभावात् । एतदत्र देवतात्वेनोक्तस्य नान्यदेवतात्वमित्यत्र प्रमाणाभावाच्च । अन्यथा सामान्यशक्तेर्देवतात्वोक्त्या प्रकृताननुगुणत्वेन विशेष-रूढेश्च भगवद्व्यतिरिक्तेऽभावेन सर्वथा तदर्थबाधाप्रसङ्गात् ।

वस्तुतस्तु पुरुषशब्दस्य यथा न चेतनसामान्यशक्तिः तथोपपादित-मधस्तात् ।

'स्वयम्भूश्शम्भुरादित्यः'

'सङ्क्षेप्ताक्षेमकृच्छिव, ईशानः' 'प्राणदः प्राण'

इत्यादि**सहस्रनामपाठात्** भगवन्नामत्वमप्यस्तीति कथं शिवोपस्थापनमेव सामर्थ्यम् ।

यदाह कश्चित्—**नामसहस्रपाठात्** शिवादिशब्दानां भगवन्नामत्वाव-सायः । सर्वार्थाभिप्रायेण 'यानि नामानि गौणानी'त्युपक्रमे भूयोलिङ्ग-समवायात् नाम्नां गौणत्वोक्त्या क्रतुपरस्येनादिनामवत् गौणनामत्वाभिप्रायेण वा तदुपपत्तेः । नामसहस्रमध्येऽनेकदेवतान्तरनामपरिगणदर्शनेन तस्य तद्वाचित्व-कल्पकत्वे प्रमाणाभावात् । अन्यथा **लैङ्गादित्यपुराणा**दिपठितशिवनाम-सहस्रेष्वनन्तर्भूतविष्णुनामासम्भवात् ।

'नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥'

इति **हरिवंशे** कैलासयात्रायां शिववचनेन सर्वेषां विष्णुनाम्नामन्येषां चोत्कृष्ट-नाम्नां हिमकरनाम्नां घनसारनामत्ववत् शिवनामत्वस्य सिद्धेश्च । क्वचिदपि विष्णु-

परत्वनिर्णयो न स्यात् । किं च शिवं प्रस्तुत्य 'सर्वाणि ह्वा एतस्य नामधेयानी'त्याश्वलायनस्मरणात् । श्रुत्या वस्त्वन्तरनिर्णयो लुप्येत । अतो न शिवादिनाम्नां भगवद्वाचकत्वसिद्धिरिति —

अत्रोच्यते — न तावत् सर्वार्थाभिप्रायेण शिवनाम्नां भगवन्नामत्ववर्णनस्योपपत्तिः । तथा सति घटादिशब्दानामपि तन्नामत्वेन विशिष्य कीर्तना सामञ्जस्यात् । नापि 'यानि नामानि गौणानी'त्युक्त्या गौणनामत्वेनोपपत्तिः । गौणशब्दस्य कल्याणगुणयोगनिमित्तत्वप्रदर्शनपरत्वेन शक्यसादृश्यनिबन्धनत्वप्रतिपादनपरत्वाभावात् । अत एव हि 'शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः' इत्यादिपाठः सुसङ्गतः । न च गौणनामभूम्ना गौणानीत्युपपत्तिः । असिद्धेः । कतिपयान्येव हि पदार्थान्तरवाचकानि तत्र दृश्यन्ते । न च लिङ्गसमवायेन तदुपपत्तिः । गौणशब्दमुख्यार्थभङ्गापत्तेः । गौणशब्दसादृश्यनिबन्धनत्वप्रतिपादनपरत्वे भगवदुत्कर्षप्रतिपादककरणानां तस्यापत्तेश्च । तस्मात् गुणयोगनिमित्तत्व परत्वमेव । तदुक्तं **भगवद्गुणदर्पणे श्रीपराशरभट्टार्यैः** — 'इह चतुष्टयीशब्दानां प्रवृत्तिः । द्रव्य, जाति, गुण, क्रिया, विषयभेदेन, अत्र द्रव्योपयिकत्वेनासाधारण्येन वा द्रव्यजातिनिमित्तत्वात् प्रकृष्टगुणकर्मनिमित्तत्वमेव भगवन्नाम्नां ब्रवीति । गौणानीति । गुणेभ्यश्च कर्मभ्यश्च निमित्तभूतेभ्य आगतानि यौगिकानीत्यर्थः । गुणशब्दः कर्मणोऽपि प्रदर्शकः । 'प्रसन्नात्मनो नाम्नां निरुक्तं गुणकर्मजम् ।' भगवान् —

'गौणानि मम नामानि कीर्तितानि तु कानिचित् ।
नामकर्मार्थ वित्तात .... .... ....
निरुक्तं कर्मजानांत्वं शृणुष्व प्रयतोऽनघ ॥'

इत्यादि वचनादिति । न च देवतान्तरनाम्नां भगवद्वाचित्वे प्रमाणाभाव इति वाच्यम् ।

'विष्णोर्नामसहस्रं मे शृणुपापभयापहम् '

इत्युपक्रम्य मध्ये पाठस्यैव तत्र प्रमाणत्वात् । न च तद्गौणनामत्वेऽप्युपपन्नम् । अन्यथा लैङ्गादि पाठित शिवसहस्रनामान्तर्गत विष्णुनामासिध्या विष्णुपारम्य साधनकथैव लुप्येतेति वाच्यम् । तर्हि शिवादि शब्दानामुत्तीर्णं शिववाचित्वस्याप्य भावापत्तेः । न हि तद्वाचित्वे निघण्ट्वादिकं किंचित् प्रमाणमस्ति । न च पौराणिक प्रयोगबलात् तत्र शक्ति कल्पनम् । तुल्यत्वात् ।

ननु तत्र शिवादिशब्दानां मुख्यत्वमिति युक्तम् । निघण्ट्वाद्यभिधान-सम्बन्धि त्रिमूर्त्यन्तर्गत शिवसमानाकारत्वादुत्तीर्णस्येति चेत् – न । शिवसारूप्यं प्राप्तानामपि तत्समानाकारत्वेन शिवादिशब्दमुख्यार्थत्व प्रसङ्गात् । विष्णुनाम्नां शिवसहस्रनामसु पाठनेऽपि ‘ न तु नारायणादीनां नाम्नामन्यत्र सम्भवि ’ ‘ सर्व-नाम्नां गतिर्विष्णुरेक एव प्रकीर्तित ’ इति वचनविरोधात् न तत्र शक्तिकल्पनम् । ‘ नामानि तत्र गोविन्दे’त्यपि भगवन्नाम्नां महत्वविशिष्टनाम्नां च न शिवनामत्व व्यवस्थापकम् । भगवदुत्कर्षप्रतिपादकप्रकरणानां तु स्यात् । यथा चैतत्तथोक्त-मधस्तात् । आश्वलायनवचनं तु ‘ सार्वात्म्यभिप्रायेण सर्वनामवाच्यत्व-प्रतिपादकमि’ति न साक्षादभिधाननिमित्तकविचार विरोधीति न कोऽपि दोष-गन्धः । तस्मादस्मादुपक्रमगतपुरुषशब्दानुरोधादीशानशंभ्वादि , भगवत्पर-मित्युक्तम् । न च विष्णोर्जननश्रवणात् तत्परत्वं वक्तुं न शक्यत इति युक्तम् । ‘ अजायमानो बहुधा विजायत ’ इत्यादिभिस्तज्जननस्याकर्मकृतत्वावर्णनात् । ‘ हिरण्मयः शकुनिर्ब्रह्म नाम । येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पितृमान् योनि योनौ । नावेदविन्मनुते तं बृहन्तम् । सर्वानुभुमात्मानं सम्पराये । एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् । ’ (तैत्तिरीयकाठके–8–9) इत्यनेन चाकर्मवश्यत्वं भगवतोऽवगम्यते । हिरण्मय-शकुनिरि’ति भगवतो हंसावतारोक्त्या ‘ येनादित्यस्तपति तेजसा भ्राजसा चे ’ ( तैत्तिरीयारण्यकं )त्यम्भस्यनुवाकस्थार्थकस्य ‘ येन सूर्यस्तपति तेजसेद्ध ’ इत्यनेनोक्त्या चास्य भगवत्परत्वावगमात् नानावर्णत्वस्य साधारण्योक्तिरपि निष्फला । वैदिकसामान्यात् ‘ तस्य हैतस्य पुरुषस्य रूपमि’त्यादिवाक्यश्रुतरूपं ग्रहीतुं युक्तत्वेन ततो भगवदुपस्थिते सर्ववर्णा पुरुषदेवत्येत्यत्रार्धमालायाः

साक्षात्सर्ववर्णत्वाभावेन देवताद्वारकत्वस्य वाच्यतया तस्य देवतायाः पुरुष-देवत्येत्यनेन पुरुषशब्दवाच्यत्वावगमेन 'तस्य हैतस्य पुरुषस्य रूपमि'ति वाक्ये पुरुषशब्दार्थे श्रुतस्य नानावर्णत्वस्योपस्थितेश्च। तस्मात् पुरुषशब्देन नाना-वर्णत्वलिङ्गेन चोपक्रमे भगवत्प्रतीतेः। तदनुसाराद्**अथर्वशिखा** भगवत्परेति सिद्धम्।

ननु शिवशम्भ्वीशानादिशब्दघटिताया उपनिषदो विष्णुपरत्वकीर्तनमति साहसमिति चेत्-न। न 'चेह किं च नाम आसीत् दिव्यो देव एको नारायणः, एको ह वै नारायण आसीदि'त्यादिनारायणादिपदघटितानामुपनिषदां शिवपरत्व-कीर्तनस्याप्यति साहसत्वमिति कल्प्यत्वात्। किं बहुना सर्वाणि भूतान्या-काशादेव समुत्पद्यन्ते मामुपास्वे'त्यादिवाक्यानामाकाशेन्द्राद्यतिरिक्तपरत्वकथन-मप्यतिसाहसं [ आदिशब्देन प्राणाधिकरणादीनां ग्रहणम् ] स्यादित्या काशाद्यधि-करणोच्छेदः प्रसज्येत। तस्मादापातप्रतीयमानार्थं विहाय न्यायबलादन्यार्थकत्व-स्वीकारो न्यायविद्रोष्ठीनेदिष्ठमेवेति दिक्।

**वेदान्तविजयकृतस्तु**— 'अर्धमात्रासम्बन्धितया सोमसंवर्तकसर्ववर्ण-पुरुषश्रवणात् तदर्थस्यैव च तुरीयत्वेन प्राधान्यात् तत्परत्वावश्यम्भावेन शम्भु-शब्दो भगवत्परः। तथा हि 'यावसानेस्य चतुर्थ्यर्धमात्रा सा सोमलोकत्वर्त्यर्ध-मात्रासम्बन्धित्वेन सोमलोकश्रुतः। सोमश्च न प्रसिद्धः सोमः अयोग्यत्वात्। किं तु भगवानेवोत्तरतापनीये तथैवोपक्रमे श्रुतस्य सोमस्य नारसिंहत्वेनाग्रे प्रपञ्चनम्। **वाराहे** — ब्रह्मरुद्रादीनां स्रष्टुः तुरीयस्य विष्णोस्सोमाख्यत्वमभि-धायेयं श्रुतिरुदाहृता। तथा हि तत्र सप्तदशाध्याये —

'सर्वे देवास्स पितरो ब्रह्माद्याश्चाण्डमध्यगाः।
विष्णोस्सकाशादुद्भूता इतीयं वैदिकी श्रुतिः॥'

इत्यारभ्य 'अग्निस्तथाऽश्विनावि'त्यादिना शन्यादीनां प्रतिपदादितिथिदेवताना-मुत्पत्तिमत्वात्। तेषां च वैश्वानरादिरूपाणां शरीरमाश्रितानां ज्यायस्त्वे विवादं तत्परिचिक्षिषया एकैकशोनिर्गमेऽपि सोमांशे सृष्ट्वा या तस्य शरीरस्यापि शरणं

न्तो लक्षितैस्तुतस्य सोमाख्यस्य परमेश्वरस्य स्थितिं स्रष्टुः तस्य स्तुत्या प्रसाद शरीरान्तर्वैश्वानरादिरूपेण पृष्टानां बहिरग्न्यादिरूपेण सृष्टया मूर्तरूपद्वयदानं बहिर्मूर्तरूपाणां चाग्न्याश्विन्यादीनां वरप्रदानं चोपन्यस्य,

'एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः।
इत्येवं प्रभावो देवोऽसौ वेदवेद्यो जनार्दन ॥'

इति प्रतिपादितम्। अनन्तरमष्टादशाध्यायप्रभृति पञ्चत्रिंशाध्यायान्तेन 'कथमग्नेस्समुत्पत्तिरश्विनोर्वा महामुने' इत्यादिना नक्षत्रदेवतानां शरीरात् बहिर्मूर्तिसृष्टिः प्रतिपादितः। यस्तत्र तद्देवत्यव्रतं चेत्येतान्युक्तानि तत्र सोमाख्येन देवेन शरीरान्तर्वर्तिदेवताया बहिर्विष्णुरूपेण सृष्टिस्तस्य पालनाधिकारतदपेक्षि-मार्वज्ञयं भूषणायुधविशेषद्वादशीतिथिदानं तद्व्रतं तस्य नाभिपद्मात् ब्रह्मणः सम्भवश्चैकत्रिंशेऽध्यायेऽभिहितः। तत्र बहिर्मूर्तिवरप्रदानस्रष्टृत्वाद्युक्ते प्रागुक्तः सोमाख्यपरमेश्वरो यन्ता नारायण इत्यवगम्यते। त्रयस्त्रिंशेऽध्याये ब्रह्मणो रुद्रादिसृष्टि रुद्राणामकरणादिकमुक्तम्। त्रिंशेऽध्याये काश्यपसन्तानोक्ते-रादित्यान्तर्भावेनेन्द्रादीनांसृष्टिरुक्ता। एवं ब्रह्मविष्णुरुद्रेन्द्रप्रभृतिहेतुकत्वं सोमाख्यस्य नारायणस्यात्रोक्तम्। पञ्चविंशे च

'योऽसौ क्षेत्रज्ञसंज्ञो वै देहेस्मिन्पुरुषः परः।
स एव सोमोमन्तव्यो देहिनां जीव संज्ञितः॥'

इति परस्यैव पुरुषस्य सोमशब्दवाच्यत्वमुच्यते। न च 'जीवसंज्ञित' इति वचनात् जीव एवात्र सोम इत्युच्यत इति भ्रमितव्यम्। तत्र 'परः पुरुष' इत्यनुपपत्तेः। 'क्षेत्रज्ञं चापि मां विद्धी'त्यादिषु भगवति प्रसिद्धे जीवसंज्ञितत्वस्य तदभिमान सङ्कर्षणादि मूर्तिमत्वसम्बन्धेन भगवति सम्भवात्। तया च मोक्षधर्मे—

'अहं हि जीवसंज्ञो वै मयि जीवस्समाहितः।
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः॥'

इति च। तस्मात् सोमोऽत्र नारायणः।

तथाऽष्टपञ्चाशे च कान्तिव्रताध्याये —

'बलदेवाय पादौ तु केशवाय तथार्चयेत् ।
एवमर्घ्यं तु मेधावी वैष्णवं रूपमुत्तमम् ॥
परस्वरूपं सोमाख्यं विमलं तद्दिने हि यत् ॥'

इत्यादिना सोमाख्यस्य विष्णोर्व्रतमुक्तम् ।

'कान्तिमानस्मि लोकेषु सर्वज्ञं सर्वदर्शनम् ।
त्वत्प्रसादात् सोमरूपात् नारायण नमोस्तु ते ॥'

इति तल्लिङ्गमात्रं चाभिधाय प्रसिद्धिः सोमोऽप्येतत् व्रताचरणतोषितः सोमाख्यो जनार्दनः तदीयामृतकलायोगादेव सोमत्वं प्राप्त इत्युक्तम् । सोमाख्यत्वोक्त्या भगवति सोमशब्दस्य रूढ्यवगमात् । सोमलोक इत्यत्र सोमशब्देन योगेन देव-तान्तर परिग्रहशङ्का निरस्ता ।

तथा प्रणवमात्राविभागकथने पूर्वमात्रात्रय सम्बन्धित्वेन वेदत्रयानन्तरं क्रमात् ब्रह्मविष्णुरुद्रा उक्ताः । अथार्धमात्राया अथर्ववेदान्तरं संवर्तकोऽग्नि ब्रह्मादिदेवताः स तथा न श्रूयते । स चार्धमात्राप्रतिपाद्यस्तुरीयः प्रायपाठात् ।

'स च संवर्तकोऽग्निर्भगवानेव यः पुरा ।
पुराह्यनलो भूत्वा और्वः संवर्तको विभुः ॥'

इति हरिवंशे कृष्णावतार प्रश्नाध्याय वचनात् । तत्रैव पौष्करप्रादुर्भावे —

'क्षीरोदे सागरे चाभं समुद्रे बडबामुखः ।
वह्निः संवर्तको भूत्वा पिबंस्तोयमयं हविः ॥'

इति मार्कण्डेयं प्रति भगवद्वचनात् 'त्वां बाडबामुखाग्निमाहुः' इति नारायणीये नारदस्तुति वचनात्

'अहं हयशिरो भूत्वा समुद्रे पश्चिमोत्तरे ।
पिबामि सम्मतं हव्यं कव्यं च श्रद्धयाऽन्वितम् ॥'

इति नारदं प्रति भगवद्वचनात् **नारायणीय** एव नामनिरुक्त्यवसरे 'अथ नारायणो लोकहितार्थाय बडबामुखो नाम ऋषिः पुरा बभूवे'ति वचनात्। 'अहः संवर्तकोव्याल' इति सहस्रनामपाठाच्च। तथा यावसानेऽस्य चतुर्थार्ध-मात्रा सा विद्युमती सर्ववर्णा पुरुषदेवत्येति सर्ववर्णीत्वं श्रुतम्। तद्देवताभूत पुरुषस्य तद्वर्णत्वादुपचाराच्चाद्यं पूर्वमात्रात्रये ब्रह्मविष्णुरुद्रदेवतया श्रुते मुक्त-कृष्णशुक्लवर्णस्य तथात्वदर्शनात्। तच्चानेकवर्णत्वं पुरुषशब्दितस्य भगवतो नारायणस्य रूपे प्रसिद्धं **भारतादौ**। यथा **सभापर्वणि** —

अव्यक्तोऽव्यक्तलिङ्गस्थ य एष भगवान् प्रभुः।
पुरा नारायणो देवः स्वयं च प्रपितामहः॥

सहस्रशीर्षा पुरुषो ध्रुवो व्यक्तस्सनातनः।
सहस्रस्य सहस्राक्षस्सहस्रचरणो विभुः॥

सहस्रबाहुस्साहस्रो देवो नाम सहस्रवान्।
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः॥
अनेकवर्णो देवादिरव्यक्ताद्वै परे स्थितिः॥'

इति। अत्र पुरुषस्य पुरुषसूक्त प्रतिपाद्यस्य नानावर्णत्वमुक्तम्। महाद्युतिरिति विद्युन्मतीत्येतत् प्रत्यभिज्ञापकम्। मोक्षधर्मे च **नारायणीये** नारदस्तुत्यन्तरम्—

'एवं स्तुतस्स भगवान् गुह्यैस्तथ्यैश्च नामभिः।
भगवान् विश्वदृक्सिंहः सर्वमूर्तिमयः प्रभुः॥
तं मुनिं दर्शयामास नारदं विश्वरूपधृक्।
किंचित् चन्द्रविशुद्धात्मा किंचित् चन्द्रविशेषवान्॥
कृशानुवर्णः किंचिच्च किंचिद्धिष्ण्याकृतिः प्रभः।
शुकपत्रवर्णः किंचिच्च किंचित् स्फटिकसन्निभः॥
किंचिन्मयूरग्रीवाभः मुक्ताहारनिभः क्वचित्।
एतान्वर्णान् बहुविधान्रूपे बिभ्रत्सनातनः॥

सहस्रनयनः श्रीमान् शतशीर्षा सहस्रपात् ।
सहस्रोदरबाहुश्चाव्यक्त इव च क्वचित् ॥'

इत्याद्युक्त्वा 'मां प्रविश्य भवन्तीहमुक्ता भक्तास्तु ये मम ।
अहं हि पुरुषोज्ञेयो निष्क्रियः पञ्चविंशकः ॥
मां तु जानीहि ब्रह्मर्षे पुरुषं सर्वगं प्रभुम् ॥'

इति पुरुषत्वं चोक्तम् :

'नास्ति तस्मात्परतरं पुरुषाद्वै सनातनात्'

इति । ततः परं च निषिद्धम् । यथा **अथर्वशिखायां** — 'न कारणं कारणानामि'त्यादिना ।

किं च 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते मामेकमीशानं पुरुषं जीवलोकिनम् ॥'

इति **अथर्वशिखार्थः** स्फुटमनुगतः । तत्र 'ध्यायीतेशानमि'ति **शिखा**निर्देशानुरोधेनेशानमिति पुरुषदेवत्येत्येतदनुरोधेन पुरुषमिति ब्रह्मविष्णुरुद्रेन्द्रा इति वाक्यार्थभूतेतरनश्वरत्वाभिप्रायेण 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्' इत्युक्तम् । ततो

'हिरण्यगर्भो लोकादिश्चतुर्वक्त्रो निरुक्तकः ।
ब्रह्मसानुगतो देवो मम बह्वर्थचिन्तकः ॥'

इत्यादिना ब्रह्मविष्णुरुद्रेन्द्रा इति श्रुतिविवक्षितानां ब्रह्मादीनां सर्वेषां देवानामृषीणां च पितॄणां च पुरुषेण ईशितव्यत्वं प्रपञ्चितम् ।

'प्रादुर्भावगतश्चाहं सर्वकार्येषु नित्यशः ।
अनुशास्यस्त्वया ब्रह्मा नियोज्यश्च सुतो यथा ॥'

इत्यादिना ब्रह्मादिभिः सह विष्णोः प्रसूतिरवताररूपेत्याविष्कृतम् । एवं **अथर्वशिखा**स्थानेकार्थ प्रत्यभिज्ञापनेन पुरुषसंज्ञकस्य नानावर्णकत्व कीर्तनात्

**अथर्वशिखा**प्रतिपाद्यो नानावर्णं पुरुषोत्तम इति पञ्चवक्त्र सदाशिवमूर्तौ प्रति-मुखं वर्णभेद मात्रामेद नानावर्णत्वस्यान्यभाव सिद्धिशङ्कावकाशः। पुरुष-दैवत्येत्यत्र पुरुषशब्दो भगवत्परः। पुरुषशब्दस्य भगवदसाधारण्यात्। तस्मात् 'शम्भ्वादिशब्दा भगवत्परा' इत्याहुः।

किं च 'कारणं तु ध्येयः' इत्यस्य ध्येय प्रश्नोत्तरत्वस्य स्थापितत्वात् तस्य च प्रमाणान्तर प्रतिपन्नकारणानुवादेन ध्येयत्व विधिपरत्वात्। तच्छेष-भूते चेतरसन्दर्भे पुरोवादपर्यालोचनायां कारणस्य नारायणत्वेन प्रतीत्या तद्वि-रोधेन **प्रकरणाधीतपाञ्चदश्यावरुद्ध प्रकृतिनिवेशासमर्थविकृति** निवेश-योग्यसाप्तदश्य **विध्यर्थे** (जै. सू. 3-6-2) **सामिधेनीप्राप्त्युपेक्षायां चेत् एकता पञ्चदश्यावरुद्धत्वेनैव तासां प्राप्त्यां तद्विरोधेन** सर्वासु विकृतिषु साप्तदश्यनिवेशासम्भवच्छम्भुत्वस्य निवेशासम्भव वाक्यभेद प्रसङ्गाच्च। शम्भ्वादि शब्दानां शम्भुत्वादि विधायकत्वा सम्भवादनुवादत्वेन प्रमाणान्तर प्रतिपन्नकारण परत्वात् न रुद्रोपस्थापकत्वमिति नात्रोप संहारस्य प्राबल्यशङ्कावकाशः।

---

**सामिधेनीनां सप्तदश संख्यायाः विकृतिगामित्वाधिकरणम्** —

अनारभ्य श्रूयते – सप्तदशसामिधेनीरनुब्रूयात् इति। तपो वाचा-ऽमिद्यत्रः इत्याद्याः अग्नि समिंधनार्थाः ऋचः सामिधेन्यः। तासां साप्तदश्यम्। अनारभ्याधीतत्वात् पूर्ववत् प्रकृतिगतम्। यदि प्रकृतौ पंचदशसामिधेनीरन्वाः इति विधिः स्यात् तर्हि पांचदश्य साप्तदश्ये विकल्पेयातामिति – पूर्वः पक्षः।

सिद्धांतस्तु - विकृतावेव साप्तदश्यं निविशते। प्रकृतौ पांचदश्येनाव-रुद्धानाम् सामिधेनीनाम् संख्याकाङ्क्षायाः अभावात्। न च पांचदश्य साप्तदश्यवाक्ययोः समानबलत्वात् अवरोधाभावः इति शंकनीयम्। पांचदश्ये प्रकरणानुग्रहस्य अधिकत्वात्। तस्मात् मित्रविंदाध्वरकल्पादिविकृतौ साप्तदश्य-मवतिष्ठते। न चात्र पूर्वन्यायेन साप्तदश्य वाक्यस्य प्रकृतौ निवेशः संभवति। साप्तदश्यस्य चोदक प्राप्त्यभावेन पुनर्विधाने दोषाभावात्। अतः साप्तदश्यस्य विकृतावेव निवेशः। (जै. सू. 3-6-2)

यदत्रोक्तं केनचित् कारणशब्दस्य प्रतियोगिसापेक्षत्वार्थत्वस्य 'सहस्रं देवमपरिमितमि'त्यत्रापरिमितशब्दस्य बहुत्वार्थस्य सन्निहितसहस्रापेक्षितबहुत्व-परत्ववत् सन्निध्युपवर्णित कार्यभावानां ब्रह्मविष्णुरुद्राणां कारणे पर्यवसानात् । ब्रह्मविष्णुरुद्रशब्दैः स्वरसता प्रतीयमानानां गुणमूर्तीनां त्रयाणां कारणत्वेन श्रुत्यन्तरेऽपि शिवादन्यस्य प्रतिपादनादर्शनात् कथञ्चित् सर्वकारणत्वादि प्रति-पादनान्तर्भावेन तत्र तत्सिध्यभ्युपगमे वा इहैव ब्रह्मादीनां प्रसूत्यन्तर्भावेन सिद्धस्य तत्कारण सामान्यस्य समनन्तर वाक्य सिद्धस्यैवानुवादसम्भवे श्रुत्यन्तर-मुखनिरीक्षणायोगात् । 'ध्यायीतेशानमि'ति ध्येयविशेषस्य प्रागेव निर्धारितत्वेन सोपपत्तिकं पुनस्तदर्थोपसंहारपरेऽस्मिन्वाक्ये ध्यानविषयपरस्य शब्दस्य देवतान्तर परत्वकल्पनस्यात्यन्तानुचितत्वात् । कथंचिदस्यैव वाक्यस्य ध्येयविशेषनिर्धारण-परत्वेऽपि सामानाधिकृतशम्भ्वादि पदस्वारस्यानुरोध समनन्तरवाक्य सिद्धकारण-मेवेह कारणशब्देनानूद्यते, न श्रुत्यन्तरसिद्धमिति —

तदपि तदुपदेशश्रद्धालुजनेभ्यो रोचते; न तु न्यायपथानुवर्तिभ्यः। कारणशब्दस्य सापेक्षार्थतया सन्निहितकार्यभूतब्रह्माद्यन्वयेऽपि शिवस्यानुवादः। शिवस्यापि वाक्यान्तरे ब्रह्मादिकारणत्वेनाप्रतिपन्नत्वात् । मास्तु वाक्यान्तरे प्रतिपत्तिः। प्रकृतवाक्य एव तत्कारणत्वं विधीयत इति चेत् - न। अस्य वाक्यस्य ध्येयप्रश्नोत्तरत्वेन ध्येयत्वविधायकतया तदर्थवादस्य 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्त' इत्यस्य तदेकवाक्यतया तत्कारणत्वविधायकत्वाभावात्। अन्यथा वाक्यभेद प्रसङ्गात् । एतेन प्रसूतेरुपादानाकाङ्क्षायां सन्निहितेशानस्य तथात्वेनान्वय इति शिवार्कमणिदीपिका निरस्ता। तथा सति नाशस्य ब्रह्मादि-कारणत्वविधौ वाक्यभेद प्रसङ्गात् । अभ्युपगतं च परेणापि ब्रह्मादिप्रसूति-वाक्यस्यार्थवादत्वेन ध्येयविध्यैकवाक्यत्वम् । न चैवमपि नारायणस्याप्यनुवादः। तस्य वाक्यान्तरे प्रतिपादनादर्शनादिति वाच्यम् । विशिष्यातोऽन्यत्राप्रतिपत्तिः। अथ एव सामान्यकरणत्व सिद्धिमुपजीव्यानुवाद सम्भवात् । सामान्यतः कृत्स्न-जगत्कारणत्वस्य भगवदेकान्ततयावस्थापितत्वात् विशिष्य शिवातिरिक्तस्य ब्रह्मादि कारणत्वेन प्रतिपादनादर्शनादित्युक्तिरप्यज्ञानमूलेव 'नारायणात् ब्रह्मा जायते,

नारायणात् रुद्रो जायते, नारायणादिन्द्रो जायत' इति वाक्यैर्भगवतः स्थिरत्व प्रतिपादनात् । न चात्र विष्णोः कार्यत्वं प्रतीयते, तत्कारणत्वेन च न नारायणस्य प्रतिपत्तिरभेदात् तादृशवाक्यदर्शनाच्चेति वाच्यम् । अभेदेऽपि स्वात्र-तारस्वरूपेण कार्यत्व सम्भवात् । 'अजायमानो बहुधा विजायत' इत्यादि वाक्यैश्च ब्रह्माद्यन्तर्गत स्वावतारकारणत्वस्य प्रतिपन्नत्वाच्च ।

एतेन ब्रह्माद्यन्तर्भावेन कृत्स्नजगत्कारणत्वस्यापि प्रकृतवाक्य एव सिध्या कारणसामान्यस्य समनन्तरवाक्यस्यैवानुवादसम्भवे श्रुत्यन्तरमुखनिरीक्षणायोगादिति परास्तम् । कारणत्वस्य समनन्तरवाक्यादसिद्धेरुपपादितत्वात् ।

यदप्युक्तं 'ध्यायीतेशानमि'ति ध्येयविशेषस्य प्रागेव निर्धारितत्वेन सोपपत्तिकं पुनस्तदर्थोपसंहाररूपेऽस्मिन् वाक्ये ध्यानविषयपरस्य शिवातिरिक्त-विषयकल्पनस्यात्यन्तानुचितत्वादिति — तदेतन्न विद्वद्गोष्ठीषु शोभते — 'कारणं तु ध्येय' इत्यस्य ध्येयप्रश्नोत्तरत्वमभ्युपगम्येदमुच्यते । किं वा ध्यायीतेशान-मित्यस्य तथात्वमभ्युपगम्य । नाद्यः; दूषणस्यालम्भकत्वप्रसङ्गात् । ध्यायी-तेशानमिति ध्येयविशेषस्य प्रमाण निर्धारितत्वेनेत्युक्ति व्याघाताच्च । न द्वितीयः; कारणं तु ध्येय इत्यस्य ध्येयप्रश्नोत्तरत्वमभ्युपगम्य भगवत्परत्वे वर्णिते ध्यायी-तेशानमित्यस्य तदुत्तरत्वमभ्युपगम्य दूषणस्य व्यधिकरणार्थत्वात् दूषितं चास्माभिः ध्यायीतेशानमित्यस्य प्रश्नोत्तरम् ।

यदप्यस्यैव वाक्यस्य ध्येयविशेषणनिर्धारणपरत्वेऽपि समानाधिकृत-शम्भ्वादिपदस्वारस्याविरोधाय समनन्तरवाक्यसिद्धस्यैव कारणस्यानुवादयोग्यत्वा-दभ्युदयवाक्ये चान्यत्वेपि सामर्थ्यसिद्धस्यानुवादसम्भवाच्च । उदाहृतश्रुत्यर्थकथन-प्रस्तावोपवर्णितेन सामर्थ्येन शिवरूपेणावगमितं समनन्तरवाक्यसिद्धं कारणमेव.... कारणशब्देनानूद्यत इति — तदप्यतिहासास्पदम् — अस्य ध्येयनिर्धारणपरत्वे कारणस्यैव ध्येयत्वम् । न तु कार्यभूतानामित्येवं ब्रह्मादीनां ध्येयत्वव्यवच्छेदाय-कार्यत्वस्यैव वक्तव्यतया तत्कारणकथनस्यापेक्षितत्वात् , कस्यचित् वस्तुनस्त-त्कारणस्यात्रैव कथने वाक्यभेदप्रसङ्गाच्च । कारणसमनन्तरवाक्यसिद्धेः तदनु-

वादासम्भवादस्य वाक्यस्य ध्येयप्रश्नोत्तरत्वे कारणस्य सामर्थ्येन शिवरूपेणाव-गमासिद्धेश्च। ईशानस्य ध्येयत्वमुक्त्वा किमनेन तादृशेत्याकाङ्क्षायां ब्रह्मादिषु दोषमुद्भाव्य तद्दोषपरिहारकारणे क्रियमाणस्सामर्थ्यादीशान एव कारणमिति गमयतीति त्वदुक्तेः कारणं तु ध्येय इत्यस्य प्रश्नोत्तरत्वपक्षे एवाऽवतारात्।

ननु ध्येयत्वव्यवच्छेदार्थं ब्रह्मविष्णुरुद्रेन्द्रा इति कार्यकोटिनिविष्टतया कथ्यमानस्य विष्णोः कथं ध्येयत्वमुच्यत इति चेत्-न। किं कार्यकोटि-निवेशात् ध्येयत्वं न सम्भवतीत्यभिमतमुत ध्येयत्वव्यवच्छेदात्। नाद्यः, कर्मकृतस्यैव कार्यत्वस्य तत्प्रतिक्षेपकत्वात्। भगवतस्तु 'अजायमानैः इत्यादिना कर्मकृतजननराहित्यावगमात्। न चेदं वाक्यं ध्येयत्वव्यवच्छेदाय जननं प्रतिपादयत् तस्य कर्मकृतत्वमप्यवगमयतीति वाच्यम्। कर्मकृतत्वाभावप्रतिपादक प्रत्यक्षश्रुतिविरोधेन तत्कल्पनानुदयात्। न द्वितीयः, ध्येयत्वव्यवच्छेदकस्याशाब्द-त्वात्।

ननु ध्येयविशेषनिर्धारणार्थं प्रवृत्तमिदं वाक्यमिति कारणैकध्येयत्वमत्र-प्रतिपाद्यम्। तच्चेतराध्येयत्वप्रतिपादनमुखेन कारणध्येयत्वतदितराध्येयत्वयोर्भेदस्तु कथनमुखेन चात्र क्रियत इति ब्रह्मायध्येयत्वहेतुतयोच्यमानं कार्यत्वं कथं न कर्मवश्यत्वमवगमयति। कथं वाऽध्येयत्वस्य शाब्दत्वेन प्रतिक्षेप इतरध्येयत्वाभावं विना ध्येयविशेषनिर्धारणासम्भवादिति चेत् उच्यते—इतराध्येयत्वं कारणध्येयत्व-मित्यर्थद्वयं न विधीयते, वाक्यभेदप्रसङ्गात्, गौरवाच्च। किन्तु कारण-ध्येयत्वं नियम्यते। ततश्चार्थसिद्धं तदितराध्येयत्वं न शाब्दमिति न तत्र हेत्व-पेक्षा। येन तद्धेतुतयोच्यमानं कार्यत्वं कर्मकृतत्वमवगमयेत्। ततश्च ध्येयत्व-हेतुतया प्रसूतिराहित्यमात्रं कथ्यत इति ब्रह्मादीनां कार्यत्वप्रतिपादनमनुवादो भवतीति यथा प्रापकं यस्य यादृशं जन्म तदनुवादमात्रमेव कर्तव्यमिति नेदं वाक्यं जन्मनः कर्मकृतत्वेऽपि प्रमाणम्।

नन्वेवमपि ध्येयत्वहेतुप्रसूत्यभावप्रतिस्पर्धिप्रसूतिमतः कथं ध्येयत्वमुच्यत इति चेत्-न। कारणनिष्ठप्रसूत्यभावस्तुल्यर्थमन्यत्र प्रसूतिमात्रं कथ्यते। न

हि निन्दान्यायेनेति तत्प्रतिस्पर्धिकीर्तनरूपत्वाभावात् । न चैवं ब्रह्मादीनां कथं ध्येयत्वव्यवच्छेद इति शङ्क्यम् । कीर्त्यमानस्य प्रसूतिमत्वस्य बाधकाभावे कर्मकृतत्वावश्यम्भावेन ततस्तद्ध्येयत्वव्यवच्छेदात् । भगवति त्वजायमान इत्यादीनां तथात्वे बाधकत्वमित्यसकृदावेदितम् ।

नन्वेवं प्रसूतिमदभेदः कारणस्य किमर्थं वक्तव्यमिति चेत् - प्रमाणस्वारस्यसंरक्षणायेत्यवेहि । सर्वेषां कारणवाक्यानां नारायणे पर्यवसानं हि **प्रथमपरिच्छेदे** व्यक्तमुक्तम् । न चैवमप्येकत्र प्रसूतितदभावव्यवहारयोः कथं सङ्गतिरिति वाच्यम् । मुख्यप्रसूत्यभावेन तदभावव्यवहारस्य सुसङ्गतत्वात् । प्रसूतिमत्वव्यवहारस्यास्याविर्भावे प्रसूत्युपचारेण सङ्गतव्यवहाराच्चोभयव्यवहारोपपत्तेः । न चैवं प्रसूयन्त इत्यस्य गौणमुख्यार्थकत्वं वैरूप्यं प्रमाणानुसारेण तस्या दोषत्वात् । **ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यात्मनेपदावगतं** ज्योतिष्टोमे कर्तव्यं हविस्त्यागदक्षिणादानादेर्द्रव्योत्सर्गादन्यत्र कर्मणि प्रयोजककर्तृत्वमादाय, द्रव्योत्सर्गेतु साक्षादिति वैरूप्यस्य ऋत्विग्भ्यो दक्षिणां ददाती'ति वचनान्तरानुसारेण, सह सोमौ क्रीणातीत्यभिषेचनीयस्य दशपेयस्य चेत्यत्र क्रीणाते रूपसंपादलक्षणा '**सद्यो दीक्षयन्ति सद्यस्सोमं क्रीणन्ती**'ति वचनान्तरानुसारेण चाभ्युपगमात् ।

नन्वेवमप्येकत्र स्तुतिनिन्दयोः कथमुपपत्तिरिति चेत् - न । त्रिमूर्तिमध्यावतीर्णत्वरूपावस्थां कार्यरूपां, मूलभूतस्वरूपं चादायोभयोपपत्तेः । तस्मादियमुपनिषत् कारणत्वध्येयत्व सामानाधिकरण्यमात्र प्रतिपादनप्रवणेत्यनया यत्कारणान्तर्ध्येयमित्येतावन्मात्रं सिध्यतीति कारणत्वप्रतिपादकशास्त्रान्तरपर्यालोचनेनैव ध्येयदेवताविशेषनिर्धारणम् नत्वनयेति **सौबालादिषु** सकलजगत् कारणतया निर्धारितस्य भगवतो मुमुक्षुध्येयत्वं निष्कण्टकं सिध्यति ।

अथ एव **आनुशासनिके** —

'सारं मे सर्वशास्त्राणां वक्तुमर्हस्यनुग्रहात्'

इति सारतमप्रश्नोत्तरेऽस्मद्वर्णितन्यायमर्यादामनुसृत्य नारायणेऽस्य सकलजगत् कारणवर्णनपूर्वकं ध्येयत्वनिर्धारणमेतच्छ्रुत्यर्थोपबृंहणाभिप्रायेण कृतं दृश्यते।

भीष्मः —

'श्रूयतामिदमत्यन्तं गूढं संसारमोचनम्।
श्रोतव्यं च त्वया सम्यक् ज्ञातव्यं च विशांपते॥
पुण्डरीकः पुरा विप्रः पुण्यतीर्थजपान्वितः।
नारदं परिपप्रच्छ श्रेयो योगपरं मुनिम्॥
नारदश्चाब्रवीदेतं ब्रह्मणोक्तं महात्मना।
अप्रभूतं प्रभूतार्थं वेदशास्त्रार्थसागरम्॥
यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः।
स एव सर्वभूतात्मा नर इत्यभिधीयते॥
नरात् जातानि तत्त्वानि नाराणीति ततो विदुः।
तान्येव चायनं तस्य तेन नारायणः स्मृतः॥
नारायणात् जगत्सर्वं सर्गकाले प्रजायते।
तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते॥
नारायणः परं ब्रह्म तत्त्वं नारायणः परः।
परादपि परश्चासौ नास्ति तस्मात्परात्परः॥
वासुदेवं तथा विष्णुमात्मानं च ततो विदुः।
संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्तुतः॥
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा॥
तस्मात् त्वं गहनान् सर्वान् त्यक्त्वा शास्त्रार्थविस्तरान्।
अनन्यचेता ध्यायस्व नारायणमजं विभुम्॥'

इति॥ अत्र कारणं तु ध्येय इत्यस्य 'ध्येयो नारायणस्सदे'त्येतदुपबृंहणमिति सूचयितुं 'नारायणाज्जगत्सर्वमि'त्यादिना कारणत्वस्य नारायणनिष्ठत्वं प्रति-

पादितम् । परामिमतनारायणाधिकतत्त्वपरत्वं निषेद्धुं तदधिकतत्त्वस्य शशशृङ्ग-तुल्यता । परादपि परश्चासावित्यादिना प्रतिपादिता । 'नादान्ते परमात्मनि' इति परमात्मशब्दस्य भगवत्परत्वद्योतनायात्मानं च तथा विदुरित्युक्तम् ।

नन्वथर्वशिखास्थध्येयत्वं कथं नारायणपर्यवसायि । अत्र शम्भु-शिवेशानादिशब्दसामानाधिकरण्यादित्याशङ्कानिराकरणाय 'संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्तुतः' इति तेषां शब्दानां भगवत्परत्वमुक्तम् ।

ननु हिरण्यगर्भादीनामपि तत्र तत्र कारणत्वादिकं प्रतिपाद्यमानं दृश्यते, तत्कथं नारायणस्य सर्वस्मात्परत्वम् । न च संज्ञाभेदैः इत्युक्तरीत्या हिरण्यगर्भ-शिवादिशब्दानां नारायणपरत्वं प्रमाणाभावादिति चोद्यनिराकारणपूर्वकम् ।

'यच्छ्रेयः परमं कृत्यं अनुष्ठेयं महात्मभिः ।
सारं मे सर्वशास्त्राणां वक्तुमर्हस्यनुग्रहात् ॥'

इति पूर्वकृतस्यानुष्ठेयार्थप्रश्नस्योत्तरमाह - आलोड्य सर्वशास्त्राणीति । तद्वाक्य-मात्रपर्यालोचनवतां सूक्ष्मन्यायानभिज्ञानामापातप्रतीतिसन्तुष्टानां च हिरण्यगर्भादि-कारणत्वं प्रतीयते । सर्ववेदगतसर्वशाखाध्यायिनां सम्यग्विचारपौनः पुन्यप्रवृद्ध सूक्ष्मन्यायौषधसंस्तुतस्वान्तनारायणकारणत्वम् । अतो न्यायवशात् हिरण्य-गर्भादिशब्दानामपि भगवत्परत्वमुपपद्यत इति तस्यैव सर्वोत्कृष्टत्वं मुमुक्षुध्येयत्वं चोपपद्यत इत्यभिप्रायः । शिव एको ध्येयः सर्वमन्यत्परित्यज्येति वाक्य-कटाक्षेण च ।

'तस्मात्त्वं गहनान् सर्वान्त्यक्त्वा शास्त्रार्थविस्तरान् ।
अनन्यचेता ध्यायस्व नारायणमजं विभुम् ॥'

इत्युक्तम् ।

नन्वेतदुपबृंहणेनाथर्वशिखाया विष्णुपरत्वं न निर्धारयितुं शक्यते ।

'यस्मात् सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रपूर्वकम् ।
सह भूतेन्द्रियैः सर्वैः प्रथमं सम्प्रसूयते ॥

कारणानां च यो धाता धाता परमकारणम् ।
न संप्रसूयतेऽन्यस्मात् कुतश्चन कदाचन ॥
स सर्वैश्वर्यसम्पूर्णो नाम्ना सर्वेश्वरः स्वयम् ।
सर्वैर्मुमुक्षुभिर्ध्येयः शम्भुराकाशमध्यगः ॥'

इति **शिवपुराणे** शिवपरतयोपबृंहणात् । अत्र अथर्वशिखावाक्यप्रत्यभिज्ञानेन तदुपबृंहणत्वं स्फुटतरमवगम्यत इत्येतदनुसारेणैव श्रुत्यर्थो वर्णयितुं युक्तः । किं च ।

'प्रणवश्शतरुद्रीयं तथाथर्वशिखाः च या ।
एतेषां तु जपः पुत्र स्वाध्याय इति कीर्त्यते ॥'

इति श्रीरुद्रतुल्ययोगक्षेमत्वकीर्तनात् शैवत्वं स्फुटम् ।

अपि च 'सर्वमन्यत्परित्यज्य शिव एव शिवङ्करः ।
ध्येय इत्याह परमा श्रुतिराथर्वणी खलु ॥'

इत्यादि । अस्याः श्रुतेः शिवपरत्वं **शैवपाराशरस्कान्देषु** प्रतिपन्नमिति तद्विरोधात् कथमेतदुपबृंहणेन विष्णुपरत्वमथर्वशिखायां वक्तुं शक्यम् ।

उच्यते — किं यस्मात्सर्वमित्याद्युपबृंहणविरुद्धत्वान्**महाभारत**स्थमेतच्छ्रुत्युपबृंहणं न भगवत्यभिमतम् । किं वा तदुपबृंहणत्वेऽपि एतद्विरोधात् न प्रामाणिकत्वं शङ्क्यमिति । नाद्यः; तच्छ्रुति प्रतिपाद्यत्व प्रधानस्य मुमुक्षुध्येयत्वस्यात्र प्रतिपादनात् अन्यत्र धातृशम्भ्वादिशब्दवाच्यत्वाभिप्रायेण 'संज्ञाभेदैः स एवैक' इत्यस्य प्रवृत्तेः । तत्रत्यध्येयवस्तुकार्यत्वाभाव कथनसिद्धं तत्परतरवस्तुभावस्य ।

'परादपि परश्चासौ नास्तिं तस्मात्परात्परा ।'

इत्युच्यमानत्वात् तदुपबृंहणत्वनिर्धारणात् । न हि विरुद्धोपबृंहणान्तरसद्भावेऽन्यस्योपबृंहणत्वमुपैति । त्वया पुरुषसूक्तस्तु भगवत्परतायां परस्सहस्रोपबृंहणसद्भावेऽपि शिवपरतायामुपबृंहणत्वेन ।

'द्यौर्मूर्धा तु विभोः तस्य खं नाभिः परमेष्ठिनः'

इत्यादेरुपन्यासदर्शनात् । न द्वितीयः, अविगीतमहाजनपरिग्रहेण सर्वलोकविदितेन सिद्धस्य भारतप्रामाण्यस्य त्वद्वचनविश्वासमात्रावगतं नव्यस्वरूपमप्यावक्तावचनेन बाधितुमशक्यत्वात् ।

नन्वस्तु भारतस्यापि प्रमाणत्वम्, तथापि तच्छ्रुतिस्थपदप्रत्यभिज्ञानेन शैवपुराणवचने तदुपबृंहणत्वं स्फुटतरमवगम्यत इति तत एव श्रुत्यर्थनिर्णयो युक्तः । नास्फुटतरतदुपबृंहणभावेन भारतवचनेन तदर्थनिर्णय इति चेत् न । इतरांशप्रत्यभिज्ञानाभावेऽपि तच्छ्रुतिप्रतिपाद्यध्येयत्वस्यात्र प्रतिपादनं स्फुटमिति तदंशोपबृंहणत्वेऽपि बाधाभावादुभयत्रापि मोक्षपरमोपायध्यानविषयनिर्धारणं हि क्रियते ।

नन्वेवमपि शिवपुराणवचनविरोधात् भारतं नास्याः श्रुतेर्नारायणपरत्वमवगमयितुमीष्ट इति चेत् - न । 'वैदिकैः स्मर्यमाणत्वात् तत्परिग्रहदार्ढ्यतः । सम्भाव्य वेदमूलत्वात् स्मृतीनां वेदमूलता ॥' इत्युक्तरीत्या परिग्रहस्य प्रमाणहेतुत्वात् तदुत्कर्षापकर्षाभ्यां प्रामाण्येऽपि तयोरवगमात् । अत एव हि **मनुयाज्ञवल्क्यादिस्मृति**विरोधे तदितरस्मृतेरप्रामाण्यमभ्युपगतं न्यायविद्भिः । तस्मादविगीतसकलवैदिकपरिग्रहदार्ढ्यातिशयेन भारतस्य प्रमाणतमत्वेन ततो नारायणपरत्वमस्या श्रुतेर्निर्धारयितुं शक्यम् । न तु तद्विरुद्धशिवपुराणवचनेन शिवपरत्वम् । एतेन किं चेत्यपि निरस्तम् । 'प्रणवश्शतरुद्रीयमि'त्यत्र तज्जपस्य पावनत्वमात्रमुच्यते न तु शिवपरत्वमपि ततोऽवगम्यते । न च श्रीरुद्रतुल्ययोगक्षेमत्वकीर्तनात् शिवपरत्वनिर्णयप्रणवस्य **मैत्रायणीय**श्रुत्या **आत्मप्रबोधोपनिषदादिषु** नारायणपरत्वावगमेन तत्साहचर्यबलात् भगवत्परत्वस्यापि वक्तुं शक्यत्वात् । न च शिवयोगिनिरूपणदशायां कीर्तनात् तथात्वनिर्णयः । अन्तः करणशुद्धिहेतुत्वमात्रेणैव तस्याप्युपपत्तेः । अपि चेत्यपि न ।

'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः'

इति ध्येयत्वं कृत्स्नशास्त्रपर्यालोचनया नारायणैकान्तमित्युक्त्या एकवाक्यापात-प्रतीतिसिध्यर्थानुवादशिवस्तुत्यर्थमेषु वचनेषु कियत इत्यवगमात् न शैव **पराशर-स्कन्दादिवचनैः** शिवपरत्वं निर्णेतुं शक्यम् ।

अपि च 'एको ह वै नारायण आसीत् । न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् । तत एते अजायन्त । विश्वो हिरण्यगर्भो-ऽग्निर्यमवरुणविष्णुरुद्रेन्द्राः । तस्य हैतस्य परमस्य नारायणस्ये'ति **पैङ्गिरहस्य-**श्रुतावथर्वशिखा समानार्थायां विष्णुरुद्रेन्द्रादय इति शिखावाक्यप्रत्यभिज्ञापूर्वकं तज्जनकस्य नारायणादाविष्करणात् तद्विरोधात् नोपबृंहणानि शिवपरत्वं साधयितुं प्रभवन्तीति पूर्वोक्तोपबृंहणसहकृतैर्न्यायैरथर्वशिखाया भगवत्पारम्य प्रतिपादकत्व-मेवेति न ततः शिवपारम्य प्रत्याशावकाश इति सर्वं समञ्जसम् ।

ननु कारणानुवादेन ध्येयत्वविधावपि न विष्णोर्ध्येयत्वविधिः । **अथर्व-शिरसि** शिवस्य सर्व कारणत्व श्रवणादन्तर्यामित्वस्य कारणत्व सहचरितस्य तत्र श्रवणाच्चेति चेत् ।

**अत्रास्मदाचार्याः** — 'रुद्रत्वस्य सृज्यत्वश्रवणात् परमकारणत्वा-भावो दर्शितः । संहार्यत्वं च 'न ब्रह्मा नेशान' इति । उपबृंहिता चेयं श्रुतिः **श्रीविष्णुधर्मोत्तरे** —

'ब्रह्मा शम्भुस्तथैवार्कः .... चन्द्रमाश्च शतक्रतुः ।
एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ॥
वितेजसाश्च ते सर्वे पञ्चत्वमुपयान्ति च ॥'

इति । अतः कार्यकोटिनिविष्टस्य सर्वात्मभावाद्यसम्भवात् व्रतदर्शनोपसनान्वयेन तच्छरीरकपरमात्मपरतयैव निर्वाहो युक्तः । न चात्र न्यायापेक्षा परमात्मानु-प्रवेशस्य कण्ठोक्तत्वात् । तथा हि — 'देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीत् । अहमेकः प्रथममासं वर्तामि

च भविष्यामि च । नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशत् । दिशश्चान्तरं स प्राविशत् । सोऽहं नित्यो निजो ब्रह्माऽहं प्राञ्चः प्रत्यञ्चोऽहं अधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुप् जगत्यनुष्टुप् चाहं' इत्यादि । अतः सर्वात्मभावमनुसन्दधतो रुद्रस्य बुद्धिस्थः परमात्मा स इति परामृश्यते । अन्नमयादेरन्तरात्मनो बुद्ध्य-हङ्काररूपान्तः करणकर्मादन्तरं जीवात्मानं स परमात्मा प्राविशत् । दिक्शब्दो-पलक्षितबाह्याचेतनानामन्तरं च जीवं स परमात्मा प्राविशदिति तदनुप्रवेश-वर्णनोक्तिः ।

ननु सोऽन्तरादित्यादिकं श्रुतिवाक्यम्, न तु रुद्रवाक्यम् । तस्येति करणेन समाप्तत्वादिति न । 'सोऽहं नित्यो नित्य' इत्यादीनां रुद्रवाक्यानुगतिदर्शनेन रुद्रवाक्यापरिसमाप्तेः । तथा सति सोऽब्रवीदि'ति वाक्यान्तराध्याहारो (सम्भवति) नोपपद्यते । तदसमर्थदेवतात्वेन साजात्येन प्रभा चेति सर्वात्मभाव उक्तः । अन्वयमुखेनोक्तं सर्वात्मभावं व्यतिरेकेणोप-पादयति – नान्य इति । इति हेतौ; मद्व्यतिरिक्ताभावादित्यर्थः । अयं सर्वात्म-भावस्य व्यपदेशः, किं परमात्मत्वादुत परमात्मकत्वादिति शङ्कायां परमात्माऽनु-प्रवेशनिबन्धन इत्याह सोऽन्तरादिति । स्वस्मिन् परमात्माऽनुप्रवेशस्य दृष्टान्ताभि-प्रायेणोक्तम् । दिशश्चान्तरमिति । यद्वा नान्यः कश्चिन्मत्तोव्यतिरिक्त इत्युक्ते सर्वात्मव्यपदेशः कीदृश इत्यपेक्षायामाह – इतीति । इतिः प्रकारे । इत्थ-मित्यर्थः । विवक्षितसर्वात्मत्वप्रकारमाह – सोऽन्तरादिति । .... शब्दस्योत्तर-त्रान्वयः । दिशश्चान्तरं स प्राविशदिति । यस्मात्परमात्मा प्राविशत् । तस्मा-दस्मच्छरीरकपरमात्मनोऽन्यो नास्तीत्यर्थः । अध्याहारादपि श्रुतपदान्वयविशेष-कल्पनं न्याय्यम् ।

अस्तु वाऽयमिति शब्दः समाप्त्यर्थः । उत्तरत्र च सोऽब्रवीदित्य-ध्याहारः सह्यताम् । तदानीमप्ययमर्थः । स रुद्रः देहेन्द्रियादेरन्तरात् जीवा-दन्तरं परमात्मताबुध्या प्राविशदिति ।

'यस्य यस्य हि यो भावस्तेन तेन हि तन्नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥'

इतिवत् । **एवं मामुपास्व** (कौ-उ· 3-1) **तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे** ( बृ· उ 1-4-10 )

**अहं मनुरभवं सूर्यश्च ।**

'सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥
अहमेवाप्ययो नित्यः परमात्मेत्यचिन्तयत् ॥'

इतीन्द्रवामदेवप्रह्लादादीनामिव सर्वान्तर्यामिपरमात्मबुध्या रुद्रस्य सर्वात्मत्व-भावोपदेश इत्युक्तं भवति । तथा ह्युपबृंहितवान् सूत्रकारः । **त्रिपुरविजये**—

विष्णुरात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यां संस्पर्शं स विषेहे महेश्वरः ॥

ब्रह्मरुद्रसंवादे-'तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिनः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥'

इति च सोऽहमित्यादिना सर्वात्मभावप्रपञ्चनम् ॥ द्वितीयखण्डे - रुद्रवाक्यानु-वादेन स्तुतिपरत्वात् तदन्तर्यामि परमात्मविषयम् । यो वै रुद्रस्स भगवान् इति रुद्रान्तर्यामिवासुदेव इत्यर्थः । भगवच्छब्दस्य वासुदेवासाधारणत्वात् । तच्च दर्शितम् –' यो वै रुद्रस्स भगवान् यश्च विष्णुरि'त्यन्तर्यामिण एवावताररूप-विशिष्टत्वमुक्तम् ।

तृतीये तु परमात्मनो वैभवं ह्याकारस्य नामधेयानि । चतुर्थेन निर्वचनम् , पञ्चमे षष्ठे तु तदेतदुपासितव्यम् नीचाय्यैतां शान्तिमत्यन्त एतीति रुद्रशरीरकपरमात्मोपासनं साङ्गमुक्तम् । तस्मादथर्वशिरसि रुद्रान्तर्यामि नारायण एव प्रतिपाद्यः । यथा प्रतर्दनविद्यायामि( कौ· उ· 3–1 )न्द्रान्तर्यामि इन्द्रो मायाभिः पुनरूपे ईयते ।' इन्द्रं निचिक्युः परमेव्योमन् । इति कारणत्वो-

पास्यत्व प्राप्यत्वानि इन्द्रविषयाणि । प्रसिद्धेन्द्रव्यतिरिक्तविषयाणि तथैवान्यत्रापि रुद्रविषयाणि कारणत्वादिपराणि नेतव्यानि । 'स ब्रह्मा स शिवः सेन्द्र' इतीन्द्रतुल्यया भगवद्विभूतित्वादि'त्याहुः ।

यदाह कश्चित् 'आयुरायुषा सत्वं सत्वेन धर्मं धर्मेण तर्पयामि स्वेन तेजसे'त्यन्तं तत्र शिववाक्यम् । अनन्तरं 'ततो देवा रुद्रं नाश्यन्नि'त्यादेः श्रुतिवाक्यत्वस्य स्फुटत्वात् तत्र शिववाक्यसमाप्तिबोधनाया इति करणं 'नापश्य-न्नि'त्यदर्शनोपपादनायान्तर्धानप्रतिपादनं चापेक्षितमिति 'सोन्तरादि'त्यादि 'स प्राविशदि'त्यन्तं अतिक्लेशं विना न स्थानान्वयि तदन्तरेणैव च नान्यः कश्चित् मत्तो व्यतिरिक्तस्सोऽहं नित्यो नित्य इत्यादि ऋज्वनन्वयमिति च स्पष्टमेतत् । शक्तोऽपि च तत्त्रापेक्षितं पूरयितुं देवरहस्यं स्थूलरूपं विहाय ततः परं सर्वान्तरं सर्वतो रहस्यं परिपूर्णं रूपं प्राविशदिति तदन्तर्धानप्रतिपादनोपपत्तेः । ततश्चान्योन्याकाङ्क्षाबलात् व्यवहितान्वयो युक्तः । आकाङ्क्षितायाः सन्नि-धानात् बलीयस्त्वात् 'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणमिति **वार्तिकोक्तेः 'आनन्तर्यमचोदने'**(जै. सू. 8-1-14)ति **जैमिनिसूत्राच्चा**ध्याहारात् व्यवहितान्वयस्य ज्यायस्त्वे परेषामप्य-

---

## हस्तावनेजनादीनां कृत्स्नप्रकारणिकाङ्गताऽधिकरणम् —

दर्शपूर्णमासप्रकरणे श्रूयते । '**हस्तावनेनिक्ते**' उलपराजिं स्तृणाति इति । वेद्यामास्तरितुं संपादितः तृणस्तंबः उलपराजिः । तत्र हस्तशुद्धि दर्भा-स्तरण वाक्ययोः नैरन्तर्येण पठितत्वात् क्रममात्रेण हस्तशुद्धिः आस्तरणमात्र-स्यांगमिति पूर्वः पक्षः ।

सिद्धान्तस्तु — अवनेजनं हस्तसंस्कारः । संस्कृतौ च हस्तौ सर्वानुष्ठान योग्यौ । इत्येतादृशं सामर्थ्यं लिङ्गम् । प्ररकरणं च दर्शपूर्णमासयोः स्फुटम् । अतः प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात् सर्वशेषो हस्तशुद्धिः । (जै. सू. 8-1-14)

विप्रतिपत्तेश्च । शिववाक्यमध्यपतितस्यापि सोऽन्तरादित्यादेः श्रुतिवाक्यत्वेन तदन्त एव निवेशो युक्तः । तस्मात् न सोन्तरादित्यादिवाक्यबलादन्तर्यामिपरत्वकल्पनं युक्तम् । न च तत् युक्तियुक्तम् , प्रतर्दनाख्यायिकायां 'मामेव विजानीही'-त्यादेरिन्द्रवाक्यस्य शास्त्रदृष्टया ब्रह्मविषयत्वस्य तत्र 'त्वमेववरं वृणीष्व, यं तं मनुष्याय हिततमं मन्यस' इति प्रश्नवाक्यस्य वस्तुतो यद्धितं तद्विषयत्वेनेन्द्र-विषयत्वाभावात् अन्तर्यामिपर्यन्तत्वमाश्रित्य कल्पनेऽपीह देवानां को भवानिति शिवसाधारणरूपप्रश्ने तदुत्तररूपस्य 'अहमेकः प्रथममासमि'त्यादिशिववाक्यस्या-न्यसार्वात्म्यपरत्वे प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेस्तथात्वकल्पनाया अनुन्मेषात् । एवं च 'सर्वो वै रुद्रः' 'रुद्रो ह्येतत् सर्वमि'त्यादिश्रुतिःकल्पसूत्रवचनानु-गृहीता एतच्छ्रुतिबलात् 'सर्वं खल्विदं ब्रह्मे'ति (छा. उ. 3-14-1) सर्वात्मकत्वेन प्रतिपन्नं ब्रह्म शिव एवाध्यवसीयते । अतो यद्यनेकस्यासार्वात्म्यो-पदेशो विरुद्ध इति सौबलश्रुताविव क्वचित् शास्त्रदृष्टया उपदेश इति नेतव्यम् । तथा वैयधिकरण्यदोषाप्रसङ्गात् तत्रैव तदुपदेशस्तथा नेतव्यः । तथा सति 'चक्षुश्च द्रष्टव्यं च नारायण' इत्याद्यनन्तरं मन्त्रोपनिषदादौ शिवपरतया प्रतिपन्नेन 'पुरुष एवेदं सर्वं' इति मन्त्रेण तदुपसंहारः शोभतेतराम् ।

किं च सोऽन्तरादित्यादेः सार्वात्म्योपपादकत्वेऽपि शिवस्यैव सर्वात्मकत्व प्रतिपादकत्वमस्तु । गीतासु —

'तमेव शरणं गच्छ । मयाजी मां नमस्कुरु'

इत्यादिषु तत्पदाहं पदयोरन्तरात्मदृष्टिं विना स्वात्मन्येव पर्यवसानायाभ्युपगमेन स्वात्मनि तत्पदप्रयोगस्योपपन्नत्वात् शिवस्यैव सर्वान्तर्यामित्वस्य प्रमाणान्तर-सिद्धत्वेन तदतिरिक्तपरत्वस्य कल्पयितुमशक्यत्वाच्च । श्रूयन्ते हि शिवस्याधिष्ठान-प्रतिपादनपरा मन्त्रा मन्त्रोपनिषदि — यो योनिं योनिमधितिष्ठति एको यस्मिन्निदं संच विचैति विश्वं स देवो भगवान् वरेण्यो योनिस्वभावादधितिष्ठत्येकः सर्वमेतद्विश्वं मयि तिष्ठत्येको गुणांश्च सर्वान् विनियोजयेत् यः घृतात्परं मण्डमिवातिसूक्ष्मम् , ज्ञात्वा शिवं सर्वभूतेषु गूढम्' इत्याद्याः । रुद्रोपनिषदि—

'नमः स्रोतस्याय च द्वीप्याय चे'त्याद्याः। सर्वेषु वस्तुषु शिवस्य सद्भाव-प्रतिपादनपराः रुद्रोपनिषदि 'यो रुद्रो अग्नौ योऽप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेशे'त्याद्याः। अपि चाष्टमूर्तित्वप्रतिपादकप्रमाणजातमपि शिवस्य सर्वान्तर्यामित्वे प्रमाणम्।

ननु पृथिवीजलतेजोवाय्वाकाशसूर्यशशिदीक्षितशरीरकत्वमात्रं तत-स्सिध्यति। ततश्च सर्वशरीरकात् तस्य भेद एव सिध्यतीति चेत्-न। अष्टसु मूर्तिष्वन्तर्यामिब्राह्मणोक्तस्य सकलस्यान्तर्भावसम्भवात् भूतेषु तद्वि-काराण्यन्तर्भवन्ति। न च महदादीनां अन्तर्भावः शङ्क्यः।

'आत्मातस्याष्टमी मूर्तिः शिवस्य परमा तनुः।
व्यापकेतरमूर्तीनां विश्वं तस्मात् शिवात्मकम्॥'

इति शैवपुराणे जीवानामष्टमूर्तित्वस्य श्रवणात्। तद्वारा सर्वेष्टदातॄणां तत्तनुत्वोपपत्तेः।

ननु 'भूम्यम्भोऽग्निमरुद्व्योमभास्करादीक्षितः शशी'

इति लैङ्गे यज्वन आत्मस्थाने निवेशात्। सामान्यशब्दस्य विशेषे उपसंहारात् शैवपुराणस्थोऽप्यात्मशब्दो यज्वपर एवेति चेत्-न। व्यानेन मूर्तीनां 'विश्वं तस्मात् शिवात्मकमि'त्यस्यासङ्गतिप्रसङ्गात्।

'वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा।
शिवस्य पूजया तद्वत् पुरुषत्वं वपुर्जगत्॥
सर्वोपकारकरणं सर्वानुग्रहणं तथा।
सर्वाभयप्रदानं च शिवस्याराधनं विदुः॥
देहिनो यस्य कस्यापि क्रियते यदि निग्रहः।
अष्टमूर्तेरनिष्टं तत् कृतमेव न संशयः॥'

इत्युत्तरसन्दर्भस्य सर्वदेहिनां शिवमूर्तित्वप्रतिपादनपरस्याप्यसामञ्जस्यापाताच्च। लैङ्गे दीक्षितकीर्तनं तु 'भूम्यम्भोऽग्निमरुद्व्योमे'त्याद्युपक्रम्यैकैकस्याः सर्वलोकोप-

कारित्वकीर्तनात् उपकारातिशयख्यापनार्थमिति नात्मान्तरशरीरत्वं निषेद्धुं प्रभवति । तस्मादष्टमूर्तित्वबलात् शिवस्य सर्वान्तरत्वं सिध्यतीति युक्तम् ।

यत्तु 'तवान्तरात्मा मम च' इत्यादिस्तुतिवचनम् । तन्महाभारते 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु' इति प्रश्ने ।

'बहवः पुरुषा राजन् सांख्ययोग विशारदाः ।
नैतमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥'

इति मतमुपन्यस्य,

'बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणातिगम् ॥'

इति श्लोकेन 'स वा एष पुरुषोऽन्नरसमय' इति श्रुति दर्शनात् पुरुषशब्दाभिलप्यमानानां शरीराणां 'यथैका योनिरि'ति सैव सर्वशरीराभावेनावतिष्ठते । तथैवमेव पुरुषं विश्वं सर्वं जीवभावेनावतिष्ठमानमाख्यास्यामीति स्वमतप्रतिज्ञानन्तरं पठितत्वादैकात्म्यपरम्, न तु कस्यचिदन्तर्यामित्वविधानपरम् । अपृष्टोत्तरत्वापत्तेः ।

यच्च 'विष्णुरात्मा भगवतो भवस्यामिततेजस'

इति कर्णपर्ववचनम्, तत्रात्मशब्दो मोक्षधर्मे —

'तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम्'

इति कृष्णवचनस्थितात्मशब्दपदमिवस्वरूपपरः तत्रैव स्वारस्यात् । एवं च शिव एव सर्वान्तर्यामीत्यस्यार्थस्य व्यवस्थिते 'सोऽन्तरादन्तरमि'त्यादेरन्यपरत्वकल्पनायोगे स्थिते 'यो वै रुद्र' इत्यादेर्नारायणविषयत्वकल्पनं रुद्रेशानमहेश्वरमहादेवादीनामनिर्वचनस्य प्रसिद्धविरुद्धं रुद्रोपासनविधानस्य परोदितमधुविद्यान्यायेन तत्परत्वकल्पनं च परेषां निरस्तम् । भगवच्छब्दस्यान्यत्रापि पूज्यमात्रेपुराणादिषु प्रचुरप्रयोगदर्शनात् । तस्यापीतरसाधारण्यासिद्धेश्च ।

यत्तु नात्मनिर्वचनानां प्रमाणविषयत्वमुक्तम् तदप्यसमञ्जसम्। रुद्रेशान-महेश्वरादीनां निर्वचनानां नामिनोजगत्सृष्टिपालनसंहारत्वसतन्त्रत्वप्रतिपादन-पराणां प्रकोपविषयत्वायोगात्। ओंकारप्रणवादिनामनिर्वचनं च नामनामिनोर-भेदोपचारादुपपद्यते। तस्मादथर्वशिरसि शिवस्यैव जगत्कारणत्वादिकं प्रतिपाद्यत इति प्रतिभाति। न तावत् 'रुद्रं नापश्यन्नि'त्यदर्शनोपपादना-यान्तर्धानप्रतिपादकवाक्यापेक्षा। अदर्शनप्रतिपादनेनैवान्तर्धानस्यार्थसिद्धत्वात् तत्प्रतिपादकवाक्यानपेक्षणात्। अन्यथा रुद्रसमीपं गमनं विना प्रश्नाभोगेन तत्समीपगमनप्रतिपादकवाक्यान्तरस्यापि कल्पनाप्रसङ्गात्। शिवस्य परब्रह्मत्वे मुक्तिदशामन्तरेण तदीयहरस्य रूपदर्शनारूप तत्संवादादेस्साधकावस्थानां देवानामसम्भवेन तदाग्रहकृताविर्भावसंपादितदेहवता संवादादेः कर्तव्यतया तदनुग्रहहेतुस्तुतिध्यानतदनुग्रहादिभीरतादिप्रतिपादकवाक्यसमूहकल्पनाप्रसङ्गाच्च। न चार्थसिद्धत्वात् न कल्पनम्। अत्राप्यर्थसिद्धत्वस्य तुल्यत्वेन तदर्थं 'सोऽन्तरादि'त्यादेरुद्धारप्रक्षेपानियोगात्। सन्निहितान्वयसंभवे व्यवहितान्वय-कल्पनायोगात्। अन्यथोपवेषाधिकरणविरोध (जै. सू. 6-4-14)प्रसङ्गात्। तत्र —

यश्चैवं मूलतश्शाखां परिवास्योपवेषं करोति उपवेषेण कपालान्युपदधाति शाखया वत्सानपाकरोतीति च श्रूयते। तत्र संशयः — किं परिवासनादिकं प्रतिकपालोपधानं वत्सापाकरणद्वयं प्रयोजकम् उत वत्सापाकरणोभयार्थमित्युभयं प्रयोजकमिति। तत्र शाखाशब्दस्य समूलाग्रवाचित्वेन शाखां परिवास्येति द्वितीया श्रुतिमूला। समग्रार्थं च परिवासनं तद्वारा कपालोपधानवत्साप करणोभयार्थमित्युभयं प्रयोजकम्। न च शाखाशब्दस्य समूलाग्रवाचकत्वंमूलतः शाखां परिवास्येत्यनुपपन्नम्। मूलस्यापादानत्वकर्मत्वयोर्विरोधादिति वाच्यम्। शाखां परिवास्य मूलत उपवेषं करोतीति व्यवहितोऽपि साकाङ्क्षेणोपवेषादाने-नान्वयादिति पूर्वपक्षः।

सिद्धान्तस्तु — सन्निपातान्वयसम्भवे व्यवहितान्वयायोगात्। आकाङ्-क्षाया अन्यार्थेनापि मूलेन पूरणसम्भवान्मूल इत्यस्य शाखां परिवास्येत्यने-

नान्वयात् शाखांशशब्दस्याग्रमात्रवाचित्वग्रहणार्थं परिवासनमिति तत्कार्ये वत्सापाकरणमेव प्रयोजकमिति । एवं चाकाङ्क्षाया अन्यथा पूरणसम्भवे व्यवहितान्वयायोगात् स्वस्थान एवान्वयोयुक्तः । न च स्वस्थानेति क्लेशः ; उद्धारप्रक्षेपाङ्गीकारेण स्थलान्तरान्वयपक्षापेक्षया अत्रैव पदानां मुख्यवृत्तत्वात् स्थलान्तरान्वयपक्षे देवदस्यं स्थूलरूपं विहाय सूक्ष्मरूपं प्राविशदिति ह्यर्थो वर्ण्यते । न ह्ययमर्थः पदैः स्फुटतरं प्रतीयते । स्थूलरूपसूक्ष्मरूपप्रतिपादक-पदाभावात् ।

नन्वन्तरशब्दस्यान्तर्वर्तिपरस्य लक्षणया सूक्ष्मवस्तुपरत्वम् , ततश्च मनुष्यदुर्दर्शरूपपरत्वं प्रथमान्तरशब्दस्य द्वितीयान्तरशब्दस्य देवदुर्दर्शरूपपरत्वं । अत उक्तार्थ उपपन्न इति चेत् - न । अन्तरशब्दयोर्लाक्षणिकत्वप्रसङ्गात् । एकेनैवान्तरशब्देन ' निरुपाधिकनिर्देशे ह्यसङ्कोचो मनीषिभिः ।

सिद्धे शब्दार्थसम्बन्धः ।। '

इति न्यायेन कथ्यत इत्याचार्यपदोक्तरीत्या परमसूक्ष्मप्रतिपत्तिसम्भवे शब्दान्तर-वैयर्थ्यप्रसङ्गात् । अस्मत्पक्षे तु कोशप्रत्यभिज्ञानार्थं शब्दद्वयमप्यर्थवत् । किं च दिशश्चान्तरं संप्राविशदित्येतत् परपक्षे सर्वथा अनन्वयि । कथंचिदन्वय-सम्भवेऽपि वैयर्थ्यमनिवार्यम् । एतेनान्योन्याकाङ्क्षाबलात् व्यवहितान्वयो युक्त इत्यपि परास्तं वेदितव्यम् । अदर्शनप्रतिपादनेनैवान्तर्धानस्यार्थसिद्धत्वेन तस्यान्तर्धानप्रतिपादकवाक्याकाङ्क्षाया अभावात् ' सोऽन्तरादि'त्यादेरन्तर्धान-प्रतिपादकत्वस्याप्रतीत्या तस्यादर्शनप्रतिपादकवाक्यापेक्षया अभावाच्च ।

यत्तु को भवानिति प्रश्नस्य शिवविषयत्वात् तदुत्तररूपस्याहमेक इत्यादेरन्यसार्वात्म्यपरत्वे प्रश्नोत्तरयोर्वैयधिकरण्यमिति-तन्न-सर्वात्मकत्वान्तर्यामि-निरुपाधिकार्थमादाय वैयधिकरण्यपरिहारसम्भवात् । किं च स ब्रह्मचार्यमित्यस्य स ब्रह्मचारिणो ह्यति विग्रहेऽपि कठ इति प्रतिवचनमुपपद्यत इत्येतदुपपादयितुं भगवता पतञ्जलिना महाभाष्ये वर्णितम् । तथैव खल्वपि के स ब्रह्मचारिणो-

प्ययेति कठा इत्युक्ते सम्बन्धादेतद्गम्यते 'अयमपि कठ इति' एवं कठ इत्युक्ते सम्बन्धादेतत् अवगन्तव्यं स्यात्। नूनं तेऽपि कठा इति।

ननु नात्राधिकारार्थमादाय समाधानं सम्भवति। को भवान् देवता-मात्रं उत परमकारणभूत इति प्रश्नोत्तरस्याहमेक इत्यादे रुद्रधर्मिकप्रश्नविषयकोट्यन्तरपरत्वस्य वक्तव्यत्वात्। न हि सर्वकारणसर्वान्तर्यामिकत्वस्योत्तर-वाक्यतात्पर्यविषयत्वे तत्प्रश्नविषयकोट्यन्तरावलम्बनत्वमस्तीति चेत् - न। परम-कारणभूतान्तर्यामिकत्वस्य तात्पर्यविषयत्वे परमकारणत्वाभावमुखेन देवतामात्रत्व-कोटिनिर्धारणावसायात्।

ननु स्थाणुः पुरुषो वेति संशयानन्तरं पुरुष इत्युत्तरस्य यथा न स्थाणु-परत्वं तथा परमकारणत्वप्रतिपादकवाक्यस्य देवतामात्रत्वकोटितात्पर्यकत्वमिति चेत् - न। यदि वा आसमहमेकमित्यादेर्देवतामात्रत्वकोटौ लक्षणं ब्रूमः तदा पुरुषशब्दस्य स्थाणुपरत्वं यथा न सम्भवति इति तथेदमपीति वक्तुं शक्यम्। किं तु सौवीरराजप्रश्नस्य शरीरविशिष्टात्मगतजातिविशेषविषयस्योत्तररूपेण प्रवृत्तेऽनन्तरसन्दर्भे यथा परिशुद्धात्मस्वरूपं कृपया भरतेन प्रतिपादितं तथा स्वस्वरूपविषयकप्रश्ने कृते यदि स्वकारणत्वाभावः कथितस्स्यात् तदा परमात्म-स्वरूपमेवैतैर्न ज्ञायेतेति तज्ज्ञानार्थः। कृपया अहंग्रहेण स्वान्तर्यामिपरमात्म-स्वरूपमुपदिष्टं ततोऽर्थात्स्वकारणत्वाभाव पर्यवसानमिति देवतामात्रत्वसिद्धिः। तस्मात् न कोट्यन्तरपरत्वासम्भवः। न च शिवकारणत्वे प्रतिज्ञापादन परत्वेनोत्तरस्य सुसङ्गतार्थत्वं सम्भवतीति किमर्थं काष्ठागतिराश्रयणीयेति वाच्यम्। 'सोऽन्तरादन्तरमि'ति वाक्यसङ्गतये तद्वैयर्थ्यायचान्तर्यामिपर्यन्तत्वाश्रयणात्। न च शिवसार्वात्म्योपपादकत्वेन सोऽन्तरादिति वाक्यं सुसङ्गतमिति वाच्यम्। एवमपि दिशश्चान्तरमिति वाक्यवैयर्थ्यस्य दुरुद्धारत्वात्। अस्मिन् पक्षे तु शिवानुप्रवेशप्रतिपादकं दिशश्चान्तरमिति वाक्यं रुद्रवाचकशब्देन पदार्थान्तर-वाचकशब्दस्य सामानाधिकरण्यमुपपादयितुं वा दिशश्चान्तरमिति वाक्यं प्रवृत्तम्। न चाविशेषणसोऽन्तरादित्यनेनैव सर्वान्तरत्वोपदेशे सम्भवे दिश-

श्चान्तरमित्येतव्द्यर्थमिति शङ्कितुमशक्यम् । सोन्तरादिति वाक्यमात्रसत्वे शिवस्यै-वैतत्सार्वात्म्योपपादकमिति शङ्कास्यात् । तद्वारणाय दिशश्चान्तरमित्यस्य सार्थत्वात् दिशश्चान्तरमिति वाक्यस्यापि सत्वे हि कृत्स्नपदार्थानुप्रवेशस्य तत एव सिद्धत्वात् सोऽन्तरादित्यादिकं रुद्रप्रवेशप्रतिपादकमित्यवगम्यते ।

किं च सोऽन्तरादन्तरमिति कोशप्रत्यभिज्ञाविरोधात् शिवसार्वात्म्योपपादकत्वं न सम्भवति । अन्नमयादिसर्वान्तरस्यानन्दमयस्य 'सत्यंज्ञानमनन्तं ब्रह्मे' त्यनन्तरशब्दानुसारेण विष्णुत्वावगमात् । अनन्तशब्दस्य 'अनन्तो नागराड्-विष्णुरि'ति कोशबलात् नामत्रयान्तर्गतत्वेन च भगवदुपस्थापकत्वात् ।

ननु 'ब्रह्मविदाप्नोति परमि'त्युक्ते किं तद्ब्रह्मेति जिज्ञासायां तत्स्वरूप लक्षणपरेस्मिन् वाक्ये सत्वादिशब्दवदनन्तशब्दस्यापि प्रथमान्ततया नपुंसकलिङ्गत्वेन विष्णुवाचित्व सम्भवात् न तदुपस्थितिः । न च 'यो वेद निहितं गुहायामि'त्यस्यानन्तरवाक्योक्तवेदनस्य कर्मसाकाङ्क्षत्वात् द्वितीयान्ता एव सत्वादिशब्दा इति वाच्यम् । तत्रैव 'गुहायां सन्निहितमि'ति अस्य सन्निहितत्वात् । ब्रह्मवचनस्य कर्मसमर्पणपरस्य सत्वेन तदनुरोधात् । सत्यादिवाक्यस्य बुभुत्सितलक्षणप्रदर्शनपरत्वभङ्गायोगादिति चेत् - न । ब्रह्मविदाप्नोति परमि' त्युक्ते ब्रह्ममात्रस्य बुभुत्सितत्वम् । किन्तु ब्रह्म तद्वेदनप्राप्तिप्राप्यानां बुभुत्सितत्वमित्येकस्यैव भङ्ग्या तद्विवरणम् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिना क्रियत इत्येक वाक्तयैव सत्यं ज्ञानमित्यस्य 'यो वेद निहितं' गुहायामित्यादेश्चान्वयो युक्तः । अन्यथा वाक्यभेद प्रसङ्गात् । वेदेन प्रतिपादकवाक्यापेक्षायां भिन्नेन वाक्येन प्राप्ति प्रतिपादनस्यापि कर्तव्यत्व प्रसङ्गाच्च । न च 'यो वेद सोऽश्नुते सर्वान् कामानित्युक्ते गुणानुभव एव प्राप्तिरित्यर्थात् - गम्यत इति न पृथक् प्राप्ति प्रतिपादक पदापेक्षेति वाच्यम् । 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेदे'त्यन्वयोऽपि सत्यत्वादि विशिष्ट ब्रह्मेत्यर्थादवगन्तुं शक्यत्वात् ।

किं च सोऽन्तरादन्तरमित्यस्य रुद्रस्य तत्तदनुप्रवेशपरत्वे सोऽहं नित्य इत्यत्र स इति पदं व्यर्थम् । भगवतो रुद्रानुप्रवेशपरत्वे तु सामानाधिकरण्यस्य

भगवदात्मकत्व प्रतिपत्त्यर्थं सोऽहमिति तच्छब्द सार्थक्यम्। एतेन **भगवद्गीतासु** '**तमेव** शरणं गच्छे'त्यत्र तच्छब्देन कृष्णव्यपदेशवत् सोऽन्तरादन्तरमित्यत्र तच्छब्देन रुद्रव्यपदेशस्सम्भवतीति परास्तम्।

यत्तु 'सर्वो वै रुद्र' इति वाक्यानुग्रहाय रुद्रस्य सर्वान्तर्यामित्वं प्रतिपादयतीति - तन्न — 'तस्य पुरुषो वै रुद्र' इत्युत्तरवाक्यानुसारेण भगवत्परत्वात्। प्रपञ्चितश्चायमर्थः **पुरुषसूक्तार्थ**विचारे। **कल्पसूत्रकार**वचनमप्येतत्समानार्थकत्वात् भगवत्परत्वम्।

यदपि **सौबला** ........ क्वचित् शाब्दद्दष्टया नेतव्ये सति वैयधिकरण्यप्रसङ्गात्। **सौबलादाविव शाब्दद्दष्टया नयनं 'पुरुष एवेदं च सर्वमि'ति** **श्वेताश्वतर** वाक्य प्रत्यभिज्ञासुरक्षणायेति — तदप्यनुपपन्नम् — यत्रान्तर्यामिपर्यन्तत्वे तात्पर्यग्राहकमस्ति। तत्रैव तथात्वस्य वक्तुं युक्तत्वात्। अत्र सोऽन्तरादन्तरमित्यस्य तथात्वग्राहकस्य सत्वात्। एवं सति हि सोऽन्तरादन्तरमित्यस्य सप्रयोजनत्वं श्रुतिद्वयविरोधशामकत्वात् रुद्रसार्वात्म्यहेत्वनुप्रवेश प्रतिपादनपरत्वे तु नातीव प्रयोजनम् तत्पक्षे सर्वात्मकं ब्रह्मेति निश्चितवतां देवानां रुद्रपरमात्मत्व सन्देहेन प्रश्नश्रुते तदुत्तररूपेणाहमेक इत्याद्यनुत्तरसन्दर्भ प्रवृत्तेरङ्गीकृतत्वात् श्रुत्यन्तरे सर्वात्मकत्वस्यानुप्रवेश पूर्वकत्वस्य प्रवेशात् सर्वात्मकत्वोपदेशमात्रस्यैव रुद्रस्य परमात्मत्वसिद्धये कर्तव्यत्वात्। वैयधिकरण्यप्रसङ्गस्तु नातीवदोष इत्युक्तम्।

अस्तु वा को भवानिति प्रश्नस्यैवान्तर्यामि विषयत्वम्। तथा च प्रश्नोत्तरयो र्वैयधिकरण्यम्।

यदत्रोक्तं **शिवकर्णामृते** को भवानिति भगवच्छब्देनान्तर्यामिणं पृच्छता देवतानां सर्वशब्दानामन्तर्यामिणि पर्यवसाने व्युत्पन्नानामुत्तरवाक्यस्थिताहं शब्दस्यापि तात्पर्यावसायित्वं स्पष्टमेवेति तान् प्रत्युपपादनीयार्थाभावादुत्तरत्वोपपादकत्वेन सोऽन्तरादित्यादेरन्वयासम्भव इति —

तन्न — सोऽन्तरादित्यादे रुद्रवाक्यत्वेनान्वयासम्भवेऽपि प्रश्नप्रति-वचनयोरन्तर्यामिपर्यवसान तात्पर्यग्राहक वाक्यशेषत्वेनान्वय सम्भवात् । न च पुनस्सोऽहं नित्यो नित्य इत्यादि रुद्रवाक्यानुवृत्त्यनुपपत्तिः । सोऽब्रवीदित्यध्या-हारेण तदुपपत्तेः । न च स एव दोषः सोऽन्तरादित्यस्य सार्थत्वाय तस्यावश्य वाच्यत्वात् । न च प्रश्नविषयाभावोऽन्तर्यामित्व जगत्कारणत्व सामानाधिकरण्या-ज्ञानेन प्रश्नोपपत्तेः । 'पुरुष एवेदं सर्वमि'ति प्रत्यभिज्ञानकथनं तु स्वबाधकं तस्य पुरुषसूक्तप्रत्यभिज्ञापकत्वात् । अत एव हि श्वेताश्वतरस्य भगवत्परत्व-मभ्युपगतमस्माभिः ।

यदपि 'यो योनिमधितिष्ठत्येक' इत्यादिभिः शिवस्य सार्वात्म्यमुपदिष्टमिति तदतिरिक्तान्तर्यामिकल्पनमनुपपन्नमिति — तदप्यसङ्गतम् — 'सूर्य आत्मा जगस्त-स्थुषश्च' 'आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः' 'अहं मनुरभवम्' 'सूर्यश्च ब्रह्मा नारायणः शिवश्च नारायणः चक्षुश्च द्रष्टव्यं च नारायण' इत्यादिषु शिवातिरिक्तानां सार्वात्म्यादि श्रवणेन शिव एव सर्वातन्र्यामी-त्यस्यापि निर्धारणासम्भवेन विचारस्य सावकाशत्वात् । तर्हि नारायण एव सर्वान्तर्यामीति तत्र कथं निर्णय इति चेत् तत्र वा कथं विनिर्णयः । सूर्यादी-नामपि तथात्व श्रवणात् । तस्मादेकस्य सर्वान्तर्यामित्व प्रतिपादक वाक्यानि तदितराणि गौणकानीत्यवश्यं वाच्ये सति येन कार्यत्वादि श्रवणेन सूर्यादिषु तथात्व प्रतिपादकानां मुख्यत्वं तेनैवकार्यत्व कर्मावश्यकादि श्रवणेन शिवस्य सर्वान्तरत्व प्रतिपादक वाक्यानां मुख्यत्वमिति न शिवस्य सर्वान्तरत्वसिद्धिः ।

ननु कार्यरुद्रापेक्षया अन्य एव सर्वान्तर्यामी रुद्र इति चेत् - न । सूर्यादिष्वपि प्रसङ्गात् । 'यो वै रुद्रस्स भगवान्' 'यश्च महेश्वर' इति रुद्राद्वय-श्रवणात् तथात्वमवसीयत इति चेत् - न । रुद्रशब्द सर्वान्तर्यामिपरत्वाभाव सिध्यधीनत्वात् रुद्रद्वयासिद्धेः । नन्वेवं सति 'यो वै रुद्र' इत्यत्र रुद्रशब्दस्य रुद्रान्तर्यामिपरत्वे तेनोक्तार्थत्वात् 'यश्च महेश्वर' इत्यनुपपन्नं स्यादिति चेत् - न । 'यो वै रुद्र' इत्यत्र रुद्रोपलक्षित परमात्म परत्वं महेश्वर इत्यत्र तद्विशिष्ट

परमात्मपरत्वमित्यङ्गीकार सम्भवात् । अत एवाहमेक इत्यत्र प्रलयकालवर्तित्व व्यपदेशोपपत्तिः ।

यत्तु अष्टमूर्तित्व बलाच्छिवस्य सर्वान्तरत्वं सिध्यतीति - तदप्यसारं - पृथिव्यादीनां शरीरत्व कथनमात्रेण प्रकृतिमहदहङ्कार कालादिकत्वसिद्धेः । न चात्मनः शरीरतोक्त्या तद्वारा कृत्स्नशरीरत्व सिद्धिरिति वाच्यम् ।

'भूम्यम्भोऽग्निमरुद्व्योमभास्करादीक्षितः शशी'त्यादिषु दीक्षितस्य मूर्तित्व-कीर्तनेनात्मशब्दस्य तत्परत्वावसायात् । न च 'व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम्' इत्यादि सङ्गतये 'आत्मा तस्याष्टमूर्तिश्शिवस्य परमा तनुः' इत्यत्रात्म-शब्दस्य जीववर्गमात्रपरत्वं प्रतीयत इति वाच्यम् । तथा सति दीक्षितात्मशब्द-योरनितरस्य लक्षणावश्यम्भावे सामान्यशब्दस्य विशेषपरत्वमेव वक्तुं युक्तम् । न तु विशेषशब्दस्य दीक्षितशब्दस्यात्मसामान्य परत्वम् । मुख्यार्थव्यतिरिक्त लक्षणायां बहिरङ्गलक्षणत्व प्रसङ्गात् । न च वाक्यशेषसङ्गतये तथात्वमस्त्विति वाच्यम् । पृथिव्यां भूतमयदीक्षितशरीरव्याप्तिमादाय 'व्यापिकेतरमूर्तीनामि'त्य-स्योपपत्तेः । 'विश्वं तस्मात्शिवात्मकमि'त्ये तदपि 'न हिंस्यात् सर्वाभूतानी' ति सर्वपदवाक्यं संकुचितमेव । एतेन

'........ शाखाः पुष्यन्तीति वै यथा ।
शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जगत् ॥
सर्वोपकारिणं तं तु सर्वानुग्रहणं तथा ।
सर्वाभयप्रदानं च शिवस्याराधनं विदुः ॥'

महाभूतमयत्वेन सर्वेषां शरीराणां तत्तद्देवतादि शरीरपोषणहिंसकाभ्यां शिवशरीर-भूतपञ्चमहाभूतविषयोनिग्रहानुग्रहयोः प्रसक्तेरात्मपदस्य जीवपरत्वं विनाप्यनन्तर-सन्दर्भनयन सम्भवात् । अत एव वैष्णवे पुराणे

'सूर्योजलं महीवायुर्वह्निराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः क्रमात् ॥'

इति मूर्त्यष्टकमुपन्यस्यादीक्षितशरीरकपक्षित्वेन ।

'स्वाहादिकस्तथा दीक्षा रोहिणी च यथाक्रमम्'

इति दीक्षितायाः कीर्तनमुपपद्यते । एवं सति

'या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री' । इति

'यत्तत्पित्तमुषस्तु योऽस्य हविषे यस्तस्य जीवातवे ।
व्योढा यद्गुणमेषमन्मथरिपोस्ताः पान्तु वो मूर्तयः ॥'

इति च महाकविव्यवहारः सङ्गच्छते ।

यदपि लैङ्गे उपकारातिशयख्यापनया दीक्षितकीर्तनमिति - तन्न - एवं सति शैवे आत्मकीर्तनस्मृतस्य लोकेऽनुष्ठीयमान सर्वभूतरक्षणादीनां शिवप्रीतिकरत्वं प्रतिपत्त्यार्थार्थवादित्वमिति वक्तुं शक्यत्वापातात् । किं चैवमष्टमूर्तित्वं न शिवस्यैवासाधारणमिति वक्तुं शक्यम् । श्रीमति वाराहे —

'तथैका तस्य देवस्य मूर्तिराद्या धराधरे ।
द्वितीया सलिलं मूर्तिः तृतीया तैजसी स्मृता ॥
चतुर्थी वायुमूर्तिः स्यात् आकाशाख्या तु पञ्चमी ।
एतास्तु मूर्तयस्तस्य क्षेत्रज्ञार्के हिमत्विषाम् ॥
मूर्तित्रयं तथा तस्य इत्येता अष्टमूर्तयः ।
याभिर्व्याप्तमिदं विश्वं जगन्नारायणेन हि ॥

इति भगवतोऽप्यष्टमूर्तित्व प्रसिद्धिः शिवस्यैवेति चेत् - न । तस्यात्मनः तन्मूर्तिका दीक्षितस्यैव तन्मूर्तित्व प्रसिद्धेः । तस्मादष्टमूर्तिबलात् न शिवस्य सर्वान्तरत्व सिद्धिः ।

किं च सुबालोपनिषदि — 'यस्य पृथिवीशरीरं यः पृथिवीमन्तरेऽभ्यस्सञ्चरन् यं पृथिवी न वेद । यस्यापश्शरीरं योऽपामन्तरे सञ्चरन्' इत्याद्युक्त्वा 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इत्यन्तर्यामिणो नारायणत्वं स्फुटतरं श्रूयत इति न तदतिरिक्तान्तर्यामि कल्पनम् । अष्टमूर्तित्वं तु

नान्तर्यामित्वसाधकम् ; सूर्यस्य त्रयीतनुत्वव्यपदेशवत् । गरुडस्य छन्दोमयत्व-व्यपदेशशब्द: यथा सिध्यर्थत्वात् । यत्तु एतानि ह वा अमृतस्य नामधेयानीति जाबालश्रुत्या शतरुद्रीयान्तर्गत शिवादिनामपर्यायत्वावगमात् अमृतशब्दस्य 'तस्य चैष आत्मा अन्तर्याम्यमृत ' इत्यत्र श्रुते अन्तर्यामि ब्राह्मणस्य शिवपरत्वमिति तुच्छम् । शतरुद्रीयनाम्नां परम्परया मोक्षसम्बन्धमादायामृतस्य नामधेयानीत्युपपत्त्या तद्यपदेशस्यामृतशब्दे शिवपर्यायत्व साधकत्वाभावात् । यथा चैतत्तथोक्त-मधस्तात् । तस्मात् शिवस्य सर्वान्तर्यामित्वस्य सौबालोपनिषदां नारायणपर्य-वसान प्रतिपादनादथर्वशिरसो नारायणकत्वमेव युक्तम् । 'तवान्तरात्मा मम'चेति महाभारते भगवत: शिवान्तर्यामित्वस्य विशिष्य प्रतिपादनात् ।

यत्तु 'तवान्तरात्मा ममचे'त्यैकात्म्यपरम् ; न तु कस्यचिदन्तर्यामित्व-विधानपरम् ; अपृष्टोत्तरत्वापत्ते: । तद्धि

'बहव: पुरुषा ब्रह्मन्नुताहो एक एव तु '।

इति प्रश्ने — बहव: पुरुषा राजन् साङ्ख्ययोगविचारिण: ।
नैतमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥'

इति परमतमुपन्यस्य

'बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वमाख्यास्यामि गुणातिगम् ॥'

इति श्लोके एकमेव पुरुषं विश्वं सर्वभावेनावतिष्ठमानमानीयास्यामीति स्वमत प्रतिज्ञानन्तरं पठितमिति — तन्न — प्रकरणस्य जीवनानात्वैकत्व संशयोपन्यास पूर्वकं जीवैकत्वनिर्धारणेपरत्वासिद्धे: । अन्यथा

'तत्र य: परमात्मा तु स नित्यो निर्गुणस्स्मृत: ।
स हि नारायणो ज्ञेय: सर्वात्मा पुरुषो हि स: ॥
न लिप्यते कर्मफलै: पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्वपरोऽसौ मोक्षबन्धैस्स युज्यते ॥'

इत्युत्तरसन्दर्भविरोधापत्तेः। किं तु स्वतन्त्राः पुरुषा बहवो वा उतैक एवेति प्रश्ने तदेकत्व निर्धारण परमेव तत्प्रकरणम्। अत एव

'बहवः पुरुषा राजन् साङ्ख्ययोग विचारिणः।
नैतमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह॥'

इति। 'साङ्ख्यमेते पठतुण्डवदुभयोरपि संयोगस्तत्कृतस्सर्ग' इति न्यायेनेश्वर सङ्कल्पादिना कृतजीवसंसर्ग निबन्धनत्वात् जगत्सृष्टे जगत्कारणभूताः पुरुषा बहव इति परमतमुपन्यस्य

'बहूनां पुरुषाणां हि यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वमाख्यास्यति गुणातिगम्॥'

स्वपक्षप्रतिज्ञाकरणं सुघटितं भवति। तस्य ह्ययमर्थः — देवादिभावमापन्नानां पुरुषाणां यथैकः पुरुषोत्तमः तथा तं पुरुषोत्तममाख्यास्यामीति। न च परोक्त-रीत्या 'स वा एषपुरुषोऽन्नरसमय' इत्युक्त्या पुरुषशब्दवाच्यानां यथैका योनि-रिति सैव शरीरभावे काचतिष्ठते तथैकमेव परम्पुरुषं सर्वशरीरभावेनावतिष्ठमान-माख्यास्यामीति।

'बहवः पुरुषाः ब्रह्मन्नुताहो एक एव तु।
को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते॥'

इति त्रिष्वर्थेषु पृष्टेष्वेकोत्तर प्रतिज्ञापरत्ववर्णनस्यानुचितत्वात्। अस्मन्मते तु प्रश्नत्रयोत्तर प्रतिज्ञापरत्वं स्फुटमेव। देहादिरूपं बिभ्रतां बहूनामेकः कारण-मित्युक्त्या कोट्यन्तरनिरासगर्भिततया पृथक् प्रश्नस्योत्तर प्रतिज्ञा कृता। गुणाधि-कमिति त्रिगुणविनिर्मुक्तत्वोक्त्या को ह्यत्र पुरुष श्रेष्ठ इत्यस्योत्तर प्रतिज्ञा कृता। अत एव को वा योनिरिति प्रश्नोत्तर प्रतिज्ञापि सिद्धा।

अपि चास्मत्पक्षानुसारेणार्थ वर्णनमेवम् —

'बहवः पुरुषा ब्रह्मन् त्वया सृष्टा स्वयम्भुवा।
सृक्ष्यन्ते चापरे ब्रह्मन् न चकुःपुरुषो विराट्॥'

इणि प्रश्नोत्तर प्रतिज्ञारूढत्वेन पुनरुपन्यासः सङ्गच्छते । अत एवोक्तार्थापवाद-कत्वेन

'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।'

इति पुरुषसूक्तकीर्तनमुपपद्यते । तत्र हि 'मुखादिन्द्रश्चाग्निश्चे'त्यादिना परम-पुरुषस्य जगत्स्रष्टृत्वं प्रतिपादितम् । न च पुरुषाणां नित्यत्वात् कथं तत्कारणत्वं परमपुरुषस्येति वाच्यम् । देहद्वारकावस्थाश्रयत्वमादाय तत्सृज्यत्वस्य व्यप-देशोपपत्तेः ।

यदपि 'विष्णुरात्मा भगवतो भवस्यामिततेजसः' इति वचनस्थितात्म-शब्दाभिन्नस्वरूपपर इत्यत्र

'तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम्'

इति वचनस्यात्मशब्दस्य दृष्टान्तत्कथनं तदप्यन्धस्य जात्यन्धेन यष्टिः प्रदीयत इति न्यायं सूचयति ।

'अयमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन'

इति पूर्वार्धेन सर्वान्तर्यामित्वमुक्त्वा तस्मादिति तस्य हेतुकारणात् रुद्रान्तर्यामिण-मिति तद्वाक्यार्थावधारणात् । न च पूर्वार्धस्थात्मशब्दो भिन्नस्वरूपपर एवेति वाच्यम् । तर्हि सर्वेषामात्मैक्ये सर्वैः क्रियमाणस्य नमस्कारस्य स्वनमस्कारत्वेन 'न हि विष्णुः प्रणमति कस्मैचित् विबुधाय तु' इत्युक्ति व्याघातापातात् । प्रपञ्चितश्चायमर्थः पूर्वमेव । न च 'तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम्' इत्यत्र रुद्रशब्दस्य रुद्रान्तर्यामिपरत्वादात्मानमित्येतदभिन्न स्वरूपपरमेवेति वाच्यम् । एतावता भवदभिहित शिवाभिन्न स्वरूप परत्वाभावात् । अहमात्मेत्यात्मशब्दवै-रूप्यायान्तर्यामि परत्वस्यैव वाच्यत्वाच्च । रुद्रशब्दवाच्यद्विविधान्तर्यामिणं रुद्रं मामिति तत्रार्थकत्वेन सम्भवात् । रुद्रेशानादीनामनिर्वचनमप्यपर्यवसानवृत्त्या भगवत्परत्वात् '**साक्षादप्यविरोधं जैमिनिरि**'ति ( ब्र॰ सू॰ 1–2–28 ) न्याये-नापि तेषां शब्दानां भगवत्परत्वं सम्भवतीत्यभिप्रायेणोपपन्नम् ।

यत्तु भगवच्छब्दस्यान्यत्रापि पूज्यमात्रे प्रयोगात् न नारायणासाधारण्यमिति तत्तुच्छम् । ईशानादि शब्दानामप्यन्यत्र प्रयोगदर्शनेनासाधारण्यसिद्धापत्तेः । न चासाधारण्यग्राहक प्रमाणबलात् तदसाधारण्यम् । तत्र पूज्यपदार्थोक्ति परिभाषासमन्वितः । शब्दोऽयं नोपचारेणान्यत्र ह्युपचारत ' इत्यसाधारण्य ग्राहकस्यात्रापि तुल्यत्वात् । तस्मात् भगवच्छब्दसामानाधिकरण्यमपि 'यो वै रुद्र ' इत्यस्य नारायणपरत्वे साधकमेव ।

**वेदान्तविजयकृतस्तु** — '**अजो वै रुद्र**' इत्यादिकं परपक्षे सर्वथा असङ्गतमेव । तस्य हि यो रुद्रः स भगवानेव उतोभयात्मकाय भगवते नम इति ह्यर्थः स्वरसः । भगवच्छब्दस्य रुद्रपरत्वे यो रुद्रः यश्चान्यस्ताभ्यां नम इति वाच्यम् । तस्मा इत्यनन्वितमेव यो रुद्रो ब्रह्माऽभूदित्यर्थाङ्गीकारे द्वितीयया वा सामञ्जस्य यो रुद्रोऽभूत् यो ब्रह्माऽभूदित्यर्थाङ्गीकारे धर्म्यन्तरं स्वरसतो लभ्येत । पक्षद्वयेऽपि स भगवानिति तच्छब्दस्य स्वारसिकतया भगवच्छब्द प्रतिनिर्देशकत्वभङ्गमयो वै रुद्रस्स भगवान् तस्मै नमः यश्च ब्रह्मा तस्मै नम इत्यर्थः । ब्रह्मशब्दो रुद्रपर्यन्त इत्यङ्गीकारेप्ययं दोषः समानः । तस्मै नम इति तृतीय वाक्येन तादृशस्य भगवत एव नमस्कारः क्रियत इति पूर्वोक्तार्थः स्वरसः । एवमुक्तार्थस्येह विवक्षितत्वादेव तद्विवक्षाभावे भङ्ग्यन्तरं दृश्यते । तथा **तापनीये** 'यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नम ' इति अत्र पूर्वोक्तार्थस्य तात्पर्यविषयत्वाभावेन ' यश्च ब्रह्मा सोऽपि भगवानेवे'त्येवं वाक्यभेदस्याविवक्षिततया भगवन्निस्यता प्रयुक्ततच्छब्दाप्रयोगः । अत्र 'यो वै नृसिंहो देवो भगवान् तस्मै नम' इति स्वरूपेण नमस्कृत्य 'यश्च ब्रह्मा तस्मै नम' इत्यन्तर्यामी नमस्यते तस्मै नम इत्येतदुत्तरवाक्य एवान्वितम् । अव्यवधानात् । भूरादिपर्यायेषु तत्पदलिङ्गवचनयोर्भूरादिलिङ्गवचनानुरोधित्वाच्च । पूर्ववाक्ये तत्सजातीय पदाध्याहारः । अतोऽस्मिन् प्रकरणे प्रतिपर्यायमुत्तरवाक्यं तत्तदन्तर्यामि नमस्कारपरम् । अत एव या सरस्वती तस्यै नमः या श्रीस्तस्यै या गौरी तस्यै या प्रकृतिः तस्यै या विद्या तस्यै याश्चतस्रोऽर्धमात्रा स्ताभ्यः ये च देवास्तेभ्यः ये चाष्टग्रहास्तेभ्यः यानि पञ्चमहाभूतानि तेभ्यः इत्येवं विशेषणानुसारि लिङ्गानुसा-

रीति वचननिर्देशः। स भगवानित्यन्वयस्याविवक्षिततया तत्तदन्तर्यामिनमस्कारस्यैव विवक्षितत्वात्। अथर्वशिरसितु 'वेत्ति भगवानेव तादृशे भगवते नम' इत्यन्वयस्य विवक्षितत्वादेव या च भूस्तस्यै या च पृथिवी तस्यै या त्वापस्तस्यै यानि च नक्षत्राणि तस्मै ये चाष्टग्रहास्तस्मै नम इति तत्तद्विशेषणातिलङ्घि भगवच्छब्दानुरोधि लिङ्गवचननिर्देशः।

नन्वस्त्वेवं योजना अथापि यो रुद्रस्स भगवानित्यत्र भगवच्छब्दे यौगिकत्वमेवेष्यत इति चेत् - न। बाधकं विना स्वारसिकरूढिपरित्यागायोगात्। किं च यो रुद्रस्स भगवान् स सार्वज्ञ्यादिगुणकः यच्च ब्रह्म सोऽपि सार्वज्ञ्यादि गुणकः इत्युक्त्वा अन्यत्रापि तथात्वेऽयोग्यार्थता। रुद्रस्तुति विरोधाच्च। तस्मात् रूढ्या भगवत्परतयैव प्रयुक्तमित्येतद्वाक्य सङ्गत्यर्थमप्यथर्वशिरसि भगवत्परत्वं युक्तमित्याहुः।

यत्तु रुद्रेशानादीनामनिर्वचनानां नामिनो जगत्सृष्टिपाते संहार स्वतन्त्रत्वप्रतिपादनपराणां प्रणयविषयत्वायोगात्। ओङ्कारादिनामनिर्वचनान्यपि नामनामिनोरभेदोपचारात् शिवविषयाणीति - तदप्यसारं - उपक्रम ओङ्कारादि प्रणवतारादीनामनिर्वचनदर्शनात् प्रतिपर्यायं यस्मादुच्चार्यमाण एवेति शब्दधर्मस्योच्चार्यमाणत्वस्य कीर्तनाच्च। तदनुसारेणोपसंहारगतरुद्रादीनामनिर्वचनानामपि तद्विषयत्वस्यैव युक्तत्वेन सृष्टयादि स्वतन्त्र प्रतिपादनस्यापि तदर्थस्यैवारादुक्तिरित्यनुपपन्नत्वात्। तस्मादुक्तरीत्या भगवत्परैवेयमुपनिषत्। अत एवैतत्सर्वमभिप्रेत्य भगवता बादरायणेन

'अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः।
स्तुवन्ति सततं ये मां तेऽपि भागवताः स्मृताः॥'

इत्यस्या उपनिषदो भगवत्परत्वं स्फुटीकृतम्।

एवं च परोक्तानि तामसपुराणस्योपबृंहणान्यापाततः प्रतीयमानार्थमादाय शिवपरत्व प्रतिपादनपराणि न्यायाभासमूलानि वेदितव्यानि। तस्मात् न्यायोप

बृंहणाभ्यामस्या उपनिषदो भगवत्परत्वात् निरर्गलम् । मौसलादिभिर्भगवत्कारणत्व प्रतिपादन सम्भवात् कारणत्वं भगवद्धर्म एवेति । 'कारणं तु ध्येय' इत्यथर्वशिखोक्तमपि ध्येयत्वं भगवद्धर्म एवेति सर्वमनवद्यम् ।। हरिः ओं ।।

नन्वेवमपि कारणत्वं भगवद्धर्म इति न सिध्यति । श्वेताश्वतराणां मन्त्रोपनिषदि 'कारणं तु ब्रह्म किं देवतमि'त्येवं ब्रह्मवादिनां प्रश्नमवतार्य शिवः कारणमिति निर्धारणं दृश्यते । नैवात्र देवता निर्धारणं दृश्यत इति तदनुसारेणैव सर्वत्र कारणवाक्यस्थ नारायणादिपदानां तत्रैव वृत्तेर्वक्तव्यत्वात् । तथा हि तत्रोपक्रमे ब्रह्मवादिनो वदन्ति । किं कारणम्? ब्रह्म कुतस्म जाता जीवात्मा केन बन्धत्वं प्रतिष्ठा अधिष्ठिताः केन सुखेतरेषु वर्तामहे । ब्रह्मविदोऽव्यवस्थामिति केषांचित् ब्रह्मवादिनामृषीणां ब्रह्म जगन्मूलकारणमित्येतावन्निश्चितवतां कारणभूतं ब्रह्म को द्व इति विशिष्टयाबुध्यमानानां कारणं ब्रह्म किमित्यादिरूपान् संशयान् प्रदर्श्य यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक इत्यारभ्य 'अक्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं हरते विश्वमीश' इत्यादिभिस्तैर्निर्मितमर्थं प्रदर्शयद्भिः मन्त्रैः कालाद्यवान्तरकारणबृन्दस्याधिष्ठाता भगवान् परमशिव एव कारणं ब्रह्मेति स्फुटीकृतम् ।

ननु 'अक्षरं प्रधानममृते'ति मन्त्रे हरशब्दस्य यक्षराक्षसेश्वरदेवताविशेषसमर्पकत्वेनान्वयः । किं तु संयुक्तमेतत्क्षरमक्षरं चेत्यादिमन्त्रस्याक्षराक्षर शब्दार्थबुभुत्सायां क्षरं प्रधानमिति क्षरशब्दार्थविवरणानन्तरं अक्षरशब्दार्थ विवरणवाक्ये विधेयसमर्पकत्वेन अन्यथा तद्वाक्यापरिपूर्तेः । न चामृताक्षरमिति पदद्वय सत्वादमृतपदेनाक्षर पदविवरणं क्रियत इति तत्परिपूर्णमिति वाच्यम् । समासस्यैकप्रसरत्वेन विशिष्यैकार्थबोधन स्वभावस्योद्देश्यविधेयोभय प्रसरभेदेन सामर्थ्यविघातात् समासासम्भव प्रसङ्गात् । अत एव 'पश्वोत्र्यङ्गैः स्विष्टकृतं

यजति' ( जै. सू. 10-7-3 ) त्यत्र त्र्यङ्ग पदस्य समस्त प्रधानहविर्भूते हृदयाद्य-ङ्गानुवादेन त्रित्वविधानं न सम्भवमिति त्रित्व विशिष्टाङ्गान्तर विधानं निर्णीतम्। **इज्या विशेषात् स्विष्टकृदिज्यते प्रकृतिव**दित्यधिकरण उच्यते - अमृताक्षर-मिति नेदं समस्तपदम्। एकार्थयोः पदयोर्विशेषण विशेष्यभावासम्भवेन समासस्यैव लक्षण विरुद्धत्वात्। न चामृताक्षरमिति विवरणीयानुवादो युक्तः। सन्निहित मन्त्रान्तरश्रुताक्षर शब्दार्थस्यैव बुभुत्सितत्वात्। नापि हरशब्देन तद्विवरणं युक्तम्। तस्य शिवेरूढत्वात्। जीवशब्द प्रतिपादनक्षमेण हि शब्देन विवरीतव्यम्। नियाम्ययोः प्रधानपुरुषयोः नियन्तुरीश्वरस्य च पूर्वोत्तरमन्त्रसन्दर्भे उपन्यासदर्श-नात्। 'क्षरंमाया चाक्षरं जीवरूपं क्षरात्मना विशते देव एक' इति ब्रह्मगीतोप बृंहणाच्च। न च हरशब्दो जीवे दृष्टप्रयोगः। कथंचिदवयवार्थकल्पनेऽप्युक्त-रत्नान्वयेन शक्यसमर्थनाया रूढेस्त्यागायोगात्। तस्मादनुपपन्नमेतदमृताक्षरं हर इत्युद्देश्यविधेयभावेनान्वय इति। किं त्वमृतेति भिन्नं पदं 'तृतीया तत्कृतार्थेने'ति

---

## ज्योतिष्टोमेऽनिज्याशेषैः त्र्यंगैः स्विष्टकृद्धोमाधिकरणम् —

पशौ श्रूयते — त्र्यङ्गैः स्विष्टकृतं यजति इति। तत्र इज्यार्थानां हृदया-द्येकादशाङ्गानां यैः कैश्चित्त्र्यङ्गैः इज्याशेषभूतैः स्विष्टकृत् होतव्यः। कुतः। प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृतो हुतत्वादत्रापि चोदकेन तथात्वात् इति पूर्वः पक्षः।

सिद्धान्तस्तु — दोष्णः पूर्वार्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः इति वाक्यशेषेण हृदयादिभ्यः एकादशभ्योऽन्यानि त्रीण्यङ्गानि स्विष्ट-कृते समाम्नायन्ते। न च हृदयादिष्वपि गुदादीन्याम्नातानि इति शङ्क्यम्। तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात्। हृदयं जिह्वा वक्षो यकृत् वृक्कौ सव्यंदोः उभेपार्श्वे दक्षिणा श्रोणिः गुदं तृतीयम् - इति दैवतावदानानि। दक्षिणोंऽसः सव्या श्रोणिः गुदं तृतीयम् - इति सौविष्टकृतानि इति। तस्मात् अनिज्याशेषैरङ्गैः स्विष्टकृद्धोमः। ( जै. सू. 10-7-3 )

सूत्रे तल्क्तपदमिव 'सुपां सुलुगि'त्यादिना सूत्रेण लुप्तविभक्तिकं जीवपरं 'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्ये ईशते यस्तु सोऽन्य' इत्यस्यामेव श्रुतौ तत्र दृष्ट-प्रयोगत्वात्। 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत' इति श्रुत्यन्तरे तत्र तदर्थं सद्भावोक्तेश्च। तेन च बुभुत्सितार्थाक्षर शब्दार्थ विवरणं क्रियते। हरशब्दस्तु क्षराक्षरेश्वरदेवता विशेष निर्धारणत्वेनोत्तरत्वान्वेतीति —

अत्रोच्यते — किं कारणं ब्रह्मेत्यस्य देवताविशेष कोटिकसंशयरूपत्वं कुतोऽवसीयते येन देवताविशेषकोटिककारण संशयानन्तरं तन्निर्णायकवाक्ये श्रुतस्य हरशब्दस्य किमयं स्थाणुः पुरुषो वेति संशयानन्तरमयं पुरुष एवेति निर्णायकवाक्ये श्रुतस्य पुरुषशब्दस्येव व्यवच्छेदनीयायां प्रतिकोटौ वृत्त्ययोगेन वृत्त्यन्तरकल्पनासहिष्णुत्वाभावेनान्यथासिद्धत्वमिति त्वन्मनोरथसिद्धिः स्यात्। न तावदेतद्वाक्यस्वरसबलात् अत्र तत्तद्देवताविषयक कोटयनुपन्यासात् नाप्युत्त-रानुसारात्। कारणं ब्रह्मा यमिति देवताविशेषनिर्णायकोत्तरादर्शनात्।

ननु दृश्यते हि 'क्षरं प्रधानममृताक्षरं हर' इतिदेवताविशेषरूढहरप-दघटितत्वेन तथा निर्णयजनकमुत्तरमिति चेत् - न। अस्य कारणधर्मिकत्वा-भावेन किं कारणमिति कारणधर्मिक संशय प्रदर्शनपरं प्रत्युत्तरत्वाकल्पनात्। यदि वा किं कारणमित्यादिकं देवताविशेषकोटिक संशय प्रदर्शनपरमिति निर्धारितं स्यात्। तदा देवताविशेषघटितेनैवोत्तरेण भवितव्यमिति कथंचित् क्लिष्टगत्या तदुत्तरत्वं कल्प्यं स्यात्। न च तत्कोटिकत्वं संशयनिर्धारितं एतदुत्तरबलात् देवताविशेषकोटिकत्वकल्पने चान्योन्याश्रयः। संशयवाक्यस्य देवताविशेषकोटिकत्वे सिद्धे देवताविशेषनिर्धारकेणैवोत्तरेण भवितव्यमपेक्षितत्वा-दिति कारणधर्मकत्वाभावेऽपि तस्योत्तरत्वकल्पनम्। तस्योत्तरत्वे सिद्धे तस्य देवताविशेषनिर्धारकत्वात् किं कारणमित्यस्य देवताविशेषकोटिकत्वकल्पनमिति।

ननु कारणधर्मिकनिर्णयजनक वाक्यान्तराभावात् करणत्वनियतनियन्तृत्व प्रतिपादकस्य क्षरप्रधानमित्यादेस्तदुत्तरत्वं सम्भवति। तदनुसारात् देवताविशेष-कोटिकत्व संशयस्य ज्ञातुं शक्यमिति चेत् - न। 'यः कारणानि निखिलानि

नानि कालात्मयुक्तात्मन्यचितिष्ठत्येक ' इत्येकत्व प्रकारक निर्णयजनकाव्यवहित वाक्यस्यैवोत्तरत्वं एवं सति वक्तुं शक्यमिति तदनुसारात् संशयस्यैकत्वानेकत्व कोटिकत्वस्य स्वरसतो भासमानत्वेन देवताविशेषकोटिकत्वस्य सिध्यापातात् ।

किं च संशयस्य देवताविशेषकोटिकत्वे ते ध्यानयोगानुगता अपश्यन्नित्य- भ्यासाङ्गत्वं च स्यात् । यथा चैतत् तथाऽग्रे वक्ष्यते ।

अपि च देवताविशेषरूढ एवात्रत्य हरशब्द इति कथं निर्णयः । योगेन जीवेऽपि सम्भवद्वृत्तिकत्वात् । न च रूढेर्बलीयस्त्वात् , शिवे च तस्य रूढत्वात् शिवपरत्व निर्धारणमिति वाच्यम् । संयुक्तमेतत् क्षरमक्षरं चेति मन्त्रस्यस्य क्षर- शब्दस्य विवरणानन्तरमक्षरशब्दार्थस्य बुभुत्सिततया यौगिकार्थस्यैवापेक्षितत्वात् ।

ननु जीवप्रतिपादनक्षमेण हि शब्देनाक्षर शब्दविवरणं कर्तव्यम् । न च हरशब्दो जीवे रूढः । तत्कथं तेनाक्षरशब्दार्थ विवरणम् । तस्मादमृत शब्देन तद्विवरणं युक्तमिति चेत् - न । तुल्यत्वात् अमृतशब्दस्य सुधायां मोक्षे च कोशबलात् रूढत्वात् योगेन तत्परत्वं सम्भवतीति चेत् - तुल्य- मितरत्रापि ।

नन्वमृतशब्दस्योद्देश्यान्तर्गतत्वोऽपि न रूढ्यनुग्रहः हरशब्दस्यापि तूत्तर- पदान्वयेन शक्यसमर्थनाया रूढेस्त्यागायोगात् । न तस्याक्षरशब्दार्थ विवरण परत्वम् ; किं त्वमृतशब्दस्यैवेति चेत् न । अमृतशब्दस्य जीवपरत्वं ज्ञातवन्तं प्रति हि तद्विवरणं स्यात् । न च तदत्र वक्तुं शक्यम् ; उभयोर्योगेनैव तत्पर- त्वात् । न च योगेन तत्परत्वेऽपि अक्षरशब्दान्तान्तर्गतक्षरशब्दार्थाज्ञानात् इतरस्य ज्ञानाच्च । तेन तद्विवरणं युक्तमिति वाच्यम् । तस्य लोकत एव विदितत्वात् । अन्यथाऽक्षरशब्दयोगार्थमज्ञातवन्तं प्रति तद्योगार्थप्रतिपादनप्रवृत्तत्वेऽमृतशब्दस्य तेनाक्षरशब्दस्य जीवपरत्वाज्ञानात् । तत्परत्वज्ञानार्थं पुनरपि हरशब्देनैव तद्वि- वरणं कर्तव्यमिति घट्टकुट्यां प्रभातन्यायापातात् । न चाङ्गरूढिभ्यामुभयलाभः, रूढेरसिद्धेः । न च लक्षणयाऽमृतशब्दस्य जीवपरत्वं प्रधान पुरुषेश्वरप्रकरण-

स्थलबलेनैव तस्य शब्दस्य जीवलक्षकत्वं ज्ञातव्यमिति तत एवाक्षरशब्दस्य जीवपरत्वं ज्ञातुं शक्यमिति तद्विवरणानर्थकतापातात्।

किं चैवममृतशब्दस्य लाक्षणिकत्वे मुख्यार्थत्यागरूपदोषस्तत्रापि तुल्यः। अपि च प्रथमश्रुतस्यामृतशब्दस्य मुख्यार्थभङ्गस्तत्र। मम तु चरमश्रुतस्य हर-शब्दस्येत्यस्मत्पक्ष एव ज्यायान्।

अत एव ' न प्रथमयज्ञे प्रवृञ्ज्यात् ( जै॰ सू॰ 8–3–12 ) इति प्रतिषेधो

---

## प्रवर्ग्याधिकरणम् —

प्रवर्ग्यः अनारभ्याधीतः। यत्प्रवर्ग्यं प्रवृणक्ति इति श्रुतः। तस्य च पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति - इति ज्योतिष्टोमाङ्गत्वेन विनियोगः। अव्यभि-चरित क्रतु सम्बन्ध सहचरित द्विरुक्तन्यायेन तदुपस्थितेः। न च उपसदङ्गत्व-मेव प्रवर्ग्यस्य किं न स्यात् इति वाच्यम्। उपसत्पदस्य पुरस्तात्काल प्रति-योगित्वेन स्वार्थोपस्थापकस्य उद्देश्य समर्पकत्वाभावात्।

उपसदः तद्वाचक पदान्तर कल्पनेन उद्देश्यत्वाङ्गीकारे तु उपसदां फलवत्व ज्ञापनार्थं ज्योतिष्टोमोपस्थितेः आवश्यकत्वात्। लाघवेन अव्यभिचरित क्रतु-सम्बन्धेन साक्षादेव ज्योतिष्टोमार्थत्वमेव वाच्यम्। तत्र न प्रथम यज्ञे प्रवृञ्ज्यात् इति श्रुतम्। प्रथमयज्ञपदेन सर्वसंस्थः सर्वावस्थश्च ज्योतिष्टोमोऽभिधीयते। उत तदीय प्रथमप्रयोगमात्रमिति संशयः। प्रथमयज्ञ शब्दः ज्योतिष्टोमनामैव। एष वाव प्रथमो यज्ञो यज्ञानाम् यज्ज्योतिष्टोमः इति सामानाधिकरण्यात्। तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तत्वाच्च। यद्यपि अग्निष्टोम संस्थाक ज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वं वर्तते - तथाऽपि ज्योतिष्टोमत्व सामानाधिकरण्येन तावत् तदस्य इति न प्रवृत्ति निमित्ताभिघातः। अतो वाक्यात् प्रकरणात् च ज्योतिष्टो-मत्वावच्छेदेनैव अयं प्रतिषेधः। ज्योतिष्टोमभिन्ने प्रवृणक्ति इति पर्युदासः वा। अग्निष्टोमे प्रवृणक्ति इति वचनं अनूचानविषये पर्युदास प्रतिप्रसवार्थं उप-संह्रियते। तेन श्रोत्रियस्य अग्निष्टोम संस्थाक ज्योतिष्टोमे नित्यं करणम्। अन्यज्ज्योतिष्टोमे नित्यं अकरणं। विकृतिषु च नित्यमकरणम् - इति पूर्वः पक्षः।

**ज्योतिष्टोमाङ्गं प्रथमप्रयोगाङ्गं वेति संशय्य यज्ञशब्दस्य यागवचनत्वात् प्रथमशब्दस्य च तद्विशेषणत्वात्** ज्योतिष्टोमाङ्गमिति पूर्वपक्षं प्रापय्य प्रयोगपरप्रथमशब्दयज्ञपरत्वे लक्षणा मुख्यस्य पदस्य स्यात् । यज्ञशब्दस्य लक्षणायामपि जघन्यत्वात् न दोष इति राद्धान्तितं प्रवर्ग्य विषये। तथा च हरशब्द एव तद्विवरणपर: योगाश्रयणात् । तदाश्रयणेन च तस्य प्रतिबन्ध्याकाङ्क्षायां पदन्यायेन सन्निहित प्रधान सम्बन्धादजा ह्येका भोक्तृभोगार्थयुक्तेति पूर्ववाक्ये भोग्यत्व प्रतिपादनेन वस्तुसामर्थ्येन लिङ्गेन च तस्य भोग्यत्वेनान्वयात् । तथा तत्स्वीकरण रूपार्थस्य जीवासाधारण्यात् तस्य जीवप्रतिपादनक्षमत्वात्। अतोऽमृत शब्दाऽक्षरविशेषणम् । हरशब्दस्तु तद्विवरणरूप इत्यभ्युपगन्तुं युक्तम् ।

किं च हरपदस्य कथमुत्तरपदान्वय: । किमीशानकर्तृतया किं वा देवविशेषणतया । नाद्य:, देव इत्येकस्यानर्थक्यापातात् । ततो वरं हरपदमुख्यार्थत्व भङ्ग: । आनर्थक्यात् वरं लक्षणेति न्यायात् ।

अत एव **वाग्यतस्तिस्रो दोहयित्वा**विसृष्टवागनन्वारभ्यतूष्णी मुत्तरा दोहयतीति ( जै. सू. 11-1-9 ) वाक्ये किमुत्तरासां तिसृणां दोहनं किं वा

---

सिद्धान्तस्तु – प्रथमशब्दस्य अप्रवृत्तप्रवर्तन विषयवाचित्वात् । आद्यप्रयोगे परत्वावगते: यज्ञशब्दस्य लक्षणया प्रयोगपरत्वम् । प्रकरणात् ज्योतिष्टोम परत्वं वा अङ्गीकृत्य प्रथम यज्ञपदेन ज्योतिष्टोम प्रथमप्रयोग: अभिधीयते । प्रत्येक शक्त्यैव अर्थ बोधोपपत्तौ अतिरिक्त शक्ति कल्पनायां प्रमाणाभावात् प्रथमशब्दस्य च अप्रवृत्तप्रवर्तन विषयवाचित्वात् , प्रथम प्रयोग परत्वावगते: यज्ञ शब्दस्य च लक्षणया प्रयोगपरत्वम्। प्रथम यज्ञपदेन ज्योतिष्टोम प्रथम प्रयोग: अभिधीयते। स च अग्निष्टोम संस्थाक ज्योतिष्टोमस्य। अत: अनेन वचनेन प्रवर्ग्यस्य प्रतिषेध: पर्युदासो वा । न तु विकल्प्यन्तरे । वस्तुतस्तु विकल्पापेक्षया पर्युदास: एव श्रेयान् ( जै. सू. 8-3-12 )

**उत्तरादोहयतीत्यत्र सर्वासां गवां दोहनं प्रतिपादयितुं प्रवृत्तं अधिकरणम् :—**

दर्शपूर्णमासयो: सान्नाय्यदोहाधिकारे वाग्यत: तिस्रो दोहयित्वा विसृष्ट-

यावत्यो यजमानस्य गावस्तासां सर्वासां दोहनमिति संशय्य **कपिञ्जलाधिकरण न्यायात्** (जै. सू. 11-1-8) तिसृणां दोहनम्। न च नास्यैतां रात्रिं कुमारा अपि पयो लभेरन्निति सर्वासां दोहनविधानात्। तत एव प्रार्थकत्वात् यथा प्राप्ति चानुवादत्वोत्तरां दोहयतीत्यस्य कपिञ्जलाधिकरणन्यायविषयत्वमिति वाच्यम्। सर्वदोहविधायकत्वस्य तद्वाचकपदाभावेन वक्तुमशक्यत्वात्। तत्

---

वाक् अनन्वारभ्य तूष्णीमुत्तरा दोहयति' इति श्रुतं। कपिञ्जलाधिकरणन्यायेन उत्तराः तिस्रः एव दोहितव्याः इति भवति। यद्यपि नास्यैतां रात्रिं कुमाराः अपि पयो लभेरन् नाग्निहोत्रं जुह्वोतीति वचनेन अवशिष्टानां सर्वासां गवां दोहनं संभवति। अथापि आद्यवाक्यस्य पयः प्रदान प्रतिषेधपरत्वेन द्वितीयस्य तत्पर्युदास परत्वेनापि सार्थक्य संभवात् न सर्वासां दोहनं इति पूर्वः पक्षः।

सिद्धान्तस्तु – नास्यैतां इत्यादि द्वयोः वाक्ययोः न प्रतिषेधपर्युदास-परत्वम्। अदृष्टार्थत्व प्रसङ्गात्। अपि शब्दस्य वैयर्थ्य प्रसङ्गाच्च। अतः एत्र तद्बलेन साकल्येन दोहनप्रतीतिर्भवति। उत्तराः दोहयतीति अनुवादः अनन्वारंभ मात्रविधानार्थः। अतः सर्वासामेव गवां दोहनम्। न तिसृणामेव गवाम्। (जै. सू. 11-1-9)

## कपिञ्जलाधिकरणम् --- (बहुवचनस्य त्रित्वपरत्वम्)

अश्वमेधे श्रूयमाणं वसन्ताय कपिंजलानालभेत इति वाक्ये त्रित्व चतुष्ट्वादि संख्यानां बहुत्वसाम्यात् इच्छया याकाचित् बहुत्वसंख्या स्वीकार्या इति पूर्वः पक्षः।

सिद्धान्तस्तु – त्रित्वेनैव शास्त्रस्य कृतत्वात् तदधिक संख्या न कार्या। चतुष्ट्वादि संख्यास्वापि त्रित्वस्य दर्शनात् त्रित्वमुपाददाने नतु चतुष्ट्वादिकं वर्जयितुं शक्यते। अतः अवश्यं भावित्वेन लाघवेन च त्रित्वे उपात्ते शास्त्रार्थ सिद्धौ ततोऽधिक पक्षि हिंसायाः प्रत्यवायात्। तस्मात् त्रित्वमेव उपादेयम्। (जै. सू. 11-1-8)

सम्बन्धिपदार्थस्याप्यनुपात्तत्वेन लक्षणाया अप्यसम्भवात्। तस्मिन् नास्यैतां रात्रिमित्यनेन पयः प्राप्त्यभावहेतुभूतं पयसोऽप्रदानमेव लक्षयित्वा विधीयत इति पूर्वपक्षं प्राप्य सर्वासां दोहस्याविधानेऽपि प्रतीयमानं पयः प्राप्त्यभावहेतुभूतं पयसो हविष्ट्वमनेन लक्षयित्वा विधीयते। न च पयसोऽप्रदानमेव हेतुतया लक्षयित्वा विधीयताम्। अन्यथा कुमारादिपदानां सर्वेषां लक्षणा स्यादिति वाच्यम्। कुमारा अपीत्यपि शब्दस्यानर्थक्य प्रसङ्गात्। अत्र सर्वेषां पदानां लक्षणामप्यङ्गीकृत्य पयसो हविष्ट्वमनेन विधीयत इति। तत एव सर्वासां दोह-प्राप्त्या तूष्णीमुत्तरा दोहयतीत्यस्यानुवादकत्वमिति राद्धान्तित'मुत्तरासु यावत्त्वम-पूर्वत्वादि'त्यधिकरणे।

न द्वितीयः, देव एक ईशते सहचर इति वचनव्यक्तिद्वयस्वीकारे वाक्य भेदापातात्। तदपेक्षयाऽहंपदरूढिभङ्गस्य युक्तत्वात्। अत एवार्धमन्तर्वेदि अर्धं वहिर्वेदीत्यत्र देशलक्षणाऽङ्गीकृता। एवं च प्राथम्येनामृतशब्दस्य स्वरसतः प्रतीयमानमुद्देश्यकोट्यन्तर्गतत्वमप्यनुगृहीतं भवति। अत एव संज्ञिनमुद्दिश्य संज्ञाया विधेयत्वममिप्रेत्य **महाभाष्ये** भगवता पतञ्जलिना 'पूर्वोच्चारितसंज्ञा सतो हि कार्ये कार्येण भवितव्यम्। तद्यथेतरत्रापि सतो मांसपिण्डस्य देवदत्त-संज्ञा क्रियते। कथं वृद्धिरादैजिति यदेकमाचार्यस्य मङ्गलार्थमृष्यतामि'ति प्रति-पादितम्। दृढीकृतश्चायं पक्षः **शब्दकौस्तुभे**

'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्॥'

इत्यभियुक्तोक्तेः तथैवानुभवाच्च। प्राथम्यं तावत्संज्ञित्वे लिङ्गम्। अदेङ् गुण इत्यादौ स्पष्टमेव। वृद्धिसंज्ञासूत्रे तु मङ्गलार्थं वृद्धिशब्दस्यादौ प्रयोगेऽपि वक्ष्य-माणैर्न्यायान्तरैरादैः अचां संज्ञे निश्चिते सति आदैज्वृद्धिरित्याकारकपदानुपूर्वीज्ञा-नानन्तरमेव वाक्यार्थबोधाभ्युपगमात् तज्जनकीभूतानुपूर्वीज्ञाने आदैचामेव प्राथ-म्यात् न व्यभिचार इति। न चात्रानुपूर्वीभङ्गकल्पना तां विनैवोपपत्तेः। तस्मात् न हरशब्दस्योत्तरपदान्वयः। किं त्वक्षरशब्दविवरणतया पूर्वपाद एवान्वयः।

तदेतत्सर्वमभिप्रेत्य श्रीमति **शारीरकमीमांसाभाष्ये** भगवद्भाष्यकारैरभिहितम् । अमृताक्षरं हर इति भोक्त्रा निर्दिश्यते । प्रधानमात्मनो भोग्यत्वेन हरतीति हर इति । न तु हरतेरनुद्यमानेऽजिति सोपपदाज्जिधीयते कर्मण्यहित्यत: कर्मणीत्य-नुवृत्ते: । अत: कथमत्र निरुपपदो हरशब्द: साधुरिति चेत् न । पचाद्यन्त-र्भावेनाच् प्रत्ययस्योपपन्नत्वात् । न च पचाद्यन्तर्भावे प्रमाणाभाव: । शिवमरि-ष्टस्य कर इति प्रयोगदर्शनेन यन्दोचिचेत्यच् प्रत्ययपरे यङ्लुग्विधानसामर्थ्याच्च । तस्याकृतिगणत्वात् विशिष्टत्वादिति दिक् । पश्यद्भ्यो युक्तिदण्डे हरेष्विति **वार्तिकेन** हरशब्दे परत: षष्ठ्या अलुग्विधानसामर्थ्येन हरशब्दस्य पचाद्यजन्तत्व कल्पनाच्च । अजपि सार्वधातुभ्यो वक्तव्य इति **महाभाष्योदाहृतेन वार्तिकेन** च तत्सम्भवात् परपक्षेऽप्यनुयोगस्य समानत्वाच्च ।

यदप्युक्तं न चामृताक्षरमिति विवरणीयानुवादो युक्त: । सन्निहितमतान्त-रश्रुताक्षरशब्दार्थस्यैव बुभुत्सितत्वादिति — तदपि न — किममृताक्षरेत्यत्राक्षर शब्दार्थाभावात् नोद्देश्यसमर्पकत्वम् । किममृतशब्दार्थस्याधिकस्य प्रवेशाद्वा । नाद्य: तत्पुरुषस्योत्तरपदार्थप्राधान्येन तत्सत्त्वात् । अत एव न द्वितीय:, प्रधान-भूतार्थमुद्दिश्यार्थान्तरविधानसम्भवात् । अमृतशब्दस्य यस्योदयं हविरार्तिमार्च्छे - दित्यत्रोभयमित्यस्यानुवादत्वसम्भवात् । अक्षरशब्दार्थसमनियतत्वादात्मनो नित्यत्व ग्राहकप्रमाणैर्वा तत्प्राप्ते: । अनुवादस्य प्रयोजनं तु 'क्षरं त्वविद्या ह्यमृतं तु विद्ये'ति वाक्येऽमृतशब्देन जीवनिर्देश: । एवमेव हि श्रुत्यन्तरे 'महत: परम-व्यक्तं अनाद्यनन्तं महत: परं ध्रुवमि'त्यत्र 'बुद्धेरात्मा महान्पर:' इत्यत्रान्येन विशेषणशब्देन निर्देशो दृश्यते । न चामृताक्षरशब्दयोरेकार्थत्वात् समासानुप-पत्ति: । ,अपक्षय विनाशाभ्यां परिणामर्धि जन्मभि:' इत्यादौ विनाशद्वैविध्य-प्रतिपादनेन द्विविधविनाशराहित्यरूपार्थभेदादिति निष्कण्टकोऽयं घण्टापथ: ।

एतेन यदि चामृताक्षरमिति समासपदं, तथाप्यकृतशब्देनैवाक्षरशब्द विवरणमिति नात्र हरशब्दान्वय: । **सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्र** यूपपदमुख्यार्थतानुरोधात् । समासपदेष्वरत्न्युद्देशेन साप्तदश्यविधिस्वीकारादिहापि

हरपदमुख्यार्थतानुरोधात् जगत्कारणे ब्रह्मण्युपक्षिप्त विशेषसंशयव्युदासलाभाय हरपदस्योत्तरत्र देवताविशेषसमर्पण परत्वेनान्वयस्यावश्यकत्वाच्च। अगत्याऽसमर्थ समासाभ्युपगमो दोष इति कस्यचित् साहसिनः प्रलपितमपास्तम्। अमृतशब्देन तद्विवरणासम्भवस्य प्रतिपादितत्वात् हरपदस्योत्तरत्रान्वयसम्भवस्य प्रपञ्चितत्वाच्च। संशयस्य देवताविशेष कोटिकत्वे प्रमाणाभावादित्युक्तत्वाच्च

यच्च सप्तदशारत्निनयोदाहरणं, (जै. सू. 3-1-9) तच्च हरि-चन्दनपङ्कभ्रमेण तप्तायः पिण्डस्पर्शन्यायं स्मारयति। न हि तत्रारत्न्युद्देशेन साप्तदश्यं विधीयते। किं तु यूपोद्देशेन सप्तदशारत्नित्वं विधीयते। तत्रारत्नि-पदार्थस्य प्राप्तत्वात् साप्तदश्ये विधिपर्यवसानं यथा निर्णीत माघाराग्निहोत्राधिकरणे (जै. सू.2-2-5) दध्नाजुहोतीत्यत्र दधिविशिष्टहोमविधावपि होमस्या-न्यतः प्राप्तेर्दधिमात्रे विधिपर्यवसानमिति फलतो गुणविधिरुच्यते। तेन प्रतीतिस

---

**आघाराग्निहोत्राधिकरणम्** –

अग्निहोत्रं जुहोति, दध्ना जुहोति-इत्येवं कुत्र चिदाम्नायते। अन्यत्र च आघारमाघारयति, ऋजु माघारयति ऊर्ध्वमाघारयति इति च। तत्र अग्निहोत्रं जुहोतीति वाक्यं-दध्ना जुहोति इत्यादि वाक्यविहितस्य कर्मसमुदायस्य अनुवादः। आघारवाक्यं च ऊर्ध्वादिवाक्यविहितस्य यागस्यानुवादः। अग्निहोत्रं जुहोति आघारमाघारयति इति वाक्यस्य च न कर्मविधायकत्वम्। द्रव्य-देवतालक्षणस्य यागरूपस्याभावात् इति पूर्वः पक्षः।

सिद्धांतस्तुः — नाग्निहोत्र वाक्यं समुदायानुवादरूपम्। परंतु कर्म-नामधेयमेव। तत्र द्रव्यं दध्ना जुहोति इत्यादिवाक्यैः लभ्यते। देवतातु मांत्र-वर्णिकी एव। आघारमाघारयति इत्यत्रापि, आघारशब्दस्य कर्मनामधेयत्व-मेवांगीक्रियते। द्रव्यदेवते तु आज्येनाघारयति, प्रजापतिं मनसाध्याय-माघारयति-इन्द्रावान् स्वाहा इति मंत्रैः देवतालाभः। अतः अग्निहोत्रशब्दः आघारशब्दश्च कर्मनामधेयमेव। (जै. सू. 2-2-5)

इति आह च **भवनाथः** । न च समासेनापि विधौ प्राप्ता प्राप्तविवेको नास्ति । त्र्यङ्गैरित्यत्र न पदद्वयमुख्यार्थात्मकविनियोगानुरोध इति । प्रकृते तु समासार्थ-विधौ न किंचिदुद्देश्यसमर्पकमस्तीत्यक्षरशब्दस्य तथात्वं वाच्यमिति **त्र्यङ्गाधि-करणोक्तरीत्या**एकप्रसरभेदे सामर्थ्यं हि विहन्यत इति दोषोऽनिवार्यः स्यात् ।

अत एव **वषट्कर्तुः प्रथमभक्ष** ( जै. सू. 3-5-10 ) इत्यत्र न भक्षो-द्देशेन प्राथम्यं विधीयते । समासस्यैकप्रसरत्वात् । किन्तु प्राथम्यविशिष्टभक्षणं विधीयत इति मीमांसाभिज्ञैर्वर्णितम् । तस्मात् समासाभ्युपगमपक्षेऽमृतशब्दे नैवाक्षरशब्दविवरणमिति मूर्खप्रलपितमेव । तथा च हरशब्द एव विवरणपर इति तस्य जीवपरत्वात् न देवताविशेषपरत्वमिति न हरपदघटितैतद्वाक्यबलात् संशयस्य देवताविशेषकोटिकत्वकल्पनम् ।

नापि 'व्यक्ताव्यक्तं भरते विश्वमीश' इति वाक्यानुसारात् बन्धहेतुभूता-नीशान प्रतिकोटिभूतेशानप्रतिपादनमात्रपरत्वेन रुद्रपरत्वासिद्धेः । अन्यथा

---

**वषट्कारस्य भक्षणनिमित्तताधिकरणम्—**

सोमे वषट्कर्तुः प्रथम भक्षः इति श्रूयते । वषट्कर्ता च होता । तस्य भक्षणं च समाख्यया प्राप्तम् । परं तु प्राथम्यं न प्राप्तम् । अतः अप्राप्त प्राथम्य प्रापणार्थं वषट्कर्तुः प्रथम भक्षः इति उक्तमिति पूर्वः पक्षः ।

सिद्धान्तस्तु — न समाख्यया प्राप्तस्य प्राथम्य विधिः । प्रथम भक्षः इति समस्तपदेन यो भक्षः सप्रथमः इति भक्षोद्देशेन प्राथम्य विधानं कर्तव्यम् । परंतु नैतद्युज्यते । एक प्रसरता भङ्गापत्तेः । एकस्मिन्नेव पदे उद्देश्य विधेय भावः न समुचितः । अतः कर्मान्तरमेवेदं सर्वत्र उद्देश्य विधेयस्थले उद्देशो विधेयान्वयात् पूर्वं उद्देश्यस्य उद्देश्यत्वेन क्रियान्वयः अवश्यं वक्तव्यः । क्रियान्व-यात् पूर्वं भक्षप्राथम्ययोः विशेषण भावानवगमात् एकार्थी भावलक्षण सामर्थ्य भंगात् अपरिपूर्णसमास पदस्य पदांतरेणाख्यातेनापि अन्वयायोगः अतः वषट्कार निमित्तकमिदं भक्षणम् अपूर्वमेव प्रतिपाद्यते । विशिष्टविधौ न वाक्यभेदः । प्राप्ते विधानैः वाक्यभेदः स्यात् ( जै. सू. 3-5-10)

योगार्थस्य रूढ्यर्थविशेषणतया निमग्नस्य प्राधान्येनोपस्थित्यभावेन प्रतीयमानप्रति-कोटित्वभङ्गात् । न चानीश इत्यत्रापि रुद्रभिन्नत्वमेवार्थ इति वाच्यम् । रुद्र-भिन्नत्वस्य बन्धहेतुत्वाप्रसिद्धेः । असामर्थ्यस्यैव तेन पदेन बोधनात् । अतः संशयदेवता विशेषकोटिकत्वेन किंचित् प्रमाणमिति ।

अत्र कस्यचिदर्थान्तरस्य वर्णयितुमशक्यत्वात् संशयस्य देवताविशेष-कोटिकत्वमङ्गीक्रियते । तथा च तदनुरोधेन क्षरं प्रधानममृताक्षरं हर इत्यस्य कथंचिदुत्तरत्वेन देवताविशेष निर्धारकत्वं वाच्यम् ।

ननु नार्थान्तरस्य वर्णयितुमशक्यत्वं जगत्कारणं वस्तु ब्रह्म वा ततोऽन्यत् कालादिकं वेति संशयप्रदर्शन परत्वस्य वर्णनसम्भवात् । एवमेतस्यार्थो वर्ण-यितव्यः । 'कालस्वभावो नियतिर्यदृच्छा भूतानि पुरुष' इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोरिति द्वितीयमन्त्रे कालादि-कारणवादनिरासदर्शनात् । अन्यथा देवतान्तरस्यैव कोट्यन्तरस्य निरसनीयतया तदसाङ्गत्यापत्तेरिति चेत् न । न ह्यत्र जगत्कारणं वस्तु ब्रह्म वा कालादिकं वेति विमर्शो दर्शितः । द्वितीयकोटेरश्रवणात् संशयवाक्य सामान्यतस्सम्भावित यावत्कोट्युपस्थापनक्षम किं शब्दमात्रघटितं स्यात् । यथा कोऽयं वृक्ष इति विशिष्य तत्तत्कोटि विशेषपरशब्द विशेषघटितं वा । यथा अयं वृक्षः श्रुतः पनसो वेति विशिष्यैककोटिमात्रोपन्यासस्तु व्युत्पत्तिविरुद्ध इति समभिव्याहृत ब्रह्मपदान्वयलाभाच्च । कोट्यन्तराध्याहारस्तावद्वर्जनीयः । किं यद्वदत्त इति तदुत्कटकोटिकसंशयवाग्रूपत्वे कुत स्म जाता इत्यादि कोट्युत्कटत्वशून्याग्रिम विमर्शवाक्यानां सामञ्जस्यापत्तेः ।

अपि चात्र किं शब्दः कोऽयं पुरोवर्ति स्थाणु पुरुषो वेति अतद्वत् यथा तथा कल्प्यमान धर्मिपर्यन्ते किमयं स्थाणुः पुरुष इत्यत्रेव विकल्पमात्र-परो वा । आद्ये सामान्यतो विमर्शवाक्यमेकं विशिष्यकोटिद्वयविमर्शपरवाक्यमन्य-दिति प्रतीतैकवाक्यताभङ्गः विशिष्य प्रदर्शितकोटिद्वयस्य वैकल्पिकत्व प्रत्यायक वाक्याध्याहारापत्तिश्च । द्वितीये कुत स्म जाता इत्यादि धर्मिपर्यन्त किं शब्दान्तर प्रायपाठाननुरोधः । पक्षद्वयेऽपि विशेषविमर्श वाक्यस्य तादृशविमर्शवाक्यान्तर

प्रायपाठानुरोधश्च। अग्रे कालादिकारणवादनिरासान्यथानुपपत्तिबलात् कारणं ब्रह्म कालादिकं वेति विमर्शवाक्यस्य कल्पनीयतया सर्वमिदं न दोषायेति चेत् - न। तस्यैव तत्कल्पनारूप श्रुतित्वात्। तथा हि 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्यनन्तरपठितो मन्त्रः स्वतो निर्णयाशक्तानां तेषां तन्निर्णयाय देवताध्यानानुष्ठानं श्रावयतीति ततः प्रागेव संशयविषयकोट्यन्तरस्फुरणे कथं तत्सङ्गच्छेत। न च निर्णयार्थध्यान कोट्यन्तरनिरासयोः पौर्वापर्यानियमात् **क्रमिकोपाधिकरणन्यायेन** पाठक्रमादर्थक्रमस्य बलवत्वात्। 'एतस्मात् जायते प्राण' इत्यादि मन्त्रे प्राणादिजन्मकोटिजननवत् देवताध्यानात् परं कोट्यन्तरनिरासः कल्प्यत इति वाच्यम्। अन्योन्याश्रयापत्तेः। न हि कालादिकरणवादस्य कोट्यन्तरत्वं निरासस्य ध्यानान्तरत्वकल्पनं विना सिध्यति।

किं च यदि कारणधर्मिकविशेषकोट्यन्तरनिरासार्थः कालस्वभाव इत्यादि मन्त्रः तदा यदृच्छापक्षस्यानुपपत्तिः। न किंचित्कारणमस्तीति पक्षो हि यदृच्छा पक्षः। किं च कारणस्य संशयात् प्रागेव चेतनत्वं प्रतिपत्त्यभावेऽचेतनस्य तस्याधिष्ठातृत्वा सम्भवात्। तदधिष्ठिताः के त इति विमर्शानुपपत्तिः। तस्मात् सामान्यतो ब्रह्मकारणमित्येतावन्निश्चितवतां किं कारणं ब्रह्मेति विभावित सकलकोटिविशेषित धर्मिपरेण किं शब्देन कारणं ब्रह्मविष्ण्वादि देवानां मध्ये को देव इति विमृशतां जगतः कारणत्वस्यान्यकारणत्वस्य चोपपत्तौ ब्रह्म कारणमित्येतदेवासिद्धमिति संशयस्य निरालम्बनत्वप्रसङ्गो मा भूदिति पक्षद्वयस्यापि निरास निर्णयार्थध्यानात् प्रागेवेति तदभिप्रायवर्णनं युक्तम्।

ननु युक्तमेतत् एवं कालकारणवादनिरासाभिप्रायवचनं तथापि कारणं ब्रह्म को देव इति न विमर्शः। किं त्वद्वितीयस्य सकलसहकारिविधुरस्य ब्रह्मणः कथं कारणत्वं समर्थनीयमित्यभिप्रायेण ब्रह्मणा जगदुत्पत्तौ साध्यायां किं कारणं किं सहकारीति। एवं च तेषां ध्यानानन्तरं तदीया विद्याशक्तिदर्शनोपन्यासस्सङ्गच्छते। ब्रह्मणो जगत्सृष्टौ किं सहकारीति सन्दिह्य स्वयं निर्णयाशक्त्या ब्रह्म ध्यायतां तत्संप्रसादादघटितघटनापटीयसी मायाशक्तिः सहकारिणीति तेषां

निर्णय आसीदिति तात्पर्यवर्णना न स्यात्। अन्यथाऽत्र मायाशक्तिदर्शनोपवर्णनमसङ्गतमेव स्यादिति।

अत्रोच्यते — एवं सहकारिविचारपरत्वकल्पनायां कारणपदं तावत् सहकारिलक्षकं कल्पनीयं स्यात्। कुत स्मजाता इत्यादि विमर्शनाश्च नोपपद्येरन्। यदि कारणसामान्याभ्युपगमपूर्वकं तद्ब्रह्म अन्यद्वेति संशय इति कल्प्येत। यदि वा कारणं ब्रह्मेत्यभ्युपगमपूर्वकं तत् शिवो वै देवतान्तरं वेति तदा ते ब्रह्मणोऽन्यस्मात् वा शिवादन्यस्मात् वा क्वं जाता इत्यादि प्रकारेण युज्येरन्। ब्रह्म सकलजगत्कारणमिति निश्चये तद्विशेषजिज्ञासानुदये च तत्सहकारिमात्रं जिज्ञासमानानां कः कुतस्माज्जात इत्यादि विचारस्य प्रसङ्गः। तत्र किं सहकारादिति व्याख्या क्लिष्टकल्पना। अग्रेमायाशक्तिदर्शनोपवर्णनं त्वसिद्धम्। ब्रह्मविद्याधिदेवतायाः परशक्तेरम्बिकायाः प्रसादाद्विमृश्यमानार्थनिर्णयो भविष्यतीत्यामिप्रायेण तां ध्यायतां तेषां तत्साक्षात्कारोपवर्णनपरत्वेनध्यानयोगानुगता इति मन्त्रस्य अत एव तत्र शक्तिशब्दस्याविद्यासाधारण्यात् तद्ग्रहणं माभूदित्यात्मेति विशेषणम्। अम्बिका हि देवस्य चन्द्रमौलेरात्मभूता शक्तिरित्याचक्षते। तयोर्भेदमज्ञानात् परमार्थतः अभेदएवाऽभेदः शिवयोः सिद्धो वह्निदाहकयोरिवेत्यदिस्मरणात्। अविद्या कृतस्यात्मभूताशक्तिः सत्या। उक्तं च सङ्क्षेपशारीरके 'चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते सत्यैवास्य जपा परा भगवतश्शक्तिस्त्वविद्योच्यते' इति। तस्मादम्बिकाप्रसादादयमस्माकमर्थो निर्णीतो भविष्यतीत्यभिप्रेत्य तत्प्रत्यक्षकरणाय तां ध्यायन्तस्तामपश्यन्नित्येतदर्थपरस्ते ध्यानयोगानुगता अपश्यन्निति मन्त्रस्तत्कृपा कटाक्षमहिम्ना परमकारणमहादेवनिर्णयप्रदर्शनपरो यः कारणानीत्यनन्तरमन्त्रसन्दर्भ इति युक्तम्। तस्मादन्यथा संशयस्य वर्णयितुमशक्यत्वात् देवताविशेषकोटिक एव संशय इति।

अत्र ब्रूमः — एतावता संशयस्य देवताविशेषकोटिकत्वे किं प्रमाणमुपन्यस्तम्। अन्यथाऽनुपपत्तिरेवेति चेत् - न। तदसिद्धेः। किमेकमनेकं वेत्यादिरूपेण तदर्थवर्णन सम्भवात् हरपदघटितोत्तरानुसारादित्येतन्निरस्तमेव।

कालात्मयुक्तान्यधितिष्ठत्येक इत्येकपदघटितोत्तरानुसारादुक्तरीत्याऽपि सम्भवतीति सुवचनम् ।

ननु कथमेकत्वानेकत्वकोटिक संशयोक्तिरिति चेत् - न । कथं वा देवताविशेषकोटिसंशयोत्थितिः 'हिरण्यगर्भः समवर्तताग्रे', 'एको ह वै नारायण आसीत्' ते देवा रुद्रमपृच्छन् सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि चे'त्यादि द्वैविध्यदर्शनादिति चेत् तत एवायं संशयोपीति पश्य । नन्वेतावताऽनेककोट्युत्थितिरेवेति चेत् - न । 'न तत्समश्चाभ्यधिकश्च दृश्यत' इत्यादेः कोट्यन्तरोत्थिति हेतोरसम्भवात् ।

नन्वेवमपि स एको देवः को वेत्यपेक्षायां हरपदस्य देवताविशेषनिर्णायकत्वमिति चेत् - न । एवमपि सन्देहविषयकोटयन्तरनिर्धारकत्वेन वृत्त्यन्तरकल्पनासहिष्णुत्वाभावेन हरपदस्यानन्यथा सिद्धत्वमिति त्वन्मनोरथस्यालाभात् । एकत्वस्यैव सन्देहविषयकोटित्वात् देवात्मशक्तिरित्यस्य देवस्यात्मनः शक्तिं सामर्थ्यमपश्यन्नित्यर्थप्रतीत्या एतत्पक्ष एव स्वरसत्वात् कारणं ब्रह्म वा कालादिकं वेत्येवमपि संशयो वर्णयितुं शक्यः । न च द्वितीयकोटेरश्रवणात् तथा संशयप्रदानपरत्वमस्य न युज्यत इति वाच्यम् । अश्रवणेऽपि कोटयन्तराध्याहारसम्भवात् । अग्रे कालादिकारणवादनिरासदर्शनेन कोटयन्तराध्याहारस्यादोषत्वात् । संशयानन्तरं क्रियमाणः पक्षान्तरनिरासः तद्विषयीभूतकोटयन्तरनिरासरूप इत्येव हि वक्तुमुचितम् । न चैवं देवताध्यानात् पूर्वमेव कोटयन्तरस्फुरणे स्वतो निर्णयाशक्तानां तेषां तन्निर्णयार्थं देवताध्यानानुष्ठानं श्रावयन् ते ध्यानयोगानुगता अपश्यन्नितिमन्त्रः कथं सङ्गच्छत इति वाच्यम् । ते ध्यानयोगानुगता इति मन्त्रस्य सन्दिग्धार्थनिर्णयहेतुदेवताध्यान प्रतिपादकत्वासिद्धेः । कालादिकारणत्वनिरासपूर्वकब्रह्मकारणत्व निर्धारणरूपमननानन्तरंतद्ध्यानसाक्षात्कार प्रतिपादन परत्वोपपत्तेः ।

ननु कालादिकारणत्वनिरास एव दृश्यते न ब्रह्मकारणत्व निर्धारणमिति चेत् - न । आर्थिकत्वात् स्थाणुपुरुषसंशयानन्तरं न स्थाणुरिति कोटयन्रा-

व्यवच्छेदे सति जायमानपुरुषनिर्णयवत् । तर्हि देवतान्तरशक्तिमत्त्वस्य कोऽर्थ इति चेत् देवतास्वरूपभूतां शक्तिं, शक्तिशक्तिमतोरभेदव्यदेशः । 'परास्य शक्तिर्विविधैवश्रूयत' इत्यादि श्रुतिसिद्धविचित्रशक्तिमन्तं देवमित्यर्थः । यद्वा देवस्यात्मनः शक्तिं पश्यन् तां दृष्ट्वा देव एव कारणमिति निश्चितवन्त इत्यर्थः । एवं च नास्य वाक्यस्य सङ्गतिः ।

यदुक्तं यदृच्छापक्षस्यानुपपत्तिः न किंचित्कारणमस्तीति हि पक्षो यदृच्छा-पक्ष इति - तन्न - त्वत्पक्षेऽपि यदृच्छाभूतानि योनिः पुरुष इति कारणत्वार्थक-शब्दसामानाधिकरण्यदर्शनेनानुपपत्तेस्तुल्यत्वात् । न हि निर्हेतुकत्वं कारणमिति सम्भवति ।

नन्वत्रत्यकारणत्वार्थकशब्दसामानाधिकरण्यं कथञ्चित् सम्भवति । संशय विशेषसमर्पककारणशब्दसामानाधिकरण्यं तु न सम्भवति । न हि भावाभाव प्रतिपादक शब्दयोस्संशयविशेष्य तत्कोटिसमर्पकत्वं सम्भवतीति चेत् - न । तथापि तदंशस्य संशयकोटित्वाभावेऽपि प्रसङ्गाद्वा दृष्टान्ततया वा तन्निरा-करणोपपत्तेः ।

यदुक्तं कारणस्य संशयात् प्रागेव चेतनत्व संप्रतिपत्त्यभावे चेतनस्या-धिष्ठातृत्वासम्भवेनाधिष्ठिताः केनेति विमर्शानुपपत्तिरिति - तदपि न - ब्रह्म-कारणत्वपक्षे हि कारणेनाधिष्ठितत्वम् , पक्षान्तरे तु कालादीनामधिष्ठातृत्वाभावेन तदतिरिक्तेन चेतनेनाधिष्ठितत्वमिति अधिष्ठिताः केनेत्यस्य किं कारणेनाधिष्ठिता उतान्येनेति फलसंशयप्रदर्शनपरत्वेन वर्णनसम्भवात् ।

ननु कालादिकारणवादनिरासफलात् किलैवं कल्प्यते । स च देवता-विशेषकोटिकत्वपक्षेऽपि जगतः कारणत्वस्यान्य कारणत्वस्य वोपपत्तौ ब्रह्मकारण-मित्येतत् देवतासिद्धमिति संशयस्य निरालम्बनत्वशङ्कायां तन्निराकरणार्थत्वेनोप-पन्न इति नाध्याहारादिकं कल्पनीयमिति चेत् - न । देवताविशेषकोटिकत्वपक्षे इतरकारणत्वनिरासास्वारस्य मुख्यशब्दलक्षणादेवपदानर्थक्यवाक्य भेदोद्देश्य विधे-

यानुपूर्विभङ्ग कल्पनाद्यनेक दोषप्रसङ्गेनाध्याहारस्यैकस्य सोढव्यत्वात् । अतो देवताविशेषकोटिकत्वे संशयस्य न किञ्चित् प्रमाणमिति दिक् ।

**न्यायसुदर्शनाख्ये** तु श्रीमद्भाष्यनिबन्धने **वरदनारायणाचार्यै**रस्याः श्रुतेः प्रकारान्तरेणार्थः प्रपञ्चितः । अयं हि ग्रन्थः – 'किं कारणं ब्रह्म कुत स्मजाता जीवाम केन क्व च संप्रतिष्ठाः अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थां कुरुत इत्यर्थः । कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावात् । आत्माऽप्यनीशः सुख-दुःखहेतोरिति विचार्यैवं निश्चिक्युरित्याह । ते ध्यानयोगानुगता अपश्यन् देवात्म-शक्तिं स्वगुणैर्निगूढाम्' । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधि-तिष्ठत्येकः । ते देवा आत्मशक्तिमपश्यन् ते देवमात्मानं शक्तिं चापश्यन् । शक्त्यात्मविशिष्टं देवं कारणतया अपश्यन्नित्यर्थः । किं कारणं ब्रह्मेति प्रक्रमात् । अथवा देवा आत्मनो शक्तिमपश्यन् भोग्या नियाम्या च प्रकृतिर्भोक्तृनियन्त्रो-स्साधारणीति कृत्वा तस्या उभयसम्बन्धिता । अनेनापि प्रकारेण त्रयाणां दर्शनं विवक्षितम् । देवात्मनोरदर्शने तत्सम्बन्धितया शक्तेर्दर्शनासम्भवात् । देवश्चा-त्मा शक्तिश्चोत्तरैर्मन्त्रैर्विविच्यन्ते ।

'संयुक्तमेतत् क्षरमक्षरं न व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्माबध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥'

इत्यादिभिः 'ज्ञात्वा द्वावजावीशनीशौ' 'अजाह्येका भोक्तृ भोगार्थयुक्ता अनन्तश्चात्मा विश्वरूपे ह्यकर्ता । त्रयं यदा विन्दते ब्रह्ममेतत् भोक्ता भोग्यं प्रेरितारं च मत्वा । सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत्' इति भोक्ता भोक्तारमित्यर्थः । किं कारणं ब्रह्मेति प्रश्नस्य त्रिविधं ब्रह्म एतदित्युत्तरं त्रिविधं त्र्यंशं स्वरूपेण स्वशरीराभ्यां च तस्य त्र्यंशत्वं विशिष्टं ब्रह्म कारणमिति प्रतिपादितमिति ।

अयं भावः – कारणं ब्रह्म किं रूपम् ? विशिष्टमविशिष्टं वेति प्रश्नः । तदर्थनिर्णयार्थं ध्यानरूढानां ब्रह्मविदां त्रितयदर्शनोक्त्या विशिष्टस्वरूपप्रदर्शन-प्रतिपादनात् 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदि'ति वाक्ये कारणस्य ब्रह्मणः

त्र्यंशत्वकथनेन विशिष्टस्वरूपस्यैवात्र प्रतिपाद्यत्वावगमाच्च । न चैवं कालादि-वाक्यानुपपत्तिः, परोक्तरीत्यैव ब्रह्मणः कारणत्वं सिद्धम् । कालादीनामेव कारणत्वात् । अतः प्रश्नानुपपत्तिरिति शङ्कायां तद्वाक्यावतारादिति । एवं वा कारणं ब्रह्म कालो वा स्वभावो वेत्यादि किं शब्दोपस्थापितकालादिकोटिक एव संशयः । न तु ब्रह्मकोटिकोऽपि । ब्रह्मशब्दस्तु धर्मपर एव । तथा च संशय-वाक्यं संभावितयावत्कोट्युपस्थापककिंशब्दमात्रघटितं वा तत्तत्कोटिविशेष-परशब्दघटितं वा । न त्वेककोटिमात्रप्रतिपादकशब्दघटितमिति चोदनस्यानव-काशात् । न च ब्रह्मणः संशयधर्मित्वे कालादिकोटिकत्वं संशयस्यानुपपन्नमिति वाच्यम् । यत्कारणं तद्ब्रह्मेत्यभिप्रायेण तथा निर्देशसम्भवात् । अत एवाहु राचार्यपादाः — कालस्वभावनियतिर्यदृच्छादिषु वस्तुषु कारणं किमिवालेति तापसैरपि तर्कितमिति । अस्मिन् पक्षे च कालादिकारणवस्तुनिरास उत्तरत्र सुखेन सङ्गच्छते । न चैतत्पक्षे निर्णयहेतुदेवताध्यानानुष्ठानप्रतिपादकस्य ते ध्यानयोगानुगता अपश्यन्नित्यस्य कथं सङ्गतिरिति वाच्यम् । तस्य तादृश-देवताध्यानानुष्ठानप्रतिपादकत्वासिद्धेः । ततो निर्णीतवन्त इत्येतदर्थप्रतिपादकस्य वाक्यस्य उत्तरत्र श्रवणप्रसङ्गात् । अतस्तस्य सन्दिग्धार्थनिर्णयप्रदर्शनपरत्वमेव युक्तम् । संशयप्रदर्शनपक्षान्तरनिरासप्रतिपादनानन्तरभाविनस्तस्य तथात्व एव स्वारस्यात् । महावाक्यस्वारस्यानुरोधेन ते ध्यानयोगानुगता इत्यस्य विजातीय-व्यवधानरूपधर्ममादाय सावधानश्रुत्यर्थपर्यालोचनपरत्वेनोपपत्तेः ।

न चैवं यदृच्छापक्षस्यानुपपत्तिः । पक्षेऽपि कारणत्वार्थकशब्द-सामानाधिकरण्येनानुपपत्तेस्तुल्यत्वात् यदृच्छाशब्दस्य दैवोपनतयत्किंचिदर्थकत्वेन नियतकारणपरत्वेनोपपत्तेः । प्रसङ्गाद्वा दृष्टान्ततया वा तन्निराकरणत्वोप-पत्तेरित्युक्तत्वाच्च । अधिष्ठिता केनेत्यस्योपपत्तिरपि वर्णितैव । एवं संशयानन्तरं पक्षान्तरनिरासपूर्वकं कारणविशेषनिर्धारणं देव एकः कारणमित्येवं परेणोत्तर-सन्दर्भेण क्रियते तदानीमेव विशिष्टस्वरूपं कारणमिति कारणस्वरूपपरिशोधन-मप्युत्तरत्र क्रियत इति सर्वं समञ्जसं भवति ।

न च कारणस्वरूपप्रश्नानन्तरत्रितयदर्शनोक्तौ त्रितयकारणत्वमेव सिध्येत। न तु देवस्यैकस्य कारणत्वमिति वाच्यम्। उत्तरत्र तस्य नियामकत्वादेर्भोक्तृ-भोग्ययोस्तन्नियाम्यत्वादेश्च कथनेन ज्ञात्वा देवं मुच्यते सर्वपाशैरिति तज्ज्ञानस्य मोक्षसाधनत्वप्रतिपादनेन च तत्परत्वावसायात्। स चैको देवो नारायणः दिव्यो देव एको नारायण इत्येतत्प्रत्यभिज्ञानात्। 'अनन्तश्चात्मे'ति भगव-न्नामत्वेन प्रसिद्धानन्तशब्दबलात्।

'विष्णुः - कृष्णः केशवो मुञ्जिकेशः श्रीवत्साङ्को श्रीपतिः पीतवासाः।
विष्वक्सेनो विश्वरूपो मुरारिः शौरिश्शार्ङ्गी पद्मनाभो मुकुन्दः॥'

इति हलायुधनिघण्ट्वनुसारेण भगवन्नामत्वेनावगत विश्वरूपशब्दबलाच्च। न चैवं 'न्यायसुदर्शन' ग्रन्थे विशिष्य किं कारणमित्यस्यार्थवर्णनाभावादुक्त-संशयाभिप्रायकत्वेन तद्ग्रन्थस्य योजयितुं शक्यत्वात् किमित्यन्यथा तदभिप्राय-वर्णनमिति वाच्यम्। शक्त्यात्मविशिष्टं देवं कारणतया अपश्यन् इत्यर्थः। किं कारणं ब्रह्मेति प्रक्रमात् किं कारणं ब्रह्मेति प्रश्नस्य त्रिविधं ब्रह्मैतदित्युत्तरं त्रिविधं त्र्यंशमिति तदीयग्रन्थस्वारस्यात् तथार्थवर्णनात्।

यदि च किं कारणं ब्रह्मेति प्रक्रमात् कारणभूतब्रह्मस्वरूपं द्रष्टुं तच्चोत्तरवाक्यपर्यालोचनया देव एवेत्यवगम्यत इति शक्त्यात्मविशिष्टो देवः कारणतया सिद्ध इत्यभिप्रायेण तद्ग्रन्थोऽप्याचार्याभिप्रायविरुद्धतया वर्ण्येत तदा सुतरामस्मदभिमतार्थसिद्धिः। परपक्षे च ते ध्यानयोगानुगता इत्यादिवाक्य-मसङ्गतम्। संशयवाक्यानन्तरं तदागमहेतुनिर्णयजनकवाक्येनैव भवितव्यमिति देवताविशेषदर्शनप्रतिपादकवाक्यस्यैव सङ्गतत्वेनास्य वाक्यशैल्यनुरोधित्वात्। न च तन्निर्णयसाधनगौरवदर्शनप्रतिपादकत्वेन सङ्गतिरिति वाच्यम्। एतादृश-कल्पनस्य गौरवदर्शनात्। निर्णयो जात इत्यर्थकवाक्यसद्भावाधीनत्वात्। अन्यथोत्तरवाक्यासङ्गतिप्रसङ्गात्।

एतेन ब्रह्मविद्याधिदेवतायाः परशक्तेरम्बिकायाः प्रसादात् विमृश्य-मन्त्रार्थनिर्णयो भविष्यतीत्यभिप्रायेण तां ध्यायतां तत्साक्षात्कारोपवर्णनपरत्वमस्य मन्त्रस्येति निरस्तम् ।

किं चाम्बिकाप्रसादात् निर्णयो भविष्यतीति कथं तेषां निर्णयः । येन तद्ध्यानं स्यात् ब्रह्मविद्याधिदेवतात्वादेवेति चेत् - किमिदं ब्रह्मविद्याधिदेवतात्वं नाम । तस्या उपास्यान्तर्गतत्वं वा ब्रह्मविद्योपदेशकत्वं वा । नाद्यः ; शिवस्य ब्रह्मत्वनिर्णयात् पूर्वं तस्या ब्रह्मविद्याधिदेवतात्वानिर्णयेन परस्पराश्रयप्रसङ्गात् । न द्वितीयः । ब्रह्मविदाचार्यकत्वस्य तस्यामप्रसिद्धत्वात् देवतात्वेन ब्रह्मादित्वं सम्भवातीति चेत् - न । विशिष्य तद्ध्यानप्रयोजकानुपन्यासात् प्रत्युत गौर्याः शिवपत्नीत्वात् स्वभर्तृ .... प्रतिपादकत्वसम्भावनाया उत्कटत्वेन पक्षपात-शङ्कायाः सम्भवात् न निर्णयोदयः । न च भ्रमाद्यभावनिर्णयात् पक्षपात-शङ्का नोदेतीति वाच्यम् । कथं विशिष्य तत्रैव भ्रमाद्यभावनिर्णयः । गुणत्रय-वश्यत्वाभावनिर्णयात् तन्निर्णय इति चेत् - न । तस्य गुणत्रयवश्यत्वाभाव-निर्णयस्य तच्छेषिभूतस्य तत्संशयेऽसम्भवेन तस्य गुणत्रयवश्यत्वाभावनिर्णया-नन्तरभावित्वेन शिवस्य ब्रह्मत्वनिर्णयानन्तरभावित्वेन चान्योन्याश्रयप्रसङ्गात् । शिवस्य ब्रह्मत्वे निर्णीते गौर्या गुणत्रयवश्यत्वाभावनिर्णयः । तस्मिन् सति भ्रमाद्यभावनिर्णयात् ततो निर्णिनीषोदयः । निर्णिनीषोदये च तद्ध्यानानुष्ठान-पूर्वकं साक्षात्कृतायाः तस्या उपदेशात् शिवस्य ब्रह्मत्वनिर्णय इति ।

अपि चाम्बिकावाचकपदाभावाच्च नात्र तद्दर्शनं कथ्यते । अस्ति शक्ति-शब्दस्तद्वाचकः । शक्तिर्माहेश्वरीशिवेत्यादिप्रयोगात् तस्य तद्वाचकत्वमिति चेत्-न । तथा सति देवात्मपदवैयर्थ्यापत्तेः ।

किं च सामर्थ्ये रूढस्य तस्य कार्योपयोगित्वधर्ममादाय प्रयोगोपपत्तौ विशिष्य तद्वाचकत्वकल्पने मानाभावः । अङ्गीकृतं च विशिष्य तदनभि-धायकत्वं देवात्मशब्दबलात् तत्प्रतीतिं वदता परेणापि । न च तदुक्तरीत्याऽपि तत्प्रतीतिः । देवशब्दस्य रुद्रासाधारणत्वसिध्या तद्बलात् गौरीप्रतीति-

रित्युक्तेरुपपत्तिशून्यत्वात् । तस्मात् देवात्मप्रकृतिरूपत्रितयदर्शनमुपपाद्यते । उत्तरत्र तत्त्रितयविवरणदर्शनात् ।

नात्र द्वेधासमासः उपपादितः । तत्र प्रथमपक्षे इतरेतरयोगद्वन्द्वे **बहुवचनं स्यात्** । समाहारद्वन्द्वे देवात्मशक्तिरिति स्यादिति चेत् - न । छान्दसत्वेनोभयथापि साधुत्वोपपत्तेः । न च तथा कल्पनमेव क्लिष्टतरमिति वाच्यम् । उत्तरवाक्यसन्दर्भे त्रितयस्वरूप विवेचनेन तथा कल्पनस्योचितत्वात् । भवदभिमतगौरीदर्शनस्य पूर्वोत्तरवाक्यासङ्गतत्वात् । न च द्वन्द्वस्य कृत्स्नपदार्थप्राधान्यात् सर्वेषां दर्शनोपपादने विशिष्टस्य ब्रह्मणः कथं कारणत्वसिद्धिरिति वाच्यम् । शब्दप्राधान्येऽप्यार्थिकाप्राधान्यस्यानिवार्यत्वात् । 'व्यक्ताव्यक्तं भरते विश्वमीशः क्षरात्मानाविशते देव एकः' इति धारकत्वनियामकत्वादिकथनेन ब्रह्मणः शरीरत्वसिध्या तस्यैव प्राधान्यसिद्धेः । केवलब्रह्मस्वरूपकारणत्वव्यावृत्तौ तात्पर्यमात्रेण तत्त्रितयदर्शनोक्तिसम्भवात् ।

ननु 'चार्थे द्वन्द्व' इति सूत्रे **वार्तिककृता कात्यायनेन** 'द्वन्द्ववचने समासेऽपि चार्थसंप्रत्ययात् अनिष्टप्रसङ्गमिति वार्तिकेनाहरहर्नयमानो गामश्वं पुरुषं पशुं, वैवस्वतो न तृप्यति सुरया इव दुर्मति, इन्द्रस्त्वष्टा वरुणो वायुरित्यत्र प्रथमोदाहरणेन प्रतिक्रियायां गवादीनां समुच्चयात् द्वितीयोदाहरणे इन्द्रादीनां लोकपालत्वात् गम्यमानपालनक्रियायां समुच्चयात् वाऽर्थसद्भावात् द्वन्द्वप्रसङ्गमाशङ्क्य 'सिद्धं तु युगपदधिकरणे द्वन्द्ववचनादि'ति वार्तिकेन गामश्वमित्यादौ परस्परनैरपेक्ष्येण पृथक् पृथग्गवादिप्रत्यायकत्वेन युगपदधिकरणवचनताया अभावात् नातिप्रसङ्ग इति परिहारमभिधाय शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमसम्भवम् । युगपदधिकरणवचनतया आशङ्क्य शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेत् — 'द्विवचनबहुवचनयोरनुपपत्तिरि'त्यादिना युगपदधिकरणवचनतायाः साधितत्वात् द्वन्द्वस्य युगपद्वाचित्वेन सर्वेषां पदानां लक्षणाप्रसङ्ग इति चेत् — सत्यं **वार्तिककारेण** साधिता । **महाभाष्यकारेण** त्रियं युगपदधिकरणवचनता दुःखा दुरुपपादा चेत्यादिना

प्रतीतावनारोहात् प्रमाणाभावच्चैतदसङ्गतमि'त्युक्तम् । वृद्धव्यवहारादिशब्दार्थाव-सायः । न च तत्र प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं दृश्यते । न च गौणार्थत्वं प्लक्षशब्दस्य न्यग्रोधशब्देनैव न्यग्रोधस्य प्रतिपादनात् । न च प्लक्षन्यग्रोधा-वित्युक्तेरर्थद्वयप्रतीतेरावृत्तिः । यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति समासेन चानेकार्थाभिधानात् ततः परयोर्द्विवचनबहुवचनयोरुपपत्तिरिति तद्भाष्यतात्पर्यं वर्णयता **कैयटेनापि** विस्तरेण निराकृतम् । **तन्त्रत्वे च वचनात्तु द्विसं-योगस्तस्मादेकपाणिवदित्यधिकरणे ।**

एतेन 'राजपुरोहितौ सायुज्यकामौ यजेयातमि'त्यत्र किं षष्ठीतत्पुरुष उत द्वन्द्व इति संशय्य युगपदधिकरण वचनतायां द्वन्द्व इति द्वयोरपि पदयोरित-रेतरसहितस्वार्थलक्षकत्वापत्तेः द्वन्द्वसमासासम्भवात् । षष्ठीतत्पुरुषे पूर्वपदलक्ष-णायामप्युत्तरपदस्य श्रुतिवृत्तत्वात् तत्पुरुषो न्याय्य इति पूर्वपक्षं प्रापय्य तन्निरा-करणार्थमितरेतरयोगे तु न कस्यचित् लक्षणता । तत्रापीतरेतरयोगो लक्ष्यत इति चेत् - न । अर्थसिद्धत्वेन तस्य शब्देनाप्रतिपादनात् । यथा धवखदिरा-वुभावपि ह्येकेन विभक्त्यर्थेनान्वितौ तन्मुखेन विहितावेव पश्चात् क्रियान्वयमनु-भवतां तेनैकविभक्त्यर्थान्वयादेवेतरेतरसिद्धो न शब्दस्य तत्प्रतिपादकत्वम् येन लक्षणा स्यात् तस्मादितरेतरयोगद्वन्द्वे न कस्यचिल्लक्षणा । तत्पुरुषे तु पूर्वपद लक्षणापत्ते दौर्बल्यमिति प्रतिपादितम् ।

अस्तु वा लक्षणा, तथापि 'ते ध्यानयोगानुगता अपश्यन्' इति वाक्यं परपक्षे सर्वथाऽनन्वितमिति तदपेक्षया लक्षणा ज्यायसी । **तथोत्थानविसर्जन** इति न्यायात् न्यायश्चैवं सोमे श्रुतमुत्तिष्ठन्नाहाग्नीदग्नीन्विहरेति (जै. सू. 3-2-4) तथाव्रतं कृणुतेति वाचं विसृजत इति । तत्र संशयः-किं मन्त्रयो-

---

## आग्निविहरणादिप्रकाशकमंत्राधिकरणम्

सोमे — उत्तिष्ठन्नन्वाह, अग्नीदग्नीन्विहर इति तथा व्रतं कृणुतेति वाचं विसृजते इति च श्रूयते । तथा दर्शपूर्णमासयोः प्रणीताः प्रणयिष्यन्

रुत्थानविसर्गयोः शेषतावचनात् किं वा लिङ्गात् प्रेषणवचनं उतकालविधि-परमिति । तत्र कालविधिपरत्वे तद्वाचकपदाभावेनोत्तिष्ठन्नित्यादेरुत्थानादिकाल-लक्षणापूर्वकं तद्विधायकत्वं वाच्यमिति विधौ लक्षणात्यन्तक्लिष्टासमाश्रिता स्यात् । तद्वरमुत्थानविसर्गार्थतया मन्त्रविधिरिति । यद्यप्यचेतने प्रैषानन्वयः तथापि भक्त्यभावादुत्थानविसर्गार्थतया मन्त्रविधौ निश्चिते विनियोज्य मन्त्र-गताग्नीत्पदेव्रतपदेचगुणात् योगात् वोत्थानविसर्गार्थे तत्र यज्ञोपयोगो गुणः । योगोऽप्यग्नीदित्यग्निमिन्ध इत्युत्थानेऽप्यस्ति । तथा व्रतपदेऽपि व्यक्तं यौगिकत्वं व्रतं वर्तनम् । प्रवर्तनं यागाचरणं वाग्विसर्ग इति पूर्वपक्षः ।

राद्धान्तस्तु — विनियोज्यमन्त्रगतप्रैषपदानां सर्वथाऽनन्वयात् वरं विधिवाक्यपठितैकपद लक्षणस्वीकारात् तत्सहित सर्वपदान्वितत्व मित्युत्थानादि-लक्षितकालविधिरेवायम् । अथ चेतनविषयेऽपि प्रैषपदोच्चारणमेव प्रैषः । तच्चाचेतनोत्थानादावपीति चेत् — न । न हि प्रैषपदोच्चारणं प्रैषः । किं तु प्रैषपदोच्चारणेन परप्रेरणा । सा च प्रवृत्त्यर्हचेतनविषयैवेति लोकसिद्धम् । व्रतोदाहरणे च यजमानस्यैव पूर्वं नियतवाक्याद्वा विसर्गो याजमान इति व्रतं कृणुतेति प्रैषस्य ऋत्विक्कर्तृत्वे याजमान एवं व्रतं वाग्विसर्गं कृणुतेति प्रेषणीय इति बहुवचनान्वयः । यजमानकर्तृकत्वे च प्रैषस्य स्वात्मनि स्वकर्तृकप्रैषान्वयः ।

---

वाचं यच्छति - तान्सह हविष्कृतावसृजति - इति च श्रुतम् । तत्र मंत्राणां मुख्येऽर्थे विनियोगः । ननु गौणयोः उत्थान वाग्विसर्गयोः । प्रबलस्यापि ब्राह्मण वाक्यस्य कालविधायित्वेनाप्युपपत्तौ गौणत्व तात्पर्यग्राहकत्वाभावात् न च लक्षणा । श्रुत्यैवान्वयोपपत्तेः । ततश्च उत्थानकाले विहरण मंत्रः पठनीयः इति कालविधिरेवायम् । व्रतं कृणुतेत्यत्र - इतिकरणस्यापि मन्त्र-स्वरूपमात्र परत्वात् - कालिकसंबंधस्यैव संसर्गविधया भानोपपत्तेः न लक्षणा । अतश्च तद्वाक्ययोः पाठ क्रमावगत तत्तन्मंत्र पाठकाले वाग्विसर्गः कर्तव्यः इति सोऽपि कालविधिरेव । ( जै· सू· 3-2-4 )

अथ व्रतं प्रवर्तनं कुरुतेति वाचामेव प्रेष्यता। तर्हि सुतरामेवाचेतनत्वात् प्रैषानन्वयः। अत्र 'ह्यनन्वयात् वरं लक्षणे'ति मूलयुक्तिः। एतदभिप्रायेणैव **शालिकानाथेन ऋजुविमलायां** पञ्चिकायामुक्तम्। विधिवाक्ये लक्षणायाः पदार्थानामशेषाणामन्वयः। मन्त्रे तु सर्वथैव प्रैषार्थो नान्वित इति अविवक्षितार्थताश्रयणीयेति। तथा च देवात्मशक्तिमिति लक्षणाङ्गीकारेऽपि न दोषः। तस्मादन्यथाऽनुपपत्त्यभावात् न संशयस्य देवताविशेषकोटिकत्वं प्रमाणवदिति सन्दिग्धार्थनिर्णायकत्वेनास्या उपनिषदः प्राबल्यमित्याशापाशविजृम्भितमिति सङ्क्षेपः।

'तत्त्वजिज्ञासमानानां हेतुभिः सर्वतोमुखैः।
तत्त्वमेको महायोगी हरिर्नारायणः परः॥

प्रधानं कारणं येषां पुरुषश्चापि कारणम्।
स्वभावश्चैव कर्माणि दैवं येषां च कारणम्॥

पञ्चकारणसङ्ख्यातो निष्ठा सर्वत्र वै हरिः॥'

इति **महाभारतवाक्ये**नोपबृंहितेयमुपनिषत् भगवत्परेति परोक्तोपबृंहणानां तद्विरुद्धानां स्वार्थतथात्वसाधकत्वासम्भवात् नोपबृंहणबलादप्यस्या उपनिषदो देवतान्तरपरत्वम्।

वेदान्तविजयकृतस्तु — 'सत्यं किं कारणं ब्रह्मेत्ययं संशयो देवताविशेषकोटिक एव। अथाप्यस्या उपनिषदो भगवत्परत्वमेव युक्तम्। तथा हि— तत्र प्रथमे खण्डे पुरुषेशहरपदानि त्रीण्येव श्रूयन्ते। देवतावाचकानीति। तदन्यतमे कस्मिन्नेव देवतानिर्धारणभावः पर्यवसितः। तत्र न तावदीशशब्दो निर्धारकः। 'व्यक्ताव्यक्तं भरते विश्वमीश' इति आधारकत्वमेव हि श्रूयते। न तु कारणत्वम्। तत्र पृथगात्मानमुद्गीतमेतदिति नियन्तृनियाम्यभेदज्ञानस्य मोक्षसाधनत्वं तदनुष्ठानं चोक्त्वा तदज्ञानस्य मोक्षहेतुत्वं संयुक्तमेतदिति परमात्मनो बन्धकत्वादस्य जीवस्य बध्यत्वाच्च अस्य तदुपासनया बन्धनिवृत्तिः

युक्तेत्युपपद्यते । अतः कथमिदं वाक्यं कारणं ब्रह्म किं देवतारूपमित्यस्योत्तरं स्यात् ।

किं च 'अनीशश्चात्मा बध्यते भोक्तृभावादि'त्युत्तरवाक्ये समुच्चयासम्भवाच्च । ईशो बिभर्ति अनीशस्तु बध्यत इत्यनीशत्वं हेतुतया विवक्षितम् । अन्यथाऽन्यत्वमात्रविवक्षायामन्यश्चात्मा बध्यते भोक्तृभावादिति हि वाच्यम् । अतोऽनीश इत्यत्र योगार्थस्य विवक्षितत्वात् सर्वत्रापि तस्यैव वाच्यतया नात्रेशशब्देन देवताविशेषनिर्धारणसम्भवः । नापि हरशब्देन 'क्षरं प्रधानममृताक्षरं हरः । क्षरात्मानाविशते देव एक' इति हि श्रूयते । अत्रापि कारणत्वं न प्रतीयते । किं तु नियन्तृत्वमात्रम् । तच्च कारणस्यैव जीवस्यैव शरीरनियमनवदुपपद्यते । किं चात्राक्षरशब्दविवरणमेव । हरस्शब्दस्सकारान्तः स च ज्योतिर्हर उच्यते । लोकाहरांस्युच्यन्त' इति नैरुक्तवाक्यात् तेजोवाचकत्वात् प्रकाशरूपत्वविवक्षयाऽऽत्मनि प्रयुज्यते । यथा 'अत्रायं पुरुषः स्वयं ज्योतिरिति ।

यच्च भोग्यजातं स्वार्थतया हरतीति हरो जीवः अकारान्तश्च हरशब्दः सर्वथाऽक्षरपदविवरणमेवेदं हर इति । न तु देवताविशेषसमर्पणपरम् । संयुक्तमेतत् क्षरमक्षरं चे'त्युक्त क्षराक्षरशब्दयोर्विवरणमिह क्रियते । तत्राक्षरं प्रधानमिति व्याख्येयम् । पूर्वमुपादायानन्तरं व्याख्यानात् उत्तरत्रापि तथैव वाच्यतया अक्षरं हर इति हरपदेन व्याख्यानं युक्तम्; न तु पूर्वेणामृतशब्देन ।

किं च 'संयुक्तमेतत् क्षरमक्षरं चे'ति व्याख्यानं, भर्तृभर्तव्ययोर्भिन्नाभिन्नवादनिर्देशात् तद्वैरूप्यप्रसङ्गात् हरशब्दस्य न देवताविशेषपरत्वं युक्तम् । अतः पुरुषशब्द एव देवतानिर्धारकः । तथाहि अयमर्थः — किं कारणमिति कर्तव्यनिर्देशः । कुतस्मजाता इत्युपादानस्य जीवाः केन जीवा इत्यन्वयः । अनेन रक्षकस्य क्व च संप्रतिष्ठा इति संहर्तुर्लब्धस्थानस्य च समान प्रतिष्ठारूपा । लयस्थानस्य लयकर्तृत्वसूचनसम्भवात् । तदधिकरणमस्य लयस्य तत्कर्तृकत्वासामीचीन्यं विवक्षितम् । अधिष्ठिताः केनेति नियन्तुर्नियाम्यत्वेन पारतन्त्र्ये

हेतुः सुखेतरेष्विति । अधिष्ठितत्वं भावे दुःखित्वं न स्यादिति भावः । सुखानि तदितराणि दुःखानि च सुखेतराणि अव्यवस्था दुःखवृत्तौ वा सुखवृत्तौ वा व्यवस्थाशून्याः । व्यवस्थितत्वे हि स्वाभाविकत्वात् नाधिष्ठानापेक्षेति शङ्कोदयाद-र्थ्यं विप्रतिपत्तिरुपन्यस्ता ।

अथ सिद्धान्त उच्यते — 'काल स्वभाव' इत्यादि कालस्वभावः कालविशेषः कारणमस्तीति निश्चित्य प्रवृत्ते स्वभाववादस्याप्रसक्त्या तन्निराकरणा-सम्भवात् । योनिपदानन्वयात् नियतिरदृष्टं यदृच्छा क्वचित् क्वचित् कार्य-विशेषेषु हेतुभूतानि दैवानि दैवायदृच्छयेति समानार्थकतया प्रयोगात् भूतानि महदादीनामुपलक्षणम् । एतानि पुरुषो निर्वाह्य निर्वाहकभावनिबन्धनं सामा-नाधिकरण्यम् । तेन कारणनिर्वोढुत्वेन कर्तृत्वमुक्तम् । एवं किं भूत इत्यस्यो-त्तरमुक्तम् । उभयविधकारणत्वरक्षकत्व ल्याधिकरणत्व नियन्तृत्वमुक्तम् विशिष्टं वस्तु किं दैवतमिति हविः प्रतिपत्तिः । अतः कारणत्वादीनामेकधर्मिगतत्वस्य निश्चितत्वात् प्रधानभूतकारणनिर्धारणेनैव निर्धारणान्तरमपि सिद्धमिति पृथक् तदुक्तिः । चिन्त्यमिति, निर्धार्यमित्यर्थः । सन्देहवाचिना तत्प्रयोज्य-निर्धारणाभिधानात् । अत एव भावनायाः **तत्सिद्धिजातिसारूप्यप्रशंसा-लिङ्गसमवाया'** दित्यत्रैवं (जै. सू. 1-4-13, 14, 15, 16, 17, 18)

---

## तत्सिद्ध्यधिकरणम्

'तत्सिद्धि जातिसारूप्य प्रशंसालिङ्गभूमभिः ।
षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पिता' ॥

इदमाम्नायते — 'यजमानः प्रस्तरः इति । तत्र यजमानस्य प्रस्तर-शब्दो नामधेयम्, प्रस्तरस्य वा यजमान शब्दो नामधेयम्, कुतः—'उद्भिदा यागेन' इत्यादाविव सामानाधिकरण्यादित्येकः पक्षः । गुणविधिरित्यपरः पक्षः । तदाऽपि यजमानकार्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावा द्गुणत्वं नास्ति । प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वात् यजमानरूपो

शब्दिता स्थितिरिह न्यायान्तरात् गौणमुख्याधिकरणनयान्तरात् विशेषश्शाब्दत्वेऽपि इति विचिन्त्यमिति। अत एव सम्यग्विचिन्तितोऽयमर्थ इति वक्तारो

---

गुणो विधीयते। एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमान शब्दो मुख्यवृत्तिर्भवति। न चात्र पूर्वन्यायेन स्तुतिः संभवति, अष्टाकपाल द्वादश कपालयोरिव प्रस्तर यजमानयोरंशांशित्वाभावात्। 'वायुर्वै क्षेपिष्ठा देवता' 'ऊर्जोऽवरुध्यै' इत्यादिवत्स्तुतिरिति चेत्। न, क्षिप्रत्वादिधर्मवत्कस्यचिदुत्कर्षस्याप्रतीतेः। तस्मात् — 'नाम गुणयोरन्यतरत्वम्' इति पूर्वः पक्षः।

सिद्धान्तस्तु — गोमहिषयोरिवार्थ भेदस्यात्यन्तप्रसिद्धत्वात् नामत्वं न युक्तम्। गुणपक्षे तु — अग्नौ प्रहरणस्य प्रस्तरकार्यत्वात् यजमाने प्रहृते सति कर्मलोपः स्यात्। तस्मात् विधेयः प्रस्तरो यजमान शब्देन स्तूयते। यथा 'सिंहो देवदत्तः' इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते, तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमान शब्देन स्तूयते।

एवं 'यजमान एक कपालः' इत्यादिषु द्रष्टव्यम्।

## जात्यधिकरणम्

इदमाम्नायते — 'आग्नेयो वै ब्राह्मणः' इति अत्रात्यन्त प्रसिद्धार्थभेदादाग्नेय शब्दो न ब्राह्मणस्य नामधेयम्। नाप्यग्निदेवतारूपो गुणोविधीयते, 'आग्नेयं सूक्तं' 'आग्नेयं हविः' इत्येवं देवता तद्धितस्य सूक्त हविर्विषयत्वात्। नहि ब्राह्मणः सूक्तम्, नापि हविः। अतः संबन्धवाचि तद्धितान्ताग्नेय शब्देन ब्राह्मणः स्तूयते। यद्यपि ब्राह्मणे नाग्निसम्बन्धः, तथाप्यग्निसंबन्धी मुखजन्यत्वगुणो ब्राह्मणे विद्यते। तथा चाग्नि ब्राह्मणयोः मुखजन्यत्वं कश्चिदर्थवादे समाम्नायते — 'प्रजापतिरकामयत' 'प्रजाः सृजेय' इति, स

भवन्ति । अतः कारणं ब्रह्मेति धर्मनिर्देशः किमिति नानादेवताकोटिप्रदर्शनं पुरुष इति परदेवता निर्धारणम् । यदि हि कालादिवाक्यमाक्षेपः स्यात् तदा

---

मुखत स्त्रिवृतं निरमिमीत , तमग्निर्देवताऽन्वसृज्यत , गायत्री छन्दः , रथन्तरं साम , ब्राह्मणो मनुष्याणाम् , अजः पशूनाम् , तस्मात्ते मुख्या मुखतोह्यसृजन्त ' इति । तस्मात् — आग्नेय शब्दःस्तावकः ।

एवं ऐन्द्रो राजन्यः ' ' वैश्यो वैश्वदेवः ' इत्यादिषु द्रष्टव्यम् ।

## सारूप्याधिकरणम्

इदमाम्नायते — ' आदित्यो यूप ' इति । तत्र सन्देहः किमादित्यस्य यूपत्वं विधीयते , यूपस्य वाऽऽदित्यत्वम् । नोभयमपि संभवति । दूरे वर्तमानस्याऽऽदित्यस्य यागीययूपत्वासंभवात् । तथा प्रत्यक्ष दृष्टस्य यूपस्य आदित्यत्वासंभवाच्च इति पूर्वः पक्षः ।

सिद्धान्तस्तु — आदित्य शब्देन यूपः स्तूयते , सादृश्यात् । घृताक्तस्य यूपस्य तेजस्वित्वाध्यवसायात् , आदित्य सदृशत्वम् । अतः सादृश्यमपि गमकं भवति । एवमेव ' यजमानो यूपो भवती'त्यत्रापि चक्षुर्गम्यस्य ऊर्ध्वत्वस्य समानत्वात् , यजमानशब्देन यूपः स्तूयते । अतः सादृश्यमादाय अर्थवादत्वं संभवत्येव ।

## प्रशंसाधिकरणम्

इदमाम्नायते — ' अपशवो वा अन्ये गोअश्वेभ्यः , पशवो गो अश्वाः ' इति तत्राजादिषु श्रूयमाणं यदपशुत्वं तस्यार्थवादत्वं न संभवति , पशुत्वनिषेधमात्रेण स्तुतेरप्रतिभानात् । ततः पशुकार्यनिषेधरूपो गुणो विधीयत इति चेत् । मैवम् । अजादि पशुविधिवैयर्थ्यप्रसङ्गेन निषेद्धुमशक्यत्वात् । अपशुशब्दः पशुव्यतिरिक्तं घटादिपदार्थजातमभिदधाति । तस्मिन्घटादौ गवाश्ववत्प्राशस्त्यं नास्ति । सोऽयं प्राशस्त्याभावोऽजादिषु पशुष्वस्तीत्यनेनाभिप्रायेण पशव एव

भूतानि पुरुषो योनिरिति चिन्त्यमिति वाच्यम् । पुरुषशब्देन परमात्म-
निर्देशादेव हि तेन पदेन जीवनिर्देशो पूर्वनिर्दिष्टपुरुषप्रत्यभिज्ञा भवितेति

---

सन्तोऽप्यजादयोघटादि साम्यादपशुशब्देन लक्ष्यन्ते। पूर्वत्र यजमान कार्य-
सिद्धिः, आग्नेये मुखजन्यत्वम्, आदित्यवत्तेजस्वित्वं च यजगानादि शब्दानां
प्रस्तरार्थेषु प्रवृत्तिनिमित्तम् । तत्प्रवृत्तिफलं प्रस्तरादिप्रशंसा । इहत्व-
पशुशब्दस्याजादिषु प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलं च। द्विप्रकाराहि
प्रशंसा। वस्तुनि विद्यमान गुणोत्कर्ष एकः प्रकारः, स्तावकेन शब्देन संपादितो
गुणोत्कर्षोऽपरः प्रकारः । गवाश्वयोरजादिभ्य उत्कर्षो लोकसिद्धो यः सोऽत्र
निमित्तम् । अजादयः स्वभावतः पशवोऽपि सन्तो गवाश्वादौ प्रत्यपशवः
संपन्नाः। ईदृशो गवाश्वयोर्महिमा' इति स्तुति फलम्। तस्मात् —
'अपशवो वै' इत्ययमर्थवादः ।

अयमेव न्याय उदाहरणान्तरेऽपि योजनीयः — 'अयज्ञो वा एष
योऽसाम' इत्येकमुदाहरणम् । 'असत्रं वा एतद्यदच्छन्दोगम्' इत्यपर-
मुदाहरणम् । अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वादयज्ञो भवति ।
ईदृशः साम्नो महिमा । छन्दोग शब्देन चतुर्विंशः, चतुश्चत्वारिंशः अष्ट-
चत्वारिंश इत्येते त्रयः स्तोमा उच्यन्ते। अक्षरसंख्या साम्येन गायत्री
त्रिष्टुब्जगती छन्दोभिर्गीयमानत्वात्। तेषां च विष्टुतिः साम ब्राह्मणे द्रष्टव्या।
अतः सत्रमपि चतुर्दशरात्रादिकं छन्दोग रहितत्वा दसत्रं भवति। ईदृश-
श्छन्दोगानां महिमा। इत्येवं स्तावकत्वादर्थवादत्वात् ।

## भूमाधिकरणम्

अग्निचयने श्रूयते — 'सृष्टीरुपदधाति इति सृष्टिशब्दोपेतामन्त्रा
यासा मिष्टकानामुपधाने विद्यन्ते ता इष्टकाः सृष्टय उच्यन्ते। 'सृष्टिम्।नासा-
मुपधानो मन्त्रः' इति विगृह्य "तद्वानासामुपधानः" इत्यादिव्याकरण सूत्र
सिद्ध प्रक्रियया तन्निष्पादनात्। सृष्टिशब्दोपेताश्चोपधान मन्त्राः 'एकया-

तन्निवृत्तये पुरुषजीवयोर्भेदप्रतीतिसिध्यर्थं आत्माऽप्यनीशकालात्मयुक्तानीत्यादिषु आत्मशब्देन जीवनिर्देशः कृतः। आक्षेपपरत्वे पुरुषमिति चिन्त्यमित्यनन्तरं तद्धेतूपन्यासे पुरुषोऽप्यनीशः सुखदुःखहेतोरिति वाच्यम्।

---

ऽस्तुवत' इत्यस्मिन्ननुवाके समाम्नाता। 'प्रजा सृज्यत, भूतान्यसृज्यन्त' इत्यादिना सृजतिधातोस्तेषु प्रयुक्तत्वात्। ते मन्त्रा अत्र सृष्टिशब्देनोपधाने गुणत्वेन विधीयन्ते कुतः — 'उपदधाति' इत्यनेनाख्यातेनाभिसंबन्धात्। नचार्थवादत्वमस्य संभवति, विध्यन्तरेण सहैकवाक्यत्वाभावादिति पूर्वः पक्षः।

सिद्धान्तस्तु — अग्निचयन प्रकरणे पठितत्वात्तेषां मन्त्राणां सामान्यतश्चयन संबन्धोऽवगम्यते, विशेषसंबन्धो सृजतिलिङ्गादवगन्तव्यः। तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते। किन्तु — तान्मन्त्राननूद्येष्टकोपधानं विधीयते। सृष्टिशब्देनानुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः। 'यथासृष्टमेवावरुन्धे' इति हि वक्ष्यमाणोऽर्थवादः। यदि विधिवाक्ये मन्त्राणामनुवादकः सृष्टिशब्दो न स्यात्, तदानीमर्थवादे सृष्टिशब्द प्रयोगाद्विध्यर्थवादयोर्वैयधिकरण्य भ्रमः स्यात्। तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः, किंत्वर्थवादः। ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः। किन्तुदधातिधातुः प्रयुक्तः। 'एकयाऽस्तुवत' 'प्रजा अधीयन्त' इति तत्पाठात्। बाढम्। तथाऽपि द्वितीय तृतीयादिषु बहुषु मन्त्रेषु सृजतिधातु प्रयोगाद्भूमरूपं साद्रूप्यमस्ति। यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि, तत्र यथा सृष्टिभूमता, तथाऽत्रापि' इति भूमगुणयोगेन सृष्ट्य सृष्टिसंघे सृष्टिशब्द प्रयोगः।

## लिङ्गसमवायाधिकरणम्

'प्राणभृत उपदधाति' इत्यत्रापि सृष्टिन्यायेन मन्त्रविधिरिति पूर्वपक्षः। सिद्धान्तस्तु — लिङ्गप्रकरण प्राप्तमन्त्रानुवादेनेष्टकोपधानविधिः। 'एतस्यैव प्राणान्दधाति' इत्यस्य वक्ष्यमाणार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः।

एवं सति '**ब्रह्मवादिनो वदन्ति किं देवत्यं पौर्ण**मासमि'ति प्राजापत्यमिति ब्रूयादित्यादिषु संशयप्रदर्शनवाक्यानन्तरवाक्यस्यैव निर्धारणपरत्व-दर्शनात् इहापि तादृशश्रुतिशैल्यनुरोधो भवति। एवं परमपुरुषस्यैव कारणत्वं प्रतिज्ञाया अस्यैवेदमुपपद्यत इत्यभिप्रायेणाह – संयोग इति। कालादिसंयोगस्य कार्येऽपेक्षितत्वात् संयोगस्य च कालादिस्वरूपप्रयुक्तत्वाभावात्। तदनुगुण-सार्वज्ञ्यसर्वशक्तियुक्तः परमपुरुष एव तत्संयोजकः। न तु ब्रह्मरुद्रादिजीववर्गः। तस्य सुखदुःखभागित्वेन कर्मपरतन्त्रतया निरङ्कुशज्ञानशक्त्योरभावादित्यर्थः। सुखदुःखहेतोरिति ब्रह्मवादिनो वदन्तीत्यन्वयः। तस्मात् संशयस्य देवताविशेष-कोटिकत्वं भगवत्कारणत्ववादिनामनुकूलमि'त्याहुः।

ननु मास्तु किं दैवतमिति सन्देहविषयकोटिनिर्धारकत्वमाश्रित्य सर्वाणि कारणवाक्यानि **श्वेताश्वतरानु**सारेण वर्णनीयानीत्यभ्युपगमः। अथापि साक्षात्सर्वेषां कारणवाक्यानां शिवपर्यवसानं तत्र मन्त्रवर्णेन प्रदर्शितमिति कारणवाक्यानन्तरं तदनुसारेणार्थो वर्णनीयः। न तु न्यायमवलम्ब्य। सौबालाद्यभिहितनारायणपरत्वेन कथं शिवे पर्यवसानं प्रदर्श्यते। इत्थम् अस्या-मुपनिषदि—'यदा तमस्तन्न दिवा न रात्रि र्न सन्न चासत् शिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी'त्याम्नायते मन्त्रः। तेन 'तमो वेदमेकमास' 'नासदासीन्नोसदासीत्' तदानीं प्रजापतिर्वेदमेक आसीत् नान्तरासीत् न रात्रिरासीत सोऽस्मिन्नन्धे तमसि प्रासर्पदि'त्यादि-श्रुत्यन्तरप्रतिपन्नतमोविशेषाङ्कितकालविशेषानुवादेन तदित्यादिना शिवस्य तत्काल-वर्तित्वेन विधानात्। **पुरोडाशादिद्रव्यसम्बन्धि**तया आग्नेयादिवाक्य-

---

पूर्वत्र — द्वितीयादिमन्त्रेषु सृष्टिलिङ्गानां बाहुल्यम्। इह तु — प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्नायते — अयं पुरोभुवस्तस्य, प्राणो भौवायनः' इति। एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि 'छत्रिणो गच्छन्ति' इतिवत् तत्सहचरिताः सर्वेमन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते। तदेवं यजमानकार्यसिद्ध्यादयो गुणवृत्ति-हेतवो निर्णीताः। (जै. सू. 1-4-13, 14, 15, 16, 17, 18)

प्रतिपन्नानां यागानामेव '**चतुरवत्तं जुहोती**'ति (जै. सू. 10-8-12) तत्तत्पुरोडाशादिद्रव्यादनुसम्बन्धिभेदमविविक्तत्वात् होमरूपतेव तत्कालवर्तित्वेन पुरोवादप्राप्तपरादिशब्दोदितस्य ब्रह्मण एव शिवरूपता सिध्यतीत्यस्यार्थस्य निर्धारणादिति —

अत्रोच्यते — नात्र शिव एव केवल इति वाक्ये तत्कालाधिष्ठातृत्वेन, शिवो विधीयते । यथा तमोविशेषाङ्कितकालविशेषस्य प्राप्तत्वं तथा सौबालादि-श्रुत्यनुसारात् तस्य नारायणाधिष्ठितत्वं प्राप्तमित्यधिष्ठातुः प्राप्तत्वात् शिव-शब्दस्यानुवादकत्वात् । न हि 'नासदासीदि'त्यादिकमेव पुरोवादः न सौबाल-वाक्यमित्यत्र किंचिन्नियामकमस्ति । न च वाच्यं विरुद्धार्थकपदान्तरकत्वात् न

---

**उपस्तरणाधिकाराभ्यां अभिघारणाभ्याम् सहैव चतुरवत्त्व-संपादनाधिकरणम्** —

दर्शपूर्णमासयोः इदमाम्नायते । चतुरवत्तं जुहोति इति । तत्र संशयः— किं पुरोडाश द्रव्यगतस्य अवदानस्य चतुस्संख्या विधीयते — अथवा द्विर्हविषो-ऽवद्यति इति वाक्येन द्विः अवदानं — उपस्तरणाभिघाराभ्यां चतुरवत्त संपादनं इति संशयः। तत्र चतुरवत्तस्य द्वितीयाविभक्त्या होम कर्मत्वमुच्यते । नहि — उपस्तरणाभिघरणाद्यर्थस्याज्यस्य होमकरणत्वं संभवति । उपस्तरणाभिघारणयोः आज्यावदानयोः विनियुक्तत्वात् । अतः पुरोडाशावदानस्यैव चतुरवदानं इति पूर्वः पक्षः ।

सिद्धांतस्तु — नात्र होमानुवादेन चतुरवत्तत्वं विधीयते । होमस्या-प्राप्तत्वात् । नापि विशिष्टविधिः । गौरवप्रसङ्गात् । होममात्रविधाने चतुर-वत्तत्वं अनुवाद्यम् । तच्च उपस्तरणाभिघारण आज्यसहितस्यैव युक्तम् । तत्र द्विर्हविषः अवद्यति इति विधिना पुरोडाशावदाने द्वित्वस्यैव प्राप्तत्वात् न पुरोडाशे चतुरवदानम्। परं तु द्विरवदानम् । उपस्तरणाभिघारणाभ्यां चतुरवदानम् । (जै. सू. 10-8-12)

सौबालवाक्यं तस्य पुरोवाद इति माङ्गल्यरूपप्रवृत्तिनिमित्तमादाय शिवशब्दस्य भगवत्यपि मुख्यत्वेन सर्वथा विरुद्धार्थकत्वाभावात् मङ्गलानां न मङ्गलमित्यादिभिस्तस्य तत्रैव पुष्कलत्वावगमात् 'शाश्वतं शिवमच्युतम्', 'विष्णुं पीताम्बरं शिवम्,'

'शिवयोर्देवयोस्तत्र हरेश्चैव हरस्य च ।
लोकनाथ महाबाहो शिवनारायणाच्युत ॥'

इत्याद्यसकृल्ल्येय प्रयोगसत्वाच्च । न चालकिमर्थद्वयानुग्रहाय शिवपदस्य रुद्रपरत्वात् विरुद्धार्थकत्वमस्तीति वाच्यम् । एकार्थपरत्वस्यौत्सर्गिकत्वात् सामान्यशक्तिव्यतिरेकेण शिवशब्दस्य रुद्रे विशिष्यशक्तिसद्भावे मानाभावाच्च । न चानुशासनं शक्तिकल्पकमित्युपपादितमधस्तात् ।

किं चार्थद्वयानुग्रहाय शिवपरत्वादस्य वाक्यस्य विरुद्धार्थपदान्तरवत् सौबालादिवाक्यं न पुरोवाद इति तत्प्राप्तनारायणानुवादत्वासम्भवात् 'शिव एकः केवल' इति विधायकमिति यधुच्येत तदा तत एव विरुद्धत्वात् । न सौबालवाक्यस्याप्येतद्वाक्यप्राप्तिरेव कारणत्वानुवादकत्वमिति तस्यापि नारायणकारणत्वविधायकत्वेनैकेश्वराभ्युपगमापत्तिः । तथा चान्यतरस्य वाक्यस्यानुवादकत्वमित्यवश्यमङ्गीकरणीयम् । तथा च शिवशब्दस्य बहुधादृष्टप्रयोगत्वात् माङ्गल्यरूपप्रवृत्तिनिमित्तस्य च तत्र पुष्कलत्वात् । यदा तम इत्यस्यैवानुवादकत्वं, अन्यथा नारायणशब्दे लक्षणाप्रसङ्गात् ।

यत्तु कश्चिदाह — 'शिव एव केवल' इत्यत्र शिवशब्दो यथौत्सर्गिकार्थपरतां हित्वा पुरोवादप्राप्ते नारायण एव पर्यवस्येत् तदा 'यदा तम' इत्यंशस्यानुवादत्वेन — तन्नवेत्याद्यंशे दिवा निशाभावस्य सदसदात्मकप्रपञ्चाभावस्य च पुरोवादेभ्य एव प्राप्तेः 'यदा तमस्तदिति किंचिद्विधातुमुपम्यार्धपथेस्थितं वाक्यं किं विधेयमासाद्य विश्राम्य तु । न हि तस्य नारायणवृत्तित्वे पुरोवादाप्राप्तं कंचिदर्थं पश्यामः । तथा च वाक्यवैयर्थ्यमेव स्यात् । तदपेक्षया नारायणपदे लक्षणैव ज्यायसी । अत एव 'एकादश वै पशोरवदानानि तानि

द्विरवद्यती'ति वाक्यवैयर्थ्यपरिहाराय यद्यपि 'चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येत्य'त्र पशुप्रकृतिकहविर्मात्रे लक्षणाङ्गीकृतेति, तदेतत् बालव्यामोहनमात्रम्, न हि 'यदा तम इत्यारभ्य 'शिव एव केवल' इत्येतावदेकं वाक्यम्। येनात्र विधेयान्तरस्याभावेन वाक्यवैयर्थ्यं स्यात्। किं तु तदक्षरमित्यन्तं तत्र चाक्षरत्वविधानात् न वैयर्थ्यम्।

ननु यदा तम इत्यनूद्य तन्न दिवेति कस्यचित् विधेयस्य प्रतीतेः पुनरपि तदक्षरमिति तच्छब्दबलेन विस्पष्टं वाक्यभेदप्रतीतेर्न तदक्षरमिति पर्यन्तमेकवाक्यम्। न च तच्छब्दस्य सापेक्षतया प्रत्युतैकवाक्यतापादकत्वमेव। अन्यथा 'स्योनन्त' (जै. सू. 3-3-8) इत्यादेः कथं वाक्यलिङ्गविरोधोदाहरणमिति

---

**वाक्याद्यापेक्षया लिङ्गस्य प्राबल्याधिकरणम् —**

दर्शपूर्णमासयोः श्रूयते - 'स्योनं ते सदनं कृणोमि घृतस्य धारया-सुषेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमानः' इति। 'भोः पुरोडाश, तव समीचीनं स्थानं करोमि। तच्च स्थानं घृतस्य धारया सुष्टु सेवितुं योग्यं कल्पयामि, भो व्रीहिसारभूत, त्वं समाहित मनस्कस्तस्मिन्समीचीने स्थान उपविश। तत्रस्थिरोभव' इत्यर्थः। तत्र 'तस्मिन्' इत्यनेन तच्छब्देन प्रकृतवाचिना पूर्वोत्तरार्धयोरेकवाक्यत्वे सति मन्त्रद्वयाभावात्सर्वोऽप्ययं मन्त्रः स्थानकरणेऽङ्गं स्यात्। मन्त्रविनियोजिका श्रुतिरेवं कल्पनीया - 'सर्वेणानेन मन्त्रेण स्थानं कर्तव्यम्' इति। तथा 'सर्वेण मन्त्रेण पुरोडाशः स्थापनीयः' इत्यपि कल्पनीया। सदनाङ्गत्ववत्प्रतिष्ठापनाङ्गत्वस्यापि तद्वाक्यबोधितत्वात्। तथा सति सदनस्थापनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा निजेच्छया भविष्यतीति पूर्वः पक्षः।

सिद्धान्तस्तु — यदेतत्पूर्वोत्तरार्धयोः परस्परान्वयेन संपन्नमेकं वाक्यम्, तदेतदुत्तरार्धस्य सदनकरणे शक्तिमकल्पयित्वा कृत्स्नं मन्त्रं सदने विनियोक्तुं नार्हति। तथा पूर्वार्धस्य स्थापने शक्तिमकल्पयित्वा न तत्र प्रभवति। अतो

वाच्यम् । प्रकृतपरामर्शितच्छब्देन सापेक्षत्वप्रतीत्या तत्रैत्रवाक्यतापादकत्वेऽपि प्रकृते तच्छब्दं विनापि पदैकवाक्यताया उपपन्नत्वेन तच्छब्दवैयर्थ्यापत्त्या वाक्य भेदप्रतीतेः । अत एव **'औदुम्बरस्सोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देयः इत्येतद्वाक्यद्वयमित्युक्तम्** । ( जै. सू. 10-3-19) तदुक्तं **पार्थसारथिमिश्रेण** – 'अत्रापि द्वे एव वाक्ये ; सोमचमसो दक्षिणेत्येकम्, स ब्रह्मणे देय इति चापरं विस्पष्टमेव' इति । तथा च प्रकृतेऽपि शिव एव केवल इत्येतावदेकं वाक्यमिति तत्र कस्यचित् विधानाभावे वाक्य वैयर्थ्यं स्यादेवेति चेत्-न । न हि तत्र दिवेत्यारभ्य किंचित् विधीयते । तच्छब्दस्य तमः परे देव एकीभवतीत्यादिश्रुतिसिद्धा विभक्तावस्थापरत्वेन तमोविशेषणत्वेन यदेत्येतत् प्रतिसम्बन्धिभूततदेत्यर्थपरत्वाभावेन कस्यचित् तत्र विधेयत्वाप्रतीतेः । किन्तु तदक्षरमित्यादेर्विधेयसमर्पकत्वं ततः पूर्वं कृत्स्नमनुवाद इत्येव वक्तुमुचितम् । एवं हि तदित्यस्य नपुंसकलिङ्ग तमश्शब्दविशेषणत्वेन तद्रूपमुपपन्नं भवति । अन्यथा 'सुपां सुलुगि'त्यादिना विभक्तिलोपादिकमाश्रित्य तदेत्यर्थकत्वं कथञ्चित् क्लिष्टगत्या समाश्रयणीयं स्यात् । न च तदित्यस्यैव तथात्वकल्पनं युक्तम् । अन्यथा तदेत्यध्याहारापत्तिरिति वाच्यम् । 'न दिवा न रात्रिरि'त्यस्य पुरोवादप्राप्तत्वस्य तत्रापि सम्मतत्वेन विध्ययोगित्वेन शिव एव केवल इत्यस्य सौत्रालवाक्येन सम्भवत्प्राप्तिकस्यैवकारार्थोपसर्जनस्य **षड्विंशतिरित्येव ब्रूयादित्यस्यै** विध्ययोग्यत्वेन च विधिसूचकार्थपरत्वस्य तदित्यस्योक्त्यसम्भवेन तच्छब्दस्य तमो विशेषणत्वे सति यदेत्येतदाकाङ्क्षानुसारात् तदेत्यध्याहारस्य युक्तत्वात् । अन्यथा वाक्यभेदप्रसङ्गात् । तथा च वाक्यभेदप्रसङ्ग-

---

लिङ्गकल्पनव्यवधानेन वाक्यं श्रुतिं प्रति विप्रकृष्यते । प्रत्यक्षं तु लिङ्गद्वयं संनिकृष्यते । तथासति लिङ्गेन वाक्यबाधादर्थद्वयमुभयोर्व्यवस्थितम् । ननु – 'ऐन्द्र्या गार्हपत्यम्' इत्यत्रापि पदद्वयान्वय रूपस्य वाक्यस्य विनियोजकत्व प्रतीतेर्लिङ्गवाक्यविरोधाय तदेवोदाह्रियताम् – इति चेत् । न । तत्र लिङ्गेन वाक्ये बाधिते । ( जै. सू. 3-3-8 )

नारायणपद लक्षणैवकारार्थोपसर्जन विध्यादिबहुदोषापेक्षया अध्याहारमङ्गीकृत्य वाक्यार्थवर्णनस्य ज्यायस्त्वात् तमोऽधिष्ठातुरक्षरत्वमेवात्र विधीयते, न तु तत्काले शिवो विधीयते। तच्छब्दस्य तदर्थकत्वकल्पनेऽपि तदक्षरमित्यत्रै वास्यैव तथा कल्पनस्योचितत्वात्।

नन्वेवं 'यदा शिवस्तदाऽक्षरमि'त्युक्ते पुरोवादप्राप्ताधिष्ठात्रपेक्षया- ऽतिरिक्तधर्मिण एव विधानं स्यात्, नत्वक्षरस्येति चेत् - न। तमोऽधिष्ठा- तृव्यतिरेकेण वस्त्वन्तराभावस्य नैवेह किंचित् नाग्र आसीत् इत्यादिवाक्यैरव- गम्यमानत्वेन तस्मिन्नक्षरत्वविधौ पर्यवसानस्यैवोचितत्वात्।

अस्तु वा यदा तम इत्यादि शिव एव केवल इत्यन्तमेकं वाक्यम्। अथापि तस्यानुवादकत्वमेव। न च वैयर्थ्यम्। अनुवादत्वेऽपि समुदायसिद्धि- प्रयोजनकस्य विद्वद्वाक्यस्येव तदक्षरमिति अक्षरत्वविधिप्रयोजनकस्यार्थवत्त्वात्। न हि शिव एवेत्यस्य विधायकत्वं सौबालवाक्येन तदर्थस्य प्राप्तिसम्भवात्।

ननु सौबालवाक्यमेव पुरोवाद इत्यत्र किंचित् नियामकमस्ति। 'नासदासीन्नोसदासीत् तदानीं तमो वा इदमेकमास' इत्यादीनां तद्वाक्यानूद्य- मानतमः प्रापकाणां सत्वादिति चेत् - न। तथा सति शिव एव केवल इत्यस्य विधायकत्वे नारायणकारणत्वप्रतिपादकानां बह्वीनां श्रुतीनां व्याकोपप्रसङ्गात्। तत्रत्यानां नारायणादिशब्दानां मुख्यार्थभङ्गापत्तेः। एवकारोपहतविधिशक्तिकस्य शिवशब्दस्य षड्विंशतिरित्येव ब्रूयादित्यस्येव विध्ययोगाच्च। तस्मादनुवादत्वमेव युक्तम्।

किं च **वैश्वदेवयागानामपि** (जै. सू. 1-4-11) प्राचीन- प्रवणे वैश्वदेवेन यजेतेति विधीयमानदेशसम्बन्धार्थस्य दण्डिवल्लक्षणया वैश्वदेव-

---

**वैश्वदेवादिशब्दानां नामधेयाधिकरणम् —**

चातुर्मास्य यागस्य चत्वारिपर्वाणि- वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासीरीयः चेति। तेषु प्रथमेपर्वणि आग्नेयमष्टाकपालं निर्वपतीति अष्टौ

समुदायानुवादस्य वैश्वदेवेन यजेतेति वाक्यस्यैव 'विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति । भावग्राह्यमनीडाख्यं भावाभावकरं शिवमि'त्यादिवाक्यप्रतिपाद्यार्थस्य नारायणे पर्यवसानरूपप्रयोजनवतः सौबालवाक्यप्रतिपन्ननारायणानुवादकस्य यदा तम इति वाक्यस्य न वैयर्थ्यं शङ्कितुमपि शक्यम् । एवं च परस्य यदा तम इति वाक्योदाहरणं स्ववधाय कृत्योत्पादनम् ।

अपि चैवं सति नारायणकारणत्वं प्रतिपादकस्य नैवेह किं च नेत्यादेः का गतिः ? शिवकारणत्वानुवादकत्वमिति चेत् - न । नारायणकारणानुवादकत्वमस्येत्यपि सुवचनम् । न चैवमस्य वैयर्थ्यमित्युक्तमिति वाच्यम् । नैवेह किं च नासीत् अमूलमिमाः प्रजा प्रजायन्ते दिव्यो देव एको नारायण

---

यागाः विहिताः । तत्संनिधाविदमाम्नायते । वैश्वदेवेनयजते इति । आग्नेयादीन् यागान् यजेत इत्यनूद्य वैश्वदेवशब्देन देवतारूपगुणः तेषु विधीयते । यद्यपि अष्टसु यागेषु अंतर्गत वैश्वदेवीयामिक्षावाक्ये विश्वेदेवाः प्राप्ताः । तथापि आग्नेयादिषु सप्तसु यागेषु अप्राप्तत्वात् विधीयते । स्ववाक्यविहित देवतायाः एतद्वाक्य विहित देवतया सह विकल्पः । नामधेयत्वे तु नाममात्रस्याविधेयत्वात् । द्रव्यदेवतयोः अभावेन यागस्यात्र स्वरूपासंभवात् - श्रूयमाणोविधिः निरर्थकः स्यात् । अतः गुणविधिरिति पूर्वः पक्षः ।

सिद्धान्तस्तु-नात्रगुणविधिः । वैश्वदेवशब्दस्य यागविशेषनामपरत्वमेव । तत्तदुत्पत्तिवाक्यविहिताग्नेयादीन् यागान् यजेत इत्यनूद्य अष्टानां संघे वैश्वदेवनामत्वं वर्ण्यते । न च विधित्वासंभवेऽपि नामोपदेश वैयर्थ्यम् । प्राचीनप्रवणे वैश्वदेवेन यजेत इत्यादिषु वैश्वदेवशब्देन एकेनैव अष्टानां संघस्य व्यवहर्तव्यत्वात् । यद्यपि अष्टसु यागेषु एकः एव वैश्वदेवयागः - परंतु छत्रिन्यायेन यागसमुदायस्य वैश्वदेवत्वं संभवत्येव । देवताविकल्पस्तु समान बलत्वाभावात् न युज्यते । अग्न्यादयो देवताः उत्पत्ति शिष्टाः प्रबलाः विश्वेदेवाः पुनः उत्पन्नशिष्टाः दुर्बलाः । ( जै. सू. 1-4-11 )

इत्यस्याप्यानर्थक्यमिति तुल्यम् । न च सृष्टिप्रलयप्रतिपादनेन चारितार्थ्यं प्रथमखण्डे 'पृथिव्यप्सु प्रलीयत' इत्यादिनैव तत्प्रतिपादनस्य चारितार्थ्येन तृतीयानुशासने नैवेह किं चिन्नाग्र आसीदित्याम्नायवैयर्थ्यस्य नारायणकारणत्वतात्पर्यवर्णनं विना दुरुद्धरत्वात् ।

नन्वेवमपि श्वेताश्वतरवाक्यमनुवादकमिति कथं निर्णीयत इति चेत्-तव वा सौबालवाक्यमनुवादकमिति कथं निर्णयः? मास्तु निर्णय इति चेत् - कथं तर्हि शिवकारणत्वप्रतिष्ठापनम्? मास्तु तत्; तथापि नारायणकारणत्वसिद्धिरेवास्माकं प्रयोजनमिति चेत् - धिक् त्वां मूर्खं यं स्वपक्षपरित्यागरूपं निग्रहमविगणय्य वितण्डावादधुरन्धरस्सन्, महानर्थकरं भगवद्द्रोहमेव प्रयोजनतयाऽनुमन्यसे । सुहृद्भावेन प्रश्ने सौबालवाक्यस्यानुवादतया श्रुत्यन्तरसापेक्षत्वाभावेन नारायणकारणत्वं तत्र शीघ्रमेव प्रतीयते । अतोऽनुपसञ्जातविरोधित्वात् सौबालवाक्यस्थनारायणपदेन लक्षणाऽङ्गीकर्तुं युक्ता । श्वेताश्वतरवाक्यस्य तु यदा तम इत्यनुवादप्रतीत्या मैत्रेयश्रुत्यादिकमपेक्षत इति मन्थरप्रवृत्तिकत्वात् उपसञ्जातविरोधित्वात् शिव एव केवल इत्येतदेव सौबालवाक्यप्राप्तं नारायणकारणत्वं लक्षणयाऽप्यनुवदतीति युक्तमभ्युपगन्तुमुत्तरम् । 'विष्णुस्तदाऽसीद्धरिरेव निष्कल' इति श्रुत्यन्तरेण मैत्रेयश्रुत्यर्थस्यापि भगवत्येव पर्यवसानं दर्शितमिति तदनुसारात् शिवपदस्य भगवत्येव वृत्तिर्युक्ता । न च वैपरीत्यं विष्णुहरिपदयोरमुख्यत्व प्रसङ्गात् । शिवपदस्यैकस्यैव जघन्यत्वमस्मत्पक्षे इति न कोऽपि दोषः । वस्तुतस्तु शिवशब्दस्य भगवति मुख्यत्वात् न लक्षणेत्युक्तम् ।

अपि च यदा तम इत्यनुवादत्वेन पुरोवादापेक्षायां मैत्रेयवाक्यमेवास्य पुरोवादः न सौबालवाक्यमित्यत्र न किंचिन्नियामकं पश्यामः । विरुद्धार्थत्वात् न तस्य पुरोवादत्वमित्येतन्निरस्तमेव ।

एतेन '**यथा विश्वजित् सर्वपृष्ठोऽतिरात्रोभवती**' (जै. सू. 10-6-5) त्यत्र विधेयसमर्पकसर्वशब्दानुसारात् पृष्ठशब्दस्य बृहद्रथन्तररूप-प्राकृतपृष्ठत्यागो षाडहिकपृष्ठानुवादत्वं कल्प्यते। तथा यदा तम इत्यस्य विधेयशिवपदानुसारात् अन्यविषय सौबालादिपरित्यागेन क्वचिदप्यपर्यवसित-मैत्रायणीयादिश्रुतिप्रापितार्थानुवादित्वं कल्प्यत इति निरस्तम्। शिवशब्दस्य विधेयसमर्पकत्वासिद्धेः। शिवशब्दस्य विधेयसमर्पकत्वेसिद्धे यदा तम इत्यस्य सौबालवाक्यार्थाननुवादकत्वसिद्धिः। यदा तम इत्यस्य तदननुवादकत्वे सिद्धे शिव एव केवल इत्यस्य विधेय समर्पकत्वमित्यन्योन्याश्रयत्वाच्च। तस्मात् सौबालादिवाक्यसिद्ध नारायणकारणत्वमनुवदति शिव एव केवल इति वाक्य-मिति तत्त्वरहस्यविदां निर्णयः।

एतदेवाभिप्रेत्यानुगृहीत**माचार्यचरणैः** — शिव एवेति वाक्यं तु अनुक्तिः। उक्तं नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथास्यादिति — **सर्वार्थसिद्धौ** चातः कारणतमोऽधिष्ठातृत्वेन प्रसिद्धेः। नारायण एवात्र

---

## सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणम् —

इदमाम्नायते - 'विश्वजित्सर्वपृष्ठः' इति। षडहे षट्स्वहःसु क्रमेण '**रथन्तरं बृहद्वैरूप्यम्**' इत्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम्। तानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति सोऽयं सर्वपृष्ठः। तत्र माध्यंदिन पवमानमैत्रावरुण साम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि किं वा यथा वचनं देशव्यवस्था इति संशयः। पृष्ठकार्यगमकेन पृष्ठशब्देन पृष्ठदेशे प्राप्ते —

वचनेन देश विशेषो व्यवस्थाप्यते। वचनं चैवमाम्नायते। पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्य इतराणि। वैरूपं होतुः, पृष्ठं वैराजं ब्रह्मसाम, शाक्करं मैत्रावरुण साम, रैवतमच्छावाक साम' इति। वचनं हि न्यायाद्बलीयः। तस्मात् - देश विशेषो व्यवस्थितः। (जै. सू. 10-6-5)

शब्दान्तरपरामृष्टः । अनन्तरं च तदक्षरं तत्सवितुर्वरेण्यमित्यादिना तत्प्रकार-विशेषोपदेश इति ।

भवतु वा 'शिव एव केवल' इत्येतद्वाक्यं विधायकम्; तथापि शिवशब्दस्य माङ्गल्यगुणयोगीत्यर्थे रूढत्वेन तमोऽधिष्ठातृत्वेन प्रमाणान्तर-प्रतिपन्ने भगवति माङ्गल्यविधायकत्वेन चारितार्थ्यात् न रुद्रस्य तद्बलात् कारणत्वं सिध्यति । भगवतो निखिलजगत्संहर्तृत्वेन माङ्गल्यशङ्कायां तन्नि-वारणाय माङ्गल्यविधिर्ह्यपेक्षितो भवति । न तु नीलकण्ठत्वविधिः । अपेक्षितान-पेक्षितयोश्चापेक्षितविधानं ज्यायः । अपेक्षितविधिर्ज्यायानपेक्षितचोदनादिति न्यायविद्व्यवहारात् । अत एव '**द्वादशाहेन प्रजाकामं याजयेदि**'ति (जै. सू. 11-4-5) प्रयोगविधिविहित सहत्वनिर्वाहार्थं पूर्वपूर्वमहः कस्मि-

---

**द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशाहताधिकरणम्** —

द्वादशाहेन प्रजाकामं याजयेत् इति श्रूयते । द्वादशाहो नाम द्वादशदिन कर्तव्यसुत्यः क्रतुः विहितः । तस्मिंश्च दीक्षाः द्वादशविहिताः - उपसत् च द्वादश विहिताः तथा सुत्याश्च द्वादशविहिताः । तादृश यागस्य ज्योतिष्टोम विकारत्वात् ज्योतिष्टोम विध्यंतोऽतिदिष्टः । अतिदिष्टानां दीक्षाणां उपसदां च प्राकृत संख्या बाधनाय पृथक् पृथक् द्वादशत्वं विहितम् । ततः दीक्षोप-सदर्थं चतुर्विंशति दिनानि सुत्यार्थमेकं दिनमिति पञ्चविंशतिः । ईदृशस्य कर्मविशेषस्य द्वादशवारमावृत्तौ शतत्रयं स्यात् इति एकः पक्षः ।

तथा सति सुत्यानां श्रूयमाणं द्वादशत्वं बाध्येत । तस्माद्द्वादश दिवसाः इति मध्यमः पक्षः । तदाऽपि दीक्षोपसद्भ्यामुपेतस्य एकैकस्याह्नः सांग-ज्योतिष्टोमविकारत्वात् सद्यः एव कर्तव्यमित्येकः पक्षः । प्रकृतौ दीक्षोपसदोः मुख्यकालात् प्रागेवानुष्ठितत्वात् इहापि तथैवानुष्ठानं प्राप्तम् । तच्च दीक्षोपसदोः मुख्यकाले - अनुष्ठाने बाध्येत । तस्मात् अंग द्वयस्य प्रधानस्य च द्वादश-दिनानीति विभज्यानुष्ठानं इति अपरः पक्षः ।

श्चित्पदार्थेऽवस्थाप्योत्तरोत्तर मुपक्रम्यानुष्ठातव्यमिति क्वाऽवस्थाप्यमित्याकांक्षायां सत्यां **पत्नीसंयाजान्तान्यहानीति** (जै. सू. 9-1-9) **पत्नीसंयाजान्तत्व-विधिर्युक्त** इत्युत्तमत्रजं तद्विधायकमित्युक्तम्। अत एव **सौम्यं चरुं निर्वपेत् यस्सोमं वामितीति** विधिर्वैदिके लौकिके दोषाभावात् प्रतीकारापेक्षा नास्तीत्यनपेक्षितं प्रायश्चितं प्रतीकारापेक्षास्तीति वैदिक एव वमने प्रायश्चित्तं इति व्यवस्थापितम्।

ननु तमोऽधिष्ठाता क इत्याकाङ्क्षायां नीलकण्ठत्वविधिरूप्यपेक्षित विधिरेवेति चेत् - न। **सौबाला**दिवाक्यैस्तमोऽधिष्ठातुर्नारायणत्वस्य प्रति-पन्नत्वेन देवताविशेषाकाङ्क्षाया अभावात्।

ननु 'तमो वा इदमेकमास तत्परेणेरितं विषमत्वं प्रयाती'त्येतद्वाक्यस्य प्रापकत्वमिति तदपेक्षाऽस्तीति चेत् - न। तद्वाक्यमात्रप्राप्तानुवादकत्वनिर्णयस्य विधेयशिवशब्दस्य सौबालाद्यनुवादपक्षेऽनुपपन्नार्थत्वनिर्णयाधीनत्वात्। न च सौबालवाक्यं पुरोवाद इत्यत्र किं मानमिति वाच्यम्। विनिगमकाभावेन मैत्रेय-वाक्यस्य सौबालादिवाक्यानां च पुरोवादस्य वक्तव्यत्वात्। तस्मात् तमोवाद इत्यादिवत् सौबालादिवाक्यानामपि पुरोवादत्वेन नारायणत्वप्राप्त्या देवता-विशेषाकाङ्क्षायाश्शान्तेरनपेक्षितविधित्वमेव नीलकण्ठत्वविधेः।

एतेन विश्वजित्सर्वपृष्ठेत्यनुरोधात् षाडहिकपृष्ठानामिव शिवशब्दानु-रोधात् तमो वेति वाक्यार्थस्यैवाधिष्ठातुरनुशासत्वं कल्प्यत इति निरस्तम्। माङ्गल्यरूपशिवशब्दार्थविधानमासाद्य प्रकृतवाक्योपपत्तेर्वर्णितत्वात् शिवशब्दार्थ-

---

सिद्धांतस्तु — द्वादशदीक्षाः, द्वादश उपसदः इति अंगयोः मुख्यवत् पृथक् द्वादशत्व श्रुत्या द्वादशसुदिनेषु कर्तव्य, सुत्याविधायक द्वादशाह वाक्येन च षट्त्रिंशदहस्सु अयंयागः कार्यः इति भवति। ततश्च षट्त्रिंशदहोवा एषः, यद्द्वादशाहः इति लिंगमप्युपपद्यते। (जै. सू. 11-4-5)

न्याऽनुग्रहाय सामान्यवाक्यमेव प्रापकतयेष्यतामिति चेत् - न। नारायण-कारणत्वश्रुतिव्याकोपप्रसङ्गात्। बहुकालसम्पादितभगवदपचारादिफलप्रतिरोध-कत्वेन संहारस्यापि दयाकार्यत्वात् विहितं च माङ्गल्यकमुपपन्नं भवति। तदुक्तमाचार्यपादैः —

'आसृष्टिसन्ततानामपराधानां निरोधनीं जगतः।
पद्मा सहायकरुणे प्रतिसञ्चरिकेलिमाचरसि ॥' (दयाशतकम्)

'लीलासाधनशून्यत्वेनामाङ्गल्यशङ्कायां संहारस्यैव लीलारूपत्वात् नामाङ्गल्यमित्यभिप्रायेण शिवत्वविधिरि'ति **वेदान्तविजयकृतः**। अतश्शिव एव केवल इत्यस्य विधायकत्वेऽपि नारायणकारणत्वप्रतिपादकश्रुत्यविरोधाय माङ्गल्यविधायकत्वात् नैतद्वाक्यं शिवपारम्य साधकमिति दिक्।

ननूपनिषदियं हरशिवेशरुद्रेशानमहेश्वरशब्दैर्लोकप्रसिद्धैरथ कस्मादुच्यते, सर्वव्यापि, विश्वेदेवाश्च यत्तस्मिन् विश्वरूपस्ततस्स्मृतिः। हंसो नाम सदाशिवः, अथाष्टभिर्नामभिरित्याद्यथर्वशिरो **महाभारतबोधायनसूत्रा**द्य-वगतमिति विश्वरूपहंसमहदादिशब्दैश्चानन्यविषयैश्शिवनामरत्नैरलङ्कृतैः 'क्षरं प्रधानममृताक्षरं हरः' 'भावाभावकरं शिवं' 'भूयः सृष्टः पतयस्तथेशः' 'एको हि रुद्रो न द्वितीयाय तस्थे' 'ईशानो ज्योतिरव्ययः मायिनं तु महेश्वरम्।' 'सर्वव्यापी च भगवान्, तं विश्वरूपं भवभूतिमीड्यम्' 'एको हंसो भुवनस्यास्य मध्ये महान् प्रभुर्वै पुरुष' इत्यादिभिः सर्वमन्त्रावयवैः मधुरा। न तत् समश्चाभ्यधिकश्च दृश्यत' इति कण्ठोक्त्या शिवसदृशपुरुषान्तरनिषेधं कुर्वती शिवपारम्यमेव प्रतिपादयतीति महावाक्यपर्यालोचनयाऽवगम्यत इति तदनुसारेण 'यदा तम' इति वाक्यमपि शिवोत्कर्षप्रतिपादनपरमेवेत्यभ्यु-पगन्तव्यम्।

नन्वस्यास्तृतीयेऽध्याये 'वेदाहमेतं पुरुषं महान्तमि'ति पुरुषसूक्त-मन्त्राम्नानेन तत्प्रतिपाद्यस्य नारायणस्य प्रत्यभिज्ञानात् तत्परताऽवसीयते। न च

'तेनेदं पूर्णं पुरुषेणासर्वमि'त्यन्तेन तमनूद्य ततो यदुत्तरतरमित्यादिमन्त्रेण तमः परस्यैव कस्यचित् वेदनममृतसाधनत्वमुक्त्वा तदनन्तरमन्त्रे 'तस्मात् सर्वगतः शिव' इति तत्र शिवपदप्रयोगात् ततोऽपि परत्वेन शिवप्रतिपादनमेवास्यास्तात्पर्यमिति वाच्यम् । प्रथममेव 'वेदाहमि'ति मन्त्रेण नारायणवेदनस्यैव मोक्षहेतुत्वस्य 'यस्मात्परतरं ने'त्यनन्तरमन्त्रेण तस्मात् परः भावस्य च प्रतिपादनात् । तदनन्तरं मन्त्रसन्दर्भस्य तद्विरुद्धेऽर्थे तात्पर्यकल्पनायोगेन तत्रापि 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्वं' इति पुरुषसूक्तमन्त्रद्वयप्रत्यभिज्ञानात् । 'सत्वस्यैष प्रवर्तक' इति सत्वगुणोपाधिलिङ्गोपन्यासात् । तस्यापि नारायणपरत्वनिश्चयेन ततश्शब्दस्य पूर्वमन्त्रार्थस्य हेतुकारणे पूर्वमन्त्रान्तनिर्दिष्टस्य विश्वस्य हेतुकारणे वा तात्पर्यकल्पनादिति चेत् - उच्यते - श्रुतयो हि प्रत्यभिज्ञानात् स्थलद्वयपरामर्शापेक्षत्वेन विलम्बितात् बलवत्तराः । तथा चोपनिषदुपक्रममारभ्यानुवर्तमानात्यन्ताभ्यस्तानेकाभिधानश्रुतिप्रापितं शिवविषयत्वमपोह्य न देवतान्तरविषयत्वमापादयितुं शक्नोति । पुंसूक्तमन्त्रप्रत्यभिज्ञाच्छान्दोग्यश्रुतायामुपनिषदुपक्रमपर्यालोचना लब्धोत्थावयवविषयायामुद्गीथविद्यायां बृहदारण्यकश्रुतकल्पोद्गीथकर्तृविषयोद्गीथविद्याप्रकरणपठित देवासुरसङ्ग्रामासुरात्ययाभिप्रायार्थवादप्रत्यभिज्ञेव तदेक विषयत्वम् । 'यः पशुकामःस्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमाःस्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् येऽनिष्ठाः तान् विष्णवे शिपिविष्टाय भृते चरुमि'त्यत्र (जै. सू. 6-5-1) ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति विशिष्टकर्म-

---

## अभ्युदयेष्ट्यधिकरणम् —

दर्शपूर्णमासयोः - यस्य हविर्निरुप्तम् - पुरस्ताच्चन्द्रमाः अभ्युदयति त्रेधा तण्डुलान् विभजति ये मध्यमाःस्युः तानग्नये दात्रे पुरोडाश मष्टाकपालं कुर्यात् । ये स्थविष्ठाः तानिन्द्राय प्रदात्रे दधन् चरुं - ये अणिष्ठाः तान् विष्णवे शिपिविष्टाय श्रिते चरुं इति श्रूयते । अनेन यदि दर्शभ्रान्त्या चतुर्दश्यां केनचित् हविः निरुप्तं भवति - ततः प्रत्यूषे पूर्वस्यां दिशि चन्द्रमाः

विधिवाक्येष्वभ्युदयेष्टिश्रुतदेवता सम्बन्धपरवाक्यच्छायाप्रत्यभिज्ञेव दधिपयसो: प्रदेयकर्मत्वम् । न च तत्र प्रतिपाद्यभेदोऽर्थवादादिमात्रसारूप्यविरुद्धम् । इह तु पुंसूक्तमन्त्रोपनिषदो: प्रतिपाद्यभेदे द्वयो: सर्वात्म्याद्ययोगात् । 'पुरुष एवेदं सर्वमि'ति 'नान्य: पन्था' इति चोभयत्र विरुद्धमिति वाच्यम् । ऐक्यवादे वास्तवैक्यसत्वेन भूमात्मनोरिव परमते पुरुषसूक्तशाण्डिल्यविद्ययोर्विद्याभेदेऽपि तद्विषययोरिव च सार्वात्म्योपदेशस्य सर्वमूर्त्यनुस्यूतनिरुपाधिकचैतन्याभिप्रायेण सार्वात्म्योपदेशस्य तद्वेदनस्यैव मुक्त्युपायत्वमित्यवधारणस्य च तयो: प्रतिपादित-

---

अभ्युदयति - तदा निरुप्तान् तण्डुलान् त्रेधा विभज्य - अखण्डितान् - ईषत् खण्डितान् - अतिसूक्ष्मकणांश्च विभज्य यथाक्रमं अग्नयेदात्रे - इन्द्राय प्रदात्रे - विष्णवे शिपिविष्टाय च - अष्टाकपाल - एकादशकपाल चरून् कुर्यादिति विहितम् । तत्र अनेन वाक्येन विहितं कर्म प्रक्रांतदर्शकर्मण: - अन्यद्वा - तदेव वा प्रकारांतर संयुक्तम् इति संशय: ।

कालापराध प्रायश्चित्तरूपस्य अस्य कर्मण: दर्शकर्मण: अन्यत्वमेव । अत: इदं प्रायश्चित्तं कृत्वा परेद्यु: दर्शकर्म अनुष्ठेयम् - इति पूर्व: पक्ष: ।

सिद्धान्तस्तु — हविर्निरुप्तमिति निर्वापात दर्शकर्मण: प्रत्यभिज्ञानात् तत्कर्म परित्यज्यकर्मांतरविधानं न युज्यते । प्रकृतहान अप्रकृत प्रक्रिये प्रसज्येयाताम् । अत: तस्मिन्नेव प्रवृत्ते दर्शकर्मणि पूर्वदेवता: अपनीय अत्रोद्दिष्टा: देवता: निर्देष्टव्या: । हवि: दधि, इति प्रकृत दर्शयाग निर्दिष्ट द्रव्यस्य प्रत्यभिज्ञा हि भवति । यद्यपि प्रकृतौ स्थविष्ट मध्यमाणिमादि - अविभागेन तण्डुल समान्यस्य विनियोगो वर्तते अथापि विनियोग भेदात् अत्र प्रयोगांतरत्वमेवांगीकार्यम् । अत: निरुप्तस्य हविष: तस्मिन्नेव कर्मणि कालव्यत्यासंनिमित्तीकृत्य देवतांतर संयोगरूप: प्रयोग प्रकारभेद: एव उपदिश्यते । अत: दर्शस्यैवायं नैमित्तिक: प्रयोग: । नेदं प्रायश्चित्तरूपम् । दर्शस्यैव प्रयोगान्तरम् । (जै. सू. 6-5-1)

मूर्तिभेदेऽप्युपपन्नकर्मत्वात् । पररीत्याश्रयणेऽपि शिवस्यापि 'सर्वो वै रुद्रः' 'अहमेकः प्रथममासं वर्तामि च भविष्यामि च' नान्यः कश्चिन्मत्तो व्यतिरिक्तः, 'ज्ञात्वा तन्मृत्युमत्येति,' 'नान्यः पन्था विमुक्तय' इत्यादिषु श्रुतिषु सर्वात्म्याद्युपदेशदर्शनेन 'आपो वा इदं सर्वमि'त्यादिवत् गौणत्वस्य द्वयोरपि मुक्त्यर्थं भजनीयत्वेन प्रासादाधिरोहणे सोपानपर्वणोरिव तयोः पङ्क्त्यन्तर-व्यवच्छेदेन मुक्त्युपायत्वोपदेशस्य च समर्थनीयतया श्रुत्यन्तरेष्विवात्रापि सर्वा-त्म्याद्युदुपदेशस्य श्रुतिद्वयोऽपि प्रतिपाद्यजगत्कारणत्वामगमस्य बलानुरोधि-व्यवस्थया वक्ष्यमाणन्यायेन मूलकारणत्वावान्तरकारणत्वविषयत्वस्य चोपपन्नत्वे-नान्यथासिद्धप्रत्यभिज्ञामात्रेण प्रबलानेकश्रुतिसाधनायोगात् । अन्यथा मैत्र्युप-निषत्प्रत्यभिज्ञया पुरुषसूक्तस्यैव परामिमतनारायणवाचि पुरुषश्रुत्यादिबाधेन शिवपरत्वमिति वैपरीत्यापत्तेर्दुष्परिहारत्वात् । तस्मादकिंचित्करीह पुरुषसूक्त-प्रत्यभिज्ञा । परोपन्यस्तं लिङ्गं तु सत्वशब्दस्यानेकार्थत्वात् अनेकश्रुतिविरुद्ध-लिङ्गानुन्मेषाच्च शङ्कार्हः ।

किं च रुद्राध्यायमन्त्राणामपीह परिमितत्वेन तत्प्रत्यभिज्ञायाः अपीह सत्वात् तमनादृत्य पुरुषसूक्तप्रत्यभिज्ञैकपक्षपातेन परेषां ततो निर्णायकता वृथैव पठ्यते । अस्य तृतीयेऽध्याय एव 'याते रुद्रशिवा तनूः' 'यामिषुं गिरिशन्त हस्त' इति मन्त्रद्वयं पठ्यते । तस्मात् परस्पर प्रतिपक्षिते प्रत्यभिज्ञाद्वये शिवरुद्रादि निरभिधानश्रुतिभिरेव देवताविशेषनिर्णयो युक्तः । अपि च प्रत्यभिज्ञयोरपि रुद्राध्यायमन्त्राणां पुरुषसूक्तमन्त्रेभ्यः प्राक् पश्चाच्च सन्दंशन्यायादुभयत आम्नानेन अन्यथादि साधारण्येऽपि शङ्क्यम् । अत एवैतच्छ्रुतिविषयभवदेवतान्तर व्यावृत्तेन रुद्रेति लोकप्रसिद्धेन गिरित्र गिरिशन्तेति वेदप्रसिद्धेन च शिवनामतो भावघटितत्वेन शिवासाधारणानेककामरूपायुधादि प्रकाशनेन शिवविषयत्वस्य स्पष्टत्वेन च तत्प्रत्यभिज्ञाया बलवत्वात् विषयविशेष समर्पणक्षमत्वाच्च । तत एवास्याः प्रतिपाद्यविशेषनिर्णयो युक्तः । अत इयमुपनिषत् शिवपारम्य प्रतिपादन प्रवणेति ।

अत्र ब्रूमः — न तावदस्यामुपनिषदि हरशब्दो रुद्रोपस्थापकः। तस्य तदुपस्थापकत्वाभावस्य प्रपञ्चितत्वात्। नापि शिवादिशब्दास्तदुपस्थापकाः। 'अनन्तश्चात्मा विश्वरूपो ह्यकर्ता सर्वव्यापी च भगवान्' 'पुरुष एवेदं सर्वमि'त्यादि वाक्यस्थैः 'अनन्तो नागराट् विष्णुः, विष्णुः कृष्णः, केशवो मुञ्जिकेशः, श्रीवत्साङ्कः श्रीपतिः पीतवासाः, विष्वक्सेनो विश्वरूपो मुरारिः, शौरिश्शार्ङ्गी पद्मनाभो मुकुन्दः, भगवानि'ति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधि च वर्तते। 'वासुदेवे सनातन' इति प्रमाणसिद्धभगवदभिधानैरनन्तविश्वरूपभगवत्पुरुषशब्दैः 'हंसः खगे स्मरे विष्णावि'ति निघण्टुप्रसिद्धभगवन्नामभावेनैको हंसो भुवनस्यास्येति वाक्यस्थेन हंसशब्देन 'महान् प्रभुर्वै पुरुषस्सत्वस्यैषः प्रवर्तक' इति सत्वप्रवर्तकलिङ्गेन 'हिरण्यगर्भं जनयामासे'ति वाक्यस्थेन हिरण्यगर्भजनकत्वलिङ्गेन च भगवदुपस्थित्या शिवादिशब्दैस्तदुपस्थिति प्रतिरोधात्।

ननु विश्वरूपहंसशब्दौ न विष्ण्वभिधानत्वेन लोकप्रसिद्धावित्यनन्तभगवत्पुरुषशब्दास्त्रय एव तदुपस्थापकाः। शिवोपस्थापकास्तु शिवेश रुद्रेशान महेश्वरशब्दा इति भूयस्तया शिवोपस्थितिस्तदितरोपस्थितिं प्रतिबध्नाति। न च प्रसिद्ध्यभावेऽपि विश्वरूपहंसशब्दयोर्निघण्टुबलात् तदभिधानत्वमिति वाच्यम्। तथासति पौराणिकनिर्वचनबलात् सर्वव्यापिविश्वरूपादिशब्दानामपि शिवोपस्थापकत्वे च सुतरां विष्णूपस्थिति प्रतिबद्धप्रसङ्गादिति चेत् - न। अनन्तशब्दस्य प्रथमखण्डस्यस्योपक्रमस्थत्वेन प्रबलत्वात् सत्वप्रवर्तकत्व हिरण्यगर्भ जनकत्वयोश्चानन्यथा सिद्धयोर्विधमानत्वेन तत्सहकृतत्वेन चानन्तभगवत्पुरुषशब्दानां प्रबलत्वात्। निर्वचनानान्तु भगवत्यपि सात्विकपुराणेषु सत्वेन तद्बलात् विश्वरूपव्याप्यादिशब्दाः शिवोपस्थापका इति वक्तुं युक्तम्।

नन्वनन्तशब्दस्योपक्रमस्थत्वेऽपि श्रुतिद्वयप्रतिस्पर्धिमात्रक्षममिति तिस्रः श्रुतयः शिवोपस्थापनजागरूकाः। ततश्चावशिष्टाभ्यां भगवत्पुरुषशब्दाभ्यां

द्वयोः प्रतिबन्धेऽप्यधिकः शिवोपस्थापक एवास्तीति कथं विष्णूपस्थापकप्राबल्य-मिति चेत् — न । अनन्यथासिद्धाभ्यां सत्वप्रवर्तकत्वहिरण्यगर्भजनकत्वाभ्याम-विशिष्टायाः श्रुतेर्बाधात् । न च श्रुतेः प्राबल्यात् तत एव लैङ्गिकोपस्थिति-र्बाध्यत इति वाच्यम् । **लिङ्गस्य दुर्बलत्वेऽपि अनन्यथासिद्धत्वेन प्राबल्यात् । अत एवानुष्ठेयार्थस्मृत्येकप्रयोजनकमन्त्रक्रम एवाग्ने-याग्नीषोमीयानुष्ठानक्रमनियामकः । न तु विधानेनान्यथासिद्ध-ब्राह्मणक्रम इत्युक्तम् ।** ( जै. सू. 5-1-9 ) शिवेशादिशब्दास्तु अन्यत्रापि दृष्टप्रयोगा इत्यसकृदावेदितम् । न च शिवादिशब्दानां पुनः पुनराम्नानेन तात्पर्यकत्वम् । पुरुषशब्दस्य ततोऽभ्यधिकाभ्यासवत्वात् । न चानन्त-

---

**ब्राह्मण पाठात् मन्त्र पाठस्य बलीयस्त्वाधिकरणम् --**

अग्नीषोमीय यागस्तैत्तिरीय ब्राह्मणे पञ्चमप्रपाठके द्वितीयानुवाके समा-म्नातः — 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति । आग्नेय यागस्तु षष्ठप्रपाठके तृतीयानुवाके समाम्नातः — 'यदाग्नेयोऽष्टाकपालो-ऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इति । तत्र अनुष्ठानस्य ब्राह्मणोक्त विध्यधीनत्वादग्नीषोमीयस्य प्रथम मनुष्ठानमिति पूर्वः पक्षः ।

सिद्धान्तस्तु — मन्त्रकाण्डे पूर्वं पठिता आग्नेयमन्त्राः । तथाहि - हौत्र-काण्डे - आज्यभागमन्त्रानुवाकादुत्तरस्मिन्ननुवाके प्रथमम् 'अग्निर्मूर्धा' इत्यादिके आग्नेय्यौ याज्यानुवाक्ये आम्नाते । ततः 'प्रजापते नत्वदेतानि' इत्यादिके प्राजापत्ये । ततः आग्नीषोमा सवेदसा' इत्यादिके अग्नीषोमीये । आध्वर्यव-काण्डेऽपि - 'अग्नयेजुष्टं निर्वपामि' 'अग्नीषोमाभ्याम्' इत्याग्नेयः पूर्वमाम्नातः । यजमान काण्डेऽपि 'अग्नेरहं देवयज्ययाऽन्नादो भूयासम्' इत्याम्नाय पश्चात् 'अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्' इत्याम्नायते । मन्त्रक्रमश्च प्रबलः मन्त्रैःस्मृत्वा पश्चादनुष्ठेयत्वात् । ब्राह्मणंत्वप्राप्तपदार्थविधिनाऽपि चरि-तार्थम् । अतोऽनुष्ठानस्मरणायैवोत्पन्नान्मन्त्रान् बाधितुं नालम् - इति मन्त्रक्रमेणा-ऽऽग्नेयस्यैव प्रथमानुष्ठानम् । ( जै. सू. 5-1-9 )

शब्दात्पूर्वं व्यक्ताव्यक्तं भरते विश्वमीश इत्युक्त्यामीशशब्दस्योपक्रमस्थत्वमिति वाच्यम् । अनीशश्चात्मेति प्रतिकोटितयोपादानेन तस्य यौगिकत्वात् । न च सत्वशब्दस्यानेकार्थत्वात् भगवदुपस्थापकत्वानिर्णय इति शङ्क्यम् । अर्थान्तर-स्यातिशयानाधायकत्वास्वीकारसम्भवात् । प्रसिद्धप्राचुर्यस्य गुणत्रयान्तर्वर्तिन्येव सत्वात् । सत्वस्येत्येकवचनस्वारस्यस्य परपक्षेऽसम्भवात् । पुरुषशब्दस्य विष्णूपस्थापकत्वेन तस्मिंश्च सत्वगुणप्रवर्तकत्वस्य ।

'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥'

इत्यादिप्रमाणापन्नत्वेन तत्समभिव्याहारेण तस्यैवोपस्थितेः ।

अस्तु वा भगवदुपस्थापक श्रुत्यादिप्राबल्याभावः । तथापि शिवोप-स्थापकप्रमाणानां परस्परं सत्प्रतिपक्षत्वमनिवार्यमिति पुरुषसूक्ताम्भस्यनुवाकादि-प्रत्यभिज्ञानां निर्निरोधप्रवृत्त्या भगवदुपस्थितिरनिवार्या । न च रुद्राध्याय-प्रत्यभिज्ञया प्रतिरोधः । भगवदुपस्थापकप्रत्यभिज्ञानां भूयस्त्वात् । तथा हि प्रथमखण्डे —

'देवात्मशक्तिं स्वगुणैर्निगूढां ज्ञात्वा देवं मुच्यते सर्वपाशैः'
'ध्याननिर्मथनाभ्यासात् देवं पश्येत्'

इत्यादिषु देवशब्दैः सुबालोपनिषत् प्रत्यभिज्ञाप्यते । तत्र 'दिव्यो देव एको नारायणः' 'मृत्युर्वै परे देव एकीभवती'त्यादिषु देवशब्देन व्यवहारात् । द्वितीयखण्डेऽपि - 'ज्ञात्वा देवं मुच्यते सर्वपाशैरि'ति सौबालोपनिषत् प्रत्यभि-ज्ञाप्यते । 'एष हि देवः प्रदिशोऽनुसर्वा' इत्यम्भसिवाक्यं प्रत्यभिज्ञाप्यते । तृतीयखण्डे च - 'एतद्विदुरमृतास्ते भवन्ती'त्यत्र 'विश्वतश्चक्षुरुत विश्वतोमुख' इत्यत्र चाम्भस्यनुवाकः प्रत्यभिज्ञाप्यते । 'हृदा मनीषा मनसाऽभिक्लृप्तो य एनं' इत्यम्भस्यनुवाकः 'सहस्रशीर्षा पुरुष' इति पुरुषसूक्तं प्रत्यभि-ज्ञाप्यते । 'सर्वस्य शरणं सुहृदि'ति माता पिता भ्राता निवासः शरणं सुहृत् गतिर्नारायण, इति वाक्यं प्रत्यभिज्ञाप्यते । 'तमाहुरग्र्यं पुरुषं महान्तमि'ति

च 'अद्भ्यः सम्भूता'नुवाकेऽपि प्रत्यभिज्ञाप्यते। चतुर्थखण्डे च 'तदेवाग्निस्त-द्वायुस्तत्सूर्य' इत्यन्तस्यानुवाकः प्रत्यभिज्ञाप्यते। 'द्वा सुपर्णा सयुजौ सखायौ,' 'समाने वृक्षे' इति मन्त्रद्वयं मुण्डकोपनिषत्प्रत्यभिज्ञापकम्। 'हृदामनीषा मनसाभिक्लृप्तो य एनं विदुरि'त्यम्भस्यनुवाकः प्रत्यभिज्ञाप्यते। 'नैनमूर्ध्वं न तिर्यञ्चमि'ति च तस्यैव प्रत्यभिज्ञापकम्। षष्ठेखण्डे 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमि'ति मुण्डकोपनिषत्प्रत्यभिज्ञाप्यते। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था' इति पुरुषसूक्तं प्रत्यभिज्ञाप्यते। रुद्राध्यायप्रत्यभिज्ञा च 'याते रुद्र शिवातनूः' 'मानस्तोके तनय' इति स्थलद्वय एवेति तस्यादौर्बल्यमिति प्रत्यभिज्ञाबलात् भगवत्परत्वसिद्धिरनिवार्या। न चैतत्प्रत्यभिज्ञया पुरुषसूक्तस्य शिवपरत्वमिति वैपरीत्यमस्त्विति वाच्यम्। श्रुतिलिङ्गत्वेन श्वेताश्वतरस्य शिवपरत्व-निर्णयाभावात्। पुरुषसूक्तस्य भगवत्परत्वनिर्णायकत्वं प्रपञ्चितं प्रथम-परिच्छेदे न च रुद्राध्यायप्रत्यभिज्ञाया उभयतस्सन्दंशात् प्राबल्यमिति युक्तिमत् भगवत्परमन्त्रप्रत्यभिज्ञाया एव प्रथमद्वितीयखण्डयोः षष्ठे च सत्वेन सन्दंशन्यायेन प्राबल्यस्याप्यत्रैव सत्वात्। तृतीयेऽपि खण्डे 'याते रुद्र शिवातनूरि'ति पूर्वं 'य एतद्विदुरमृतास्ते भवन्ति' 'विश्वतश्चक्षुरि'त्यम्भस्यनुवाकप्रत्यभिज्ञात्वात्।

यत्तु ऐक्यवादे वास्तवैक्यसत्वेन सर्वमूर्त्यनुस्यूत निरुपाधिक चैतन्या-भिप्रायेण सार्वात्म्योपदेशस्य तद्वेदनस्यैव मुक्त्युपायत्वावधारणस्य चोपपत्तिरिति - तन्न - एवं सतित्वया सार्वात्म्यादिश्रवणबलात् अथर्वशिरः - प्रभृतिभिः शिवस्य परत्वसाधनस्यानुपपन्नत्वप्रसङ्गात्। न च साधकाभावात् शिवे श्रुतस्य सार्वात्म्यादेः प्रातिस्विकीरूप एवान्वय इति वाच्यम्। ऐक्यवादे तत्रान्वया-सम्भवात्। पुरुषसूक्तश्रुतसार्वात्म्यादौ बाधकानुपन्यासाच्च। न चोभयोरसम्भव इति वाच्यम्। श्वेताश्वतरश्रुतस्य चैतन्याभिप्रायत्ववदेनं विहाय पुरुषसूक्ते तथा वर्णितस्य भगवद्द्रोहहेतु गुणविशेषं विना न किंचित्कारणं पश्यामः।

एतेन परीत्याश्रयणेऽपीत्याद्यपि निरस्तम्। पुरुषसूक्तश्रुतस्य 'आपो वा इदमि'त्यादिवत् गौणत्वकल्पनायां हेत्वभावात्। न च 'नान्यः कश्चिन्मत्तो

व्यतिरिक्त' इत्यादिषु सार्वात्म्यश्रवणं हेतुः तस्य गौणत्वकल्पनासम्भवात् । न च श्वेताश्वतरस्य रुद्राध्यायप्रत्यभिज्ञया शिवपरत्वात् ; तस्य च सार्वात्म्यादेस्तत्र प्रतिपादनात् द्वयोः सार्वात्म्यायोगाच्च । पुरुषसूक्तश्रुत सार्वात्म्यादेरन्यथा-करणमिति वाच्यम् । श्वेताश्वतरस्थसार्वात्म्यादेर्मुख्यत्वे पुरुषसूक्तस्थस्य च गौणत्वे च विनिगमकानुपन्यासात् रुद्राध्यायप्रत्यभिज्ञायाश्चासम्भवात् वस्तुद्वय-समावेशार्थप्रतिपादनमन्त्रप्रत्यभिज्ञारूपत्वाभावेन ततश्शिवपरत्वस्य साधयितु-मशक्यत्वाच्च । पुरुषसूक्तश्रुतस्य सार्वात्म्यादेर्न स्वरसतो वस्तुद्वयगतत्ववर्णन-मित्यस्य स्फुटत्वाच्च । इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।

'ऋतं सत्यं च विख्यातं ऋषिसिंहेन चिन्तितम्'

इति महाभारतोक्त्या तस्यातिशयक्त्वात् । 'तदेतदृचाभ्युक्तमि'ति श्रुत्यन्तरे स्वोक्तार्थदृढीकरणाय मूलभूतत्वेनोक्त्या च तथात्वावगमात् । तदनुसारेणैव श्रुत्यन्तरार्थवर्णनस्यौचित्याच्च । तस्मात् शिवेशादिशब्दानां भगवत्पुरुषादि-शब्दैः सत्प्रतिपक्षत्वात् रुद्राध्यायप्रत्यभिज्ञायाश्च पुरुषसूक्तप्रत्यभिज्ञापेक्षया-दुर्बलत्वात् । तुल्यबलत्वे वा शिवपरत्वनिर्णयस्याप्ययोगान्महावाक्यस्य शिवपरत्व-वेदनासामर्थ्यात् तदनुसारेण 'यदा तम' इति वाक्यस्य शिवोत्कर्षप्रतिपादन-परत्ववर्णनमाशापाशविजृम्भितमिति सङ्क्षेपः ।

किं चायोग्यार्थत्वस्य शिवादिशब्देषु 'बुद्बुदाः त्र्यक्षः शूलपाणिः पुरुषो जायत' इत्यादिप्रमाणसिद्धकार्यभावार्थप्रतिपादकेषु सत्त्वेन न तद्बलात् शिवप्रतिपादकत्वं श्वेताश्वतरोपनिषदो युक्तम् । न च संशयकोटिनिर्धारणकृत प्राबल्येन शिवकारणत्वे निश्चिते तद्बलादकर्मकृतत्वं शिवजननस्य कल्प्यत इति वाच्यम् । कर्मकृतजननवत्त्वशङ्कारहितार्थप्रतिपादकानन्तशब्दसद्भावेन हरपदस्य निर्धारकत्वमिति कल्पनस्यैवानुन्मेषात् । अनपहतपाप्मा वा अहमस्मीति प्रमाण-विरोधेनाकर्मकृतत्वकल्पनस्याप्यनुदयाच्च । न चोत्तीर्णपरमशिवविषयत्वेना-योग्यार्थत्वाभावः । तत्र प्रमाणाभावात् ।

अत्र कश्चिदाह—न त्रिमूर्त्यतिरिक्ततुरीयमूर्त्यसिद्धिः; श्रुत्यादिप्रमितत्वात् । तथा हि – ' अथास्य पुरुषस्य चत्वारिस्थानानि भवन्ति । नाभि, हृदयं, कण्ठं, मूर्धा । तत्र चतुष्पादं ब्रह्मविभाति । जागरिते ब्रह्मा, स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरं स आदित्यो विष्णुश्चेश्वरश्चे'ति ब्रह्मादिभ्यः परमक्षर-शब्दतन्त्रत्वान्तरं दर्शितम् । ' न तत्र देवा ऋषयः पितर ईशत इत्यनन्ये-श्वरत्वं, एको देवः सर्वभूतेषु गूढ ' इत्यादिना सर्वान्तर्यामित्वं सकलफल-दातृत्वं च दर्शितम् । **तापनीयोपनिषदि** - ' अकारं ब्रह्माणं नाभावुकारं विष्णुं हृदये मकारं रुद्रं भ्रूमध्य ' इति नाभिहृदयभ्रूमध्येष्वकारादिमात्रात्रय-वाच्यानां ब्रह्मविष्णु रुद्राणामुपासनानन्तर - ' मोङ्कारं सर्वेश्वरं द्वादशान्तर ' इति समष्टिप्रणववाच्यं द्वादशान्तोपास्यं सर्वैश्वर्यशालि तेभ्यः परं दर्शितम् । **मैत्र्युपनिषदि** - ' तमो वा इदमेकमास ' इत्यारभ्य ' तत्परेणेरितं विषयत्वं प्रयात्येतद्वै रजसो रूपम् ' इत्यादिना तमोऽधिष्ठातृपरस्य सङ्कल्पेन तमोगुण-विभागं निरूप्य ' तस्य प्रोक्ता अग्र्यास्तनुवो ब्रह्मविष्णुरुद्र ' इति ' अथ यो ह खलु वाऽस्य राजसोंऽशः सोऽसौ योऽयं ब्रह्मा । अथयो ह खलु वाऽस्य तामसोंऽशः सोऽसौ योऽयं रुद्रः । अथ यो ह खलु वाऽस्य सात्विकोंऽशस्सोऽसौ योऽयं विष्णुरि'ति तमोऽधिष्ठातुः परस्यांशभेदा ब्रह्मादय इति प्रतिपादनेन तेभ्यः परं तत्वान्तरं दर्शितम् । तस्य चोमासाहित्यं नयनत्रयनीलकण्ठत्वादियुक्तं वपुश्च उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ' इत्यादि**कैवल्योपनिष**दादिमन्त्रेभ्यः प्रतिपन्नं महेश्वरमहादेवशम्भुरुद्रेशानादिशब्दवाच्यत्वं **चाथर्वशिरश्शिखादिषु** दृष्ट-प्रयोगात् निर्णीतम् । न चोदाहृतोपनिषन्निकुरुम्बप्रतिपाद्यो गुणी रुद्र इति शङ्कनीयम् । तत्र सर्वत्रापि तद्विभूतिषु ब्रह्मनारायणयोरिव गुणी रुद्रस्यापि पाठात् । न च तत्र विभूतिमध्याम्नातरुद्रशब्दो गुणी । रुद्रांशभूतरुद्रान्तर-परोऽस्त्विति वाच्यम् । ब्रह्मविष्णुसन्निध्याम्नातरुद्रशब्दस्य संहर्तृमूलरुद्रपरत्वौ-चित्यात् । ' यत् प्रायेश्रूयते यच्च तत्तादृगवगम्यत ' इति न्यायात् ।

नन्वेवमपि शिवादिशब्दानां गुणिरुद्रवाचिनामेव वस्त्वभेददृष्टया तत्रापि प्रयोगोपपत्तेः न तस्य तद्वाच्यत्वमङ्गीकरणीयमिति चेत् - न। नीलकण्ठत्वादिविशिष्टमूर्तिशबलिते ब्रह्मणि तेषां व्युत्पत्तेः प्रसिद्धत्वात्। **अथर्वशिरश्शिखादिषु** महेश्वरमहादेवादिशब्दानां तन्नामत्वेन निर्वचनाच्च। सदाशिवादिशब्दवाच्यत्वस्याप्यभ्युपगमाच्च। **तस्मात् तुरीयं ब्रह्म** रुद्रेशानमहेश्वरमहादेवशिवादिशब्दितमुमासहायं त्रिलोचननीलकण्ठत्वादिविशिष्टविग्रहमिति सिद्धम्। तथा च **सूतसंहितायाम्** —

> ' उमार्धविग्रहाशुद्धा त्रिनेत्रा चन्द्रशेखरा।
> नीलग्रीवापरानन्दप्रमोदा ताण्डवप्रिया॥
>
> ब्रह्मविष्णुमहादेवैरुपास्या गुणिमूर्तिभिः।
> सर्वमूर्तिविहीनस्य सर्वभूताधिपस्य च॥
> तथा ह्येषा परामूर्तिरित्येषा शाश्वती मतिः॥'

इति। **पराशरपुराणेऽपि** —

> ' साक्षात्परतरस्यैव वस्तुतस्सर्वसाक्षिणः।
> अस्मिन् मूर्तिः पराशुद्धा स्वतन्त्रा पापनाशिनी॥
> तस्याः साधारणामूर्तिः साम्बा चन्द्रार्धशेखरा॥'

इत्यारभ्य 'ब्रह्मविष्णुमहादेवास्तं ध्यायन्ति निरन्तरम्।' इत्यन्तेनोक्तम्। एवं **कौर्मस्कान्दलैङ्गपाद्मगारुडशिवधर्मादिष्वपि** वचनानि द्रष्टव्यानीति।

अत्र ब्रूमः - सत्यं **ब्रह्मोपनिषदादौ** ब्रह्मादिभ्यः परं तत्त्वान्तरं श्रूयत इति। तत्तु भवदभिमतरूपमिति न सिध्यति। तथात्वे प्रमाणाभावात्।

ननु **कैवल्योपनिषदि** उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' इत्युमासहायत्वादिश्रवणबलेन तुरीयस्य शिवरूपत्वसिद्धिरिति चेत् - न। 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' इत्यनन्तरं 'स ब्रह्मा स शिवः सेन्द्र' इत्याद्याम्नानेन भूतयोनिशब्दाभिहितस्य ब्रह्मादिविभूतिप्रतीत्या तुरीय उमा-

सहायत्वादिश्रवणासिद्धेः । न च भूतयोनिशब्दस्य यौगिकत्वेन विशेष्याकाङ्क्षायां सन्निहितशिव एववृत्तेः 'तत्क्रतुन्यायात्' (छा॰ उ॰ 3-14-1) तदुपासनाया तत्प्राप्तेरेव युक्ततया तस्य शिवानिवृत्तिकल्पनायोगाच्च । ध्येयप्राप्ययोरैक्यात् तस्य च ब्रह्मादिविभूतिकत्वादुत्तीर्णस्योमासहायत्वादिसिद्धिरिति वाच्यम् । उपक्रमे 'यथा चिरात्सर्वपाप्मव्यपोह्यपरात्परं पुरुषमुपैति विद्वान्' इत्यनेन यद्वा पुरुषशब्दोऽयं 'रूढ्यावक्ति जनर्दनमि'त्यादिप्रमाणसहस्रसिद्धरूढिशक्तिकपुरुषशब्दोपस्थितस्य नारायणस्य प्राप्यत्वावगमेन च । तद्विरोधेन नीलकण्ठे पर्यवसायितुमशक्यत्वात् । तथा चोपक्रमे प्राप्यत्वेनावगते नारायण एव पर्यवसानम् । कथं तत्र पर्यवसानमिति चेत् - इत्थम् - 'नरायणादेव सर्वाणि भूतानि समुत्पद्यन्त' इत्यादौ नारायणस्य भूतयोनित्वश्रवणेन तद्धर्मेण तदुपस्थितिरिति । एवं सति तं गच्छतीत्युपास्यप्राप्यैक्यप्रतिपादकपदरहितावान्तरोपस्थापनलब्धस्वारस्यभूतयोनिपदघटितवाक्यशैल्यनुरोधो भवति । अन्यथा तमसः परस्तात् स एव सर्वं यद्भूतं यच्चभव्यं, सनातनं ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तय' इत्यादिपुरुषसूक्तप्रत्यभिज्ञा बाध्येत । 'स ब्रह्मा स शिवः सेन्द्र' इत्यत्र नारायणानुवाकप्रत्यभिज्ञाऽपि साधितास्यात् ।

नन्वेवं सति ध्येयप्राप्ययोर्भेदःस्यात् । 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिरि'ति त्रिलोचनस्य ध्येयत्वा-

---

**तत्क्रतुन्यायः —**

इदमाम्नायते छान्दोग्ये - 'सर्वं खल्विदं ब्रह्म' तज्जलानिति शान्त उपासीत । ,अथ खलु क्रतुमयोऽयं पुरुषः यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः' इत्यादि ।

अत्र यथोपासनं इतः प्रेत्य पुरुषो भवतीति उपासनानुगुण भगवत्प्राप्तिः इह प्रतिपाद्यते । अयमेव न्यायः तत्क्रतुन्याय इत्युच्यते । (छा॰ उ॰ 3-14-1)

क्रमादिति चेत् - न । उमासहायमित्यादेर्मुमुक्षुप्रधानध्येयार्थसमर्पकत्वासिद्धेः । 'अचिन्त्यमव्यक्तमनन्यरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्' तथादिमध्यान्त-विहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्' इत्येतावन्मात्रस्यैव तादृशार्थसमर्प-कत्वात् । तथा हि - 'हृत्पुण्डरीकं विरजं विशुद्धिमि'त्यत्र हृत्पुण्डरीकपदस्थ-द्वितीया व्यत्ययनेन सप्तम्यर्थे षष्ठयर्थेवा वर्तते । अचिन्त्यमित्यादिना भगवान् चिन्तनीयत्वेनोच्यत इति । न च द्वितीयया हृत्पुण्डरीकस्य प्रतीयमानं चिन्तन-कर्मत्वं परित्यज्य किमिति सप्तम्याद्यर्थस्वीकार इति वाच्यम् । उपक्रमे पुरुष-शब्दार्थस्य नारायणत्वस्यैव प्राप्यत्वाक्रामेन प्राप्यस्यैव ध्येय इत्यत्र वक्तव्यतया तथैवार्थवर्णनस्योचितत्वात् । अत्रापि 'यदेकमव्यक्तमनन्तरूपम्' इत्यम्भस्यानु-वाकप्रत्यभिज्ञया 'अचिन्त्यमव्यक्तममन्तरूपम् सत्वात् । ब्रह्मयोनिमिति चतुर्मुख-कारणत्वलिङ्गाच्च । हृत्पुण्डरीकचिन्तनस्य निष्प्रयोजनत्वाच्च । न च तत्रो-पास्यानुचिन्तनोपयोगितया तच्चिन्तनं युक्तमिति वाच्यम् । पूर्वं तच्चिन्तनाभावे तस्मिन्नुपास्यानुचिन्तनाभावात् तच्चिन्तनस्यासिद्धत्वात् । न च विशुद्धत्वेन विचिन्तनमुच्यत इति वाच्यम् । वस्तुतो विशुद्धत्वस्यैवोपास्यानुचिन्तनप्रयोजन-कत्वात् । एवं च हृत्पुण्डरीककर्मकविचिन्तनविधानासम्भवात् विभक्तिव्यत्यय एव न्याय्यः । अत एव 'सक्तून् जुहोती' (जै. सू. 2-1-8) इत्यत्र

---

**कर्मणां गुणप्रधान भाव विभागाधिकरणम्** — ( गुरुमतेन )

'सक्तूञ्जुहोति' इत्यत्र द्रव्यप्राधान्यं परित्यज्य द्वितीयाया भङ्गं कृत्वा क्रियाप्राधान्याय 'सक्तुभिर्जुहोति' इति तृतीयात्वेन विपरिणामो वक्ष्यते, तथा - 'व्रीहिभि रवहन्ति 'इति विपरिणामेन प्रधानभूता क्रिया द्रव्यव्यवधान-मन्तरेण साक्षादेव नियोगेऽन्वेतव्येति चेत् ।

मैवं । वैषम्यात् । तत्र 'होमेन सक्तुषु संस्कारो न भवति' भस्मी-भूतानामन्यत्र विनियोगासंभवात्, इत्यभिप्रेत्य संस्कार कर्मत्वं परित्यक्तम् । इह दृष्टस्तुष विमोक संस्कार उपपद्यते, वितुषाणां तेषां पुरोडाशे विनियोग संभवात् । (जै. सू. 2-1-3)

तथा स्वीकारः। आनर्थक्यात् वरं लक्षणेति न्यायाच्च। अत एव व्रीहीन् प्रोक्षतीत्यत्र विधीयमानप्रोक्षणस्यानर्थक्य प्रसङ्गात् व्रीहिपदे पूर्वसाधन लक्षणाऽङ्गीकृता। कथं तर्ह्युमासहायमित्यादेः सङ्गतिरिति चेदित्थम् —

'रुद्रं तु सारथिं कृत्वा मनः प्रग्रहवान्नरः।
स याति परमं पारं विष्ण्वाख्यं पदमव्ययम्॥'

इत्यादि श्रुतौ ईश्वरात् ज्ञानमच्छेत् मोक्षमिच्छेत् जनार्दनात्' इत्यादि स्मृतिषु च रुद्रस्य ज्ञानप्रदत्वश्रवणेन तत्प्रसादाय तदङ्गभूतोपासनमनेन विधीयत इति। एवं हृत्पुण्डरीकमिति विभक्तिमात्रस्य लक्षणाङ्गीकारेणोक्तरीत्याऽर्थवर्णने उपक्रमगतपुरुषश्रुत्यबाधः। पूर्वोक्त प्रत्यभिज्ञयोर्नारायण कारणत्व प्रतिपादिकानां बह्वीनां श्रुतीनामव्याकोपश्च।

नन्वेवं सति विचिन्त्य 'उमासहायं ध्यात्वे'ति कथं चिन्तनानन्तर्यप्रतीतिर्ध्यानस्य सुसङ्गतास्यादिति चेत् - न। किमनन्तरोक्त्या आनन्तर्य प्रतीतिः आहोस्वित् पौर्वकालिकत्वार्थकत्व प्रत्ययबलात्। नाद्यः अग्निहोत्रहोमयवागूपाकयोरिव पाठक्रमस्यानयोरर्थक्रमेण बाधस्यैव वक्तुं युक्तत्वात्। (जै. सू. 5-1-2) न द्वितीयः तस्य गमनक्रियापौर्वकाल्यापरत्वेन ध्यानापेक्षया तत्परत्वासिद्धेः। उक्तं च महाभाष्ये – 'सर्वेषामेवात्रव्रजिक्रियाः प्रति

---

**क्रमस्य क्वचिदार्थिकत्वाधिकरणम् —**

'अग्निहोत्रं जुहोति यवागूं पचति' इति श्रूयते। गृहपत्यादिदीक्षासु पाठक्रमस्यैवाऽऽहतत्वदर्शनादिहापि अग्निहोत्रहोमयवागू पाकयोः पाठक्रम एव आदर्तव्य;। यद्यपि यवागूपाकस्याऽग्निहोत्र संबन्ध संभवादग्निहोत्रार्थत्वं संभवति। 'यवाग्वा अग्निहोत्रं जुहोति' इति श्रुतेः यवागू पाकस्याऽग्निहोत्रार्थत्वात्। अथापि पाठक्रमेण यवागू पाकस्योत्तरत्वात्, अग्निहोत्र होमानन्तरं यवागूपाकः अदृष्टार्थः कर्तव्य इति पूर्व पक्षः।

पौर्वकाल्यां स्नात्वा व्रजति भुङ्क्त्वा व्रजति पीत्वा व्रजतीति। एवं च कृत्वा प्रयोगोऽप्यनियतः स्नात्वा भुक्त्वा पीत्वा व्रजति। पीत्वा भुक्त्वा स्नात्वा व्रजतीति। तथाचाङ्गभूतोपासनमेव 'उमासहायमि'त्यादिना विधीयत इति न त्वस्यैतत्प्रकरण प्रतिपाद्यत्वम्।

अपि च 'स ब्रह्मा स शिव' इति शिवस्य विभूत्यन्तर्गतत्व प्रतिपादनेन विभूतिमत्प्रतिपादकस्य भूतयोनिशब्दस्य न शिवे पर्यवसानं युक्तम्।

नन्वन्यो विभूत्यन्तर्गतः तदन्यः परमशिवो विभूतिमानिति नोक्तदोष इति चेत्—अहो मनोरथराज्यानुभवकुशलता तव यदि इदानीमप्यसिद्धं परम-शिवमादाय कक्ष्यामारोहयति। अनया श्रुत्या तुरीयस्य नीलकण्ठत्वादिवैशिष्ट्ये सिद्धेहि परमशिवसिद्धिः। तुरीये तद्वैशिष्ट्यसिद्धिरेव हि विवादग्रस्ता। तथा च कथं परमशिवसिद्धवत्कारेणान्योन्य विभूतिमानित्युक्तिः अन्योन्याश्रयप्रासात्। उमासहायमित्यादिनोपस्थिते भूतयोनिशब्दवृत्तिसिद्धौ तुरीये नीलकण्ठत्वादिसिध्या परमशिवस्य विभूतिमतोऽन्यस्य सिद्धिः। विभूतिमतोऽन्यस्य सिद्धौ उमासहाय-मित्यादिनोपस्थिते भूतयोनिशब्दवृत्तिसिद्धिरिति। न च 'स ब्रह्मा स शिव' इति विभूत्यन्तर्गतत्वमवतारत्वरूपत्वेनाप्युपपन्नमिति न तस्य विभूतिमत्वबाधकत्वमिति-वाच्यम्। तथा सति तुरीयशिवकारणत्ववादस्य परित्यागापातात्। तदन्यस्य-कार्यत्वकर्मवश्यत्वादिश्रवणेन भूतयोनिप्राप्यत्वासम्भवाच्च।

ननु 'स एव विष्णुः स प्राण' इति विष्णोरपि विभूत्यन्तर्गतत्व-श्रवणात् तत्र कथं पर्यवसानम्? अन्यथा शिवेऽपि पर्यवसानं सुवचमिति

---

सिद्धान्तस्तु – दृष्टे संभवति, अदृष्टकल्पनाया अन्यायत्वात्। यवागू-पाकस्याऽग्निहोत्रार्थत्वमेव। द्रव्यमन्तरेण होमासंभवात्। द्रव्यनिष्पत्त्यै, पाकस्यैव प्राथमिकत्वावश्यंभावात्। होमद्रव्यत्वं च यवाग्वाः 'यवाग्वा-ऽग्निहोत्रं जुहोति' इति तृतीययाऽवगम्यते। तस्मात्पाठक्रमं बाधित्वाऽर्थतः क्रमोऽत्राभ्युपगन्तव्यः। (जै. सू. 5-1-2)

चेत् - न । ब्रह्मेन्द्रादितुल्ययोगक्षेमतया शिवविष्णोरुभयोरपि विभूत्यन्तर्गतत्वेन श्रवणस्याविशेषेऽपि अत्रोपक्रमे पुरुषशब्दार्थस्य नारायणस्य प्राप्यत्वावगमेन 'मुनिर्गच्छति भूतयोनिमि'त्यत्र प्राप्यस्य नारायणत्वमभ्युपगम्यतां आहोस्वित् विभक्त्यन्तर्गतत्वश्रवणेन नारायण अव्यतिरेकोऽभ्युपगम्यतामिति विशये उपक्रमावगतनारायणत्वावगमस्य प्रबलत्वात् विभूत्यन्तर्गतत्वस्य - 'पद्मे दिव्यार्कसङ्काशे-नाभ्यामुत्पाद्यमानमपी'त्यारभ्य 'रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्' इति रामायणोक्तार्थरक्षार्थं ब्रह्मादिमध्ये पतितत्वावगमेन तदादायोपपत्त्या तत्र पर्यवसानसम्भवात् । शिवे पर्यवसानस्य च ध्येयप्राप्ययोरैक्यं वक्तुमुचितमिति न्यायबलात् कल्पनीयत्वेन तत्र च विभूत्यन्तर्गतत्वोक्तेः प्रतिबन्धकत्वात् ब्रह्मेन्द्रादितुल्यत्वापवादकप्रमाणभावेन विभूतिमत्त्वस्य वक्तुमशक्यत्वाच्च ।

ननु विभूत्यन्तर्गतत्वेन शिवश्रवणतुरीयशिवकारणत्ववादिनामनुकूलमिति चेत् - न । किं प्रमाणान्तरादुत्तीर्णा शिवसिद्धिरित्यभिमतम्, अस्मादेव प्रमाणाद्वा । नाद्यः; तस्यैव प्रमाणान्तरस्य मृग्यत्वात् । तस्य सत्त्वे ध्येय-प्राप्यैक्यावश्यम्भावोपजीवनेन तुरीयशिवसाधनप्रवृत्तया अस्या उपनिषदः प्रमाणत्वोपन्यासस्याप्रयोजकत्वापातात् । न द्वितीयः, शिवद्वैविध्यसिद्धेः । पूर्वं भूतयोनिशब्दस्य शिवे पर्यवसाने तद्विभूतिकोटौ शिवश्रवणस्य प्रतिबन्ध-कत्वात् । न ह्यत्र तुरीये आद्यत्योमासहायतादिवैशिष्ट्यं नोच्यते । येन तमः प्रतिबन्धो न स्यात् । किं तु न्यायबलात् तद्वैशिष्ट्यं बोध्यम् । तथा च ततः प्रति-बन्धो दुर्वारः ।

ननु शिवद्वैविध्याभ्युपगमेन विरोधः सुपरिहार इति चेत् - न । गौरवात् । भूतयोनिशब्दस्य च महोपनिषदाद्यनेकप्रमाणबलात् । जगत्कारणत्वे-नावसिते नारायण एकवृत्तित्वसम्भवात् । तस्मात् न कैवल्योपनिषदा तुरीयस्योमासहायत्वादिसिद्धिः । न च 'ऋतं सत्यं परं ब्रह्मे'त्यनेन कृष्णपिङ्गल-मित्यस्यैवान्यथैवोपपत्तेः । भगवत्यपि पीताम्बरसम्बन्धादिना कृष्णपिङ्गलत्वस्योप-पत्तेश्च । तुरीयस्य तत्राप्राकृतत्वाच्च ।

ननु **कैवल्योपनिषदि** तुरीयस्योमासहायत्वाद्यश्रवणेऽपि **अथर्वशिरश्शिखयोस्तुरीये** ईशानरुद्रशम्भुशिवादिशब्दाम्नानबलात् तुरीयस्य शिवत्वसिद्धिरिति चेत् - न। शिवादिशब्दानां योगवृत्त्या लक्षणया वोपपन्नत्वेन तुरीयस्य भवदभिमतशिवरूपत्वासिद्धेः।

ननु रूढिर्योगमपहरतिन्यायेन रूढेर्योगपरिहारत्वात् लक्षणायाश्च शक्तिसम्भवेऽन्याय्यत्वात् रूढ्यैव शिवादिशब्दैस्तुरीयस्याभिधानात्। तेषां च शब्दानां नीलकण्ठत्वादि विशिष्ट विग्रह विशिष्ट वाचकत्वेन तुरीयस्योमासहायत्व नीलकण्ठत्वादि वैशिष्ट्यसिद्धिरिति चेत्-न। रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धात्मेति सकलन्यायवित्सम्मतत्वात्। उक्तं च **तन्त्रवार्तिके लब्धात्मिका हि समुदाय प्रसिद्धिरित्यवयव प्रसिद्धिं बाधत** इति। तथा च तुरीये शिवादि शब्दानां रूढ्यसिध्या योगो निष्प्रतीव ........। तुरीये शिवादि शब्दानां रूढिः 'उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुत' इति ब्रह्मपुत्र एव तेषां शब्दानां प्रयोगदर्शनात्। कोशेष्वपि ब्रह्मादीनामनुशासनानन्तरं शम्भ्वादि शब्दानुशासनेन तेषां शब्दानां त्रिमूर्त्यन्तर्गत रूढत्वावसायात्। 'यत्प्रायेश्रयते यच्च तत्ताद्दगवगम्यत' इति न्यायात्। ब्रह्मपुत्र एव 'उग्रोऽसि भीमोऽसि शर्वोऽसि महादेवोऽसी'ति नामकरणदर्शनेन तन्नामत्वस्य श्रुतिसम्प्रतिपन्नत्वाच्च।

एतेन नीलकण्ठत्वादि विशिष्टमूर्तिशबलिते ब्रह्मणि तेषामुत्पत्तेः प्रसिद्धत्वादिति गलहस्तितम्। ब्रह्मपुत्र एव शक्तेः प्रदर्शितत्वात्।

किं च किमनुशासनात् प्रसिद्धिः उत प्रयोगात्। नाद्यः। अनुशासनस्य त्रिपुरान्तकक्रतुध्वंसिहरादिपर्यायत्वप्रतिपादकस्य कार्यरुद्रविषयत्वावश्यम्भावात्। त्रिपुरविजयक्रतुध्वंसादीनां ब्रह्मपुत्रचरित्रत्वेन **महाभारते** प्रतिपादनेन त्रिपुरान्तकादिशब्दानां कार्यरुद्रवाचकत्वात्। तत्र हि 'प्रजापतिस्तमसृजत्। तपसोऽन्ते महातप' इत्युपक्रम्य।

'प्रजापतेस्तु दक्षस्य यजतो वितते क्रतौ'

इत्यादिना क्रतुभङ्गस्य 'असुराणां पुराण्यासन्त्रीणिवीर्यवतांदिवि' इत्यादिना त्रिपुरविजयस्य प्रतिपादनात्। **कर्णपर्वणि** च —

'तानब्रवीत् महादेवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं वै स्वयं सञ्चिन्त्यमाचिरम् ॥'

इत्यादिसन्दर्भपर्यालोचनया सारथ्यकर्तृचतुर्मुखापेक्षया निकृष्टतयाऽवगतरुद्र-चरितत्वेन त्रिपुरविजयप्रतिपादनाच्च ।

किं च ब्रह्मविष्णुसन्निध्याम्नातरुद्रशब्दस्य संहर्तृमूलरुद्रपरत्वौचित्यात् । 'यत्प्राये श्रूयते यच्च तत्तादृगवगम्यते' इति न्यायात् इत्युक्त्या चतुर्मुखादीना-मनुशासनानन्तरभाविनोऽनुशासनस्य परमशिवविषयकत्वं वक्तुं कथं न लज्जसे । न द्वितीयः, विकल्पासहत्वात् । किं तु तुरीय एव प्रयोगात् शक्तिकल्पन-मुतकार्यरुद्रेऽपि । नाद्यः प्रयोगस्य तन्मात्रविषयकत्वाभावात् । भूरिप्रयोगस्या-न्यत्रैव सत्वाच्च । न द्वितीयः, किमुभयत्रैका शक्तिः आहोस्वित् शक्तिद्वयम् । नाद्यः, उभयसाधारणप्रवृत्तिनिमित्तस्यैकस्यासिद्धत्वात् । न च नीलकण्ठत्वादिकं प्रवृत्तिनिमित्तमस्तीति वाच्यम् । तुरीये नीलकण्ठत्वादेः प्रमाणान्तराप्रतिपन्नत्वात् । शिवादिशब्दबलात् तत्सत्त्वोपपादने चान्योन्याश्रयणात् । न द्वितीयः, गौरवात् । तथा चैकत्र शक्तिरन्यत्रलक्षणया प्रयोग इत्युपपादनीयम् । तथा च क्व शक्तिः क्व वा लक्षणेत्यालोचने त्रिमूर्त्यन्तर्गत एव प्रसिद्धिप्राचुर्यात् तत्रैव शक्तिः । अन्यत्र लक्षणेति युक्तं वक्तुम् । तथा च नीलकण्ठत्वादिविशिष्टमूर्तिशबलिते ब्रह्मणि तेषां व्युत्पत्तेः प्रसिद्धत्वादिति बालव्यामोहनमात्रम् ।

यत्तु अथर्वशिखादिषु रुद्रमहेश्वरमहादेवादिशब्दानां तन्नामत्वेन निर्वचनात् तुरीयस्य रुद्रादिशब्दवाच्यत्वसिद्धिरिति । न तु मौढ्यात् पुरुष-शब्दस्य निर्वचनबलात् न भगवदसाधारण्यसिद्धिः । चित्राज्याधिकरणे ( जै. सू. 1-4-3 ) स्तोत्रविशेषनामत्वेन पृष्ठशब्दस्य क्वचित् 'पृष्ठैरुपतिष्ठत

---

**चित्राज्याधिकरणम् —**

चित्रया यजेत पशुकामः इत्याम्नायते । तत्र चित्रा शब्दः न उद्भिच्छब्दवत् यौगिकः । किंतु रूढ्या चित्रत्वं स्त्रीत्वं चाभिधत्ते । ततो न

इत्यादौ तत्साधने रथन्तरादौ लक्षणया प्रवृत्तिरस्तीति तन्निर्वाहेण चरितार्थस्य 'आपो ऋत्वियमार्च्छन्' इत्यस्यैवान्यथासिद्धत्वात् निर्वचनानामिति खेनैवोक्तेः।

---

पूर्वन्यायेन नामत्वम्। अग्नीषोमीयं पशुमालभेत इति विहितं पशुयागमात्रं यजेत इत्यनेन - पदेनानूद्य - तस्मिन् पशौ चित्रत्व स्त्रीत्वगुणौ विधीयेते। इति प्राप्ते - प्राप्तयागोद्देशेन चित्रत्वस्त्रीत्व उभयविधाने वाक्यभेदःस्यात्। प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयंते बहवोऽप्येक यत्नतः। इति उक्तम्। अतः वाक्यभेद परिहाराय गुणद्वय विशिष्टं पशुद्रव्यरूपं कारकं विधीयते। तदा च गौरवं स्यात्। तस्मात् चित्राशब्दः पूर्ववत् यजि सामानाधिकरण्येन याग नामधेयं भवति। चित्रत्वं तु तस्य विलक्षण द्रव्य द्वारेणोपपद्यते। दधि, मधु, घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति दध्यादीनि विचित्राणि प्रदेयद्रव्यानि षडाम्नातानि। तदेतत् चित्रानामकस्य - यागस्य उत्पत्तिवाक्यम्। यागस्वरूपभूतयोः दध्यादि द्रव्य प्रजापति देवतयोः अत्र अतिदिश्यमानत्वात्। उत्पन्नस्य तस्य यागस्य - चित्रया यजेत पशुकामः इति फलवाक्यम्। एवं सति प्रकृतार्थो लभ्यते। अग्नीषोमीय पश्वनुवादेन, गुणविधाने - प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। लिङ्प्रत्ययस्य अनुवाद-कत्वांगीकारात् मुख्यो विध्यर्थो बाध्येत। तस्मात् चित्रापदं नामधेयम्। यथा चित्राशब्दे नामधेयत्वम् - तथा बहिष्पवमानशब्दे - आज्यशब्दे - पृष्ठशब्दे च तन्नामत्वं योजनीयम्। एवं हि श्रूयते। त्रिवृद्बहिष्पवमानम्। पञ्चदशा-न्याज्यानि - सप्तदशानि पृष्ठानीति। अस्य वाक्यत्रयस्य अर्थः एवं विव्रियते। सामगानां उत्तराग्रंथे तृचात्मकानि सूक्तान्याम्नातानि। तत्र 'उपास्मै गायता नरः' इति आद्यं सूक्तम्। 'दविद्युतत्यारुचा' इति द्वितीयम्। 'पवमानस्यते कवे' इति तृतीयम्। ज्योतिष्टोमस्य प्रातस्सवनानुष्ठाने, तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम्। तदिदं सूक्तत्रयगान साध्यं स्तोत्रम् - बहिष्पवमान-मित्युच्यते। तत्रावस्थितानामृचां पवमानार्थत्वात् - बहिस्संबंधात् - बहिष्पव-मानत्वम्। न खल्विदं स्तोत्रं इतरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुंबर्याःस्तंभशाखायाः संनिधौ प्रयुज्यते। किंतु सदसोबहिः प्रसर्पद्भिः

किं चैवमपि रुद्रादिशब्दवाच्यत्वं सिध्येत् हिरण्यगर्भे इन्द्रादिशब्दप्रयोगबलादिव तद्वाच्यत्वम्., न तु नीलकण्ठत्वादिविशिष्टविग्रहविशिष्टत्वसिद्धिः ।

---

प्रयुज्यते । तस्य च बहिष्पवमानस्य त्रिवृन्नामकः स्तोमः भवति । तस्य च स्तोमस्य विधायकं ब्राह्मण वाक्येष्वेवमाम्नायते । तिसृभ्योहिं करोति । स प्रथमया - तिसृभ्यो हिं करोति स मध्यमया - तिसृभ्यो हिं करोति स उत्तमया । उद्यती त्रिवृतोविष्टुतिः । अयमर्थः - सूक्तत्रयपठितानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम । तत्र प्रथमेपर्याये - त्रिषु सूक्तेष्वाद्यास्तिस्रो ऋचः । द्वितीये पर्याये मध्यमाः, तृतीयेपर्याये चोत्तमाः । तिसृभ्यः इति तृतीयार्थे पंचमी । हिं करोति - गायति इत्यर्थः । सेयं यथोक्तप्रकारोपेतागीतिः त्रिवृत्स्तोमस्य विष्टुतिः । स्तुतिप्रकार विशेषः । तस्याः विष्टुतेः उद्यती नाम । एवं परिवर्तिनीकुलायिनीति द्वेविष्टुती । तयोः परिवर्तिनी एवं आम्नायते । तिसृभ्यो हिं करोति - स पराचीभिः । तिसृभ्यो हिं करोति - स पराचीभिः । तिसृभ्यो हिं करोति - स पराचीभिः, परिवर्तिनी त्रिवृतोविष्टुतिः इति । पराचीभिः अनुक्रमेणाम्नाताभिः इत्यर्थः ।

तथा कुलायिनी एव माम्नायते — तिसृभ्यो हिं करोति - स पराचीभि स्तिसृभ्योहिङ्करोति । यामध्यमा सा प्रथमा - योत्तमा सा मध्यमा - या प्रथमा सोत्तमा । तिसृभ्योहिङ्करोति योत्तमा सा प्रथमा - या प्रथमा सा यध्यमा । या मध्यमा सोत्तमा । कुलायिनी त्रिवृतोविष्टुतिः । इति । अत्र प्रथम सूक्ते पाठक्रमः एव । द्वितिये मध्यमोत्तम प्रथमाः । तृतीयेतूत्तम प्रथम मध्यमाः - इत्येवं व्यत्ययेन मन्त्राः गातव्याः । तदिदं विष्टुति त्रयं विकल्पितम् । त्रिवृच्छब्दस्येदं स्वरूपमर्थो - न तु त्रैगुण्यमिति पूर्वपादे निर्णीतम् ।

उत्तराग्रन्थे — बहिष्पवमान सूक्तेभ्यः त्रिभ्यः ऊर्ध्वं चत्वारि सूक्तान्याम्नातानि । 'अग्न आयाहि वीतये' इत्याद्यं सूक्तम् । 'आनोमित्रावरुण' इति द्वितीयम् । 'आयाहि सुषुमाते' इति तृतीयम् । 'इन्द्राग्नी आगतं सुतम्'- इति चतुर्थम् । तानि एतानि प्रातः सवने गायत्र साम्ना गीयमानानि चत्वार्याज्य-

ननु कारणकार्ययोरुभयोरपि शिवादिशब्दप्रयोगोऽस्ति । न चोभयत्रापि धर्मी एक एव प्रतिपाद्यते इति वक्तुं शक्यम् । कर्मवश्यत्वतदभावरूपविरुद्ध-

---

स्तोत्राणीत्युच्यन्ते । तन्निर्वचनं च श्रूयते यदाजिमीयुः तदाज्यानामाज्यत्वम् । इति । तेष्वाज्यस्तोत्रेषु पंचदशनामकः स्तोमो भवति ।

तस्यस्तोमस्य विष्टुतिरेवमाम्नायते । पंचभ्यो हिं करोति - स एकया - स एकया । पंचभ्यो हिं करोति स एकया सतिसृभिः । स एकया । पंचभ्यो हिं करोति स एकया स एकया - सतिसृभिः । इति एकं सूक्तं त्रिवारमा वर्तनीयम् । तत्र प्रथमावृत्तौ - प्रथमाया ऋचः त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्ता वुत्तमायाः । सोयं पंचदशस्तोमः ।

उक्तेभ्यः चतुर्भ्यः सूक्तेभ्यः ऊर्ध्वमुत्तराग्रंथे त्रीणि माध्यंदिन पवमान-सूक्तान्याम्नाय तत ऊर्ध्वं चत्वारि सूक्तान्याम्नातानि - तेषु - अभित्वा शूरनोनुम इत्याद्यम् - कयानश्चित्र आभुवत् इति द्वितीयम् - तंवो दस्ममृतीषहम् - इति तृतीयम् । तरोभिर्वो विदद्वसुम् - इति चतुर्थम् । एतानि क्रमेण रथंतर-वामदेव - नोधज कालेय सामभिः माध्यंदिनं सवने गायमानानि पृष्ठस्तोत्राणी-त्युच्यन्ते । स्पर्शनात् पृष्ठानीत्येवं निरुक्तिः द्रष्टव्या । तेषु -स्तोत्रेषु सप्तदश-स्तोमो भवति । तस्य स्तोमस्य विष्टुतिरेवमाम्नायते । पंचभ्यो हिं करोति स तिसृभिः , स एकया - स एकया । पंचभ्यो हिं करोति स एकया सति सृभिः स एकया । सप्तभ्यो हिं करोति स एकया - सतिसृभिः सतिसृभिः , इति । अत्र प्रथमावृत्तौ प्रथमायाः ऋचः त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः । तृतीयावृत्तौ मध्यमोत्तमयोः - सोऽयं सप्तदशस्तोमः । अत्र त्रिष्वपि वाक्येषु त्रिवृत्पंचदशसप्तदश शब्दाः गुणविधायकत्वेन संमताः । यदि बहिष्पवमानाज्य पृष्ठशब्दाः अपि गुणविधायकाः स्युस्तदा प्रत्युदाहरणम् । गुणद्वयविधानेन वाक्यभेदःस्यात् । तस्मात् बहिष्पवमानादिशब्दाः स्तोत्रनामधेयानि । तैर्नामभिः कर्माण्यनूद्य त्रिवृदादिगुणाः विधीयंते । ( जै. सू. 1-4-3 )

धर्माध्यासात् । न चैकत्र मुख्यत्वमपरत्र गौणत्वमिति वक्तुं युक्तम्, विनिगमका-भावात् । तथा च कार्यभूतत्रिमूर्त्यन्तर्गतशिवापेक्षया अतिरिक्तशिवस्सिध्यतीति चेत् - न । विनिगमकस्योक्तत्वात् शिवादिशब्दवाच्यत्वमात्रात् विग्रहविशेष-विशिष्टत्वासिद्धेश्च ।

किं च 'प्रजापतिश्चरति गर्भे अन्तरि'त्यादिवाक्यप्रतिपन्नस्य 'यन्नाभि-पद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूप' इत्यादिवाक्यप्रतिपन्नकार्यकोट्यन्तर्गत-प्रजापत्यपेक्षया विलक्षणस्य वाच्यत्वेन परमकारणस्य हिरण्यगर्भस्य प्रसिद्धिप्रसङ्गः ।

ननु तुरीये शिवादिशब्दाम्नानं न त्वेवं प्रजापतिशब्दाम्नानमिति विशेष इति चेत् किं ततः कार्यकारणभूतहिरण्यगर्भद्वयसिद्धेरनिवार्यत्वात् ननु कारणविषय हिरण्यगर्भादिशब्दानां गौण्या वृत्त्यायोगेन वा तुरीये प्रयोगोपपत्त्या न हिरण्य-गर्भान्तरसिद्धिरिति चेत् - तुल्यमितरत्रापि । किं च तुरीये हिरण्यगर्भवाचकशब्द-प्रयोगाभावाच्चासिद्धः । मैत्र्युपनिषदि 'प्रजापतिर्वा एकोऽग्रेऽतिष्ठत् स नारमत, एकः स्वात्मानमभिध्यायन्नित्युक्तस्य 'तमो वेदमेकमासे'त्यादिवाक्येन ब्रह्मादित्रितयशरीरकत्वोक्त्या ब्रह्माद्युत्तीर्णे प्रजापतिशब्दप्रयोगात् ।

अपि च पैङ्गिरहस्यश्रुतौ एको ह वै नारायण आसीत् न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा व्यचिन्तयत् । तत एते व्यजायन्त । विश्वे हिरण्यगर्भाग्नियमवरुणविष्णुरुद्रेन्द्रा ' इति वाक्ये हिरण्यगर्भादुत्तीर्णे नारायण-शब्दस्यापि प्रयोगात् । कथं शिवादिशब्दानां क्वचित् प्रयोगमात्रात् तुरीयस्य शिवरूपत्वनिर्णयः ।

ननु मास्तूत्तीर्णस्य शिवत्वनिर्णयः । तथापि मैत्रीश्रुत्यादिभिः सर्गस्थितिलयविधानफलतत्तद्गुणोपाधिकब्रह्मादिमूर्तित्रयोत्तीर्णस्य जगत्कारणत्व-बोधनात् । न सत् ब्रह्मादिशब्दानां विष्णुसंज्ञायामन्यसंज्ञायां वा विश्रान्तिः शक्यते वक्तुम् । सृष्ट्यग्रिमदशावस्थिते हि कारणत्वशङ्कोदेतुमर्हति । न पुनरनन्तरसम्भावितोदयेषु ते हि गुणेभ्यः क्षुभ्यमाणेभ्यः त्रयो देवा जज्ञिर '

इत्यादिप्रमाणगणेन गुणक्षोभानन्तरभाविनः प्रत्यपद्यन्त । न च तेषु कारणत्व-सम्भावनागन्धरहितेषु प्रत्युत ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्त इत्यादिभिः कार्यत्वैवावसितेषु कारणवाक्यविश्रान्तिस्सुवचा । किं तु प्रधानपुरुषकालादिषु युज्यते तत्सम्भावना । तन्निरासकमथ ब्रह्मसूत्रैरन्यैश्च पुराणागमादिभिः 'ईक्षतेर्नाशब्दम्' 'गौणश्चेन्नात्मशब्दात्' (ब्र· सू· 1-1-5) 'नेतरोऽनुपपत्तेः' (ब्र. सू. 1-1-17) 'प्रधानपुरुषव्यक्तकालानां परमं हि यत्पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् । प्रधानपुरुषादिदंप्रलयोत्पत्ति-वर्जितमि'त्यादिभिर्निरणायि । अतो वैष्णवादिषु च विष्णुसंज्ञा अन्यसंज्ञा वा जगत्सर्गादिवादाः शङ्कितकारणभावप्रधानादिव्यावर्तनेन सर्वज्ञता सर्वशक्तियुक्त-ब्रह्मकारणतैकसन्नद्धा नपुनर्ब्रह्मादिषु कस्यचित्कारणत्वतदभावनिर्धारणायालम् ।

यद्यपि 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः। नारायणाद् ब्रह्मा जायत' इत्यादिभिः 'तथा न सन्नचासन् शिव एव केवल' इत्या-दिभिश्च नारायणस्य वा स्वेतरमूर्तिविवेकेन कारणत्वं प्रख्याप्यते तथाऽप्यस्य लोकस्य का गतिरिति । 'आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त, आकाशं प्रत्यस्तंयन्ती' (छा· उ· 1-9-1) इत्यादीनामाकाशादाविव प्रसिद्धेः । असम्भावितान्वयानामासमन्तात् काशत इति व्युत्पत्त्याश्रयणेन ब्रह्मान्वयित्वमिव प्रसिद्धनारायणादिशब्दार्थपरित्यागेन ब्रह्मपर्यवसानमेव नारायणादिशब्दानां वक्तुं न्याय्यं । प्रधानपुरुषादेर्नराश्रयत्वेन नारत्वे तदयनत्वेन नारायणत्वं ब्रह्मणो न ह्यनुपपन्नम् । एवं शिवशब्दस्यापि शुद्धिकल्याणगुणयोगो न परब्रह्मण्येव वर्तनं नानुपपन्नम् । इयान् विशेषः —

वैष्णवादिषु पुराणेषु विष्णुपर्यायनामभिरेव प्रधानपुरुषातीतस्य परब्रह्मणोऽभिधानं त्रिमूर्तिषु विष्णुमूर्तेर्वैशिष्ट्यकीर्तनम् । एवमन्यत्र पुराणेषु चान्यपर्याय-नामभिः परमात्माभिधानमन्यमूर्तिवैशिष्ट्यकीर्तनमिति सर्वपुराणार्थपर्यालोचने मूर्तित्रयप्रसिध्यासर्वनामाभिधेयपरब्रह्मणस्तदंशकेन मूर्तित्रयस्यापि वैशिष्ट्यविशेष इति इममर्थमभिप्रेत्योच्यते ।

शैवपुराणे —

> अन्योन्यमनुरक्तास्ते अन्योन्यमुपजीविनः ।
> अन्योन्यं प्रणताश्चैव लीलया परमेश्वराः ॥
> क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिदिन्द्रः प्रशस्यते ।
> नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन ॥
> अयं परः परोनेति संरंभाभिनिवेशिनः ।
> यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥

इति । तथाचेत्थं श्रुतीतिहासपुराणागमेषु सर्वत्रापि ब्रह्मादिमूर्तित्रयमूलभूत-प्रधानपुरुषातीतपरमात्मप्रतिपादनमन्तरेण तन्मूर्तिभूतेषु सृष्ट्याद्येकैकाधिकारित्वेन धर्मग्राहकमानसिद्धेषु ब्रह्मादिषु न कस्यापि प्रमाणस्य पर्यवसानं कारणत्वप्रत्या-यकस्योत्प्रेक्षितुं शक्यमिति न तेषु परापरचिन्तनप्रामाणिकतेति ।

अत्रब्रूमः —— न तावन्मैत्रेयादि वाक्यैर्भगवद्व्यतिरिक्तस्य कारणत्व-निर्णयः । 'एको ह वै नारायण आसीत्' 'नैवेह किञ्चनाग्र आसीत्' 'दिव्यो देव एको नारायणः' इत्यादिषु नारायणस्य सृष्ट्यग्रिमदशावस्थितत्व-प्रतिपादने तद्व्यतिरेक निर्धारणासंभवात् । नह्येकवाक्यापातप्रतीतिसिद्धोर्थोन्याय विद्भिर्ग्रहीतुं युक्तः । मीमांसानारंभप्रसंगात् । न च मैत्रेयादिवाक्यैर्नारायण व्यतिरिक्तस्यापि प्रतीत्या न सौबालादिवाक्यैर्नारायण कारणत्वनिर्धारणमिति वाच्यम् । महोपनिषदादि प्रतिपन्ननारायणकारणत्व बाधनक्षमत्वाभावात् तेषां वाक्यानां नह्यत्र नारायणस्य सृष्ट्यग्रिमदशावस्थितिर्नेति प्रतिपाद्यते । तथा न ब्रह्मा नेशान इति नापि तद्दशावस्थितयोग्यतापादकं किन्तु ब्रह्मादिमध्यपरिगणन-मेवात्र क्रियते । न तत् बाधनक्षमम् । तथाहि — ब्रह्मोपनिषदि तन्मध्ये परिगणनं तावत् न बाधकम् । चतुष्पादं ब्रह्म विभाति इत्यादिना ब्रह्मादिरूपेण जागरिताद्यधिष्ठातृत्वं हि तत्र प्रतिपाद्यते । न चैतत् परब्रह्मव्यतिरेकबोधकम् । किन्तु तदभेदबोधकमेव । न चैवं सति ब्रह्मरुद्राभिन्नत्वमपि स्यादिति वाच्यम् । प्रमाणान्तरेण परब्रह्मत्वाभावनिर्णये सति तदभिव्यक्त्यतिशय निबन्धनत्वावसायात्

तद्व्यपदेशस्य न तथात्वम् । भगवद्विषय व्यपदेशस्य कल्पयितुं युक्तम् । जीवत्व-ग्राहकप्रमाणान्तरा भावात् । नापि तापनीयवाक्ये तन्मध्यपरिगणनं बाधकम् । एकस्यैवोंकार समष्टिप्रणवोभय देवतात्वस्योपपत्तेः । एकस्यैव हृदयद्वादशान्तयोः स्थित्युपपत्तेश्च नापि मैत्रेयश्रुतौ परब्रह्मतनुत्वोक्तिस्तद्बाधनक्षमा । विष्णुशब्दस्य भगवद्विग्रहमात्र परत्वेन वर्णन सम्भवात् । मन्येवं ब्रह्मादि सद्वैरूप्यं । नारायण कारणत्व प्रतिपादक प्रमाणान्तरानुसारेण तस्यादोषत्वात् । न च विग्रहपरत्वे लक्षणाप्रसङ्गः । प्रमाणान्तरानुसारेणैव तस्याप्यदोषत्वात् । न च मैत्रेयश्रुत्यनु-सारान्महोपनिषदादिगत नारायणपदेषु लक्षणेति वैपरीत्यं किन्नस्यादिति वाच्यम् । महोपनिषन्मैत्रायणीयसुबालोपनिषदादि नानाशाखागत नारायणादि शब्दानां बहूनां लक्षणाप्रसङ्गात् । किञ्चास्मत्पक्षे अनुवाद्ये लक्षणा । ब्रह्मादीननूद्य तनुत्वस्य विधानात् । त्वत्पक्षे विधेयलक्षणा ।

अपि चास्मत्पक्षे मुख्यार्थैकदेशलक्षणेत्यंतरङ्गलक्षणा । त्वत्पक्षे अतिरिक्त पदार्थ लक्षणेति बहिरङ्गलक्षणेति वैषम्यम् । किं च तत्परेणेति हि परशब्दार्थस्य तमोधिष्ठातृत्वं प्रतिपादयति । तथा च परशब्दस्योत्कर्ष विशिष्टवस्तुवाचित्वेन विशेषकाङ्क्षायामुत्कटत्वात् देवताविशेषवाचिनो नारायण शब्दस्य समानप्रकरण-स्थस्य तदाकाङ्क्षापूरणरूप प्रयोजन सम्भवात् लक्षणाङ्गीकारे तत्त्यागप्रसङ्गात् । सा किमिति नारायणपदे अंगीकरणीया । एतादृश प्रयोजनरहितस्य विष्णुशब्दस्य लक्षणामङ्गीकृत्य सर्वनिर्वाह सम्भवात् । अथर्वशिखादिषु ब्रह्मादि मध्यपरिगणनं यथा न बाधकं तथा तत्तद्वाक्यविचारे निपुणतरं प्रपञ्चितम् ।

यदपि सृष्ट्यग्रिमदशावस्थितेपि कारणत्वशङ्कोदेतुमर्हति न पुनर्गुणेभ्यः क्षुभ्यमाणेभ्य इत्यादिना गुणक्षोभानन्तरभावितया ब्रह्मविष्णुरुद्रेत्यादिना कार्यतया चावगम्यमानेषु कारणत्व सम्भावनाप्रधान पुरुषादिषु हि तत्सम्भावनेति तदप्य-युक्तम् । 'हिरण्यगर्भः समवर्तताग्र' इत्यादि वाक्यैः सृष्ट्यग्रिमदशावस्थितत्व प्रतीत्या कारणत्व शङ्कोदय सम्भवात् कार्यत्व श्रवणाच्छङ्कानुदये च कथमाका-शादि करणारम्भसार्थक्यम् । तत्रापि कार्यत्व श्रवणेन कारणत्वस्य शङ्कानर्हत्व प्रसङ्गात् । ननु कारणत्व शङ्कानर्हत्वमित्यत्र तात्पर्यं किन्तु वस्तुतो न तेषां

कारणत्वमित्यत्र तात्पर्यमिति चेत् - तर्हि प्रधान पुरुषादिषु हि तत्सम्भावनेति उक्तिः असङ्गतास्यात् । ननु हिरण्यगर्भादिषु कारणत्व शङ्का मन्देत्यत्र तात्पर्य-मिति चेत् किं प्रधानपुरुषादिषु सा न मन्दा । येन प्रधानपुरुषादिषु हि तत्सम्भावनेति वाक्यं सङ्गतं स्यात् । तत्रापि हि क्षणादयस्तद्बाधकास्तदैक्षतेत्या-दिभिः स्फुटमवगम्यते । कैश्चित् हेतुभिस्तदाशङ्कात्वत्रापि । न चैवमपि गुणक्षोभा-नन्तरभाविनो विष्णोः कथं कृत्स्नजगत्कारणत्वं सङ्घटत इति वाच्यम् । रामकृष्णादिरूपेणेव ब्रह्मादिमध्यगत विष्णुरूपेणावतीर्णत्वेऽपि तत्पूर्वभावित्व-सम्भवात् । तत्र किं पुनः प्रमाणमिति चेत् न —

> परावरेशंशरणं व्रजध्वमसुरार्दनम् ।
> उत्पत्तिस्थितिनाशानामहेतुं हेतुमीश्वरम् ।
> प्रजापतिपतिं विष्णुमनन्तमपराजितम् ॥
> प्रधानपुंसो रजसोः कारणं कार्यभूतयोः ।
> प्रणतार्तिहरं विष्णुं स च श्रेयो विधास्यति ॥
> प्रकृतिर्यामयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
> पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
> परमात्मा च सर्वेषां आधारः परमेश्वरः ।
> विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥

इत्यादिषु मूलकारणत्वस्य प्रतिपादनात् । रक्षणाधिकृतस्य कारणीभूतस्य चात्यन्ताभेदबोधकप्रमाणबलाच्च । तथाहि वैष्णवेपुराणे —

> तद्रूपमास्थाय सृजत्यजोयः स्थितौ च योसौ पुरुषस्वरूपः ।
> रुद्रस्वरूपेण च योत्ति विश्वं धत्तेतथानन्तवपुस्समस्तम् ॥
> ब्रह्मत्वे सृजते सर्वं स्थितौ पालयते नमः ।
> रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्तये ॥

इत्यनयोः श्लोकयोस्तदैक्यतात्पर्यकत्वमभ्युपगन्तव्यम् । रैवतकं प्रति ब्रह्मणा कृष्णात्मना विष्णोरवतीर्णत्वं कथयितुमुद्युक्तेन तत्स्वरूपमेवं कथितमिति प्रवृत्ते

ब्रह्मसन्दर्भे हि प्रथमश्लोकः पठितः । तस्मान्न ब्रह्मादिरूपधरत्वं विष्णवति-रिक्तस्याभिप्रेतमिति कल्पयितुं शक्यम् । द्वितीयश्लोकस्यापि प्रह्लादकर्तृक-भगवत्स्तोत्रे नमस्ते पुण्डरीकाक्षेत्यादिके विद्यमानत्वात् । स्थितौ पालयते नम इति रूपान्तरपरिग्रहानुकूलतया स्वस्वरूपेण पालनाधिकृतत्व प्रतीतेश्च तदभेद-स्त्वमवगम्यते । तथा तत्रैव ।

'प्रधानं पुरुषञ्चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले असौपुनः ॥
स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तम ॥'

इत्यादि मूलकारणत्वं हरेः प्रतिपाद्य ।

'ब्रह्माभूत्वास्य जगतो विसृष्टौ संप्रवर्तते ।
सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना ॥
सत्वभूत् भगवान् विष्णुरप्रमेयपराक्रमः ।
तमोन्तेर्कीचकल्पान्ते रुद्ररूपीजनार्दनः ॥
मैत्रेयाखिल भूतानि भक्षयत्यतिभीषणः ॥'

इति सृष्टिस्थितिलय कारणत्वं प्रतिपादितम् । अत्र भगवत एव सृष्टिस्थितिलय कारणत्व प्रतिपादक सन्दर्भे ब्रह्माभूत्वा रुद्ररूपीत्युभयत्र तदुभय शरीरकत्वो-क्तिवत् विष्णुशरीरत्वं न कथितमिति स्वरूपेणैव रक्षणाधिकृतत्वं प्रतिपाद्यते । न चात्र मूलकारणे प्रयुक्तहर्यादि शब्दानां तदतिरिक्त तत्वलक्षकत्वं युक्तम् ।

'सम्भक्षयित्वा भूतानि जगत्येकार्णवीकृते ।
नागपर्यङ्कशयने शेते स परमेश्वरः ॥'

इति शेषशायित्वलिङ्गोपन्यासात् । महाभारते च भीष्मपर्वणि ब्रह्मणा साक्षात् कृतस्य तस्मात् भवविशालाक्षयदुवंशविवर्धन । धर्म संस्थापनार्थाय दैतेयानां वधाय च । जगतो रक्षणार्थायप्रसादं कुरुमे प्रभो । इति कृष्णात्मनावतार कारणाय प्रार्थितस्य त्वयाकृत संवादः कोयमिति प्रश्नोत्तरवाक्ये ।

'यत्तत् परं भविष्यच्च भवितव्यं च यत्परम् ।
भूतात्मायः प्रभुश्चैव ब्रह्म यच्च परं पदम् ॥
तेनाह्यकृत संवादः प्रसन्नेनासुरर्षभ ॥'

इति परब्रह्मत्वमाविष्कृतम् । तथा **सुपर्णवैकुण्ठ संवादे** ।

'ततो देवगणानाञ्च दानवानाञ्च युध्यताम् ।
प्रादुरासीन्महातेजाः शङ्खचक्र गदाधरः ॥'

इत्यादिना देवदानवयुद्धे आविर्भूय देवसाहाय्यकं कृतवानिति प्रतिपाद्य तस्य स्वरूपजिज्ञासायां – उवाच 'पद्मनाभस्य पूर्वरूपं प्रति प्रभो!' इत्यादिना तत्स्वरूपकथनमुपक्षिप्य तदर्थमृषि सुपर्णी संवादरूपां कथां प्रस्तुत्य तस्य सुपर्णस्य तद्वाहनत्वहेतुत्वं प्रतिपाद्य तदनन्तरं सुपर्णस्य भगवता देशविशेष गमनादिकं प्रतिपाद्यानन्तरं भगवत्सुपर्ण संवादव्याजेन भगवतः सर्वोत्कर्षं वर्णयित्वा –

'यदेतत्परमं गुह्यं शाश्वतंध्रुवमव्ययम् ।
तदेव परमो गुह्यो देवो नारायणो हरिः ॥'

इत्युपसंहृतम् । **आरण्यपर्वणि** च मार्कण्डेयेन स्वदृष्टाश्चर्यकथनदशायां –

'अतसीपुष्पसंकाशः श्रीवत्सकृतलक्षणः ।
साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे ॥'

इत्यादिना तदाश्चर्याधारतया कथितस्य पुरुषस्य तेन मार्कण्डेयेन संवादमुपक्षिप्य

'आपो नारा इति प्रोक्तास्तासां नाम कृतं मया ।
तेन नारायणेत्युक्तो मम तच्चयनं सदा ॥
अहं नारायणो नाम प्रभवः शाश्वतोव्ययः ।
विधातासर्वभूतानां संभर्त्ताच द्विजोत्तम ॥

अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो नाम यतः प्रेमाधिपस्तथा ॥
अहं शिवश्च सोमश्च काश्यपश्च प्रजापतिः ॥'

इत्यादिना महताप्रबंधेन सर्वोत्कर्षमुपपाद्य

'यस्य देवो मया दृष्टः पुरापद्मायतेक्षणः ।
स एव पुरुषव्याघ्रः सम्बन्धी ते जनार्दनः ॥'

इत्युपसंहृतम् । अत्र जगत्कारणत्वादि धर्मशालिनं पुरुषस्योपक्रमे श्रीवत्सधारी द्युतिमान् पीतवासा महाद्युतिरित्यादिषु नारायणत्व लिंगभूत श्रीवत्सधारित्व पीतवासत्व पुण्डरीकाक्षत्वादिकथनात् कृष्णाभिन्नत्वोक्तेश्च । ब्रह्मणोपि विष्णुत्व-कथा दूरोत्सारितापि तेन नारायणद्वैविध्यम् शिवानन्दलहर्युक्तं निरस्तं वेदितव्यम् । 'नमो विष्णवे बृहते करोमीत्यादौ बृहत्वादि विशेषणानां महानिन्द्रो वज्रबाहुरित्यत्र महत्वविशेषणस्येव इतरापेक्षया महत्वसाधकत्वेनोपपत्या विष्णुद्वैविध्यसाधकत्वाभावात् । न च 'सर्वज्ञस्सर्वकर्तात्वं सर्वलोकनमस्कृतः । त्रैलोक्यशरणश्चत्वं भव विष्णुः सनातनः ॥ देवानां सर्वकार्यं च कर्तव्यं ब्रह्मणस्तथे'त्यादि । वराहपुराणे 'योऽसौ नारायणोदेवः परात्परतरोविभुः । तस्य चिन्ता समुत्पन्ना सृष्टिं प्रति नरोत्तम ॥' इत्यादिपूर्वसन्दर्भे प्रतिपादितेन नारायणेन स्वसृष्टाय विष्णवे सार्वज्ञपालनाधिकार तदपेक्षित भूषणायुधदानादि-प्रतिपादनात् विष्णुद्वैविध्यं प्रतीयत इति वाच्यम् । पूर्वोक्तवादप्रमाणानुसारादस्य वचनजातस्य पालनार्थमवतीर्णस्य स्वस्य नियाम्यकोट्यन्तर्भावाभिव्यक्त्यर्थं भगव-दभिनयप्रतिपादकत्वोपपत्तेः ।

यदप्येकोहवै नारायण आसीदित्यादेराकाशकारणत्वबोधकतुल्ययोगक्षेमत्व-वर्णनं तदपि स्थवीयः । तत्र बाधकबलात् त्यागोऽपि प्रकृते तादृशबाधका-भावात् । तत्र हि कार्यस्य विधेय जगत्कारणत्वविरोधे बाधकः । न चात्र सोस्तीत्यसकृदुपपादितं । न च ब्रह्मादिमध्यपरिगणनं बाधकमित्युपपादितम् । न च शिव चतुर्मुख नारायण कारणत्व प्रतिपादक वाक्यानां परस्परसत्प्रति-

पक्षत्वेन परबाधनासामर्थ्यात् । उत्तीर्ण ब्रह्मत्व प्रतिपादकश्रुतिर्निरर्गलं प्रवर्तत इति वाच्यम् । कार्यत्वकर्मवश्यत्वादिविशिष्टतया प्रमाणान्तरावगम्यमान चतुर्मुखादि-कारणत्वबोधिकानां श्रुतीनामयोग्यार्थत्वेन भगवत्कारणत्वबोधकवाक्यानाञ्च योग्यार्थ त्वेन तुल्यत्वाभावेन परस्परसत्प्रतिपक्षत्वासिद्धेः परस्परसत्प्रतिक्षवदुत्तीर्णवाक्यानामपि तैर्वाक्यैः सत्प्रतिपक्षत्वस्य तुल्यत्वेन निष्कण्टकवृत्त्यसिद्धेश्च । न च भगव-जन्मनोवतारस्रूपत्वस्याजायमान इति वाक्यादवगन्तव्यत्वेन तस्य च वाक्यस्य परमात्मप्रकरणस्थत्वात् भगवज्जन्मनोवतारस्रूपतायां न तत्प्रमाणत्वेनोपन्यासार्ह-मिति वाच्यम् । लक्ष्मीपतित्व लिङ्गेन भगवदुपस्थितेः । न च तदप्युत्तीर्ण-कारणत्वबोधकश्रुतिबलादन्यथयितुं शक्यत इति वाच्यम् । अन्योन्याश्रयात् उत्तीर्णकारणत्व सिध्यन्तरं लक्ष्मीपतित्वस्यान्यथासिद्धि निश्चयादजायमान इति वाक्यस्य नारायणपरत्वाभावात् तत्कारणत्वप्रतिपादकवाक्यानां योग्यार्थत्व-निश्चयः । तन्निश्चये सत्युत्तीर्णवाक्यानात्मलाभ इत्युत्तीर्णकारणत्वनिश्चय इति । न च ब्रह्म विष्णुरुद्रेन्द्रा इति कार्यत्व बोधनमात्रादयोग्यार्थत्वनिश्चयः । यस्मिन् द्यौरिति वाक्यस्य परमात्मपरत्वेन '**द्युभ्वाद्यायतनं स्वशब्दादि**'ति **सूत्रेण** ( ब्रह्म॰ सू॰ 1-3-1 ) निर्णीतस्योपरि 'स एषोन्तश्चरते बहुधा जायमान'

---

## शारीरकद्युभ्वाद्यधिकरणम् —

आथर्वणिका अधीयते 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' इति । तत्र संशयः - किमयं द्युपृथिव्यादीना मायतनत्वेन श्रूयमाणो जीवः , उत परमात्मा-इति । किं युक्तम् ? जीव इति । कुतः - 'अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः' इति परस्मिन् श्लोके पूर्ववाक्य प्रस्तुतं द्युपृथिव्याद्यायतनं 'यत्र' इति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा , पुनरपि 'स एषोऽन्तश्चरते बहुधा जायमानः इति तस्य बहुधा जायमानत्वं चोच्यते ; नाडीसंबन्धो देवादिरूपेण बहुधा जायमानत्वं च जीवस्यैव धर्मः । अस्मिन्नपि श्लोके 'ओतं मनस्सह प्राणैश्च सर्वैः' इति

इति जायमानत्वश्रवणात् अन्याधीनमेव हि कार्यत्वं तदापादकम्। अन्यथा देवाहवै स्वर्गं लोकमगमन्निति देवसंवाददर्शनेन तद्योग्यरूपपरिग्रहरूपाविर्भावस्या-स्यवक्तव्यत्वेन त्वदीयोत्तीर्णकारणत्वप्रतिपादक वाक्यानामपि अयोग्यार्थत्वा-पातात्। अद्भय: संभूत इत्यस्य नारायणातिरिक्त परत्ववादिनोऽपि तत्रैवाजायमान इति वाक्ये बहुधा विजायत इत्युक्तया कार्यत्वमात्रस्योग्यार्थत्वापादकमित्युक्तेः व्याहतत्वाच्च ।

---

प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं जीवधर्म एव । एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथा कथञ्चित्सङ्गमयितव्यम् - इति पूर्व पक्षः ।

सिद्धान्तस्तु - द्युपृथिव्याद्यायतनं ब्रह्म, न जीवः, परब्रह्मासाधारण शब्दात्। अमृतस्यैष सेतुः इति परस्य ब्रह्मणः असाधारणशब्दः, तथा-ऽमृतस्य प्रापकत्वं ब्रह्मण एव संभवति। आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तिः। आप्नोति इति हि आत्मा। स्वेतर समस्त नियन्तृत्वेन व्याप्तिस्तस्यैव भवति । यः सर्वज्ञस्सर्वविदित्यादयश्च उपरितनाः परस्यैव ब्रह्मणश्शब्दाः। नाड्याधारत्वमपि तस्यापि संभवति। बहुधा जायमान इत्यपि परस्मिन् ब्रह्मणि संगच्छते। स्वकीयं प्रभावं अजहदेव स्वेच्छया विजायते परः पुरुष इत्यभिधानात्। अयं द्युपृथिव्याद्यायतनः भूतः पुरुषः संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते। अतः विधूतपुण्यपापैः निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टः द्युभ्वाद्यायतन पुरुषः परं ब्रह्मैव। यथा - प्रधानं नात्र प्रतिपाद्यते, तथा जीवोऽपि न प्रतिपाद्यते। जीवाद्विलक्षणत्वेन ब्रह्मव्यपदिश्यते यदा-स्वस्मादन्यं सर्वस्येशं प्रीयमाणं, अस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवति। प्रकरणं च इदं परस्य ब्रह्मणः। तथा एकस्य कर्मफलादनं अन्यस्य च कर्मफलमनश्नत एव ईप्स्यमानतया शरीरान्तः स्थितिमात्रं प्रतिपाद्यते। अतः द्युभ्वाद्यायतनं परमात्मा। (श्रीरामानुजभाष्यानुसारि)। (ब्र. सू. 1-3-1)

यत्तु अन्योन्यमनुरक्तास्त इत्यादि वचनेन त्रयाणां साम्यं प्रतीयत इति तदप्यसाधु। 'ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्। ते वै पाषण्डिनो ज्ञेया नरकार्हानराधमाः॥ नत्वत्समोभ्याधिकः कुतोन्ये लोकद्वयेप्यप्रमितप्रभावः। नास्ति नारायणसमं न भूतो न भविष्यति॥ एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्। यस्तु नारायणं देवं समत्वेनाभिमन्यते॥ सतु तेनावमानेन नकारान्नातिवर्तते। नित्यं हि नास्ति जगति भूतंस्थावरजङ्गमम्॥ ऋते तमेकं पुरुषं वासुदेवं सनातनम्।' इत्यादि बहुप्रमाण विरोधान्न सर्वात्मना साम्य-प्रतिपादकम्'। किन्त्वन्योन्य प्रणामादिवशात् न तेषु कस्यचिदतिशयो वक्तव्यः। तस्य लीलामात्रत्वादित्येवमभिप्रायकं नेतव्यम्। स्यादेतत् उत्तीर्णस्य शिवस्य प्रमाणान्तरेणासिद्धावपि उभ .... विग्रहाशुद्धेत्यादिसूतसंहिता वचनानां जागरूकत्वात् ततस्तत्सिद्धिर्भविष्यतीति चेन्न। महाभारतवैष्णवादिषु नारायणस्य ब्रह्माद्युत्तीर्णार्थावबोधनेन सूतसंहितादि वचनानां उत्तीर्णनीलकण्ठत्वादि-विशिष्टवस्तु साधकत्वासंभवात्। तानि चेमानि वचनानि - महाभारते - आरण्यपर्वणि 'आपोनारा इति प्रोक्ता' इत्युपक्रम्य 'अहं विष्णुरहं ब्रह्मा-शक्रश्चाहं सुराधिपः। अहं शिवश्च सोमश्च काश्यपश्च प्रजापतिः॥' इति भीष्मपर्वणि - वासुदेव नते शक्यं मयागीतं यथातथं। सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना॥ सृजस्त्वामात्मनाकृष्ण प्रद्युम्नं चात्मसंभवम्। प्रद्युम्नं चानिरुद्धं च यं प्राहुर्विष्णुमव्ययम्॥ अनिरुद्धोऽसृजत्साम्बं ब्रह्माणं लोकधारिणम्। वासुदेवमयस्सोहं त्वयैवास्मिविनिर्मित॥' इति। आनुशासनिके-सुपर्णवैकुण्ठ-संवादे। मत्तश्च संप्रसूतान्वै विद्धिलोकान् सदैवतान्। मयापि च चतुर्धात्मा विभक्तः प्राणिषुस्थितः॥ आत्मभूतो वासुदेवोस्यनिरुद्धोमतौ स्थितः। सङ्कर्षणोऽहं कारश्च प्रद्युम्नोमनसि स्थितः॥ अन्यथा च चतुर्धाय तत् सम्यक् श्रोतुमर्हसि। हिरण्यगर्भपद्माख्यो यत्र ब्रह्मा व्यजायत॥ ब्रह्मणश्चापि सम्भूतः शिव इत्यव-धार्यताम्। शिवात् स्कन्दः सम्बभूव एतत् सृष्टि चतुष्टयम्॥ इति। न चात्र विष्ण्वपेक्षया उत्तीर्णत्वं न कथितमिति वाच्यम्। प्रद्युम्नस्यैव प्रद्युम्नाच्चानिरुद्धं च यं प्राहुर्विष्णुमव्ययम्। इत्युक्त्वा त्रिमूर्तिमध्यगत विष्णुरूपत्वात् तस्य च प्रद्युम्नो

मनसिस्थित इत्यत्रोक्तत्वात् पूर्वं एकामूर्तिर्निर्गुणाख्या योगं प्रथममास्थिता। द्वितीया सृजते तात भूतग्रामं चराचरम् ।। सृष्टं संहरते चैका जगत्स्थावर-जङ्गमम्। जातात्मनिष्ठा क्षपये मोहयन्निव मायया ।। क्षिपन्ती मोहयन्ती च ह्यात्मनिष्ठा स्वमायया। चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ।। रक्षते चापि नियता सोहमस्मिन्नभश्वरे'ति प्रतिपादनाच्च। आश्वमेधिके कृष्णोदङ्क-संवादे। 'तमो रजश्च सत्वं च विद्धि भावान् मदाश्रयान्। सृष्टिस्थितिलयाध्यक्षो ब्रह्म विष्णवीशसंहितः।

कदाचित्तमसारुद्रो विष्णुस्सत्वेगुणेस्थितः।
रजस्यपि तथा ब्रह्मा स्वान्गुणान् गुणानुग ।।'

इति। वैष्णवे च पुराणे - यस्य प्रसादादहमच्युतस्य भूतप्रजासर्गोन्तकारी। क्रोधाच्च रुद्रःस्थितिबन्धहेतुः यस्माच्च मध्ये पुरुषः परस्मादिति प्रतिपादितम्। ब्रह्मत्वे सृजते सर्वमित्यादीनि वचनानि पूर्वमुदाहृतानि। सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञा याति भगवान् एक एव जनार्दन इति।

'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः।
विभूतयो हरेरेताः जगतः सृष्टिहेतवः ।।
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ।।
रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः।
चतुर्धाप्रलयायैते जनार्दन विभूतयः ।।'

इति। वराहपुराणे - विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते। इति। लैङ्गे —

'त्वत्कोपसंभवोरुद्रस्तमसा च समावृतः।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ।।
त्वत्स्वरूपात् स्वयं विष्णुः सत्वेन पुरुषोत्तमः ।।'

इति । तथा —

'परमात्मानमीशानां तमसा रुद्ररूपिणम् ।
रजसा सर्वलोकानां सर्वलीलाप्रवर्तकम् ॥
सत्वेन सर्वभूतानां स्थापकं परमेश्वरम् ।
सर्वात्मानं महात्मानं परमात्मानमीश्वरम् ॥'

तं दृष्ट्वा प्राह वै ब्रह्मा भगवन्तं जनार्दनमि'ति प्रतिपादितम् ।
पूर्वोक्त प्रमाणबलात् उत्तीर्णरक्षयाधिकृतयोरभेदात् त्रिमूर्त्यन्तविलक्षणस्य शि
बोधक प्रमाणानामबाध इति वाच्यम् । रक्षणाधिकृतस्य भगवतः उत्ती
कथनस्य तदतिरिक्त तत्वाभावतात्पर्यकत्वस्य वाच्यत्वेनार्थात्तुल्यार्थतां प्राप्येति न
वार्थसम्भवात् । न च सूतसंहितादि वचनैर्भारतादि वचनानां बाध
शक्यं वक्तुम् । परिग्रहातिशयेन भारतादीनां प्रामाण्योत्कर्षात् । न च शि
पदघटितार्थर्वशिरश्शिखादिमूलत्वेन सूतसंहितादिवचनानां प्राबल
वाच्यम् । नारायणकारणत्वप्रतिपादक श्रुतिमूलत्वस्यात्रापि विशिष्टत
अथर्वशिरः प्रभृति वाक्यस्य शिवादिपदानां नीलकण्ठत्वविशिष्टवस्तुबोधकत
सिध्या सूतसंहितादिवचनानां तन्मूलत्वोक्त्ययोगाच्च । यदि सूतसंहि
वचनैर्नीलकण्ठत्वादि वैशिष्ट्य बोध्यमान प्रमाणान्तरविरोधोन स्यात् । त
नीलकण्ठत्वादिवैशिष्ट्यसिध्या शिवादिशब्दानामुत्तीर्णे प्रयुक्तानां तादृ
बोधकत्वं स्यात् । न च तत् सिध्यतीत्युक्तम् । नचाथर्वशिरश्शिखादिम
प्रबलत्वं सूतसंहितावचनानामिति न प्रमाणान्तरेण बाध इति युक्तं । नीलक
विशिष्टवस्तुबोधनांशे शिवादिशब्दानां सूतसंहिताद्युपजीवित्वेन तदंशे तन्मूल
योगात् । अन्यथा अन्योन्याश्रयात् नीलकण्ठत्वादिविशिष्टबोधकत्वे
शिवादिघटितार्थर्वशिरश्शिखादिमूलत्वेन प्राबल्यात् । सूतसंहितादिभिः
कण्ठत्ववैशिष्ट्यबोधनमुत्तीर्णे सिध्यति तत्सिद्धौ चोत्तीर्णविषयक शिवादिश
नीलकण्ठत्वविशिष्टवस्तुबोधकत्वसिद्धिरिति । तथा च भारतादिवचनैः नारा
तुरीयत्वावेदकैर्महाजन परिग्रहातिशय लब्धप्रामाण्यैर्नारायण कारणत्वावेद
बाल्याद्यनेक श्रुतिमूलत्वजनित निरङ्कुशप्रवृत्तिभिर्बाध एव सूतसंहि

वचनानां युक्तम् । ननु नारायणोत्तीर्णत्वपरवचनानां स्वव्यूहत्रयोत्तीर्णत्व-परत्वेनान्यथासिद्धत्वात् न ततो नारायणस्य तुरीयत्वसिद्धिः । सृष्ट्यधिकार-सामान्यात् ब्रह्मादिव्यपदेशोपपत्तेः ।

एका भगवतीमूर्तिर्ज्ञानरूपाशिवामला ।
वासुदेवाभिधानासा गुणातीता सुनिष्कला ॥
द्वितीयारुद्रसंज्ञास्यात्तामसीशेषसंज्ञिता ।
निहन्ति सकलं चान्या वैष्णवी परमातनुः ॥
सत्वोद्रिक्ता तृतीयान्याप्रद्युम्नेति च संज्ञिता ।
जगत् स्थापयते सर्वं स विष्णुः प्रकृतिध्रुवा ॥
चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेति संज्ञिता ।
राजसी चानिरुद्धाख्या पुरुषसृष्टिकारिकेति ॥

कौर्मे तेषां तद्व्यपदेशदर्शनाच्चेति चेन्न । तथा सति ब्रह्मादिशब्दानां तादृशबहुवचनस्थानां मुख्यार्थभङ्गापत्तेः । **कौर्मवचनं** तु तमोधिष्ठात्री-शेषसंज्ञिता । द्वितीया वासुदेवस्य मूर्तिः । रुद्रात्मनावतीर्य रुद्रसंज्ञिता सती सकलं निहंतीत्येवमर्थकत्वेनोपपन्नमिति न तत् ब्रह्मादनिरुद्धादीनां ब्रह्मादि शब्दवाच्यत्वसिद्धिः । सूतसंहितावचनानुसारान्मुख्यार्थभङ्गो न दोष इति चेत् - अहो मौर्ख्यं तव यल्लोकप्रसिद्ध प्रामाण्यातिशयानां भारतादिवचनानां त्वादृश-कतिपयगोष्ठिमात्रसिद्धप्रामाण्यैः तथाविधसंस्ताकैश्च वचनैर्बाधं ब्रूषे । - किञ्चैवं 'यस्य प्रसादादहमच्युतस्य भूतप्रजासर्गकरोन्तकारि । क्रोधाच्च रुद्रस्थिति हेतुभूतोयस्माच्च मध्ये पुरुषः परस्तादि'ति चतुर्मुखवक्तृके वाक्ये कथमन्यथा-सिद्धिमुपपादयसि - यत्तु अहंकाराभिमानित्वादनिरुद्धस्य वैकारिकस्तैजसश्च ताम-सश्चेत्यहं क्रिये'ति अत्रैव तत्रापि नामैकदेशत्वेनाहं शब्दप्रयोगोपपत्तेर्वक्तृपरत्वेपि यस्माच्च मध्य पुरुष इत्यत्र पुरुष पदस्य प्रद्युम्नपरत्वेनाप्युपपत्तेश्च न विष्णो-स्त्रिमूर्त्युत्तीर्णत्वं सिध्यतीति, तत्तुच्छं । स्वरसतः प्रतीयमानं वक्तृपरत्वं परीत्यज्याति-क्लेशेननामैकदेशत्वं स्वीकृत्यान्यथा सिद्धिकरस्य विद्वद्गोष्ठीबहिष्ठत्वात् ।

अथ चैवं । 'मद्रूपमास्थाय सृजत्यजोयः स्थितौ च योसौ पुरुषस्वरूपः । रुद्रस्वरूपेण च योत्ति विश्वं धत्ते तथानन्तवपुस्समस्तमि'त्युत्तरश्लोके । कां गतिं यास्यसि तत्राहङ्कारशब्दैकदेशग्रहणरूपकुसृष्टेरप्यनवकाशात् । न च तस्य शब्दस्य प्रत्ययोत्तरपदयोश्चेत्यादेश सम्भवः । युष्मदस्मदोरनादेश इत्यधिकृत्य विहितत्वात् । पुरुषपदस्य प्रद्युम्नपरत्वेनोपपत्तेरित्यप्यत्रगतम् । 'यत्र प्राये श्रूयते यच्च तत्तादृगवगम्यते' इति न्यायेन रक्षणाधिकृतविष्णुपरत्वस्यैवौचित्यात् । प्रद्युम्न एव रक्षणाधिकृत इति चेत् तर्हि त्रिमूर्तिमध्यगतो विष्णुः स एवेति ब्रह्मादित्रितयोत्तीर्णत्वसिध्या नारायणस्यात्ममनोरथसिद्धेः । नह्यतिरिक्तं ब्रह्मण-स्तुरीयत्वं नामास्ति । यदपि पुराणप्रतिपाद्यनारायणं प्रस्तुत्य 'स परस्सर्व-शक्तीनां ब्रह्मणः समनन्तर' इति तस्य जगत्कारण ब्रह्मावरत्वमुक्तमिति । तदपि अतिक्षुद्रं 'एवं प्रकारममलं नित्यं व्यापकमक्षयम् । समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥ तद्ब्रह्म परमं योगी पुनर्नावर्तते यत' इत्यनन्तरोपक्रमविरोध-प्रसङ्गात् । अतो न ब्रह्मावरत्वं तस्यार्थः । किन्तु पूर्वं एवं प्रकारमित्याद्यनन्तरं 'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तिमेव च । क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थित' इत्यादिना ब्रह्म-विष्णु-शिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः । ततश्च देवास्ततो न्यूना दक्षादयस्तथा ॥ ततो मनुष्याः पशवो मृगपक्षिसरीसृपाः । न्यूनान्यूनतराश्चैव वृक्षगुल्मलतास्ततः ॥ यदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भाव तिरोभाव जन्मनाश विकल्पवत् ॥ सर्वशक्तिमयो विष्णुरि'त्यन्तेन रूपद्वयं प्रतिपाद्य तद्विलक्षणमादित्यवर्णं तमसः परस्तात्, यदा पश्यः पश्यते रुक्मवर्णमित्यादि श्रुतिप्रतिपन्नमुक्तिसाधनीभूतंरूपं स्वरूपं ब्रह्मणः परमं मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यते । सालम्बनो महायोगः स बीजो यत्र संस्थितेः । मनस्यव्याहते सम्यक् यज्यतां जायते मनः ॥ इति प्रतिपाद्यानन्तरं स पर इत्येतत्पठितमिति तदनुगुण एव तस्यार्थः । स च स विष्णुः प्रतिपादित-ब्रह्मादिरूपाणां पर उत्कृष्टः यदेतत्स्वरूपं ब्रह्मणः परमित्यादिना प्रतिपादितं रूपानन्तरं तत् ब्रह्मणोन्तरङ्गमिति । तथा च । ब्रह्म विष्णु शिवा ब्रह्मन् इत्यादिना शक्तित्वेनोपवर्णितब्रह्मादि तुल्यतानिराकरणार्थं स परः सर्वशक्तीनामिति

विष्णोरतिशय उच्यते । ब्रह्मणस्समनन्तरमित्यनेन तु तृतीयस्वरूपस्यान्तरङ्गत्व-मुच्यत इति । ब्रह्मणः समनन्तर इति पाठेप्युत्तीर्णस्य त्रिमूर्त्यन्तर्गत विष्णोश्च भेदभ्रमो मा भूदिति ब्रह्मणः समनन्तरं ब्रह्मणानन्तरं पठितः सर्वशक्तीनां परः सर्वशक्त्युत्तीर्णपरब्रह्माभिन्न इत्यभेदोभिधीयते । वस्तुतस्तु ब्रह्मणः समनन्तरं मूर्तं ब्रह्म महाभागेत्युत्तरवाक्यस्थसामान्याधिकरण्यबलात् नपुंसकान्त पाठ एव युक्तः । तथा च विष्णोर्ब्रह्मान्यत्वमनेन प्रतिपाद्यत इति वचनं पूर्वसन्दर्भापर्यालोचना-जृम्भितम् । उत्तरसन्दर्भापर्यालोचना जृम्भितञ्च ।

> उत्तरत्र सर्वं ब्रह्ममयो हरिः ।
> तत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् ॥
> ततो जगज्जगत्तस्मिन् सजगच्चाखिलं मुने ।
> क्षराक्षरमयो विष्णुर्बिभर्त्यव्यय ईश्वरः ॥

इति जगत्कारणत्वादेर्विष्णुनिष्ठत्व प्रतिपादनात् ब्रह्मरूपत्वेन कथितयोः क्षराक्षरयोः क्षराक्षरमयो विष्णुरिति विष्णुपरत्व कथनाच्च । भगवतो ब्रह्मत्वावेदनात् महावाक्यतात्पर्यविरुद्धं च । ब्रह्मावरत्वकथनं आदिमध्यान्तपर्यालोचनायां कृत्स्नस्यास्य पुराणस्य भगवत्पारम्य प्रतिपादनैकान्तत्वावसायात् सत्वरजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः । परमपुरुष एक इहास्य धत्तेस्थित्यादयो हरिविरिञ्चि हरेति संज्ञां श्रेयांसि तत्र खलुसत्वतनोर्नृणांस्युरि'ति पुरुषशब्दवाच्यस्य नारायणस्यैव त्रिमूर्तिरूपेण सृष्टयादिकर्तृत्वं प्रतिपादयत् 'श्रेयांसि तत्र खलु सत्व-तनोर्नृणांस्युरि'ति मध्यस्य विष्णोर्मुक्तिहेतुत्वप्रतिपादनमुखेन कारणीभूतपुरुष-वाच्यनारायणाभिन्नत्वं प्रतिपादयतीति नारायणातिरिक्तवस्तुसद्भावतात्पर्यम्, भागवतस्तस्यास्तीति वचनमुपपत्तिशून्यम् । नारायणकलाःशान्ता भजन्त्यस्यान-सूयवः । रजस्तत्वप्रकृतयः सत्वशीलान् भजन्ति ॥ पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सव इति । शिवादिभजनस्यैव हि फलसाधनत्वस्य भगवद्भजनस्य मुक्तिहेतुत्वस्य स्फुटीकारात् । यदपि ।

सृजत्यशेषमीशस्य शासनाच्चतुराननः ।
तिसृभिर्मूर्तिभिश्चापि पातिचेत्तन्निहंति च ॥
विष्णुः पाल्यते विश्वं विश्वयोनेर्नियोगतः ।
सृजते ग्रसतेचापि स्वकाभिस्तनुभिस्त्रिभिः ॥
हरत्येतज्जगत्सर्वं हरस्तस्यैव शासनात् ।
सृजत्यपाच्च विश्वात्मा त्रिधाभिन्नस्तुरक्षति ॥

इति **शिवपुराणे** स्वव्यूहसहितानां ब्रह्मविष्णुरुद्राणां शिवनियोगेन स्व स्वप्र
प्रवृत्युपन्यासेन शिवस्योत्तीर्णपरवचनानां न भवमृडहररूप स्वरूपतयोत्ती
परत्वेनान्यथा सिद्धमिति वैषम्यमिति तदप्यसारम् । **भीष्मपर्वणि** —

सृष्ट्वा सङ्कर्षणं देवं स्वयमात्मानमात्मना ।
सृजस्त्वमात्मना कृष्ण प्रद्युम्नं चात्मसंभवम् ॥
प्रद्युम्नश्चानिरुद्धं च संप्राहुर्विष्णुमव्ययम् ।
अनिरुद्धोऽसृजत्साम्बं ब्रह्माणं लोकधारिणाम् ॥

इति । पृथक् व्यूहभूत सङ्कर्षणादीनां साम्बशब्दवाच्यस्य रुद्रस्य चतुर्मुखस्य
भगवत उत्पन्नत्वावगमेन भगवदुत्तीर्णत्वपरवचनानां स्वव्यूहत्रयोत्तीर्णत्वपर
नान्यथासिद्धिवर्णनानुपपत्तेस्तुल्यत्वात् । **सुपर्णवैकुण्ठसंवादे च** - 'मय
चतुर्धात्माविभक्तः प्राणिषु स्थितः' इत्यादिना व्यूहप्रतिपादनानन्तरं अन
चतुर्धा यत् सम्यक् त्वं श्रोतुमर्हसीति ब्रह्माद्युत्पत्तिप्रतिपादनाच्च । तस्म
नारायणोत्तीर्णत्ववचनैः शिवस्य तथात्व प्रतिपादकवचनानां बाध एवोचित
दिक् । नन्वथापि नारायणस्य तुरीयस्य प्रतिपादकप्रमाणानि शिवस्य तथा
प्रतिपादकप्रमाणबाधनं कर्तुं न शक्नुवन्ति । शक्ति विशिष्टस्य शिव
परब्रह्मत्वाङ्गीकारेण नारायणस्य पराशक्तिभूतभवानिरूपत्वाङ्गीकारेणतत्प्र
पादकतया नारायणोत्तीर्णत्वप्रतिपादकप्रमाणानामन्यथासिद्धत्वात् । न
नारायणस्य पार्वत्यभेदे मानाभावः । **कूर्मपुराणवचनैस्तथावगमात्** । तथा हि

'कूटस्थोह्यक्षरोस्यात् योगी नारायणाह्वयः ।
तारकः पुरुषोह्यात्मा केवलं परमं पदम् ॥
सैषामहेश्वरी गौरी मम शक्तिर्निरञ्जना ।
शान्ता सत्यासदानन्दा परं पदमिति श्रुतिः ॥'

इति । तत्रोक्तम् । अत्र केवलं परमं पदमित्यनेन कृष्णमहिमवर्णनानन्तरं कथमयं परमंपदं शक्तिर्हितत् पुराणप्रसिद्धेति शङ्कायां सैषामहेश्वरीति श्लोकः पूर्वोक्तः कृष्ण एषा माहेश्वरी गौरी ममशक्तिः अस्याः परमं पदमिति प्रसिद्धि-रस्तीत्येतदभेदात् कृष्णोऽपि परमं पदमित्युक्तिरुपपद्यत इति भावः । तथा पुत्रार्थं कैलासे कृततपश्चरणाय कृष्णाय शिवेनाभिमतवरे दत्ते गौरीवचनम् ।

'वत्सजाने तथानन्तामिश्चलान् सर्वदाच्युत ।
अनन्यामीश्वरे भक्तिमान्यामपि च केशव ॥
त्वं हि नारायणः साक्षात् सर्वदा पुरुषोत्तम ।
प्रार्थितो दैवतैः पूर्वं संजातो देवकीसुतः ॥
पश्यत्वमात्मनात्मानं अमलं परमं पदम् ।
नावयोर्विद्यते भेद ऐक्यं पश्यन्ति सूरयः ॥'

इति । 'प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि तद्वीर्यमाहितम् । त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामह ॥' इति । **ब्रह्माण्ड पुराणे** – नावयोर्विद्यते भेदोमच्छक्तिस्त्वं न संशयः' इत्यादि पुराण वचनात् । 'उमाया स हरिः साक्षात् यो हरिः सा शिवास्मृते'ति वचनात् । **लिङ्गपुराणे** –

एषबीजी भवान् बीजं अहं योनिस्सनातनः ।
स एवमुक्तो विश्वात्मा ब्रह्मा विष्णुमपृच्छत ॥
भवान् योनिरहं बीजं कथं बीजी-महेश्वरः ।
एनं मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ॥

ज्ञात्वादिविषदोत्पत्तिं ब्रह्मणो लोकतंत्रि ग: ।
इमं परमसूक्ष्मार्थे प्रश्नमभ्यवदद्धरि: ।।
अस्मान्महत्तरं भूतं गुह्यमन्यन्न विद्यते :
महत: परमव्यक्तं शिवमध्यात्मिनां परम् ।।
द्वैधी भावेनचात्मानं प्रविभज्यव्यवस्थित: ।
निष्कलं सूक्ष्ममव्यक्तं सकलस्तु महेश्वर: ।।
अस्य मायाविधिज्ञस्य अगम्य गगनस्य च ।
पुरालिङ्गादभूद्बीजं प्रथमं त्वादिसर्गिकम् ।।
मम योनौ समासिक्तं तद्बीजं कालपर्ययात् ।
हिरण्मयमकूपारे योन्यामण्डमजायत ।।'

इति । विष्णो: शिवक्षेत्र स्फुटीकरणात्तुरीय कोटिनिविष्टस्यापि नार
शिवोपसर्जनत्व सम्भवात् । न शिवस्य तुरीयत्वे किञ्चित् बाधक
अत्रोच्यते - न तावद्विष्णोरन्योपसर्जनत्वं सम्भवति । मैत्रायणीय
स्वतन्त्रचैतन्यं स्वमहिम्निप्रतिष्ठमानं पश्यतीति स्वतन्त्रत्वम् । नन्वाधारत्वप्रति
विरोधात् अचलममृतं ध्रुवं विष्णुसंज्ञं सर्वाधारं धामेति बहुकृत्वाभ्यासेन
भगवति तात्पर्यातिशयात् न तस्येशे कश्चन तस्य नाममहद्यश इत्यम्भस
च भगवतोऽनन्येश्वरत्वम् श्रूयत इति तद्विरोधाच्च नान्योपसर्जनत्वस
किं च पतिं विश्वस्यात्मेश्वरं शिवमच्युतमिति नारायणानुवाके अन
प्रतिपाद्यते । आत्मेश्वरशब्दस्य तदर्थकत्वात् पतिं विश्वस्येत्यनेन नैव स
सिध्या तस्य तदर्थकत्वस्य वाच्यत्वात् । न च पतिं विश्वस्येत्यनेनाचेतन
ईश्वरत्वं प्रतिपाद्यत इति वाच्यम् । असङ्कोचेन पतिं विश्वस्येत्यस्यैव
चेतनोभयेश्वरत्वप्रतिपादकत्व सम्भवे वस्तुत आत्मेश्वरमित्यस्यानर्थक्यापा
तस्मादात्मेश्वरमित्यस्यानन्येश्वरप्रतिपादकत्वे नैव सार्थक्यमिति तद्वि
नान्योपसर्जनत्व सम्भव: ।

अपि च **कठवल्लिषु** ' पुरुषान्नपरं किञ्चित् साकाष्ठा सा परागतिरि'ति भगवदधिकत्वनिषेधेन तद्विरुद्धानां **विरोधाधिकरणन्यायेन** ( जै. सू. 1-3-2) बाधितार्थकत्वाच्च, नार्थतथात्वसाधकत्वम् । नचास्याः श्रुतेः अन्यपरत्वं शङ्कितुं शक्यम् । पुरुषशब्दस्य '**यथापुरुषशब्दोऽयं** वासुदेवेऽवतिष्ठते - तथा शङ्करशब्दोऽयं महादेवे व्यवस्थितः' इति **दृष्टान्तत्वेनोपन्यासात्** । यद्वा पुरुषशब्दोऽयं 'रूढ्या वक्तिजनार्दनमि'त्यादि प्रमाणैश्च भगवदसाधारणत्वात् । न च तद्विष्णोः परमं पदमित्युपक्रमे व्यतिरेकनिर्देशादन्यपरत्वशङ्का । विष्णवाख्यं परमं पदमिति **नारायणोपनिषद**नुसारेण षष्ठया अभेदेप्युपपन्नत्वस्याङ्गीकर्तव्यत्वात् ।

सात्विकोपबृंहणान्यपीममर्थमनुरुन्धन्ति । **तत्र महाभारते सभापर्वणि** । राजसूयाध्वरे अग्रपूजार्हत्वप्रतिपादनार्थं महता प्रबंधेन भगवदुत्कर्षवर्णनं कृत्वा —

---

**विरोधाधिकरणम् :—**

ज्योतिष्टोमे सदोनामकस्य मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च वाससावेष्टनं स्मर्यते — 'औदुम्बरी सर्वावेष्टयितव्या' इति । सा स्मृतिः प्रमाणम्, अष्टकादि स्मृतिष्विव मूलवेदस्यानुमातुं शक्यत्वादिति पूर्वः पक्षः ।

सिद्धान्तस्तु 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षवेदवचनेन स्पर्शो विधीयते । न च सर्ववेष्टने स्पर्शः सम्भवति । अतो विप्रलम्भक वाक्यवन्निर्मूला स्मृतिरप्रमाणम् ।

अस्मिन्नेवाधिकरणे मतान्तरमाह — स्पर्शसर्ववेष्टन विषययोः प्रत्याक्षानुमितश्रुत्योः परस्परविरोधादुभयोरप्यप्रामाण्यमिति पूर्वः पक्षः ।

अनुमानस्य कालात्ययापदिष्टतया विरुद्धश्रुत्यभावेन स्पर्शश्रुतिः स्वार्थे प्रमाणम् । यदि पुरुषान्तर प्रत्यक्षवेदः सर्ववेष्टन स्मृतेर्मूलमित्युच्यते, तर्हि माभूत्तस्या अप्रामाण्यम् । तथाऽपि परप्रत्यक्षात्स्वप्रत्यक्षस्याभ्यर्हितत्वेन स्पर्श एवात्रानुष्ठेयो न तु सर्ववेष्टनम् ॥ ( जै. सू. 1-3-2 )

'यथा बुद्बुद उत्थाय तत्रैव तु निलीयते ।
चराचराणि भूतानि तथा नारायणे सदा ॥
न प्रमातुं महाबाहुश्शक्यो भारत केशवः ।
परमं हि परमस्तस्मात् विश्वरूपान्नविद्यते ॥'

इति तदधिकत्वनिषेधः कृतः । **भीष्मपर्वणि** ।

'न परं पुण्डरीकाक्षात् दृश्यते भरतर्षभ ।
श्रुतं मे तात रामस्य जामदग्न्यस्य जल्पतः ॥
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥'

इति । **शान्तिपर्वणि मोक्षधर्मे अनुस्मृतौ** । 'यस्मात् परतरं नास्ति तमस्मि शरणं गतः' इति । **आनुशासनिके** ।

'नारायणाज्जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते ॥
नारायणपरं ब्रह्म तत्वं नारायणः परः ।
परादपि परश्चासौ नास्ति तस्मात्परात्परम् ॥' इत्युक्तं ।

**आश्वमेधिके पर्वणि**– 'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो राजन् नाहं कञ्चिदुपाश्रितः ॥
ममाश्रयो न कश्चित्तु सर्वेषामाश्रयोह्यहम् ।
इदं रहस्यं कौन्तेय प्रोक्तवानहमव्ययम् ॥'इति ।

**श्रीहरिवंशे** – 'एतदेवपरं वस्तु नैतस्मात्परमस्तिवः ।
एतमेव विजानीध्वमेतद्वः परमं तपः ॥' इति ।

**श्रीवराहे** – 'नारायणात् परोदेवो न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानाञ्च सत्तम ॥' इति ।

**एवमादित्य पुराणे** – 'अहं विष्णोस्तु संभूतः स च सर्वमयो हरिः ।
न तस्य परमो भूतं विद्यते यत्तदुत्तमम् ॥' इति

**गीतश्च भगवता** – 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय । इति ।

'सत्यं सत्यं पुनस्सत्यं उद्धृत्यभुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥'

इति च प्रसिद्धम् । तथा **प्राजापत्यस्मृतौ** –

'नारायणं परित्यज्य हृदिस्थं प्रभुमीश्वरम् ।
योन्यमर्चयते देवं परबुध्या स पापभागिति ॥'

**ब्रह्मांडकौर्मयोश्च** – 'येन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः ।
नारायणाज्जगन्नाथात्ते वै पाषंडिनः स्मृताः ॥'

इति । **भागवते** भगवन्तं प्रस्तुत्य –

'**अस्मादन्यं परत्वेन चेतयानोह्यचेतनः ।**
**सपाषण्डीति विज्ञेयः सर्वकर्मबहिष्कृत ॥'**

इति एवं प्रबलतर सात्विकोपबृंहणेषु भूतेषु वैष्णवादिषु पुराणेषु बहूनि वचनानि सन्तीति तद्विरोधात् **कौर्माद्युक्तं** भगवतोन्योपसर्जनत्वं केवलं **शिवस्तुत्यर्थ-मित्युन्नीयते** । न च **कौर्मा**दिवचनविरोधाद्वैष्णवादि पुराणगतवचनानां स्तावकत्वं किमिति नोच्यत इति वाच्यम् । तदर्थनिर्धारणापत्तेः । न च **शैव-पुराणानां** संख्यया भूयस्त्वात् तदादाय प्राबल्यमिति वाच्यम् । असिद्धेः ।

'चतुर्भिर्भगवान् विष्णुः द्वाभ्यां ब्रह्मा तथा रविः ।
अष्टादशपुराणेषु शेषेषु भगवान् शिवः ॥'

इति । वचनं प्रत्यक्ष विरुद्धम् । वराह, वामन, वैष्णव, नारदीय, नारसिंह, पाद्म, गारुड, भागवत, मार्कण्डेय, ब्रह्माण्डेषु भगवत्पारम्य प्रतिपादनात् ।

'अष्टाभिः कथ्यते विष्णुर्दशभिः कथ्यते शिवः ।'

इत्यपि वचनं प्रत्यक्षविरुद्धमेव । वचनद्वयञ्च परस्परविरुद्धम् । हिरण्यगर्भादि-प्रतिपादकपुराणादि भगवद्वचनविरुद्धं च । न चैतेषु शिवमाहात्म्यमपि प्रति-

पायत इति कथं विष्णुपारम्यप्रतिपादकत्वमिति वाच्यम्। तर्हि शिवपारम्य प्रतिपादकेष्वपि पुराणेषु भगवन्माहात्म्यस्यापि प्रतिपादनमिति तुल्यत्वात्। तस्मात् परस्परविरोधे सति समान विद्यास्थान परिग्रह विशेषपरिष्कृत भारतादि-संवादवत्वाद्वैष्णवपुराणादिपर्यालोचनयैव श्रुत्यर्थनिर्धारणं युक्तम्। सात्विकत्वेन वैष्णवपुराणानां प्राबल्यमिति निपुणतरमुपपादयिष्यते। **महाभारतस्य** देवतान्तरपारम्यतात्पर्यकत्वमपि निराकरिष्यते। - 'यानि विष्णोः शिवक्षेत्रत्व-प्रतिपादकानि तानि 'अहं बीजप्रदः पिता मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्'। इति भगवद्गीता विरुद्धानि। लिङ्गपुराणभगवद्गीता वचनयोः विरोधे लिङ्गपुराणवचनं प्रबलमिति न मौढ्यादृते वक्तुं शक्यम्।

**मनुस्मृतौ**— 'सोमिध्याय शरीरात् स्वात् सिसृक्षुर्वि(वि)धाः प्रजाः।
अप एव ससर्जादौ तासुवीर्यमपासृजत्॥
तदण्डमभवद्धेमं सहस्रांशु समप्रभम्।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥
आपोनारा इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेम नारायणःस्मृतः॥'

इति। प्रतिपादनात् तद्विरुद्धानि तथा विष्णुः स्वयंभूर्भगवान् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासुवीर्यमपासृजत्। 'आपो नारा इति प्रोक्ता नाम्ना पूर्वमि'ति श्रुतिः। ता यदस्यायनं पूर्वं तेन नारायणःस्मृतः। हिरण्यवर्ण-मभवत् तदण्डमुदकेशयम्। तत्र जज्ञे स्वयंब्रह्मा स्वयंभूरिति न श्रुतिरिति **हरिवंशवचन** विरुद्धानि।

'अतीन्द्रियः परोव्यक्तात् अन्तर्यामी सनातनः।
नारायण इति ख्यातः स एव स्वयमुद्बभौ॥
स्वशरीरादभिध्यायन् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासुवीर्यमपासृजत्॥
तदेवाण्डं समभवद्धेमरूपमयं महः॥'

इत्यादि । मात्स्यवचनविरुद्धानि च –

वस्तुतस्तु बीजशब्दस्य सप्तमधातुः परत्वे प्राकृतवपुष्टप्रसङ्गेन वृद्धि-मिच्छतो मूलहान्यापत्तेरिति न्यायेनाभ्युपगत ब्रह्मत्वहानि प्रसङ्गात् । कार्योत्पादनशक्ति परत्वस्य वाच्यत्वात् न लैङ्गादि वचनानि शिवपत्नीत्वं स्थापयितुं शक्नुवन्ति । स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः । प्रकृतिस्पर्श-राहित्यात् स्वातंत्र्याद्वैभवादपि । स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते । स्त्रीप्रायमितरत्सर्वं जगत् स्थावरजङ्गममिति । नारसिंहपुराणवचने भगवतोऽन्यस्य स्त्रीप्रायत्वं भगवतस्तु पुरुषधर्मपौष्कल्यं प्रतिपाद्यत इति तद्विरोधादपि न शिवपत्नीत्वकल्पनं युक्तम् । शिवनामिशिलायाः केशव क्षेत्रत्वबलात् विष्णोः शिवपत्नीत्वसाधनं तु मौढ्य साम्राज्य विलसितम् । विष्णुमूर्तिषु अपि गोपालादि-मूर्तिषु कूर्मादिक्षेत्रत्व दर्शनेनावतारान्तरपत्नीत्व प्रसङ्गात् हरिहरमूर्तिरपि नरसिंह हयग्रीवादिवत् विष्णोः शिवस्य पत्नीत्वाद्रूपान्तरमिति न तत्र वामार्धत्वम् पत्नीत्व-साधकम् । तस्मान्नारायणोत्तीर्णत्वप्रतिपादकवचनविरोधात् शिवस्य तथात्व-प्रतिपादकवचनानि न स्वार्थसमाधानक्षमाणीति न शिवस्योत्तीर्णत्वं प्रमाण-पथानुयायि इति न तमादाय शिवप्रकरणत्व प्रतिपादकवाक्यानां अयोग्यार्थत्व परिहारः शक्यते कर्तुमिति सर्वं समञ्जसमिति सङ्क्षेपः ।

ननु मास्तु शिवस्य सर्वोत्कर्षत्वम् । अथापि भक्ता साम्यं तु स्यात् मूर्तित्रयस्य केषुचिद्वचनेषु साम्यप्रतीतेः । तथाहि ।

'तपसा तोषयित्वा तं पितरं परमेश्वरम् ।
ब्रह्म नारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥
कल्पान्तरेपुनर्ब्रह्मा रुद्रं विष्णुं जगन्मयम् ।
विष्णुश्च भगवानाद्यं ब्रह्माणमसृजत् पुनः ॥
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ।
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ॥
परस्परस्माज्जायन्ते परस्परजयैषिणः ।
तत्तत्कल्पान्तवृत्तान्तमधिकृत्यमहर्षिभिः ॥

प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ।
तत्तत्कल्पवृत्तान्तमधिकृत्यमहर्षिभिः ॥
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।
अयं परः परोनेति सम्रम्भाभिनिवेशिनः ।
यातुधाना भवन्त्येव पिशाचाश्च न सम्शयः ॥'

इत्यादिषु साम्यं प्रतीयते । एवं च । **यत् जुहवं गृह्णाति प्रयाजेभ्यस्तत् यदुपभृति प्रयाजानुयाजेभ्यस्तदि**ति जौहवस्य औपभृतस्य चाविशेषे प्रयाजार्थत्व श्रवणेप्यतिहायेडोर्बर्हिः प्रति समानीयते जुह्वामौपभृतमिति जुह्वामौप भृताज्य समानयनकालविधिबलात् तत्पूर्वोत्तरप्रयाजविशेषविषयतया व्यवतिष्ठ इति न कश्चिद्विरोधः । एवं हि सर्वपुराणप्रामाण्यं संरक्षितं भवति इति चेन्न पूर्वपरिच्छेदोदाहृतश्रुतिभिर्जगत्कारणतयावगतेन नारायणेन न ब्रह्मा नेशानो व्युदस्तयोस्साम्यायोगात् नचैकोहवै नारायण इत्यादिकं कल्पविशेषविषयक तयानेतुं शक्यमिति **प्रथमपरिच्छेदे** व्यक्तमुपपादितम् ।

किं च किं त्रयाणामीश्वरत्वमभिमतमुत त्रिषु न कस्यचिदीश्वरत किन्त्वन्यस्यैवेति । नाद्यः । कल्पविशेषविषयतया व्यवस्थितैश्वर्यशालिन त्रयाणामीश्वरस्यानुपपन्नत्वात् व्यवस्थितैश्वर्यशालिनामपीश्वरत्वे इन्द्रादीनामां तथात्वापाताच्च । न द्वितीयः । उत्तीर्णपक्षस्य भारतादिप्रमाणविरुद्धत्वोप पादनात् ।

यत्तु 'तपसा तोषयित्वा तमि'त्यादि वचनबलात् साम्यं प्रतीयत इति

'तत्राहं प्रसादजस्तुभ्यं लोकधात्रे स्वयंभुवे ।
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ॥
चाक्षुषं वै द्वितीयं मे आसीज्जन्म पुरातनम् ।
त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ॥
त्वत्तो मे श्रवणं चापि चतुर्थं जन्म मे विभो ।
नासिक्यं नैव मे जन्म त्वत्तः पञ्चममुच्यते ॥

अण्डजंचापि मे जन्म त्वत्तः षष्ठं विनिर्मितम् ।
इदं तु सप्तमं जन्म पद्मजं मेऽमितप्रभो ॥
सर्गे सर्गेप्यहं पुत्रस्तव त्रिगुणवर्जितः ।
प्रथितः पुण्डरीकाक्ष प्रधानगुणकल्पित ॥'

**इति हयशिरोपाख्याने** चतुर्मुखस्य सर्वेषु कल्पेषु भगवत उत्पत्ति प्रतिपादन-विरोधात् नह्यस्वार्थसाधकत्वसंभवात् । **वसन्ते वसन्ते ज्योतिषा यजेतेति वाक्ये** ( जै. सू. 6-2-11 ) वीप्सा बलात् सर्ववसन्तकाल सम्बन्धित्ववत्सर्गे सर्ग इत्यात्रापि वीप्सा बलात् सर्वसर्ग सम्बन्धित्वस्य भगवत् सकाशाच्चतुर्मुखोत्पत्तौ प्रतीयमानत्वात् । तथा ।

---

**वीप्सायाः नित्यताधिकरणम् :—**

इदमाम्नायते – 'सोमेन यजेत' 'स्वाध्याय मधीयीत' प्रजामुत्पादयेत्' इति । तत्र सोमः काम्यः, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति कामसंयोगे-नाम्नातत्वात् । अध्ययन प्रजोत्पादनयोरपि विश्वजिन्नयायेन स्वर्गे फलत्वेन कल्पिते कमियोगोऽपि कल्प्यते । तस्मात् - इदं त्रयं काम्यमिति चेत् ।

मैवम् । वीप्सादिना नित्यत्वसिद्धेः । 'वसन्तेवसन्ते ज्योतिषायजेत' इति वीप्सा प्रतिवसन्तं निमित्तीकृत्य सोमयागं विधत्ते । अध्ययनस्य तु न स्वर्गः फलम्, दृष्टप्रयोजनस्यानुष्ठेय विज्ञानस्य सम्भवात् । तत्र क्रत्वनुष्ठानस्य नित्य-त्वात्तद्धेतोरध्ययनस्यापि नित्यत्वमनिवार्यम् । 'अनुत्पाद्य सुतान्न लोकं गच्छति' इति स्मृतेर्लोक सिद्ध्यर्थमुत्पादनस्यापि नित्यत्वम् । अनेनैवाभिप्रायेणेदमाम्नातम् 'जायमानो हवै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः एषवा अनृणो यः पुत्री यज्वा ब्रह्मचारी इति । अत्र ब्राह्मण ग्रहणमितरयोरप्युपलक्षणार्थम् । सोमादि विधिषु विशेषस्याश्रवणात् । तस्मात् सोमादिकं नित्यम् । ( जै. सू. 6-2-11 )

'कल्पादावुद्भवन्त्येते कल्पान्ते यान्ति संहृतिम् ।
ब्रह्मेशानादयो विष्णुरेकस्तिष्ठति सर्वदा ॥
पुरायः प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ॥
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा सतु नारायणः प्रभुः ॥'

इत्यादि वचन विरोध उद्भाव्यः । तस्मान्न देवतान्तरसाम्यं भगवतः प्रमाणपदवीं अधिरोहतीति दिक् ।

नन्वस्तु मूर्तित्रयैक्यपक्षः । तत्र च नानेकेश्वराभ्युपगमदोषः । न वा हिरण्यगर्भादिकारणत्वप्रतिपादक वाक्येषु कस्यचित् बाधः । न च न ब्रह्मा नेशान इति व्युदासानुपपत्तिः । तादृशविग्रहविशिष्टतया प्रलयकालसत्वनिषेधपरत्वेनोपपत्तेः । शिवहिरण्यगर्भादिकारणत्वप्रतिपादकवाक्यानि तु कृष्णादि कारणत्व प्रतिपादकवाक्यवद्वास्तवैक्यमादायोपपद्यन्त इति चेत् - उच्यते - अपहतपाप्मादिव्योदेव एको नारायण इत्यपहतपाप्मत्वेन श्रुतस्य 'भगवतोऽनहत पाप्मा वा अहमस्मिनाममेधेही'त्यत्रानपहतपाप्मत्वेन श्रुतेन शिवेन न तावदैक्यं सम्भवति विरोधात् ।

नापि चतुर्मुखेनैक्यं 'स प्रजापतिरेकः पुष्करपर्णे समभवदिति' कार्यत्व श्रवणेन तस्य कर्मवश्यत्वावश्यंभावात् न चावताररूपत्वेन तदुपपन्नमिति वाच्यम् । तथात्व ग्राहकप्रमाणाभावात् । न चाजायमान इति वाक्यमेव तस्यावताररूपत्वे प्रमाणं तस्य प्रजापतिश्चरति गर्भे अन्त इति प्रजापतिविषयकत्वावगमादिति वाच्यम् । पुरुषशब्द श्रवणेनैषा वैष्णवीनाम संहितेति सूक्तस्य वैष्णवत्वोक्त्या अनन्यथा सिद्धलक्ष्मीपतित्व लिङ्गेन च तस्य भगवद्विषयकत्वात् तस्य त्वष्टाविदधद्रूपमेतीत्युपक्रमश्रुतत्वष्टृशब्देन प्रजापतिशब्दस्य स्वार्थपरत्व प्रच्यवनात् । न च कर्मवश्यत्वावगम बलात् विश्वकर्मणो न त्वष्टृशब्दस्य स्वार्थपरत्वमिति वाच्यम् ।चतुर्मुखस्यापि ।

ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ।
विष्णुमायामहावर्तमोहांधतमसा वृताः ॥
प्रजापतिं च रुद्रं चाहमेव सृजामि वै ।
तौ तु नूनं न जानीतो मम मायाविमोहितौ ॥'

इत्यादिषु तथात्वावगमात् । न च शिवहिरण्यगर्भादिकारणत्वप्रत्यायकवचना-बाधाय तदैक्याभ्युपगम इति वाच्यम् ।

'अहो बत महादुःखं वेदनाजननं मम ।
प्राप्तं धुनोति हृदयं तीव्रशोकमयं स्वयम् ॥
कोहि शोकार्णवे मग्नं मामिहाद्य समुद्धरेत् ।
ब्रह्महाकुलितो भूत्वा चरंस्तीर्थानि भूतले ॥
तमोहठादवाक् देवी हिमवत्सं शिलोच्चयम् ॥'

इत्यादिषु वेदापहारगुरुपातकादिनिमित्तदुःखत्वस्य ब्रह्मादिष्वपि श्रवणेन तदैक्यं न परब्रह्मण इति तुल्यम् ।

न चैवं **रामायणादिषु** नारायणस्य सीतापहरणादिनिमित्तदुःख-त्वप्रतिपादनात् कथं परब्रह्मत्वमिति वाच्यम् ।

'ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥
तेन वञ्चयते लोकान् मायायोगेन केशवः ॥'

इत्यादि प्रमाणबलात् । दुःखित्वाभिनयस्य तामसजनमोहनार्थत्वेन तत्प्रति-पादकत्वेन **रामायणादीनां** वस्तुतो दुःखित्वसाधकत्वासम्भवात् । न चाजायमान इति वाक्यमेव त्रयाणां कर्मवश्यत्वाभावं प्रतिपादयति । वस्तु-तस्त्रयाणामैक्यादिति वाच्यम् । परस्पराश्रयप्रसङ्गात् ब्रह्मरुद्रयोर्भगवता एकी-भावसिध्या अजायमान इत्यनेन ब्रह्मरुद्रयोर्जननस्यावताररूपत्वसिद्धिः । तयो-र्जननस्यावतारत्वसिद्धौ कर्मवश्यत्वराहित्यान्यायोग्यार्थत्वमिति भगवता तयोरैक्य सिद्धिरिति ।

तस्मात् साम्यैक्योत्तीर्णव्यक्त्यन्तरपक्षाणामसम्भवात् नारायणस्यैव परब्रह्मत्वं **पूर्वपरिच्छेदोदाहृत** श्रुतिबलं अभ्युपगन्तुं युक्तम्। **तदुक्तमाचार्यपादैः** – 'आत्मैक्यं देवतैक्यं त्रिकसमधिकतातुल्यतैक्यं त्रयाणां अन्यत्रैश्वर्यमित्याद्यनिपुणभणितीराद्रियन्ते न सन्तः । त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च श्रीमन्नारायणो नः परनिखिलतनुर्मुक्तिदो मुक्तिभोग्यः' इति।

एतेन 'परमात्मविभागत्वं ब्रह्मादीनां सुरर्षभाः।
समानमपि रुद्रस्तु वरिष्ठो नात्र संशयः॥'
इत्यादिवचनबलाच्छिवस्य ब्रह्मविष्ण्वपेक्षयातिशयित्वमिति निरस्तम्।

केषाञ्चनसूतसंहितादिवचनानामर्थतथात्वसाधकत्वं तेषां वचनानां तामस पुराणस्थत्वेन यथार्थज्ञानमूलत्वाभावात्। ननु महर्षिप्रणीतेषु पुराणेषु केषांचिदयथार्थज्ञानमूलकत्वं इति कथमिदं वैषम्यमुपपद्यत इति चेत्।

**अत्राहुरस्मदाचार्याः मात्स्ये**। 'सङ्कीर्णास्सात्त्विकाश्चैव राजसास्तामसास्तथे'ति कल्पविभागमुक्त्वा

'यस्मिन् कल्पे यत् प्रोक्तं पुराणं ब्रह्मणा पुरा।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते॥'

इति अनेन तत्तत्कल्पप्रोक्तपुराणेषु तत्तत्कल्पसम्बन्धिदेवतामाहात्म्य वर्णनं तत्तद्गुणमयेन ब्रह्मणाप्रोच्यत इति प्रतिपाद्य कस्य माहात्म्यं कस्मिन् कल्पे वर्ण्यत इत्याकाङ्क्षायां।

'अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥
सङ्कीर्णेषु सरस्वत्याः पितॄणां न निगद्यते।
सात्त्विकेषु सकल्पेषु माहात्म्यमधिकं हरेः॥
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्॥'

इति प्रतिपादनाच्छिवचतुर्मुखातिशयप्रतिपादकपुराणानां रजस्तमोमूलकत्वाव-गमेन भगवत्पारम्यप्रतिपादकपुराणानां च सत्वमूलकत्वावगमेन च वैषम्यं द्वयोर्नापन्होतुं शक्यम्। सत्वस्य च यथार्थज्ञानहेतुत्वं रजस्तमसोश्चान्यथा ज्ञानविपरीतज्ञानहेतुत्वम्।

'सत्वात् सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतो ज्ञानमेव च॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं यया वेत्ति बुद्धिस्सा पार्थ सात्विकी॥
यया धर्ममधर्मं च कार्यञ्चाकार्यमेव च।
अयथावद्विजानाति बुद्धिस्सा पार्थ राजसी॥
अधर्मं धर्ममिति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ तामसी॥'

इत्यनेनावगम्यते। ननु चतुर्मुखशिवादिप्रतिपादकपुराणानां रजस्तमोमूलत्व-वचनस्य रजस्तमोमूलत्वेन प्रामाण्याभावात् सात्विकपुराणप्राबल्यासिद्धिः। अस्य वचनस्य समूलत्वे प्रमाणं नास्ति। अत एव तद्वचनमात्रस्याप्रामाण्यं युक्तम्। न तु बहूनां पुराणानां भूयसां बलीयस्त्वात्। उच्यते — न तावदस्य वचनस्य प्रामाण्ये विमतिर्न्याय्या। बाधकादर्शनात् स्वतःसिद्धप्रामाण्यस्यानपोदि-तत्वात्। यो ह खलु वास्य राजसोंऽशस्सोसौ ब्रह्मचारिणो योयं ब्रह्मा, योह खलु वास्य सात्विकोंऽशस्सोसौ ब्रह्मचारिणो योयं विष्णुः, योह खलु वास्य ताम-सोंऽशस्सोसौ ब्रह्मचारिणो योयं रुद्रः' इति। महान् प्रभुर्वै पुरुषस्सत्वस्यैष प्रवर्तक इति च। स्मृत्यागण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्त्वस्य तत्तत्कल्पे तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादितत्वपरवचनस्य उपपन्नार्थत्वाच्च सकलशास्त्रार्थव्यवस्थापके भारते च मोक्षधर्मे।

'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः॥'

इत्यादिना भगवत्कटाक्षेण सत्वमूलसम्यङ्निश्चयमुक्त्वा ।

'पश्यत्येनं जायमानं ब्रह्मा रुद्रो यथा पुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥'

इति चतुर्मुखशिवयोः कटाक्षेण रजस्तमोमूलकात्तुष्यप्रतिपादनाच्च । चतुर्मुख-शिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते । अस्य वचनस्य रजस्तमो-मूलपुराणस्थत्वेऽपि नाप्रामाण्यं शङ्कनीयम् । ब्रह्मशिवप्रतिपादनाभिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षोक्तावाग्रहासम्भवेनास्य वचनस्य तत्वपरत्वोपपत्तेः । स्वप्रति-पाद्यदेवतायामेव हि वक्तुराग्रहसम्भवः । नत्वन्यत्र । तस्मान्नास्य वचनस्य कारणदोषसम्भवः ।

यदुक्तमनेकपुराणाप्रामाण्यादेतद्वचनमात्राप्रामाण्यं युक्तं भूयसां बलीय-स्त्वादिति तदयुक्तम् । साक्षादर्थविरोधाभावात् । नहि विधिशिवप्रतिपादक-प्रबन्धानां रजस्तमोमूलत्वं नेति तेषु पुराणेषु अवगम्यते । तत्तत्प्रबन्धेष्वेव प्रमाणतया प्रतिपन्नानां तेषां प्रामाण्यं रजस्तमोमूलत्वञ्च विरुद्धमिति परम्परया विरोधः फलितः । तत्र भूयसां बलीयस्त्वमिति चेत् - यदि केवलतद्वचनमात्र-विरोधेन तेषां अप्रामाण्यं तदा स्यादयं दोषः पुराणानां परस्परविरोधेन सर्वेषा-मविशेषेण प्रामाण्ये अनुपपन्ने सर्वाप्रामाण्यादपि कतिपयप्रामाण्यसिध्यनु-गुणनिर्वाहे न्याय्ये सति कस्य प्रामाण्यं कस्यचाप्रामाण्यमिति अपेक्षायां विषय-व्यवस्थामात्रपरत्वात् अस्य वचनस्य । अतोऽनेन सत्वादिमूलत्वेनान्विते सत्वदुष्ट-मूलैः प्रबन्धैः दुष्टमूलप्रबन्धबाधः । अतो न भूयसां बलीयस्त्व नयनेनैतद्वचन-बाधः । भगवत्प्रतिपादकपुराणेभ्यो विधिशिवप्रतिपादकपुराणबाहुल्यात् तत्प्राबल्य-मिति चेत् इदं तावद्वचनम् बाधितम् । इह भूयसां बलीयस्त्वनयानवतारात् । एवं बाधकराः । तेन वचनेन सत्वादिमूलत्वे पुराणानामवगते सति दुष्टमूल-पुराणबाहुल्यमदुष्टमूलमेकमपि पुराणं न बाधितुं, प्रभवति, नहि भ्रान्तपुरुष-सहस्रवचनैरेकस्याभ्रान्तस्य वचनं बाध्यते । अतो भगवत्प्रतिपादकानां सत्व-मूलत्वान्न कारणदोषसम्भवः । श्रीमद्वैष्णवपुराणस्य तु बहूनि वैलक्षण्यानि

सन्ति। तथाहि तस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योपि प्रसिद्धिप्राचुर्याद्धर्मशास्त्रेषु मानवस्येव व्याकरणेषु पाणिनीयस्येव सजातीयग्रन्थेभ्यः प्रकर्षातिशयो नापह्नोतुं शक्य इत्येकं वैलक्षण्यम्। तत एव प्रसिद्धिप्राचुर्यात् कौर्मादेरिव नष्टकोशत्वशङ्का दूरोत्सारितेत्यपरं वैलक्षण्यम्। अनतिविस्तरत्वाच्च। पक्षोपप्लवशङ्का नावतरति। अन्यपरोक्तिप्रसिद्धपरिग्रहातिशयं च इदमपरं पराशरसन्दर्भमिति। तथा वक्तृवैलक्षण्यं च प्रत्यक्षश्रुतिसिद्धम्। 'सहोवाच व्यासः पाराशर्य' इति। अत्र पराशरात्मजत्वेन व्यासोत्कर्षमुच्यते। तथा लैङ्गेऽपि पराशरवैलक्षण्यं प्रतीयते। यथा तत्र द्वितीयेऽध्याये।

'पराशरस्यावतारो व्यासस्य च शुकस्य च।
विना तं राक्षसानान्तु कृतं वै शक्तिसूनुना॥'

इति। अत्र पराशरस्यावतार इत्युक्तिर्हि प्रकर्षातिशयार्थः। अन्यथा पराशरस्य चोत्पत्तिर्व्यासस्य च शुकस्य चेत्यपि हि वक्तुं शक्यते। पुलस्त्यवसिष्ठवरदानलब्धदेवतापारमार्थ्यज्ञानवरस्य च महद्वैलक्षण्यम्। वरलाभे सत्येतत् पुराणप्रामाण्यं तत् प्रामाण्ये सति तत्प्रतिपन्नवरलाभसत्यत्वमित्यन्योन्याश्रय इति न वाच्यम्। वरलाभवचनस्य पराशरो न लब्धवर इति बाधकप्रत्ययाभावेन स्वतस्सिद्धप्रामाण्यस्यानपोदितत्वात्। लैङ्गे च देवतापारमार्थ्यज्ञानलाभः पराशरस्यावगम्यते। यथा तत्र द्वितीयेऽध्याये।

'देवतापारमार्थ्यं च विज्ञानं च प्रसादतः।
पुराणकारणं चैव पुलस्त्यस्याज्ञया गुरोः॥'

इति। तत्रैव त्रिषष्टितमेऽध्याये।

'अतस्तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः।
प्रसादाद्वैष्णवं चक्रे पुराणं स पराशर॥' इति।

'षट्प्रकारकसमस्तार्थसाधकज्ञानसंश्रयः।
दशसाहस्रममितं सर्ववेदार्थसंयुतम्॥'

इत्यनेनास्य पुराणरत्नस्य सर्ववेदार्थसंयुतत्वं अत एव समस्तपुरुषार्थसाधकज्ञान-प्रसादकत्वं चोच्यते । अतो वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं च पुराणान्तर-सिद्धमिति तत् दुरपह्नवम् ।

इदञ्चापरं सुमहद्वैलक्षण्यं यत्सामान्यप्रश्नपूर्वकविशेषनिष्ठप्रतिवचनरूपत्वं ।

'सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ।
यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ॥'

इत्यादिना सामान्येन पृष्टे विष्णोः सकाशादुद्भूतमिति विशेषनिष्ठं प्रतिवचनं ह्यवगम्यते । विशेषे पृष्टे सति प्रतिवचनस्य पक्षपातेन तदुत्कर्षकथनं प्रशंसा-मात्रपरं न तत्परमिति शङ्कनीयं स्यात् । सामान्येन पृष्टे सति प्रतिवचन-मर्थवशाद्विशेषे व्यवस्थितमिति तत्परत्वमेव स्यात् अतश्च ।

'तस्मात् भवन्तं पृच्छामि सूतपौराणिकाद्य तु ।
पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसम्युताम् ॥'

इति विशेषनिष्ठप्रश्नोपक्रमतत्प्रतिवचनरूपपुराणान्तरेभ्यः प्रकर्षातिशयः स्पष्टतमः ।

एतत्पुराणार्थश्च लैङ्गादिषु क्वचित् क्वचिदङ्गीक्रियते । यथा लैङ्गे द्वितीये पुराणार्थक्रमेण,

'सर्वावर्तेषु विष्णोश्च जननं लीलयैव तु ।
विष्णोः प्रसादाज्जिष्णोश्च विष्णोश्चैव तु संभवः ॥'
'तत्र लीलयाचैव कृष्णेन स्वकुलस्य च संहृतिः ।
जननं तच्छलेनैव गमनं स्वेच्छयैव तु ॥'

इति भगवदवतारस्य भूलोकपरित्यागस्य च लीलामात्रनिबन्धनत्वं हि तत्रोच्यते । अत एतत्पुराणार्थस्यान्यत्राभ्युपगन्तव्यत्वात् अप्रकंप्यत्वमवगम्यते । तर्हि एतदैकार्थ्यात् तान्यपि पुराणानि प्रमाणानि स्युरिति चेन्न । कार्त्स्न्ये-नाविरुद्धत्वाभावात् । भगवदुत्कर्षप्रतिपादकांशास्तु तस्मिन्नंशे आग्रहाभावादा-

दरणीय इति पूर्वमेवोक्तम् । अस्य च पुराणस्य कात्स्न्येनाग्रहमूलत्वञ्च उपक्रमगतप्रश्नस्वभावात् अवगतमिति चोक्तम् । अतोन्यत्र बह्वाग्रहैरपि आदरणीयस्योक्तार्थत्वमप्रकम्प्यताहेतुः ।

किञ्च पुराणांतरेष्विवास्य पुराणस्य न स्वव्याहतार्थप्रतिपादकं प्रदृश्यते । कात्स्न्येन भगवत्प्रकर्षस्यैवावगमात् । पुराणान्तरेषु व्याघातः प्रतीयते । यथा लैङ्गे ।

'युवां प्रसूते गात्रेभ्यो मम पूर्वं सनातनौ ।
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ।
वामपार्श्वे च मे विष्णुः विश्वात्मा हृदयोद्भवः ॥' इति ।

'ततः प्रहृष्टः सुमनाः प्रणिपत्य महेश्वरौ ।
प्राह नारायणो देवः सलिङ्गं लिङ्गवर्जितम् ॥
यदि प्रीतिः समुत्पन्ना यदि देवोवरश्च नौ ।
भक्तिर्भवतु नोनन्या त्वयि चाव्यभिचारिणी ॥'

इति । हरिविरिञ्चयोः शिवादुत्पत्तिः । तदाराधनवरणादिकमुक्तम् । तत्र क्वचित् ।

'त्वत्कोपसंभवो रुद्रः तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥'

इति चतुर्मुखशिवयोर्भगवत्प्रसादकोपसंभवत्वमुक्तमिति स्वव्याघातः । न च वासुदेवादेरुत्पत्तिवत् कैलासयात्रादिवच्च रुद्रादुत्पत्तितदाराधनरूपलीलोक्तिरित्यविरोधः । पुराणरत्नभारतादौ ।

'मनसैव जगत्सृष्टिं संहारं च करोति यः ।
तस्यारिपक्षक्षपणक्रियानुद्यमविस्तरः ॥
तथापि यो मनुष्याणां धर्मस्तदनुवर्तनम् ।
कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ ॥

साम चोपप्रदानञ्च तथा भेदप्रदर्शनम् ।
करोति दण्डपातञ्च क्वचिदेव पलायनम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्तते ।
लीलाजगत्पतेस्तत्र छन्दतः सम्प्रवर्त्तते ॥
ईशानोऽपि महायोगी सर्वस्य जगतः प्रभुः ।
कर्माण्यालभते कर्तुं कीनाशा इव दुर्बलाः ॥
तेन वञ्चयते लोकान् मायायोगेन केशव ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥'

[illegible] तत्र प्रसक्तापकर्षपरिहारग्रन्थादर्शनात् भारतादिषु दशरथ-वासुदेवादीनां रामकृष्णाद्यपेक्षया परत्वस्य जगत्कारणत्वादिमुखेन प्रतिपादनाभावादिह च भगवदपेक्षया रुद्रपरत्वस्य प्रतिपादनाच्च । अतः स्वव्याघातो दुष्परिहारः । न चात्र स्वव्याहतिः प्रतीयत इति इदं च महद्वैलक्षण्यम् । उक्तलक्षणप्रकर्षवतो वैष्णवपुराणस्य कारणदोषबाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तरस्य विरोधेऽपि पुराणरत्नस्य प्राबल्यमन्येषां च दौर्बल्यं स्पष्टम् । एवं प्रसिध्यतिशयलब्धसजातीयप्रबन्धप्रकर्षवत्त्वात्तत एव नष्टकोशत्वाभावात् अनतिविस्तृतया प्रक्षेपशङ्कारहितत्वादन्यपरोक्तिसिद्धपरिग्रहातिशयत्वात् सामान्य-प्रश्नपूर्वप्रतिवचनरूपत्वेनानाग्रहमूलत्वादत एवेदृशवैलक्षण्यरहितस्वव्याहतिमत्प्रबन्धान्तराणामेव तद्विरोधे सति दौर्बल्यस्यावर्जनीयत्वाच्च । **श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमं।** तस्माद्वैष्णवपुराणादिविरुद्धानां **सूतसंहिता**दिवचनानां नार्थ-तथात्वसाधकत्वमिति ।

अत्र कश्चित् — उदाहृतवचनजातं ब्रह्मविष्णुरुद्राणां परस्परस्मादुत्कर्षं विभावयतां पुराणानां भिन्नभिन्नकल्पवृत्तान्तविषयत्वप्रदर्शनेनाविरोधेन सर्व-पुराणप्रामाण्योपपादनपरम् । ननु केषाञ्चिदप्रामाण्योपपादनपरं । तथा हि । यथा ग्रीष्महेमन्तादीनामुष्णागमहिमागमत्वादिव्यपदेशास्तत्कालेषु उष्णतुहिनाद्युत्कर्षात् । यथा च पुरुषाणां सात्विकादिव्यपदेशास्तत्तत्पुरुषेषु सत्वादि-

गुणोत्कर्षादेवं सङ्कीर्णा सात्विकाः इत्यादिश्लोकेन कल्पितानां सात्विकादि-विभागस्तत्तत्कल्पेषु परमशिवाज्ञापालनसत्वाद्युत्कर्षादेव । ननु तत्तत्कल्पान-न्वयिनो ब्रह्मणस्तद्गुणोत्कर्षात् । तत्र तथा कण्ठोक्त्यभावात् प्रयोजनानु-पलम्भात् तथा विभागाभिप्रायः कल्प्यत इत्यप्ययुक्तम् । मात्स्य एवं प्रतिपादितम् ।

'पुराणं मानवो धर्मस्साङ्गोवेदश्चिकित्सकम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥'

इति पुराणमात्र प्रामाण्यं विनीतमहाजनपरिग्रहं चानादृत्य केषाञ्चित् पुराणानां भ्रान्तिमूलत्वकल्पनस्य वैदिकमार्गविद्वेषविजृम्भितस्यप्रयोजनत्वायोगात् । परमते शैवपुराणानां प्रामाण्यस्य भूयसश्चार्थस्य बाधेन सर्वथैववर्जनीयत्वात् । अस्मदुक्तरीत्यासात्विकादि कल्पविभागस्य औत्सर्गिकसकलवैदिकसम्मत निखिल-पुराण प्रामाण्योपपादनेन तत्रैव । 'तेष्वेव योगसंसिद्धागमिष्यन्ति परांगतिमि'ति सात्विककल्पवाक्यशेषात् । कौर्मे सात्विककल्पान् प्रस्तुत्य ।

'दानं तपस्तथाज्ञानं लब्ध्वा तेष्वेव योगिनः ।
आराध्य मां च गिरिशं यान्ति तत्परमं पदम् ॥'

इति वचनाच्च तपश्चरणादीनामुत्कृष्टापकृष्ट कालप्रदर्शनेन प्रयोजनत्वाच्च । न च यस्मिन् कल्पे तु यत्प्रोक्तं इत्यनन्तरश्लोकः पुराणानां तत्तत्कल्पेषु ब्रह्मप्रणीतत्व-विधिपरः । किन्तु तत्तत्कल्पेषु ब्रह्मणा प्रणीतानि परस्परविरोधत उत्कर्षापकर्ष-प्रख्यापनपराणि पुराणान्यनूद्य तेषां तत्कल्पप्रवृद्धदेवताविशेषमहिमावर्णना-वृत्तविधिपरः तद्वृत्तमेकारश्चस्यादुपादेयलक्षणमित्यभियुक्तोक्तेः । यद्यपि तत्र श्लोके । 'तस्य तस्य तु माहात्म्यमि'ति तत्तत्कल्पमाहात्म्यमिति तत्तत्कल्प-माहात्म्यवर्णनात्मत्वविधिरेव प्रतीयते । तथापि पुराणानां स्वरूपेण कल्प-माहात्म्यवर्णनार्थं प्रवृत्तिस्तेषु देवताविशेषमाहात्म्यवर्णनस्यैवोपलम्भादग्नेश्शिवस्य माहात्म्यमित्यनन्तरसन्दर्भानुरोधाच्च, तत्तत्कल्पमाहात्म्यवर्णनपरत्वविधिः । तत्तत् कालोद्रिक्तगुणानुगुण देवता माहात्म्यवर्णनात्मकविधावेव पर्यवस्यति । एवञ्चा-

नन्तरश्लोके प्रतिपाद्यमानोर्थः परमत एव न सङ्गच्छेतेति तत्सङ्गत्यनुरोधादपि- सात्विकादिविभागोऽस्मदुक्तरीत्यैवास्थेयः ।

वस्तुतस्तु तत्तत्कल्पविशेषेषु ब्रह्मणा प्रणीतानि न तानि । किन्तु सर्गाद्यकृतयुगे वेदप्रवर्त्तनकाले अविभक्तब्रह्मादिप्रभेदोयं पुराणस्कन्धः शतकोटि- प्रविस्तरो युगपदेव तेन प्रणीतः । तस्यैव पुनस्त्रेतायां ब्रह्मादिभिरष्टादशऋषिभि- रष्टादशधा विभज्यग्रन्थकोट्या संक्षेपः कृतः । मात्स्य एव ।

'पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणाकृतम् ।
अनन्तरन्तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ।
पुराणमेकमेवासीत् शतकोटि प्रविस्तरम् ॥'

इत्यारभ्य तदर्थोत्र चतुर्लक्षैः संक्षेपेण निवेशित इत्यन्तेन तथा प्रतिपादनात् धर्मसंहितायामपि ।

'ब्रह्ममेव कृतेचाद्ये पुराणं धर्मसंहितम् ।
अष्टाविधव्रतन्तच्चव्रतं कोटिप्रभेदतः ॥'

इत्यादिना तथा प्रतिपादनाच्च । तथा च तदनुरोधाद्यस्मिन् कल्प इति व कल्पभेदेषु पुराणविशेषाणां प्रवचनमात्रपरं न प्रणयनपरं 'तेन प्रोक्तं पाणिनि सूत्र इव प्रोक्तपदेन प्रवचनमात्रार्पणादिति नानुवादस्वारस्यादपि सात्वि विभागः पराभिमतप्रयोजन इति ।

अन्ये तु सर्गाद्यकृतयुगेऽपि पुराणस्कंधो न ब्रह्मणाप्रणीतः । तदानीं वेदैःसह परमेश्वरात् गृहीत्वा तेन प्रवृत्तिः 'यो वै वेदांश्च प्र तस्मा' इति चशब्देन पुराणस्कन्धस्य समुच्चयात् । 'तस्मै वेदान् पु दत्तवानग्रजन्मनः । इत्युपबृंहणदर्शनात् अस्य महतो भूतस्य निश्वसि ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेद इतिहासः पुराणमित्यादिश्रुत्या अष्टा विद्यानां एतासां भिन्नवर्त्मनां । श्रुतः कविः साक्षाच्छूलपाणिरिति तदुपबृंहणेन - 'भूयस्सभगवान् ध्यात्वा चिरं शूलवरायुधः । अस

शास्त्राणि महादेवो महेश्वर' इत्यादिना 'इत्येतेशङ्करप्रोक्ताविद्याश्शब्दार्थ-संयुता' इत्यन्तेन राजधर्मवचनेन च सर्वविद्यास्थानानामपि परमेश्वरकर्तृकत्व-प्रतिपादनाच्चेति वदन्ति। तत्पक्षे तु कथंचिदपि कृतचोद्यावकाशः। तस्मा-त्तत्तद्गुणोत्कर्षकालत्वेन कल्पानां सात्विकादिविभागपरः 'सङ्कीर्णा इत्यादि-श्लोकः। यस्मिन् कल्पेत्विति श्लोकस्तु पुराणानां तत्तद्गुणोत्कर्षप्रचुरितकल्पभेद-प्रवृत्ततत्तद्देवतामाहात्म्यवर्णनपरत्वेन। 'यथर्तावृतुलिङ्गानि नानारूपाणि-पर्यये। दृश्यन्ते तानि तान्येव तथा भावायुगादिष्वि'ति पौराणिकश्लोकवद-विरोधप्रदर्शनपर इत्येव युक्तम्। एवं प्रदर्शितमविरोधं सत्याद्युत्कर्षसमयेषु तदुपाधिगुणमूर्त्युत्कर्षस्यौचित्यरूपेण वस्तुसामर्थ्येनोपपादयितुं देवतान्तराणामपि क्वाचित् कल्पभेदेषूचितोत्कर्षप्रयोजकमुपाधिविशेषं च दर्शयितुमग्नेः शिवस्य माहात्म्यमित्यादिना तु परोक्तरीत्या किं गुणकेन ब्रह्मणाप्रोक्तं पुराणं किं देवता-कमिति जिज्ञासायां तद्विशेषं दर्शयितुं सात्विकेष्वथ कल्पेष्वित्यत्र कल्पग्रहणेन सात्विकादिशब्दानां कल्पपरत्वेन पुराणपरत्वाभावात् कल्पविशेषेषु च माहात्म्य-मधिकं हरेरिति स्वतः सम्भावितमाहात्म्याधिक्यस्य प्रतिपादनात् निराकाङ्क्षा-वाक्ये निगम्यत इत्यादि पूर्ववाक्यश्रुतक्रियानुषङ्गकल्पनायोगात्। पूर्ववाक्येषु प्रकीर्त्यते विदुर्निगद्यत इत्यादि क्रियाश्रवणेन तामसकल्पे असनाप्यग्नेरुत्कर्षः कीर्त्यते परमित्यादिक्रमेण पूर्ववाक्यानां कथंचिन्नेतुं शक्यत्वेऽपि 'सात्विकेष्व-थकल्पेषु माहात्म्यमधिकं हरेरि'ति हरेरुत्कर्षस्य कल्पविशेषव्यवस्थाप्रतिपादन-दर्शनेन पूर्ववाक्यानामपि देवताविशेषमहिम्नां कल्पविशेषव्यवस्थाप्रतिपादन-परत्वावसायात्।

'असंख्याताःस्मृताः कल्पाः ब्रह्मविष्णु शिवात्मकाः।
कथिताश्च पुराणेषु मुनिभिः कालचिन्तकैः॥
सात्विकेष्वथकल्पेषु माहात्म्यमधिकं हरेः।
तामसेषु महेशस्य राजसेषु प्रजापतेः॥'

इति । **कौर्मे** ।

> 'क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते ।
> नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन ॥
> तत्तत्कल्पान्त वृत्तान्तं अधिकृत्यमहर्षिभिः ।
> तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥'

इति । **वायुसंहितायाश्च** स्पष्टमेव कल्पभेदेन ब्रह्मादीनामुत्कर्षापकर्षप्रतिपादनाच्च । तस्मात् परोदाहृत **मात्स्यवचनैरेव** सर्वपुराणानां प्रामाण्य व्यवस्थापनात् तद्विरोधादेव न युक्तः, परेषां केषाञ्चित् पुराणानां अप्रामाण्या शङ्का ।

किञ्च तेषां परोक्तार्थपरत्वेऽपि **शैवपुराणादीनां** तद्रूपगुणाद्युपाधिकब्रह्मप्रणीतत्वमात्रं सिध्येत् । नत्वप्रामाण्यं । केषांचित् 'ज्ञानप्रतिबन्धश्च वैराग्यं च जगत्पतेः । ऐश्वर्यं धर्मश्च चतुष्टयमिति ब्रह्मणोऽव्याहतज्ञानशक्तित्वस्मरणात् । पुराणविशेषप्रणयनोपाधिभूतस्यापि तमसःपरब्रह्मणः संहर्तृत्वोपाधिभूतस्यैव तत्त्वज्ञानप्रतिबलत्वायोगात् । प्रयोगमूलज्ञानमदृष्टतरश्च प्रयोगाप्रामाण्यानापादकत्वात् । यदि च ब्रह्माप्यस्मदादिवत् तमः प्रतिबद्धतत्वज्ञान इति तत्प्रणीतपुराणेषु कानिचिदप्रमाणानि स्युः । तदोदाहृत**मात्स्य** वचनेष्वपि तथात्वशङ्काया दुर्निवारत्वात् कथं तैः किञ्चिदर्थव्यवस्थासिद्धिः ।

यत्तु अपवादकवचनादर्शनात्तेषामौत्सर्गिकप्रामाण्यानपाय इति तदपि अयुक्तम् । एकत्रतुपुराणानिसेतिहासानिकृत्स्नशः । एकत्रचेदमपरं एतदेवातिरिच्यते । धर्मनैपुण्यकामानां ज्ञाननैपुण्यकामिनां । इदं पुराणं मुक्त्वैकं नास्त्यन्यत साधनं परम्'। इत्यादि **कौर्मादि** पठित तत्तत्पुराणोत्कर्ष प्रतिपादकानेकापवादश्रवणात् ।

यदपि वस्तुसामर्थ्येनौचित्यलक्षणेन प्रामाण्यमेषां स्थिरीकृतमिति तदपि तुच्छम् । **भारतादिष्व**सुरवृत्तान्तं वर्णयतोपि व्यासस्य सात्विकेन प्रतिपाद्य-

गुणानुरोधेन वक्तृगुणौचित्यस्यासिद्धत्वेन च तामसत्वेनापकर्षयोग्यस्य उत्कर्षं वर्णयितुस्तामसत्वमुचितमिति एवमादिक्रमेणौचित्यं विवक्षितमिति वाच्यम्। संहारकरुद्रस्य संहारार्थं तमः परिग्रहस्यापकर्षहेतुत्वाभावात्।

एतेन वैष्णव नारदीय गारुड भागवत पाद्मवराहपुराणानि सात्विकानि। ब्राह्म ब्रह्माण्ड ब्रह्म वैवर्तमार्कण्डेयभविष्यद्वामन पुराणानि राजसानि। लैङ्गशैवाग्नेयस्कान्दकौर्ममात्स्यानि तामसानि। अतः तामसैर्लैङ्गादिभिरुक्तं न ग्राह्यमिति केषाञ्चिदर्वाचीनानां स्वदेशिकाभिप्रायविरुद्धसात्विकादि विभागोऽपि प्रत्याख्यातः। तस्य सत्वाद्युद्रिक्तवक्तृकत्वादिविषयत्वासिद्धेः। सत्वादिगुणक देवतापरत्वविषयत्वे अस्माकं हान्यभावात्। सात्विकत्वाभिमते गारुडे शिवरहस्ये पाद्मे शिवराघवसंवादाद्यनेक प्रदेशेषु च लैङ्गादिभ्योऽभ्यधिकं शिवोत्कर्ष व्यवस्थापनदर्शनेन विभागेन परदुराशानिर्वाहणायोगाच्च।

यत्तु पुलस्त्य वसिष्ट वरदानलब्ध देवताविशेषमहिमविषयकप्रश्नोत्तरसन्दर्भरूपपुराणान्तरवचनमिव न बुद्धिभेदं जनयेदिति न्यायेन प्रष्टुरभिमतार्थोपबन्धकृत इति नेतुमशक्यतयाऽनन्यथासिद्धत्वाच्च विष्णुपुराणं सर्वपुराणेभ्यः प्रसिद्धमिति तन्न। नहि पराशरादप्युत्कृष्टज्ञानशक्तिभिर्ब्रह्मविष्णुरुद्रैरनाद्यन्तन्तं परंब्रह्म नदेवा अपि यं विदुः। एकस्तद्वेदभगवान् आदित्योज्योतिषां पतिरित्या'दिवचन प्रतिपन्नपरत्वावबोधैरादित्यादिभिश्च, पराशरेणापि कृताश्शैव पुराणेषु शिवस्य परभावोपदेशा न दृश्यन्ते। न वा वायुसंहितादिषु परतत्व सामान्यप्रश्ने शिवःपरतत्वमिति निर्धारणरूपोक्तक्रमेणावताराणि नोपलभ्यन्ते।

इयांस्तु विशेषः। विष्णुपुराणे प्रष्टुरेकस्य प्रागेव शिष्यभूतस्य परिचितहृदयेन गुणासामान्यप्रश्नेपि तदीयपूर्वसिद्धभक्तिवर्धनाय तदनुकूल विशेषविषयमुत्तरमुक्तमिति वक्तुं शक्यम्। वायुसंहितायां तु परस्परं विवदमानानामनेकेषामृषीणां प्रश्ने प्रवृत्तमुत्तरं न तथा नेतुं शक्यमिति तस्मात् पुराणानां नैवं बलाबलविभागो युक्त इति।

अत्रोच्यते । न तावत् सङ्कीर्णा इत्यादिवचनैर्विरुद्धदेवतोत्कर्ष प्रतिपादक-विषयकत्वप्रदर्शनेन सर्वपुराणप्रामाण्योपपादनं क्रियत इति वक्तुं शक्यम् । असम्भवात् । तथा हि किं तमः प्रेरकत्वमहदहंकार स्रष्टृत्वाद्यंशस्य शिव-चतुर्मुखादिगतत्वेन प्रतिपादितस्य कल्पभेदविषयकत्वं कल्प्यते, किं वाऽवान्तर-[illegible]न्तर्गतत्व विषयकस्य तत्तदंशगतस्य, अथ परस्परनन्तृनन्तव्य-भावादेः । यद्वा परस्पर स्रष्टृत्वस्य । नाद्यः । ईश्वरानेकत्वदोषात् । चतुर्मुख-सृष्टिपूर्वभाविस्रष्टृत्वस्य चतुर्मुखदिवसविषयत्वकल्पनानुन्मेषाच्च । शिवचतुर्मुखा-द्याधिक्यस्य कल्पविशेषगतत्वोक्तौ वस्तुतस्तत्तत् पुराणप्रधानप्रतिपाद्यार्थस्य तमः [illegible] पर्यवसानेसति सर्वपुराणाप्रामाण्यस्यैव मूर्धाभिषेकप्रसङ्गात् च । [illegible] द्वितीयः । त्रयाणां प्रत्येकं सृष्ट्याद्यवान्तरकारणत्वस्य सर्व-पुराणाभ्युपगतत्वेन तत्र विरोधाभावात् ।

ननु नारायणनियमनेन चतुर्मुखशिवयोरुत्पत्तिसंहारकर्तृत्वं वैष्णव-पुराणेषु प्रतिपाद्यते । शिवनियमनेन चतुर्मुखस्यस्थित्युत्पत्ति कर्तृत्वं शैव-पुराणेषु । एवं चतुर्मुखपरेषु तन्नियमनेनैतयोः स्थितिसंहारकर्तृत्वमिति विरोध इति चेत्, कथमस्य विरोधस्य परिहारः । कल्पभेदेन त्रयाणां परस्परनियाम्य नियामकाभावोपपत्तिप्रदर्शनमुखेनेति चेन्न । एवं सति तत्तन्नियामकत्वादि कथनस्य तत्तत्परब्रह्मत्वतात्पर्यकस्य बाधप्रसङ्गेन सर्वपुराणाप्रामाण्यदोषस्य पूर्वोक्तस्य प्रसङ्गात् ।

ननु तत्तन्नियामकत्वकथनं परब्रह्मतातात्पर्यकम् । किन्तु तत्तत्कल्पाधिक्य तात्पर्यकमित्येतद्वचनबलात् सिध्यतीति एवं समाधानस्य विष्ण्वादीनां परम-कारणत्वप्रतिपादकवचनविरुद्धत्वात् । न च तेषां परस्परविरुद्धत्वेन स्ववाक्य प्रतिपादनासामर्थ्यान्नियामकत्वपरवचनस्य एवं समाधानमुपपद्यत इति वाच्यम् । तर्हि तादृशविरोधासमाधाने अवान्तरार्थविरोधसाधनस्याप्रयोजकत्वात् । चतु-र्मुखस्य नाभिपद्मजन्यत्वाण्डजन्यत्व प्रतिपादक वचनयोरिवानन्यसिद्धिवचनानां कल्पभेदविषयकत्वेन युक्त्युपपादनस्य न्यायबलात् सिद्धिसम्भवेन ततः पुराणा-नामप्रामाण्यप्रसक्त्यभावेन विरोधसमाधानकरणेप्यदोषाच्च ।

ननु त्रयाणां आधिक्यस्य कल्पभेदविषयकत्वोक्तौ त्रिषु न कस्यचिदपि कारणत्वमित्येवं पर्यवसानेन कारणप्रकरणस्थ शिवादिशब्दानां लक्षणया गौण्या तदतिरिक्तपरकर्तृत्वं परमकारणत्वविषयकवचनांशेऽप्यविरोधः समर्थितो भवतीति चेन्न । एवंहि त्वदभिमतपरमशिवकारणत्वस्य दत्तजलाञ्जलिकत्व प्रसङ्गात् ।

ननु परमकारणेशिवत्वादिशब्दमात्रात्तुरीय शिवकारणत्वं न ब्रूमः । किन्तु उमार्धविग्रहत्वाद्याम्नायबलादिति चेत् । तर्हि :—

'प्रधानं पुरुषंचैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकालेव्ययाव्ययौ ॥'

इत्यादिना परमकारणत्वेन प्रतिपादितस्य नागपर्यङ्कशयने शेते स परमेश्वर इत्यादि नागपर्यङ्कशायित्वप्रतिपादनेन विष्ण्वादिशब्दानामपि न लक्षणा वक्तुं शक्येति विरोधस्यापरिहार्यत्वमवर्जनीयम् ।

ननु परब्रह्मणो विष्णुभिन्नत्वेऽपि सत्त्वभेददृष्ट्या नागपर्यङ्कशायित्वादि-प्रतिपादनमुपपद्यत इति चेत् । न हि - शिवभिन्नत्वेपि वस्त्वभेददृष्ट्या उमार्ध विग्रहत्वादि व्यपदेश इति शिवकारणत्वत्यागप्रसङ्गः ।

नन्वस्तु शिवकारणत्वासिद्धिः । नारायणकारणत्वासिद्धिरेवास्माकं प्रयोजनमिति चेन्न । कालमुहूर्तादिमयश्च कालोनयद्विभूतेः परिणाम हेतुः । कालस्यापि मृत्योश्च जङ्गमस्थावरस्य च । ईशाते भगवानेक इत्यादि प्रमाण-बलात् कालावच्छेदरहितैश्वर्यवत्त्वस्य भगवति प्रतिपादनात् तद्विरोधेन कल्पविशेष परिच्छिन्नत्वोक्त्ययोगात् । न च तत्रापि परब्रह्मभेददृष्ट्यैव तथा च प्रतिपादन-मिति वाच्यम् । तथा कल्पकासिद्धेः । इदमेव सात्त्विकेषु स कल्पेष्विति वचनं कल्पकमिति चेत् अन्योन्याश्रयात् । अस्य माहात्म्यपरिच्छिन्नत्वप्रतिपाद-कत्वे सिद्धे एतद्वचनानुसारात् भगवन्माहात्म्यकालापरिच्छिन्नत्वप्रतिपादक-वचनानामुपचरितार्थत्वे तेषामुपचरितार्थत्वे सिद्धे तद्विरोधाभावादस्य परिच्छिन्नत्व प्रतिपादकत्वमिति शिवमाहात्म्यस्य तथात्व प्रतिपादकान्यपि सन्तीति चेत् को नेत्याह । अत एव विरोधोदुरुद्धर इत्यस्माभिरुच्यते । सर्वपुराणस्थानां देवता-

विशेषवाचकशब्दानां लक्षणाङ्गीकारेणाविरोधसमर्थनं कर्तुं शक्यमिति चेन्न। एवं सर्वपुराणस्थशब्दानां मुख्यार्थत्यागाङ्गीकारस्य मुखान्तरेण तदप्रामाण्यकोट्यन्तर्गतत्वात्। अन्यथा कृत्स्नग्रन्थस्थपदलक्षणाङ्गीकारेण विरोधसमर्थनस्य सर्वत्र कर्तुं शक्यते। **संख्याधिकरणासङ्गति** (जै. सू. 2-2-7) प्रसङ्गात्। सात्विकेतर पुराण प्रामाण्योक्तिरपि आपातप्रतीयमानार्थविषया। तत्रत्यानां शिवादिशब्दानां नारायण लक्षणकत्वादिति वक्तुं शक्यत्वेन तदप्रामाण्योक्तौ वैदिकपरिग्रह विरोधात्। भावनस्यानुपपन्नत्व प्रसङ्गात् तमोगुणमूलत्वोक्तेरपि देवतान्तरपारम्यभ्रमजनकप्रक्षेपेण ग्रन्थप्रणयनस्य मन्दबुद्धिव्यामोहजनकत्वेन तदादायोपपत्तेः। एतेन तृतीयचतुर्थावपि निरस्तौ। प्रधानांश विरोधस्य दुष्परिहरत्वात्।

किञ्च 'तपस्तप्त्वा पुराब्रह्मा तपोदीर्घेण चक्षुषा।
वीक्ष्य पूर्ववदेवेदं ससर्जविविधं जगत्॥
सृष्ट्वैवमखिलं यज्ञैरयजद्यज्ञमब्जजः।
यज्ञेश्वरपुराणेशं तथाचान्ये प्रजेश्वराः॥'

---

**संख्याधिकरणम् —**

'तिस्र आहुतीर्जुहोति' इति श्रूयते। तत्र जुहोति इत्येतदाख्यातं 'समिधो यजति' इत्यादिवन्नाभ्यस्तम्, किन्तु सकृदेवाम्नातम्। तत एकमिदं कर्म। त्रित्वसंख्या तु तस्यैव कर्मण आवृत्त्या नेतव्या। यथा प्रयाजेष्वेकादशत्वसंख्या पञ्चानामेव प्रयाजानामावृत्त्या नीता, तद्वदिति पूर्वः पक्षः।

सिद्धान्तस्तु — किमिदमाख्यातं पदान्तरनिरपेक्षमेव कर्मैक्ये प्रमाणम्, उत पदान्तरान्वितम्। नाद्यः, वाक्यांशस्य पदमात्रस्य प्रमितिजनकत्वाभावात्। द्वितीये - त्रित्वसंख्यया विशेषितेनाऽऽख्यातेन कर्मबहुत्वं गम्यते प्रयाजानां तु पूर्वमेव पञ्चसंख्यावरुद्धत्वादावृत्तिमन्तरेणैकादशत्वं दुःसंपादम्। इहत्वेतद्विधितः पूर्वं कर्मण एकत्वसंख्यावरोधो नास्तीति वैषम्यम्। (जै. सू. 2-2-7)

नेषु सर्वेषां चतुर्मुखानां भगवदाराधकत्वं प्रतीयत इति विरोधो दुर्निवारः।

‘ आदिकल्पे चतुर्वक्त्रो ब्रह्मानारायणांशजः ।
अण्डंभित्वाऽभवत्तस्यब्रह्मायुर्वर्षशतं स्मृतम् ॥
यदा वर्षशतं पूर्णं तदा नारायणेऽव्यये ।
स्वसृष्टैः सहितो ब्रह्मा लीयते परमात्मनि ॥
पुनस्तेनाभिसम्भूतं नलिने सम्प्रजायते ।
पुनः सृजति सर्वं स विष्णुशक्त्या विजृंभितः ॥ ’

षु सर्वेष्वपि कल्पेषु चतुर्मुखस्य भगवदुत्पन्नत्वं प्रतीयत इति परस्पर प्रतिपादितांशेऽपि विरोधो दुर्निवारः ।

किञ्चैवं वदतः शिवपुराणानां किं परत्वं मतमायुष्मतः । किं र्यन्तर्गत शिवविषयत्वं आहोस्वित् परमशिवविषयत्वम् । नाद्यः । तथा तच्छ्रुत्युपबृंहणदशायां शिवकारणदार्ढ्यार्थं त्वया शैवपुराणोदाहरणस्य हतत्व प्रसङ्गात् । तथापि प्रत्यासत्यतिशयात् परमशिवपरेष्वेव पुराणेषु प्रतिपादनमित्यादि स्वग्रन्थविरोधाच्च ।

‘ माहेश्वरपुराणानि समस्तानि महामुने ।
असाधारणयामूर्त्या नाम्ना साधारणेन च ॥
वदन्ति परमं तत्वं शिवं साम्बं त्रिलोचनम् ।
त्रिमूर्तीनां हरं चापि तदंशं तस्य वैभवम् ॥ ’

इत्यादि स्वोदाहृतपौराणिकवचनविरोधापाताच्च ।

ननु त्रिमूर्त्यन्तर्गत शिवविषयत्वेपि तेषां परमशिव कारणत्व निर्णयाय तत्स्य वचनोदाहरणं न व्याहतमं प्रसङ्गात् । परमशिवस्य प्रतिपादनसम्भवेन तदुदाहरणोपपत्तिरिति चेन्न । उभयोरुत्कर्षप्रतिपादने अत्र परमशिवस्य तत्रान्तर्गतशिवस्य प्रतिपादकमिति विवेकस्य दुर्ग्रहत्वात् ।

ननु त्रिमूर्त्युपास्यत्वतत्कारणत्वादिधर्मविशिष्टतया सर्वजगत्कारणतया प्रतिपाद्यमानः परमशिवः संहारमात्रकर्तृतया किञ्चित्कार्यविशेषकारणतया प्रतिपाद्यमानः त्रिमूर्त्यन्तर्गत शिव इति विवेकः सुग्रहः इति चेत् प्रायशः शैवपुराणेषु शिवस्य कृत्स्नजगत्कारणत्वात् अनन्येश्वरत्वादिधर्मप्रतिपादनेन तेषां पुराणानां परमशिव परत्वस्यैव प्रसङ्गात् पुराणप्रधानप्रतिपाद्यत्रिमूर्त्यन्तर्गत शिवोत्कर्षस्य सङ्कुचितस्य शैवपुराणप्रतिपाद्यस्य वैष्णवपुराणेष्वपि दर्शनेन विरोधाभावेन तत्समाधानयतन नैरर्थ्यापाताच्च ।

ननु प्रासङ्गिक परमशिवसर्वोत्कर्षप्रतिपादनांशस्य वैष्णवपुराणप्रतिपाद्य विष्णूत्कर्षविरोधोऽस्तीति तत्समाधानाय यत्नसाधकमिति चेदेवं तर्हि परमशिवोत्कर्षस्यापि एतद्वचनबलात् सङ्कुचितत्वमप्यवदातमिति सम्यक् समर्थितं शैवपारम्यम् ।

किञ्चैतद्वचनबलात् सङ्कुचितमेव परमशिवैश्वर्यमपि सर्वत्र प्रमाणतया शैवपुराणवचनोदाहरणं व्याहतमिति पूर्वोक्तदोषोऽनिवार्यः ।

ननु त्रिमूर्त्यन्तर्गत शिवपरस्यैव पुराणप्रधानप्रतिप्राद्यस्येतरैः सहविरोधाभावेऽपि विष्णुचतुर्मुखोत्कर्षप्रतिपादकपुराणानां परस्परविरोधे सति तत्समाधानार्थं यत्न सार्थकशिवमाहात्म्यस्य कल्पभेदनिबन्धनत्वकथनन्तु दृष्टान्ततयोपपन्नत इति चेन्न । विष्णुचतुर्मुखयोरवान्तरकारणत्वस्य तत्पुराणप्रतिपाद्यस्य विरोधाभावेन तत्समाधानप्रयत्नोपि व्यर्थः । परमकारणत्वस्य तत्तत्पुराणप्रतिपाद्यस्य विरोधे सति समाधाने कर्तव्ये तुल्यन्यायतया परमशिवकारणत्वांश एव क्लादेषां वचनानां व्यापारः प्रसरेदित्यन्तर्गत शिवपरत्वेऽपि पुराणानां कथञ्चिदमीष्टलाभः ।

किञ्चैवमपि चतुर्मुखविष्णुपारम्यप्रतिपादकपुराणानां अप्रामाण्यमेवैतत्त वचनबलादापतेदिति कथं सर्वपुराणप्रामाण्यसमर्थनपरत्वमेतेषां वचनानाम् । न द्वितीयः । तुरीयमाहात्म्यस्य कालविशेषनियतत्वे सर्वमूलकारणत्वाभावप्रसङ्गात् ।

किञ्च कल्पभेदेनाविरोधवर्णनं - आप्तवाचोर्विरोधे स्यात् सृष्टिभेदादियं गतिरिति न्यायेनैव सिद्धमिति सात्विकादिविभागप्रकरणस्यैव वैयर्थ्यं स्यात् ।

अपि च कल्पभेदेन त्रयाणान्तु व्यवस्थितमित्याद्युक्तिमात्रादेव उक्तार्थसिद्धौ सात्विकराजसतामसरूपेण कल्पविभागो व्यर्थ एवापद्यते ।

यदत्रोक्तं ऋतुभेदेषु हिमादिप्राचुर्यवत् कल्पभेदेषु तमस्सत्वादिप्राचुर्यं भवतीति तत्तद्गुणनिबन्धनत्वात् तामसादिविभागस्य उपाध्युत्कर्षेसति तदुपाधिकोत्कर्षो युक्त इत्यौचित्यरूपं न वस्तुसामर्थ्येन तामसादिकल्पेषु संहारक रुद्राद्युत्कर्षोपपादनेन सार्थकोयं विभाग इति तन्न । एवं सत्यपि ब्रह्मणो दिवसाश्च त इति ब्रह्मादिकस्तवकीर्तनस्य यस्मिन् कल्पेत्विति श्लोकस्य च वैयर्थ्यापातात् ।

' साङ्कीर्णास्सात्विकाश्चैव राजसास्तामसास्तथा ।
कल्पाश्चतुर्विधाः प्रोक्ताः ॥'

इत्यनन्तर'मग्नेः शिवस्येत्य'द्यभिधाने सति उक्तार्थस्य स्पष्टतरत्वात् ।

एतेन तपश्चरणादीनामुत्कृष्टापकृष्टकालप्रदर्शनेन सार्थक्यमिति निरस्तम् ।

ननु अग्नेः शिवस्येत्यत्र तत्तद्देवतानां तदुपाधित्वं न प्रतीयत इति तत्प्रतीत्यर्थं यस्मिन् कल्पइत्यादिश्लोकस्सार्थक इति चेन्न । यस्मिन्कल्पे इत्यत्रापि तत्तद्गुणोपाधिकत्वस्य तत्तद्देवतायामकथनात् । न च तस्य तस्य तु माहात्म्यमित्यत्र कल्पमाहात्म्यवर्णनस्याक्रियमाणत्वेन तत्तद्देवतापरत्वस्य वाच्यतया तत्तद्गुणोपाधिकत्वसिद्धिरिति वाच्यम् । कल्पपदस्य देवतापरत्वं किञ्चित् सम्बन्धमात्रेणोपपन्नमिति देवतायां तत्तद्गुणत्वसाधनसामर्थ्येन श्रुत्यन्तरादिपर्यालोचनेनैव तथात्वं ज्ञातव्यमित्येतत् श्लोकाभावेऽपि तात्पर्यालोचनेन ज्ञातुं शक्यत्वात् । न च तत्तद्गुणोत्कर्षप्रचुरितकल्पभेदप्रवृद्धतत्तद्देवतामाहात्म्यवर्णन परत्वेनाविरोधप्रदर्शनपरो यस्मिन् कल्प इति श्लोक इति वाच्यम् । वैयर्थ्यापरिहारात् तत्तद्देवतोत्कर्षस्य कल्पभेदेन निबन्धनत्वोक्त्यैव विरुद्धदेवता-

माहात्म्यप्रतिपादनविरोधपरिहारस्य सुज्ञानत्वात् । अस्मिन् मते तु यस्मिन् कल्प इति श्लोकस्तत्तद्गुणकल्पप्रोक्तपुरोनुवादेन तत्तद्गुणदेवतामाहात्म्यवर्णनात्मत्व-तत्तद्गुणमूलत्व विधिपरः। अग्नेः शिवस्येत्यादिस्तु प्रतिपाद्यत इति विशेषा-काङ्क्षायां तद्विशेषेणनिर्णयार्थं इति सप्रयोजनत्वम् । यः विकल्पानां सात्वि-कत्वादि विभागस्तत्तत्कल्पेषु पुरुषाणां सत्वाद्युत्कर्षादेव न तु तत्तत्कल्पा-वस्थायिनो ब्रह्मणस्तत्तद्गुणोत्कर्षात्, तत्र तथा कण्ठोक्त्यभावादिति तदपि न ब्रह्मणो दिवसाश्च त इत्युक्त्यवैयर्थ्याय ब्रह्मणस्तत्तद्गुणसंबन्धनिबन्धनत्वा-वसायात् ।

नन्वेवं त्वत्पक्षेपि सङ्कीर्णा इत्यादि श्लोकानन्तरं अग्नेः शिवस्येत्याद्युक्ति मात्रादेवाभिलाषितार्थसिद्धौ यस्मिन् कल्प इत्यादिश्लोको व्यर्थ एवेति चेन्न ब्रह्मणः सामान्यतो रजस्तमस्सम्बन्धसिद्धावपि तत्पुराणप्रणयनस्य रजस्तमः सत्व-मूलत्वप्रतिपत्त्यर्थमेव यस्मिन् कल्प इत्यादिश्लोकसार्थक्यात् ।

ननु तमः प्राचुर्यदशायां अग्निशिवमाहात्म्यं कथितवान् । सत्य प्राचुर्यदशायां विष्णुमाहात्म्यं कथितवान् इत्याद्युक्तिमात्रादेव तत्तद्गुणमूलत्वं प्रबन्धानां प्रतीयत एवेति यस्मिन् कल्प इत्यादिर्व्यर्थमेवेति चेन्न । सात्विकादि-शब्दानां पुरुषान्तराणां तत्तद्गुणत्वप्राचुर्यनिबन्धनत्वमेव ब्रह्मणो दिवसाश्च त इत्येतदपि वस्तु सदर्थकथनपरमात्रमेवेति मन्दाशङ्कावारकत्वेन प्रबन्धानां ब्रह्मनिष्ठतद्गुणमूलत्वप्रतिपादकस्यास्य वचनस्य सार्थक्यात् तत्स्वरूपेण वर्ण्य इत्यस्य तद्गुणमयेन ब्रह्मणा वर्ण्यत इति अर्थप्रतिपादकत्वात् । न च यथाव-स्थितरूपेण वर्ण्यत इत्यर्थवर्णन सम्भवात् तस्यान्यथा शङ्काया न परिहार इति वाच्यम् । अग्नेः शिवस्येत्यस्य कल्पभेदेन तत्तद्देवतोत्कर्षसत्व प्रतिपादकत्वपक्षे पुराणानां यथावस्थितार्थकथनपरत्वस्य तत एव सिध्या तयोक्तिवैयर्थ्यात् ।

ननु कीर्त्यते विदुः निगद्यत इत्यादिक्रियाबलादयथावस्थित प्रतिपादक-शङ्कायां तद्वारणाय तत्स्वरूपेण वर्ण्यत इति सार्थकं पक्षान्तरेपीति चेन्न । राजसेषु तु माहात्म्यमधिकं ब्रह्मणो भवेदि'ति तादृशशङ्कारहितपदप्रक्षेपणोपपन्ने,

अङ्कान्तरावकाशजनकपदप्रक्षेपेण तामुपजनय्य तत्परिहारो यस्मिन् कल्प इत्यादि श्लोकप्रणयनासम्भवात् 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि'ति हि न्यायवेदोऽनुमन्यन्ते ।

ननु - तस्य तस्य तु माहात्म्यमित्यस्य तत्तत्कल्पसंभविदेवतामाहात्म्यं तत्स्वरूपेण तत्तद्गुणविशिष्टयथावस्थितरूपेण वर्ण्यत इत्यर्थवर्णनात् तत्तद्गुणप्रचुरकाले प्रणीते पुराणे तत्तद्गुणोपाधिकतया सम्भवदुचितोत्कर्ष देवतामाहात्म्य वर्णनं क्रियत इति पर्यवसानात् न तस्य वैयर्थ्यमौचित्यप्रदर्शनमुखेनाविरोध समर्थनार्थत्वादित्युच्यते । नात्र तत्स्वरूपेणेत्यस्य यथावस्थितरूपेणेत्यर्थपरत्वं वर्ण्यत इत्यस्य कर्तृसमर्पकत्वेन ब्रह्मणेत्यन्वयस्यावश्यकत्वात् तत्सामानाधिकरण्येनान्वये सम्भवति वैयधिकरण्येनान्वयायोगात् वैयधिकरण्येनान्वयेपि ब्रह्मकर्तृकत्ववर्णनेन ब्रह्मनिष्ठधर्मस्यैव हेतुत्वेनान्वयौचित्यात् गुणमयेन स्वरूपेण हेतुना वर्ण्यत इत्यर्थकथनात् अन्यथा विभक्तिस्वारस्यापातात् पूर्वश्लोके ब्रह्मणोदिवसाश्च त इत्युक्तिभङ्ग्या ब्रह्मणः सत्त्वादिगुणसम्बन्धस्य प्रतीयमानत्वेन एवमेवार्थवर्णनस्यौचित्याच्च ।

किञ्च किमेतदविरोधप्रदर्शन परमौचित्यप्रदर्शनपरं वा । नाद्यः । अविरोधस्य माहात्म्याधिक्यप्रतिपादनादेव सिद्धिसम्भवात् । न द्वितीयः । तस्य तस्येत्येतत् कल्पपरं कुसुमादिवर्णनायवसन्तादिवर्णनात्वत्देवतामाहात्म्यवर्णस्यापि कल्पमाहात्म्यवर्णनत्वमिति तत्स्वरूपेणेत्यत्र तच्छब्दस्य देवतापरत्वाभावेनौचित्यास्फोरणात् कल्पसम्बन्धिदेवतापरत्वपक्षेऽपि तत्स्वरूपेणेत्यत्र तच्छब्दस्य कल्पसम्बन्धित्वेनैव देवतोपस्थापकत्वात् देवतायां तद्गुणोपाधिकत्वस्य शब्दादप्रतीतेः ।

यदपि - 'पुराणं मानवोधर्मः साङ्गोवेदश्चिकित्सकः । आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः' इति कृत्स्नपुराण प्रामाण्योक्तिविरोध इति तन्न । 'न हन्तव्यानि हेतुभिरि'ति हेत्वहन्तव्यतामात्रस्यैवोक्तत्वेन प्रबलप्रमाणविरुद्धांशाप्रामाण्यस्य तेनावारणात् ।

एतेन महाजनपरिग्रहोऽपि प्रबलप्रमाणविरुद्धांशमादाय निर्व्यूढः, अन्यथा 'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिरि'ति प्रतिपादनान्मन्वादिस्मृति विरुद्धकपिलस्मृत्यप्रामाण्य-प्रतिपादक **शारीरकस्मृत्यधिकरणस्य** (ब्र. सू. 2-1-1) **पत्युर-सामञ्जस्याधिकरणस्य** चासङ्गति प्रसङ्गात् ।

**यदपि भूयस्त्वचतुर्थ**बाधेन शैवपुराणानां सर्वथैवाप्रामाण्यं स्यादिति तन्न । त्वत्पक्षे **सर्वपुराणाप्रामाण्य**प्रसङ्गस्यावर्जनीयत्वेन तदपेक्षयाऽस्य ज्यायस्त्वात् । नहि

---

**स्मृत्यधिकरणम्** —

**वेदान्तानां** समस्तचिदचिद्वस्तु विलक्षणास्पृष्ट हेयगन्ध सर्वज्ञतादि **अनन्तकल्याणगुणाकरब्रह्मै**कपरत्वं प्रतिपादितं कपिलस्मृति विरोधेन चालयितुं **शक्यम्** उतनेति संशयः । शक्यमिति पूर्वः पक्षः । श्रुति विरुद्धायाः **स्मृतेः अनादरणीयत्वे** स्थितेऽपि वेदान्तवेद्यार्थस्य दुर्ग्रहत्वेन, अल्पश्रुतैः, मन्द-**मतिभि** राप्त प्रणीत श्रुत्युपबृम्हणेन विना, तेषां निश्चयो नोपपद्यते । कपिल **स्मृतिः केवल** तत्वपरेति, तथैवोपबृंहणं न्याय्यम् । अन्यथा आप्तप्रणीतायाः **केवलतत्वपरायाः** कपिल स्मृतेरनवकाशप्रसङ्ग इति वेदान्तवेद्यं जगत्कारणं **प्रधानमेव** इति पूर्वः पक्षः ।

**सिद्धान्तस्तु** — वेदान्तस्योपबृंहणापेक्षत्वेऽपि आप्ततममन्वादिस्मृतिभिः **वेदान्ताविरोधिनीभि**रेवोपबृंहणं न्याय्यम् । अन्यथा तासां बह्वीनामनवकाश **प्रसङ्गः, महानयं** दोषः स्यात्, न च तासां धर्मप्रतिपादनांशोपबृंहणत्वेन **सावकाश**त्वम् । **यतो धर्मा**णामपि स्वरूपं परब्रह्मभूतपरमपुरुषाराधनत्वं श्रुति-स्मृतिभि रवगम्यते । **अतीन्द्रियार्थ** साक्षात्कार समर्थस्य कपिलस्य वेदान्तानां ब्रह्मपरत्वानुपलब्धेः **प्रधानपरत्वमेवाश्रयणीय**मित्याक्षेपे प्राप्ते, मन्वादीनां वेदविदग्रे-सराणां सर्वातीन्द्रियार्थ साक्षात्कारसमर्थानां प्रधानपरत्वानुपलब्धेः ब्रह्मपरत्वोप-लब्धेश्च ब्रह्मपरत्वमेवाऽऽश्रयणीयम् । वेदान्तप्रतिपन्नार्थविरुद्धायास्तु कपिलोप-लब्धेः भ्रान्तिमूलत्वं कल्पयितव्यम् । (ब्र. सू. 2-1-1)

...पुराणप्रतिपाद्योत्तीर्णत्वमुक्तप्राप्यत्वतत्तदतिरिक्तत्वभाव मुमुक्षुप्रधानोपास्यत्व ... प्रेरकवादीनां कल्पभेदनिबन्धनत्वं सम्भवतीति । अयंचापरो विशेषः । ...वादीनां परिग्रहातिशयस्य प्रामाण्योत्कर्षहेतोरस्मत्पक्षेऽनुरोधः । त्वत्पक्षे ...र इति ।

यदपि यस्मिन् कल्प इति श्लोके तस्य तस्य तु माहात्म्यमित्यनेन ...कालोद्रिक्त गुणानुगुण देवतावर्णनात्मत्वस्य विधेयतया केषांचिदप्रामाण्यपक्षे ... सङ्गच्छेतेति तदप्युपदेशश्रद्धालुजन प्रलोभनमात्रम् । तत्तत्कालोद्रिक्त गुणोपाधिकवर्णनात्मत्वेप्यप्रामाण्यस्य तत्तद्गुणमूलकस्यानपायात् । न च काल-विशेषोत्कर्षकपुराणवर्णनात्मत्वमप्रामाण्यविरोधित्वमिति वाच्यम् । किं काल-विशेषोत्कृष्टत्वमप्येतद्वचनप्रतिपाद्यमित्यभिमतमुताविरोधित्वमित्यसिद्धम् । नाद्यः । काल-विशेष प्रवृद्धत्वप्रतिपादकशब्दाभावात् यस्मिन् कल्पेऽस्त्येतत् प्रतिनिर्देशकस्य तस्य तस्येत्यस्यकल्पपरत्वयोग्यस्य पुराणानां कल्पमाहात्म्यवर्णनात्मत्वाभावेन तत्संबन्धि-देवताप्रतिपादनमात्रे विश्रान्तेः । न द्वितीयः । योह खलु वास्येत्यादौ सत्त्वादि-गुणसम्बन्धित्वावगमने प्रमाणप्रतिपन्नतद्गुणकत्वस्वीकारसम्भवे तत्कालप्रवृद्धत्व-स्वीकारे मानाभावात् । यस्मिन् कल्पे तु यत्प्रोक्तमिति सत्वादिगुणककाल-प्रोक्तत्वप्रतिपादनसामर्थ्येन तद्गुणमूलत्वस्य पुराणेषु स्वरसतः प्रतीयमानत्वेन तद्विरोधेन तत्कालप्रवृद्धवर्णनात्मत्वस्य विधेयत्वेन स्वीकारायोगाच्च ।

यदपि वस्तुतस्त्वित्यादि तदपि मन्दम् । शतकोटिप्रविस्तरस्य ग्रन्थ-कोट्या सङ्क्षेपवच्चतुर्लक्षणसंख्यायासंक्षेपवच्च तत्तत्कल्पे शतकोटिविस्तरपुराणा-दुद्धृत्य ब्रह्मणा तेषां पुराणानामानुपूर्वीभेदेन प्रणयनसम्भवात् । न हि ग्रन्थ-कोट्यादि संक्षेपदशायां पूर्वानुपूर्वीविशिष्टस्य स्थापनसम्भवः । न च शतकोटि-प्रविस्तरपुराणप्रणयनदशायां रजस्तमः प्रकर्षकत्वे प्रमाणाभावात् ततः उद्धृत्य संक्षेपेण तदर्थस्यैव तत्र निवेशात् कथमस्य तन्मूलकत्वशङ्केति वाच्यम् । ग्रन्थान्तरप्रणयनदशायामुद्धारप्रक्षेपसम्भवात् प्राथमिक पुराणप्रणयनदशायामपि सत्वाद्युन्मेषासम्भवाच्च । नन्वत्र किं प्रमाणमिति चेन्न ।

'न तदस्तिविना यत्स्याद्दिवि देवेषु वा पुनः ।
सत्वं प्रकृतिजैर्मुक्तं यदेभिस्यात्त्रिभिर्गुणैः ॥'

इति सर्वेषां गुणत्रयवश्यत्वप्रतिपादनात् ।

नन्वेवमपि रजस्तमः प्रकर्षदशायामेव चतुर्मुखाद्याधिक्यं सत्वोत्कर्ष-दशायामेव । तत्रापि भगवदाधिक्यं प्रतिपाद्यत इत्यत्र किं प्रमाणमिति चेन्न ।

'शास्त्राण्यपि च सर्वाणि त्रिविधानि महामते ।
यानि सत्वपदं विष्णुं वदन्ति परमेश्वरम् ॥
तानि शास्त्राणि सर्वाणि सात्विकानि मतानि वै ।
प्रजापतिं कृशानुं च तथा देवीं सरस्वतीम् ॥
परत्वेन वदच्छास्त्रं राजसं च प्रचक्षते ।
यच्छास्त्रं लिङ्गपारम्यं वामदेवमुमापतिम् ।
तमः प्रवर्तकं वक्ति तत्तामसमुदाहृतम् ॥'

इति गारुडपुराणे भगवत्पारम्य प्रतिपादकानां सत्वमूलत्वस्य तदतिरिक्त पारम्य प्रतिपादकानां रजस्तमोमूलत्वस्य चावगम्यमानत्वात् । न च गुणत्रय प्रवर्तक देवता प्रतिपादकत्वमात्रेण सात्विकादिव्यपदेश इति वाच्यम् । तथात्वस्यानुक्ति सिद्धत्वेन शास्त्रत्रैविध्यविभागवैयर्थ्य प्रसङ्गात् । विरुद्धतत्वाधिक्य प्रतिपादकत्वेन मिथो विरोधात् सर्वाप्रामाण्ये प्रसक्ते प्रवृत्तानि ह्येतादृशवचनानि क्वचिद-प्रामाण्यानुक्तौ मिथो विरोधस्य तादवस्थ्य प्रसङ्गात् । तामसपुराणाप्रामाण्य-प्रतिपादकान्येवैतादृशवचनानि । अत एव ।

'सात्विका मोक्षदाः प्रोक्ताः राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ॥'

इति पाद्मवचनेन तामसशास्त्राणां निरयहेतुत्वमुच्यमानमुपपद्यते ।

एतेनान्येत्वित्यादिमतान्तरमप्यपास्तं वेदितव्यम् । परब्रह्मसकाशा-च्चतुर्मुखेन गृहीतस्यैवाविप्लुतस्य सन्दर्भस्य चतुर्मुखेन प्रवर्तितत्वे प्रमाणाभावात् ।

ग्रन्थकोट्या संक्षेपस्य चतुर्लक्षणसंख्यायाः संक्षेपस्य च श्रवणात् सन्दर्भभेदस्यावश्यकीकारावश्यंभावाच्च । सन्दर्भान्तरेण प्रणयनसम्भवात् भगवदुपदिष्टस्य पुराणस्य श्रुतिस्थानीयत्वेन तत उद्धृत्य कल्पविशेषेषु तत्तत्पुराणप्रणयनदशायां क्वचित्कल्पे तात्पर्यप्रमया क्वचित्कल्पे तात्पर्यभ्रमेण च पुराणप्रणयनं सम्भवतीति ग्रन्थान्तरोपन्यसनमाशामोदकमात्रम् ।

यदपि किं गुणकेन ब्रह्मणा प्रोक्तं पुराणं किं देवतापरमिति जिज्ञासायां तद्विशेषं कथयितुं नाग्नेः शिवस्येत्यादिकं प्रवृत्तमिति वक्तुं शक्यम् । सात्विकेष्वथकल्पेष्वित्यत्र कल्पग्रहणेन सात्विकादिशब्दानां पुराणपरत्वाभावादिति तदप्यनुपपन्नम् । यस्मिन् कल्पेत्विति श्लोके तत्तत्कल्पप्रोक्तपुराणेषु तत्तत्कल्पसम्बन्धिदेवतामाहात्म्यं वर्ण्यत इति सामान्यतः प्रतिपादने सति कस्मिन् पुराणे कस्याः देवतायाः माहात्म्यं वर्ण्यत इति विशेषाकाङ्क्षाया उत्कटत्वेन तच्छान्त्यर्थमग्नेः शिवस्येत्यादेः प्रवृत्तिरित्यवश्यमङ्गीकर्तव्यत्वेन तदनुसारिणोऽध्याहारस्य प्रामाणिकत्वेन पुराणवाचकपदाध्याहारात् । अत एव प्रवर्तनात्मकविध्यविरोधात् सामान्यतः फलसम्बन्धेऽवगते सति तद्विशेषाकाङ्क्षाया उत्कटत्वात् तदनुरोधेन स्वर्गकामपदाध्याहारो विश्वजिदधिकरणे स्वीकृतः ।

यदपि सत्वाद्युत्कर्षसमयेषु तत्तदुपाधिगुणमूर्त्युत्कर्ष उचित इत्युपपादयितुमग्नेः शिवस्येत्यादिदेवतासु तत्तद्गुणोपाधिकत्वप्रत्यायनाभावेनौचित्यस्फोरणार्थत्वाप्रतीतेः । यदि वस्तुकीर्तनमात्रादेव तत्तद्गुणोपाधिकत्वप्रत्यायनाभावेप्यौचित्यस्फोरणं स्यादित्यभिमतम्, तदा पुराणानां तत्तद्गुणकल्पप्रोक्तत्वप्रतिपादनादेव तत् गुणकदेवतामाहात्म्यवर्णनात्मत्वं ज्ञातुं शक्यमिति तत्प्रतिपादनमप्यनर्थकं स्यात् । कल्पानां सत्वाद्युत्कर्षवत्वकीर्तनादेव श्रुत्यन्तरे तद्गुणाधिष्ठातृत्वेन प्रतिपादितस्याधिक्यमपि सिद्धमित्यग्नेः शिवस्येत्यपि अनर्थकं स्यात् ।

यदपि माहात्म्यमधिकं हरेरिति निराकाङ्क्षवाक्ये निगद्यत इत्यादि पूर्ववाक्यश्रुतक्रियानुषङ्गकल्पनायोगादिति तदप्यसङ्गतम् । क्रियावाचकपदं विना

44

वाक्यस्य निराकाङ्क्षत्वासिद्धेः । भवतीत्यध्याहृतक्रियापदेन निराकाङ्क्षमिति चेन्न । तदपेक्षयानुषङ्गकल्पनायाः ज्यायस्त्वात् अन्यथा वाक्यान्तरवैरूप्यापातात् प्रदेशान्तरे सात्त्विकेष्वधिकं तद्विष्णोर्माहात्म्यमुच्यत इति श्रवणाच्च ।

ननु कीर्त्यते विदुः निगद्यत इत्यादीनामपि वस्तुसत्व एव तात्पर्यमस्त्विति चेत्तमः प्रचुरदशायां कीर्तनप्रतिपादनस्य वस्तुसत्वतात्पर्यकत्वकल्पनायाः अयोगात् ।

यदप्यसंख्याताः स्मृताः कल्पाः इत्यादि कौर्मवचने कल्पभेदेन ब्रह्मादीनामुत्कर्षप्रतिपादनं गम्यत इति । तदप्यसङ्गतम्, असात्विकमसात्विकेष्वेव कल्पेषु 'माहात्म्यमधिकं हरे' रित्यत्र क्रियावाचकपदाकाङ्क्षायां कथिताच्च पुराणेष्विति वाक्यश्रुतस्य कथितपदस्य विभक्तिपरिणामेनानुषङ्गकल्पनात् । अत एव तामसेषु शिवस्योक्तमित्यवैरूप्यम् .... तामसेषु महेशस्येति पाठेऽपि माहात्म्यवचनेपि कीर्त्यते विदुः निगद्यत इति क्रियान्वयदर्शनेन कथितपदानुषङ्ग एव कल्पयितुं युक्तः ।

यदपि —

'क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते'

इति वचनबलात् त्रयाणां साम्यं प्रतीयत इति तदपि स्वाभ्युपगमविरुद्धम् ।

'परमात्मविभागत्वं ब्रह्मादीनां सुरर्षभाः ।
समानमपि रुद्रस्तु वरिष्ठो नात्र संशयः ॥
विष्णोरपि परः साक्षात् रुद्रः संहारकारकः ॥'

इत्यादि वचनैः शिवस्याधिक्यप्रतिपादनादिति स्वेनैवोक्तेः ।

यदपि 'ज्ञानमप्रतिबन्धस्य वैराग्यं च जगत्पतेरि'त्यादि वचनबलादप्रतिहतज्ञानशक्तित्वप्रतिपादनात् ब्रह्मणः पुराणप्रणयनोपाधिभूतस्यापि तमस्तत्वज्ञान प्रतिबलत्वयोग इति तदप्यनुपपन्नम् ।

'ब्रह्माद्याः सकलाः देवाः मनुष्याः पशवस्तथा ।
विष्णुमायासमावर्ते मोहांधतमसावृताः ॥
प्रजापतिं च रुद्रं चाप्यहमेव सृजामिवै ।
तौ तु नूनं न जानीतो मम मायाविमोहितौ ॥'

इत्यादिषु मोहादिश्रवणेन ज्ञानमप्रतिबन्धस्येत्यस्येन्द्राद्यपेक्षयोत्कृष्टज्ञानवत्वमात्र-तात्पर्यकत्वावसायात् ।

यदपि ब्रह्मणोऽपि तमः प्रतिबद्धज्ञानवत्वे तत्प्रणीतोदाहृत वचनेष्वपि तथात्वशङ्कास्यादपवादकवचनाभावोप्यसिद्धः । एकत्र तु पुराणानि सेतिहासानि इत्यादि कौर्मादिपठित तत्तत्पुराणप्रामाण्यप्रतिपादकवचनपरमेवैतदपवादत्वादिति, तदप्यसारम् । शैववैष्णवादिपुराणप्रामाण्यप्रतिपादकवचनानां परस्परं विरोधे सत्येतद्वचनानां निरर्गलं प्रवृत्तत्वेन चैतेषामपि वचनानां शैवपुराणप्रामाण्य-प्रतिपादकवचनैः सत्प्रतिपक्षितमेवेति वाच्यम् । तर्ह्यर्थाव्यवस्थाशून्यतया सर्व-पुराणाप्रामाण्यापत्तेः । न कस्मात् सर्वाप्रामाण्यादपि कतिपयाप्रामाण्यं ज्याय इति केषाञ्चित् प्रामाण्यं केषांचिदप्रामाण्यमित्यवश्यं वक्तव्यमिति केषां प्रामाण्यं केषां वाऽप्रामाण्यं अङ्गीक्रियतामित्यपेक्षायामिदं वचनं प्रवृत्तमिति अपेक्षितार्थ-प्रतिपादकत्वादस्य न केनचिद्बाधः । किन्त्वनेनैव तामसपुराणैस्सह तत्प्रामाण्य-प्रतिपादकवचनानामप्रामाण्यमेतद्वचनबलात् प्रमाणविरुद्धांशे सिध्यतीत्यवश्यमभ्यु-पगन्तव्यम् ।

किञ्च तत्तत्पुराण प्रामाण्योपपादकवचनानां धर्माद्यंशेऽपि सावकाशत्वेन शिवाद्यतिशय प्रतिपादकांशे रजस्तमोमूलत्वप्रतिपादनस्य निरवकाशत्वान्न तुल्य-बलत्वमिति न सत्प्रतिपक्षत्वम् ।

यदपि भारतादिषु असुरवृत्तान्तं वर्णयतोऽपि व्यासस्य सात्विकत्वेन प्रतिपाद्यगुणानुरोधेन वक्तृगुणसिद्धासिद्धेर्नत्वस्तु सामर्थ्यमेतेषां वचनानां प्रामाण्यसाधकमिति तदप्यज्ञानविजृम्भितम् । नहि भारतादिष्वसुरपक्षपातो

सुरातिशयः प्रमाणान्तरविरुद्धः प्रतिपाद्यते । येन तत्रैतादृशन्यायः प्रसरेत् । किन्तु कृष्णाद्यतिशयप्रतिपादनोपयुक्तयैव तत्प्रतिपादनम् । किञ्च विरुद्ध-तत्त्वाधिक्यप्रतिपादकपुराणेषु केषांचिदप्रामाण्यस्यावश्यवाच्यत्वेन रजस्तमो-मूलत्वं वक्तव्यमिति किं सत्वोपाधिकदेवताप्रतिपादकपुराणानां रजस्तमोमूलत्वं युक्तं किं वा रजस्तमोगुणोपाधिकदेवताप्रतिपादकपुराणानां रजस्तमोमूलत्वं युक्तमिति विषये रजस्तमोगुणोपाधिदेवताप्रतिपादकवचनस्य तथात्वं वक्तुमुचित-मिति औचित्यं कथ्यत इति कः प्रसङ्गोतिप्रसङ्गस्य । न च तत्र क्वचिदासुर-प्रकृतिकत्वस्यावश्यमभ्युपेयत्वं प्रसक्तम् ।

अपि च —

'सात्विकैः सेव्यते विष्णुः तामसैरेव शङ्करः ।'

इत्यादिषु रजस्तामसजनसेव्यत्वं विधिशिवयोः प्रतिपाद्यते ।

'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।'

इत्यादिषु तत्तत्कटाक्षस्य सत्वरजस्तमोहेतुत्वं प्रतिपाद्यत इति तुल्यन्यायतया तत्प्रतिपादकप्रबन्धानां तत्तद्गुणमूलत्वं प्रतिपादयद्वचनं पर्युपपन्नार्थकम् ।

यदप्येते सात्त्विकादीनि वैष्णवादीनि ब्राह्मादीनि राजसानि लैङ्गादीनि तामसानीति विभागो निरस्त इति तदपि न । पाद्मपुराणे तथा विभाग-कारणात्तेषु तद्देवतामाहात्म्यप्रतिपादनभूयस्त्वमादाय तथात्वोक्तेरुपपन्नत्वात् ।

यत्तु सात्विकत्वेनाभिमते गारुडे पाद्मे च शिवातिशयप्रतिपादनाच्छिवोत्कर्षः सिध्यतीति तन्न । भूयस्सुप्रदेशेषु भगवत्पारम्यप्रतिपादनेन क्वचित् कोणे देवतान्तरातिशय प्रतिपादनेपि तत्र तात्पर्याभावस्यावगमात् ।

यत्तु पुलस्त्यवसिष्ठ वरप्रदानलब्ध देवतापारमार्थ्यज्ञानवता पराशरेणोप-दिष्टत्वाद्विष्णुपुराणं प्रबलमिति न शक्यं वक्तुं ततोप्यतिशयितज्ञानशक्तिभि-र्ब्रह्मादिभिः कृतानामुपदेशानां शिवपारम्येऽपि सत्वादिति तन्न ।

'अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः ।
प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः ॥
देवतापारमार्थ्येन विज्ञातं च प्रसादतः ।
पुराणकरणं चैव पुलस्त्यस्याज्ञया गुरोः ॥'

इत्यादि प्रमाणैर्वैष्णवपुराणानि बध्यमानदेवतोत्कर्षविषयज्ञानस्य पारमार्थ्य प्रतिपादनवदाहत्य तत्तत्पुराणनिबध्यमान तत्तद्देवोत्कर्षज्ञानस्य ब्रह्मादिगतस्य पारमार्थ्यत्वप्रतिपादकस्य पुराणान्तरगतस्य प्रमाणस्याभावात् । न च सामान्य-तोऽतिशयितज्ञानत्वत्वप्रतिपादनाद्देवता पारमार्थ्यज्ञानमपि सिद्धमिति वाच्यम् । मायाविमोहितत्वगुणत्रयवश्यत्वादेरपि प्रतिपादनदर्शनेन ज्ञानातिशयस्य परतत्वाति-रिक्तविषयकत्वावसायात् । यद्यपि भगवतोऽप्यतिशयितज्ञानत्वमस्ति तथापि न तेन क्वचन शिव पारम्यप्रतिपादकपुराणसंहिता प्रणीतेति न कोपि दोषः । प्रणयते वा विप्रलिप्सापि सम्भाव्यते अन्यकर्तृके पुराणे तद्वक्तृकत्वं वचनत्वसदर्थ-वादतायाऽप्युपपद्यते । न च पराशरपुराणे तेनैव पराशरेण शिवपारम्यमपि प्रतिपादितमिति वाच्यम् । अनेनैव पराशरेण शिवपारम्यप्रतिपादकं पुराणं प्रणीतमित्यत्र प्रमाणाभावात् । समाननामकपुरुषान्तरसम्भवात् । तत्पुराणे तादृशं वचनमस्तीति निर्णयस्य प्रक्षेपशङ्कयाशुक्यत्वात् । न हि वैष्णवपुराणस्य सर्वदेशप्रसिद्धिवक्तृत्व वचनानां ग्रन्थकर्तृभिरुदाहरणं च तादृशपुराणस्य प्रसिद्धिः । त्वदतिरिक्तपुराणान्तरेण तत्र वचनोदाहरणं वास्ति । अलाभे पुस्तकत्रयमिति परस्परवार्तानभिज्ञमूलोत्पन्नपुस्तकत्रय दर्शनेन हि वचनसद्भाव-निर्णयः । न हि प्रामाणिकजनगेहगतपुस्तकत्रयं तस्य पुराणस्यासेतुहिमाचलं शतवारं पर्यटनेप्युपलब्धुं शक्यम् ।

एतेन परोक्तमानव पुराणादिगत वचनान्यप्यप्रामाण्यशङ्काकलङ्कितत्वात् प्रमाणीकर्तुं न शक्यानि ।

यदपि **वायुसंहितायाम्** —

'मुनीनां षट्कुलीनानां ब्रुवतामितरेतरम् ।
इदं परमिदं तत्वविवादः सुमहानभूत् ॥
परस्य दुर्निरूपत्वाज्जातस्तत्र न निर्णयः ।'

इत्युपक्रम्य तेषामृषीणामन्योन्यं विवदमानानां ब्रह्मसभोपसर्पणमुक्त्वा —

'भगवन्नन्धकारेण महता वयमावृताः ।
खिन्ना विवदमानाश्च न पश्यामोऽत्र यत्परम् ॥'

इत्यादिना तेषां सामान्येन सकलकारणभूतस्य परदैवतस्य प्रश्नमुत्थाप्य पृष्टस्तदा ब्रह्मेत्यारभ्य ।

'उत्थाय सुचिरं ध्यात्वा रुद्र इत्युच्चरन् गिरम् ।
आनन्दक्लिन्नसर्वाङ्गः कृताञ्जलिरभाषत ॥'

इत्यादिना ब्रह्मवाक्येन शिवस्य सर्वोत्कर्षविभावनात् अस्य च सामान्य प्र विशेषोत्तररूपत्वाद्वैष्णवपुराणस्य तथात्वमादाय प्राबल्यमुक्तमिति अत्रापि शक्यते वक्तुं इति तन्न । सामान्यप्रश्ने विशेषोत्तररूपत्वमात्रस्यैव प्राब कारणत्वेनानुक्तेः ।

'तस्मात् भवंतं पृच्छामि सूतपौराणिकाद्यतु ।
पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंहिताम् ॥'

इत्यादिरूपेण प्रवृत्तपुराणापेक्षया प्राबल्यकारणत्वेन हि तदुक्तम् । शैवादिपुराणापेक्षया किं प्राबल्यमिति चेत् सत्वगुणोन्मूलत्वं पूर्वोक्तं प्रस्मर्तव्यम् ।

यदपि इयांस्तु विशेषः विष्णुपुराणे प्रष्टुरेकस्य प्रागेवशिष्यभू परिचितहृदयेनगुरुणासामान्यप्रश्नेऽपि तदीयपूर्वसिद्धभक्तिविवर्धनाय तदनुः विशेषविषयमुत्तरमुक्तमिति वक्तुं शक्यम् । **वायुसंहितायान्तु** परस्परं वि मानानां प्रश्ने प्रवृत्तमुत्तरं न तथा नेतुं शक्यमिति तत्तुच्छम् ।

'पराशरमुनिं वारं कृतपौर्वाह्णिकक्रियम् ।
मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्य च ॥'

इति रहस्यार्थप्रश्नानुगुणप्रणामाद्यनुष्ठानपूर्वकं पृष्टवते सच्छिष्याय विपरीतोपदेशः आस्तिकाग्रेसरेण पराशरेण कृत इति कल्पनायाम् ।

'द्विविधो भूतसर्गोऽयं दैवासुर एव च ।
विष्णुभक्तिपरोदेवो विपरीतस्तथासुर ॥'

इति श्रीविष्णुधर्म वचनावगम्यमान राक्षसस्वभावजृम्भितत्वावसायात् प्रत्युत-परस्पर कलहपूर्वकं सर्वैः संहत्यप्रश्ने रहस्युपदेष्टव्योर्थः बहुजनसन्निधौ न वक्तुं युक्तः । गुरुशुश्रूषापूर्वकं ज्ञातव्योर्थे आक्षेपपूर्वकं प्रश्ने च वक्तुमयुक्त इति बुध्यैव चतुर्मुखेणान्यथोपदिष्ट इति कल्पयितुं शक्यत इति वैष्णवपुराणगत-सामान्यप्रश्नपूर्वकत्वान्यथाकरणमयुक्तिमत् । न चैवमपि व्यासार्थ ग्रन्थे लैङ्ग पुराणस्य व्याहतार्थत्वमुपपादयितुं शिवात् ब्रह्मविष्णुजनिप्रातिपादकं वचनं विष्णोश्चतुर्मुखशिवोत्पादकत्वप्रतिपादकवचनोदाहरणं तदनुपपन्नम् । कल्पभेदेन तदुपपत्तेरिति वाच्यम् । प्रतिसर्गं विष्णोश्चतुर्मुखोत्पत्तिप्रतिपादक**महाभारतादि**-वचनानुसारेण विष्णोश्चतुर्मुखोत्पत्तिप्रतिपादकवचनस्य लैङ्गपुराणगतस्यापि सर्व-सर्गोत्पत्तितात्पर्यकत्वेन विरोधावश्यंभावात् —

'त्वत्कोपसम्भवोरुद्रस्तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धातारजसा च पितामहः ।
त्वत्स्वरूपात् स्वयं विष्णुः सत्वेन पुरुषोत्तम ॥'

इति त्रिमूर्त्युत्तीर्णत्वस्य भगवति प्रतिपादकत्वदर्शनेन विरोधानपायात् । हिरण्यगर्भ-कारणत्वस्य जगत्कारण व्याप्यत्वेन कल्पभेदकल्पनाया असम्भवाच्च । तस्मा-द्वैष्णवादिपुराणानामेव सत्वगुणमूलत्वादिभिर्हेतुभिः प्रबलत्वात्तदनुसारेणैव वेदोप-बृंहणं कर्तव्यमिति सिद्धम् ।

किञ्च महाभारतानुगुणत्वाच्च सात्विकपुराणानामेव प्रामाण्यं तद्विरुद्धार्थ बोधितत्वाच्च । तामसपुराणानामप्रामाण्यम् । कथं महाभारत विरुद्धत्वम-

प्रामाण्यसाधनसमर्थमिति चेन्न। प्रबलप्रमाणविरोधस्याप्रामाण्यसाधकत्वेन न्यायवित्संमतत्वात्। अत एव मनुवचनविरोधे वचनान्तरं न ग्राह्यं इति सिद्धं। कथं प्राबल्यमिति चेन्न। प्रामाण्यहेत्वतिशयात्। तथाहि। प्रामाण्यं तावच्छास्त्राणां परिग्रहबलेन कर्तुराप्तत्वाच्च प्रतिष्ठितं भवति। तत्र परिग्रहस्य वेदेपि प्रामाण्यसाधकत्वम्। अपौरुषेयत्वेन वेदस्य निर्दोषत्वनिर्णयात् प्रामाण्यं निर्णीय तेन परिग्रहत: सत्यम्। अपौरुषेयत्वमेव न परिग्रहमन्तरेणावगन्तुं शक्यते। तथाहि। सत्यामेव स्मर्तव्यतायां कर्तुरस्मरणादभावोऽवगन्तव्य:। स्मर्तव्यता च सति कर्तरि स्मरणावश्यं भाव:। स च सत्येव तत्कृतग्रन्थपरिग्रहे भवति गुणवर्तकत्वस्मरणं अन्तरेण बहुव्यवसायायासत्वसाध्य विषयस्य ग्रन्थस्यानन्तपरीक्षकपरिग्रहानुपपन्नेनान्यथा नह्यपरिगृहीतग्रन्थकर्तृस्मरणावश्यंभावि। सत्यपि तस्मिन् जीर्णकूपारामादि कर्तुरिव प्रयोजनाभावेनैवास्मरणोपपत्ते:। तस्मात् सिद्धमेतत् परिग्रहाधीनमेवापौरुषेयत्वमिति।

अथ कोयं परिग्रह:। प्रामाण्याध्यवसायस्तदर्थानुष्ठानादिरूपो व्यापार: द्विविधश्चायं परिग्रह: लोकपरिग्रहश्शास्त्रपरिग्रहश्चेति। लोकपरिग्रहोपि द्वेधा ग्रन्थोदाहरणं तदर्थादरश्चेति। शास्त्र परिग्रहस्तु त्रिविध:। शास्त्रान्तरेणात्मना तन्मूलत्वाभ्युपगमम्। यथोक्तं कात्यायनसूत्रे यथामायिकं तत्प्रामाण्यात अस्ति इति, स्वाभिमतार्थसमर्थनाय च तद्वाक्योपन्यास: श्रद्धधते, मनुना गीतौ श्लोकाविितिवत्। शास्त्रान्तरेषु प्रशंसा च यथा पुराणेषु भारतस्य।

अथ कोयं कर्तुराप्तिर्नामाययार्थ दर्शनसामर्थ्यं यथा दृष्टार्थवादित्वं च। सा च लोकतश्शास्त्राच्छास्त्रगुणैश्चावगताप्रामाण्यनिर्णयकारणं भवति। शास्त्रगुणाश्च प्रमाणान्तरविरोध:। माध्यस्थमर्थेषु पूर्वापराविरोध इत्यादय: तदेवं परिगृह्यस्याप्तेश्च प्रामाण्य हेतुत्वमविगीतमिति, तदतिशयस्य प्रामाण्यातिशय हेतुत्वेनाल्पपरिग्रहाच्छास्त्रात् बहुपरिग्रहस्याप्तप्रणीतादाप्तप्रणीतस्य च प्राबल्यात् महाभारतस्येतरापेक्षया प्राबल्यमवसीयते। लोकपरिग्रहस्य द्विविधस्य ग्रन्थधारणतदर्थादररूपणस्य सार्वत्रिकस्य विद्यमानत्वाच्छास्त्रान्तरेषु प्रशंसारूपस्य शास्त्र-

परिग्रहस्यापि विद्यमानत्वात् । परिग्रहातिशयोऽस्तीत्यध्यवसीयते । शास्त्रान्तरे च प्रशंसा कृतेति चेदुच्यते । **वायुप्रोक्ते शैवयोगे** —

'मतिमन्थानमासाद्य येनासौ श्रुतिसागरात् ।
जगद्धिताय जनितो महाभारतचन्द्रमाः ॥'

**भविष्यत्पुराणे**—

'बिभेति ग्रहणाच्छास्त्रानरस्तीव्रादिवौषधात् ।
भारतः शास्त्रसारोयं अतः काव्यात्मना कृतः ॥
आस्तिक्यारोह सोपानमेतद्भारतमुच्यते ।
श्रुत्वा तु स्वर्गनरकौ लोकः साक्षादिवेक्षते ॥
देवतातीर्थतपसां भारतादस्य निश्चयः ।
न जन्यते नास्तिकता तस्य मीमांसकैरपि ॥
विष्णौ वेदेषु विद्वत्सु गुरुषु ब्राह्मणेषु च ।
भक्तिर्भवति कल्याणि भारतादेव धीमताम् ॥
अजिह्मो भारतः पन्थाः निर्वाणपथगामिनाम् ।
मोक्षधर्मार्थकामानां प्रपञ्चो भारते कृतः ॥
एवं विधं भारतं वै प्रोक्तं येन महात्मना ।
सोयं नारायणः साक्षात् व्यासरूपी महामुनिः ॥
तयोक्तं भारतं वीर पाराशर्येण धीमता ।
वेदार्थं सकलं बोध्यधर्मशास्त्राणि च प्रभो ॥
कृपालुना कृतं शास्त्रं चतुर्णामिह श्रेयसे ।
वर्णानां च विवर्णानां कृतं पोतमनुत्तमम् ॥
अष्टादशपुराणानि अष्टौ व्याकरणानि च ।
ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम् ॥
यां श्रुत्वा पुरुषो नित्यं मुच्यते ब्रह्महत्यया ।
कृष्णं वेदं पञ्चमं तद्यन्महाभारतं स्मृतम् ॥'

**मात्स्यपुराणे –**

'यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत ।
प्रकाशो जनितो येन महाभारतचन्द्रमाः ॥'

**वैष्णवपुराणे –**

'कृष्णद्वैपायनं पुंसां विद्धिनारायणं प्रभुम् ।
कोह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥'

**मार्कण्डेयपुराणे –**

'भगवन् भारताख्यानं व्यासेनोक्तं महात्मना ।
युक्तमस्तमलैः शुभैर्नानाशास्त्र समुच्चयैः ॥
जातिशुद्धिसमायुक्तं साधुशब्दोपशोभितम् ।
पूर्वपक्षोक्तिसिद्धान्त परिनिष्ठासमन्वितम् ॥
त्रिदशानां यथा विष्णुर्द्विपदां ब्राह्मणो यथा ।
भूषणानां तु सर्वेषां यथा चूडामणिर्वरः ॥
यथायुधानां कुलिशं इन्द्रियाणां यथा मनः ।
तथैव सर्वशास्त्राणां महाभारतमुत्तमम् ॥
अत्रार्थश्चैव धर्मश्च कामोमोक्षश्च वर्ण्यते ।
परस्परानुबन्धाश्च सानुबन्धाश्च ते पृथक् ॥
कामशास्त्रमिदं श्रेष्ठं अर्थशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदं चाग्रयं धर्मशास्त्रं तयोत्तमम् ॥
चतुराश्रमधर्माणां आचारस्थिति शासनम् ।
प्रोक्तमेतन्महाभाग वेदव्यासेन धीमता ॥
तथा तात कृतं ह्येतद्व्यासेनोदारकर्मणा ।
यथा प्राप्तमहाशास्त्र विरोधैर्नाभिभूयते ॥
व्यासवाक्यजलौघेन कुतर्कतरुहारिणा ।
वेदशैलावतीर्णेन नीरजस्का महीकृता ॥

जलशब्दमहाहंसो महाख्यानपुरांबुजः ।
कथा विस्तीर्णसलिलः कार्ष्णवेदमहाह्रदः ॥
तदित्थं भारताख्यानां बह्वर्थबहुविस्तरम् ।
तत्त्वतो ज्ञातुकामोऽहं भगवन्तमुपस्थितः ॥'

इति । एवमन्यत्रापि पुराणान्तरेष्वेव जातीयकानि वचनानि सन्ति । तस्मात् परिग्रहातिशयसिद्धिः । एतेनाप्युत्कर्षोऽपि निर्व्यूढः । एषु वचनेषु भारत-कर्तुराप्ततमत्वप्रतीतेः । लोकपरिग्रहातिशयः न प्रमाणोत्कर्षहेतुः । ग्रन्थशोभा-प्रयुक्तत्वेनान्यथा सिद्धत्वादिति चेन्न । धर्मार्थानां परिग्रहस्य ग्रन्थशोभाप्रयुक्तत्वा-भावात् । नहि बृहत्कथामञ्जर्यादौ ग्रन्थशोभायां विचित्रकथावत्वेन सत्वेपि शिष्टानां परिग्रहो दृश्यते । न वा स्कान्दपुराणस्यान्यत्रापरिदृष्टविशेषवत्वप्रसिद्धि-मत्वेपि भारततुल्यपरिग्रहो दृश्यते ।

अस्तु वा शोभाप्रयुक्त एव परिग्रहातिशयः । तथाप्यविप्लवनिर्णय कारणत्वात् प्रामाण्येनिर्णय हेतुत्वमविचाल्यम् । नहि प्रसिद्धे ग्रन्थे केन-चिद्विप्लवः शक्यते कर्तुं । तदानीमेव बहुभिस्तन्निरासस‌म्भवात् ।

किञ्च सत्वादिगुणविभक्तकल्पविशेषाधिकारेण प्रवर्तमानानां पुराणानां सत्वादिगुणक देवताविशेषतदनुबन्धि धर्मपक्षपातित्वं सम्भवतीत्याद्यन्यथासिद्धि-वर्णनं न भारते सम्भवति । देवताविशेषतदनुबन्धि धर्मविशेषादिषु सङ्गदोष-रहितत्वेन माध्यस्थ्यात् तस्माच्छास्त्रगुणाप्ततमत्वं भारतकर्तुरवसीयते । न च 'यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमामि'त्यादि नारायणपक्षपातित्वमवसीयत इति वाच्यम् । अन्यपरवाक्ये नारायणचरितवर्णनात्मकत्व कीर्तनस्य पक्षपातित्वा-साधकत्वात् । न हि वक्ष्ये लिङ्गोद्भवम्, शुभमित्यादिवदत्र नारायणकथात्वं कीर्तितम् ।

अपि च । 'इतिहास पुराणाभ्यां वेदं समुपबृंहयेदि'त्यादावितिहास शब्दस्य पूर्वनिपातबलेनेतिहासस्य पुराणापेक्षयाभ्यर्हितत्वावसायात् । भारतस्ये तेहासतयापि प्राबल्यमवसीयते । अल्पाच्तरमिति पुराणशब्दस्य पूर्वनिपाते

कर्तव्ये इतिहासशब्दस्य पूर्वनिपातोऽभ्यर्हितत्वनिबन्धनः । नचाभ्यर्हितं पूर्वं निपततीत्यस्याल्पाच्तरमित्यस्य चैकत्र समावेशे कथं निर्णय इति वाच्यम् । अभ्यर्हितत्वनिमित्तस्य प्राबल्यबोधनात् । उक्तं च **महाभाष्ये** । 'सर्वेभ्य एवाभ्यर्हितं पूर्वंनिपतति वक्तव्यमिति' ।

नन्वेवमपि आप्ततमेन भगवता बादरायणेन प्रणीतत्वं भारत इव उपपुराणेष्वप्यस्ति ।

'अष्टादशपुराणानां कर्ता सत्यवतीसुतः'

इत्युक्तेरिति चेत् उच्यते ।

'ब्राह्मं तु ब्रह्मणा प्रोक्तं पाद्मं तेनैव शोभनम् ।
पराशरेण कथितं वैष्णवं मुनिपुङ्गव ॥
शैवं शैलालिनाप्रोक्तम् ॥'

इत्यादिषु कर्त्रन्तरप्रतिपादनेन कर्ता सत्यवतीसुत इत्यस्य प्रवर्तकत्वाभिप्रायेणोपपत्तेः ।

अत एव —

'अष्टादशपुराणानि अष्टौ व्याकरणानि च ।
ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम् ॥'

इत्यादिकमुपपन्नम् । अत एव च भारतप्रणेतृत्वेनैव तस्य प्रसिद्धिः । न चैवं भारतमूलभूतत्वेन पुराणानां प्राबल्यमायातमिति वाच्यम् । अष्टादशपुराणानि ज्ञात्वा न्यायैस्तत्प्राबल्यपरिज्ञानपूर्वकं विरुद्धांशा प्रहाणेन वास्तवार्थमुद्धृत्य भारतप्रणयनं कृतं इति तदर्थावगमात् । न हि भारतप्रणयने अष्टादशपुराणज्ञानमेव हेतुरित्यवधारयितुं शक्यम् । व्यासस्य स्वतः सकलवेदसर्वशाखाद्रष्टृत्वादतो न भारताधिक्यं साम्यं वा पुराणानां वक्तुं युज्यत इति भारतस्यैव सर्वप्रमाणश्रेष्ठत्वम् ।

अस्तु भारतस्य प्रमाणतरत्वम् । अथापि तस्य नारायणपरत्वे किं प्रमाणमिति चेत् न ।

'भारताध्ययनात् पुण्यादपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥
देवर्षयो यत्र पुण्या यत्र ब्रह्मर्षयस्तथा ।
कीर्त्यन्ते पूतपाप्मानस्तथा यक्षमहोरगाः ।
भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ॥'

इत्यनेन नारायणतात्पर्यकत्वप्रतीतेः देवर्षिप्रमुखकीर्तनतुल्यतां वारयितुं प्राधान्य सूचकश्चकारः प्रयुक्तः । न च प्राधान्येन वासुदेवकीर्तनत्वोक्तावपि तस्यैव परब्रह्मत्वमत्र कथ्यत इति कथमनेनावगम्यतेति वाच्यम् । चकारसूचित प्राधान्योपपादकतया ।

'सहि सत्यमृतं चैवपवित्रं पुण्यमेव च ।
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ॥'

इत्युक्त्या ब्रह्मत्वाकारकीर्तनादेव तत्कीर्तन प्राधान्यमिति तात्पर्याविष्करणात् । न च वस्तुतः परब्रह्मभूतवासुदेवकीर्तनात्मकत्ववर्णनपरत्वेनाप्युपपन्नमिदमिति वाच्यम् । तत्कीर्तनप्राधान्यस्य कृतिना एकीकृतत्वं पाण्डवानामेवेति तथात्वमादाय वर्णना-सम्भवात् । 'आकारान्तरस्य तद्धेतोरभावाद्वासुदेवश्च कीर्त्यत' इति सूचितम् । प्राधान्ये को हेतुरित्याकाङ्क्षायां सत्यां वाक्यशेषकीर्तितब्रह्मत्वमेवेति अवगम्य-मानत्वात् भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातन इत्यनेन ।

'सहि सत्यमृतं चैव पवित्रं पुण्यमेव च ।
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिस्सनातनम् ॥
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ।
असच्च सदसच्चैव यस्माद्देवात्प्रवर्तते ॥

सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवः ।
अध्यात्माश्रूयते यत्र पञ्चभूतगणात्मकः ।
अव्यक्तादिपरं तच्च स एव परिगीयते ॥
यं ध्यायन्ति सदा युक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥ '

इत्यस्यैक वाक्यत्वायोक्त विशेषणविशिष्टो वासुदेवः कीर्त्यत इत्यर्थस्य वाच्यतया दिव्यचरित्र वर्णनत्वाज्जगत्कारणत्व योगिध्येयत्वादिवर्णनमपि क्रियत इत्यवगत्या नारायणपरब्रह्मत्ववर्णनात्मत्वस्यापि प्रतीतेः । न च जगत्कारणत्वादीनां विशेषणत्व सम्भवे उपलक्षणत्वस्वीकारो युक्तः ।

किञ्च ।

' आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥
असच्च सच्चैव च यद्विश्वं सदसतः परम् ।
परापराणां स्रष्टारं पुराणं परमव्ययम् ॥
माङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥
महर्षेस्सर्वलोकेषु पूजितस्य महात्मनः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ '

इत्युपक्रमे ।

' वासुदेवं स्मरन् विद्वान् पुण्डरीकायतेक्षणम् ।
इतिहासमिमंपुण्यं महार्थं वेदसम्मितम् ॥ '

इत्युपसम्हारे च प्रबन्धे भगवत्कीर्तनादध्यवसीयते । भगवतः कृष्णद्वैपायनस्य श्रीमन्नारायणः परादेवतेति सिद्धान्त इति । प्रतिपादितश्च भगवत्पारम्यमनन्यथा सिद्धम् । बहुषु स्थलेषु तस्मिन् प्रदेशे भगवता बादरायणेन - तथाहि **सम्भवपर्वणि** पञ्चमेऽध्याये - ओम् ।

'अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।
वसुदेवात्सदेवक्यां प्रादुर्भूतो महायशाः ॥
अनादिनिधनो देवस्साक्षाल्लोकेश्वरः प्रभुः ।
अव्यक्तमक्षरं ब्रह्म प्रधानं निर्गुणात्मकम् ॥'

इत्यादि । चतुरशीतितमेऽध्याये । अर्जुनं प्रतिद्रोणः ।

'कृष्णः कमलपत्राक्षः कम्सकालीयमर्दनः ।
सजेता सर्वलोकानां सर्वप्रहरणायुधः ॥
नैतावताऽऋते पार्थ भवाम्यमृतवागिह ।
तदधीनं जगत्सर्वं तत्प्रलीनं तदुद्भवम् ॥
तत्पदं न विजानन्ति ब्रह्मेशानादयोपि च ।
तन्नाभिप्रभवो ब्रह्मा सर्वभूतानि निर्ममे ॥
स एव कर्ता भोक्ता च संहर्ता च जगन्मयः ।
स एव भूतं भव्यं च भवश्च पुरुषः परः ॥
सत्यः सर्वगतः स्थाणुरचलोयं सनातनः ।
प्रादुर्भवति योगात्मा पालनार्थं सलीलया ॥
तत्तुल्याहि न जायन्ते न जातो न जनिष्यते ।
यत्पदस्य तु माहात्म्यं न मातुं भुवि शक्यते ॥
सहिमातुलजोऽभूत्ते चराचरगुरुः पिता ॥' इति ।

सभापर्वणि भीष्मः –

'तमिमं सत्वसम्पन्नमाचार्यं पितरं गुरुम् ।
अर्च्यमर्चितमस्माभिस्सर्वे सम्मन्तुमर्हथ ॥
कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् ॥

एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्यः तस्माद्वृद्धतमोऽच्युतः ॥
बुद्धिर्मनो महान् वायुस्तेजोऽम्भः खं मही च या ।
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥
आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहास्तथा ।
दिशश्चोपदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥
एष रुद्रश्च सर्वात्मा ब्रह्मा चैव सनातनः ।
अक्षरः क्षररूपेण मानुषत्वमुपागतः ॥'

इति । तत्रैव

अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ।
पुरा नारायणोदेवः स्वयंभूः प्रपितामहः ॥
सहस्रशीर्षा पुरुषो ध्रुवोऽव्यक्तः सनातनः ।
सहस्रास्यः सहस्राक्षः सहस्रचरणो विभुः ॥
सहस्रबाहुः साहस्रो देवो नाम सहस्रवान् ।
सहस्रमकुटो देवो विश्वरूपो महाद्युतिः ॥
अनेकवर्णो देवादिरव्यक्ताद्वै परेस्थितः ।
असृजत्सलिलं पूर्वं स च नारायणः प्रभुः ।
ततः स भगवांस्तोये ब्रह्माणमसृजत् स्वयम् ॥
ब्रह्मा चतुर्मुखो लोकान् सर्वांस्तानसृजत्स्वयम् ।
आदिकाले पुराह्येवं सर्वलोकस्य चोद्भवः ॥
पुरार्ये प्रलये प्राप्ते नष्टस्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ॥
आभूत संप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा सत्स्नारायणः प्रभुः ॥

नारायणस्य चाङ्गानि सर्वदैवानि भारत ।
शिरस्तस्य दिवं राजन् नाभिः खं चरणौ मही ॥
अश्विनौ कर्णयोर्देवौ चक्षुषी शशिभास्करौ ।
इन्द्रवैश्वानरौ देवौ मुखं तस्य महात्मनः ॥
अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः ।
सर्वं व्याप्य हरिस्तस्थौ सूत्रं मणिगणानिव ॥
आभूतसम्प्लवान्तेऽथ दृष्ट्वा सर्वं तमोन्वितम् ।
नारायणो महायोगी सर्वज्ञः परमात्मवान् ॥
ब्रह्मभूतस्तथात्मानं ब्रह्माणमसृजत्स्वयम् ।
सोऽध्यक्षः सर्वभूतानां प्रभूतः प्रभवोऽच्युत ॥
सनत्कुमारं रुद्रञ्च मनुं चैव तपोधनान् ।
पूर्वमेवासृजद्ब्रह्मा ततो लोकान् तथा प्रजाः ॥
कल्पानां बहुकोट्यश्च समतीता हि भारत ।
आभूतसंप्लवाश्चैव बहुकोट्योऽभिचक्रमुः ॥
मन्वन्तरं युगाजस्रं सकल्पं भूतसंप्लवाः ।
चक्रवत्परिवर्तन्ते सर्वं विष्णुमयं जगत् ॥
सृष्ट्वा चतुर्मुखं देवं देवो नारायणः स्वयम् ।
स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः ॥
ब्रह्मा तु सर्वदेवानां लोकस्य च पितामहः ।
ततो नारायणो देवस्सर्वस्य प्रपितामहः ॥'

। एकोनसप्ततितमेऽध्याये ।

विष्णुर्नारायणस्सोमस्सूर्यश्च भवितास्वयम् ।
अप्रमेयो महेज्यश्च यत्र कामगमो वशी ॥
मोदते भगवान्भूतैर्बालः क्रीडनकैरिव ।
नैष गर्भत्वमापेदे न योन्यामवसत्प्रभुः ॥

आत्मनस्तेजसा कृष्णस्सर्वेषां कुरुते गतिम् ।
यथा बुद्बुद उत्थाय तत्रैव तु निलीयते ।
चराचराणि भूतानि तथा नारायणे सदा ॥
न प्रमातुं महाबाहुश्शक्यो भारत केशवः ।
परं हि परमस्तस्मात् विश्वरूपान्नविद्यते ॥
एवमुक्त्वा ततो भीष्मो विरराम महायशाः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थतत्ववित् ॥
केशवं केशिहन्तारं अप्रमेयमरिन्दमम् ।
सर्वलोकेश्वरं कृष्णं विज्ञाय पुरुषोत्तमम् ॥
तमिमं सत्वसम्पन्नमाचार्यं पितरं गुरुम् ।
अर्च्यमर्चितमस्माभिः सर्वे सम्मन्तुमर्हथ ॥
यो वानपहते कश्चिद्राज्ञां सबलवाहनः ।
तस्य मूर्ध्नि सुविन्यस्तं राज्ञः सव्यं पदं मया ।
एवमुक्तो मया सम्यगुत्तरं प्रब्रवीत्विति ॥
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ।
मानिनां बलिनां राज्ञां मध्ये सन्दर्शिते पदे ॥
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि ।
अदृश्यदेहा वाचश्च साधुसाध्विति चाब्रुवन् ॥
आविध्यदजिनं हृष्टो भविष्यद्भूतजल्पकः ।
सर्वसंशयनिर्मुक्तो नारदः सर्वधर्मवित् ॥'

इति । **आरण्यपर्वणि** –

'सन्ध्यानामपि देवानां वसूनामीश्वरेश्वरः ।
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत् ॥
दिवं ते शिरसा व्याप्तं पद्भ्यां च पृथिवी विभोः ।
जठरं त्वमिमे लोकाः पुरुषोऽसि सनातनः ॥

विख्यातपोमितप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनदक्षानां ऋषीणां ऋषिसत्तम ॥
राजर्षीणां पुण्यकृतां आहवेष्वनिवर्तिनाम् ।
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषोत्तम ॥
त्वं प्रभुस्त्वं विभुस्त्वं भूरात्मभूस्त्वं सनातन ।
लोकपालाश्च लोकाश्च नक्षत्राणि दिशस्तथा ॥
नभश्चन्द्रश्चसूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ।
मर्त्यतांचैव भूतानां अमरत्वं दिवौकसाम् ॥
त्वयि सर्वं महाबाहो महत् कार्यं प्रतिष्ठितम् ॥

इति । तत्रैव भगवन्तं देवाः ।

'त्वमस्रष्टा च पाता च हर्ता च जगतां प्रभो ।
त्वया सृष्टमिदं सर्वं स्थावरं जङ्गमं च यत् ॥
त्वय्येव पुण्डरीकाक्ष पुनस्तत्प्रविलीयते ॥'

इति । शताधिके द्विनवतितमेचाध्याये मार्कण्डेयं प्रति भगवान् ।

'आपो नारा इति प्रोक्तास्तासां नाम कृतं मया ।
तेन नारायणो युक्तो मम तद्ब्ययनं सदा ॥
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥
अहं शिवश्च सोमश्च काश्यपश्च प्रजापतिः ।
अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
नभश्च सकलं कालो वायुर्मनसि मे स्थितः ॥'

इत्यादिना महता प्रबन्धेन भगवत्पारम्यं प्रतिपादितम्। शतादिके पञ्च-नवतितमेऽध्याये।

‘एकार्णवे निरालोके नष्टस्थावरजङ्गमे।
नष्टेषु सर्वभूतेषु सर्वेषु भरतर्षभ।
प्रभवो लोककर्ता च सविष्णुः शाश्वतोऽव्ययः॥
सुष्वाप भगवान्विष्णुरप्छायायां स एव हि।
नागस्य भोगे महति शेषस्यामिततेजसः॥
लोककर्ता महाबाहुर्भगवानच्युतो हरिः।
नागभोगेन महता परिगृह्य च मेदिनीम्॥
स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम्।
नाभ्यां विनिस्सृतं तत्र तत्रोत्पन्नः पितामहः॥’

इति। उद्योगपर्वणि।

‘एकदेवो जगत्कृत्स्नं एकदेवो जनार्दनः।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः॥
मनसैव जगत्कृत्स्नं भस्मीकुर्याज्जनार्दनः।
ननु कृत्स्नं जगच्छक्तं किञ्चित्कर्तुं जनार्दने॥
पृथिवीं चान्तरिक्षं च द्यौश्चैव पुरुषोत्तमः।
मनस्येव विसृष्टात्मा नयत्यात्मवशं वशी॥
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः।
विचेष्टयति भूतानि क्रीडन्निव जनार्दनः॥
कालचक्रं जगच्चक्रं युगचक्रं च केशव।
आत्मयोगेन भगवान् परिवर्तयतेऽनिशम्॥
कालस्य हि च मृत्योश्च जङ्गमस्थावरस्य च।
ईशते भगवानेकस्सत्यमेतद्ब्रवीमिते॥

ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥
तेन वञ्चयते लोकान् मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥'

भीष्मपर्वणि । भीष्मदुर्योधनसंवादे । भगवन्तं प्रति ब्रह्मा ।

'क्षितिः पादोद्भवादेव दिक् बाहुर्द्यौर्महाच्छिरः ।
मूर्तिस्तेषां सुराकायाश्चन्द्रादित्यौ च चक्षुषी ॥
बालं तपश्च सत्यं च धर्मकामोद्भवास्तत्र ।
तेजोहि पवनश्चास्य मापस्तेष्वेव सम्भवः ॥
अश्विनौ श्रवणौ देव देवी जिह्वा सरस्वती ।
देवाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ॥
न संख्या न परिमाणं न तेजो न पराक्रमम् ॥'

। कोन्वयं यो भगवता प्रमाणं विनयाद्विभो ।
वाग्भिस्तुतो वरिष्ठाभिः ॥'

ा देवैः पृष्टेन च ब्रह्मणोक्तम् ।

'यत्तद्भूतं भविष्यच्च भवितव्यं च यत्परम् ।
भूतात्मायः प्रभुश्चैव ब्रह्मतत्परं पदम् ॥
तेनाहं कृतसंवादः प्रसन्नेन सुरर्षभाः ।
जगतोऽनुग्रहार्थाय याचितो वै जगत्पतिः ॥
मानुषं लोकमातिष्ठ वासुदेवेति विश्रुतः ॥'

। अयं च वृत्तान्तो मुनिभिरुपदिष्ट इत्येतच्छ्रुतं मया तातेत्युक्त्वा र्म्यं प्रतिपाद्य पुनश्च भीष्मेणोक्तं दुर्योधनं प्रति।

'वासुदेवो .... महद्भूतं हि दैवतम ।
नपरं पुण्डरीकाक्षात् दृश्यते भरतर्षभ ।
श्रुतं मे तात रामस्य जामदग्न्यस्य जल्पतः ॥

नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ।
असितो देवलश्चापि बालखिल्यास्तपोधनाः ॥
मार्कण्डेयश्च गोविन्दे कथयन्त्यद्भुतं महत् ।
सर्वभूतात्मभूतात्मा महात्मा पुरुषोत्तमः ॥
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् ।
स सृष्ट्वा पृथिवीं देवीं सर्वलोकेश्वरः प्रभुः ॥
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः ।
सर्ववेदमयो देवः शयानः शयने सुखम् ॥
मुखतः सोऽग्निमसृजत् प्राणाद्वायुमथापि च ।
सरस्वतीं च वेदांश्च वासुदेवो महायशाः ॥
एष लोकान् ससर्जादौ देवान् ऋषिगणैस्सह ।
निधनं चैव मृत्युश्च प्रजानां प्रभवाप्ययौ ॥
एष धर्मश्च धर्मज्ञो वरदस्सर्वकामदः ।
एष कर्ता च कार्यश्च आदेरादिः स्वयंप्रभुः ।
भूतं भव्यं भविष्यच्च पूर्वमेतदकल्पयत् ॥
उभे सन्ध्ये दिशः खं च नियमं च जनार्दनः ।
ऋषींश्चैवापि गोविन्दः तपश्चैवाप्यकल्पयत् ॥
सृष्ट्वा यज्जगताञ्चापि महात्मा प्रभुरव्ययः ।
अग्रजं सर्वभूतानां सङ्कर्षणमकल्पयत् ॥
शेषं चाकल्पयद्देवमनन्त इति यं विदुः ।
यो धारयति भूतानि धरां चेमां सपर्वताम् ।
ध्यानयोगेन विप्रांश्च तं वदन्ति महौजसम् ॥
कर्णस्रोतोद्भवश्चापि मधुर्नाम महासुरः ।
तमुग्रमुग्रकर्माणमुग्रबुद्धिं समाश्रितम् ॥
ब्रह्मणोपचितिं कुर्वन् जघान पुरुषोत्तमः ।
तस्य तात वधादेव देवदानवमानवाः ॥

मधुसूदनः इत्याहुः ऋषयश्च जनार्दनम् ।
वराहं नारसिंहंच त्रिविक्रमं इति प्रभुम् ॥
एष धाता विधाता च सर्वेषां प्राणिनां प्रभुः ।
परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ॥
असृजन्मुखतो विप्रान् बाहुभ्यां क्षत्रियांस्तथा ।
वैश्यांश्चाप्यूरुतो राजन् शूद्रान् पद्भ्यां तथैव च ॥'

इत्यादि । **शान्तिपर्वणि । स्तवराजाध्याये ।** भगवतः सर्वोत्तमत्वं प्रतिपादितम् । मोक्षधर्मे ।

'कुतस्सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम ।
प्रलयं च किमभ्येति तन्मे ब्रूहि पितामह ॥
स सागरस्समगनः [illegible]कः ।
स भूमिस्साग्निपवनो लोकोऽयं केन निर्मितः ॥'

इति प्रश्ने .... । **भृगु-भारद्वाजीयं संवादमुपक्षिप्य** —

'नारायणो जगन्मूर्तिरनन्तात्मा सनातनः ।
कूटस्थोक्षर अव्यक्तो निर्लेपो व्यापकप्रभुः ॥
प्रकृतेः परतोनित्य इन्द्रियैरप्यगोचरः ।
स सिसृक्षुः सहस्रांगादसृजत्पुरुषं द्विधा ।
मानसो नाम विख्यातः पुरुषो मनीषिभिः ॥
अनादिनिधनो देवस्तथाऽभेद्योऽजरामरः ।
अव्यक्त इति विख्यातः शाश्वतः साक्ष्योव्ययः ॥
यतः सृष्टानि भूतानि तिष्ठन्ति च म्रियन्ति च ।
सोसृजत्प्रथमं देवो महान्तं नामनामतः ॥'

इत्यादि । **द्वात्रिंशेऽध्याये । मनु-बृहस्पति सम्वादे बृहस्पतिः ।**

'एवं विद्वन् विजानीहि परमात्मानमव्ययम् ।
तत्तद्गुणविशेषेण संज्ञानामादिसम्युतम् ॥
सर्वेश्वरः सर्वमयः स च सर्वप्रवर्तकः ॥

सर्वात्मकः सर्वशक्तिः सर्वकारणकारणम् ।
सर्वसाधारणः सर्वैरुपास्यः स महात्मभिः ॥
वासुदेव इति ख्यातस्तं विदित्वाऽश्नुतेऽमृतम् ॥
अद्भयो महत्तरं चैव तेजसः पवनो महान् ।
पवनाच्च महद्व्योम तस्मात्परतरं मनः ॥
मनसो महती बुद्धिः बुद्धेः कालो महान् स्मृतः ।
कालात् स भगवान्विष्णुः यस्य सर्वमिदं जगत् ।
नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यत ॥'

इत्यादि प्रतिपादितम्। मायणी-नारद संवादे च तस्मिन्नेव सर्ववेदप्रतिपाद्यत्वं प्रपंचितम्। त्रयस्त्रिंशेऽध्याये।

'श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥
असितो देवलस्तात वाल्मीकिश्च महातपाः ।
मार्कण्डेयश्च गोविन्दं कथयन्त्यद्भुतं महत् ॥
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥
किन्तु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनि ।
महात्मनि महाबाहो शृणु तानि युधिष्ठिर ॥
यानि चाहुर्मनुष्येषु ये पुराणविदोजनाः ।
श्रुत्वा सर्वाणि गोविन्दे कीर्तयिष्यामि तान्यहम् ॥
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
सर्वतेजोमयस्तस्मिन् शयानः शयने शुभे ॥
सोऽग्रजं सर्वभूतानां सङ्कर्षणमकल्पयत् ।
आश्रयं सर्वभूतानां मनसेति ह शुश्रुम ॥
ससारमिति भूतात्मा उभे भूते भविष्यति ।
प्रद्युम्नमसृजत्तस्मात्सर्वतेजः प्रकाशकम् ॥'

इत्याद्युक्त्या,

'ब्राह्मणानां शतं ज्येष्ठं मुखादभ्यसृजत्प्रभुः ।
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ॥
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ।
स एव चतुरोवर्णान् समुत्पाद्य महातपाः ॥
अध्यक्षं सर्वभूतानां धातारमकरोत्प्रभुः ।
वेदविद्याविधातारं ब्रह्माणममितद्युतिम् ।
भूतमात्रगणाध्यक्षं विरूपाक्षं च सोऽसृजत् ॥'

इत्यादि प्रतिपादितम् । षट्त्रिंशेऽध्याये —

'प्रयाणकाले किंजप्यं मोक्षिभिर्द्विजसत्तम चिन्तकैः ।
किन्नु स्मरन् कुरुश्रेष्ठ मरणे समुपस्थिते ॥
प्राप्नुयात्परमांसिद्धिं श्रोतुमिच्छामि तत्त्वतः ॥'

इति प्रश्नोत्तरकथनपरे सन्दर्भे वासुदेवद्वादशाक्षरस्य जप्यमन्त्रत्वप्रतिपादनात् तदर्थस्य स्मर्तव्यत्वाविष्करणात् मुमुक्षुध्येयत्वमुपवर्णितम् । अनन्तरं स्तोत्रव्याजेन भगवतः परब्रह्मत्वमाविष्कृतम् । सप्तविंशेऽध्याये ।

'योगं मे परमं तात मोक्षस्य वद भारत ।
तमहं तत्वतोज्ञातुमिच्छामि वदतां वर ॥'

इति प्रश्ने गुरुशिष्यसंवादमुपक्षिप्य ।

'कुतश्चाहं कुतश्चत्वं तत्सम्यक् ब्रूहि तत्परम् ।
वेदेषु चैव यद्वाच्यं लौकिकव्यापकं च यत् ॥'

इति शिष्यप्रश्नोत्तरे गुरुवाक्यसन्दर्भे —

'शृणुशिष्यमहाप्राज्ञ ब्रह्म गुह्यमिदं परम् ।
अध्यात्मं सर्वभूतानां आगमानाञ्च यद्वसु ॥

वासुदेवः सर्वमिदं विश्वस्य ब्रह्मणो मुखम् ।
सत्यं ज्ञानं तपोयज्ञस्तितिक्षादम आर्जवम् ॥
पुरुषं सनातनं विष्णु यं तं वेदविदो विदुः ।
सर्गप्रलयकर्तारमव्यक्तं ब्रह्म शाश्वतम् ॥
तदिदं ब्रह्म वार्ष्णेय इतिहासं शृणुष्वमे ।
ब्राह्मणो ब्राह्मणः श्राव्यो राजन्यः क्षत्रियैस्तथा ॥
माहात्म्यं देवदेवस्य विष्णोरमित तेजसः ।
अर्हस्त्वमसि कल्याण वार्ष्णेयाख्यातममुत्तमम् ॥
यत्तदक्षरमव्यक्तममृतं ब्रह्मशाश्वतम् ।
वदन्ति पुरुषव्याघ्राः केशवं पुरुषोत्तमम् ॥
कालचक्रमनाद्यन्तं भावाभाव विलक्षणम् ।
त्रैलोक्ये सर्वभूतेषु चक्रवत्परिवर्तते ॥
पितन् देवान् ऋषींश्चैव तथावै यक्ष राक्षसान् ।
नागासुरमनुष्यांश्च सृजते परमोव्ययः ॥
तथैव वेदान् शास्त्राणि लोके धर्मांश्च शाश्वतान् ।
प्रलये प्रकृतिं प्राप्य युगादौ सृजते प्रभुः ॥
यथर्तुष्वृतुलिङ्गानि नामरूपाणि पर्यये ।
दृश्यते तानि तान्येव तथा ब्रह्महरादिषु ॥'

इत्यादिके भगवत्पारम्यं प्रपञ्चितम् । एवं **वृत्रोशनससंवादे** च भगवत्पारम्यं आविष्कृतम् । नारायणस्यापि च भगवतः सर्वस्मात्परत्वं बहुधाप्रपञ्चितम् । **आनुशासनिके मद्रराज-व्याससंवादे** – ' विष्णुर्यज्ञस्त्रिज्यते चापि विष्णुः कृष्णो विष्णुर्यश्च कृत्स्नं प्रभुश्च । कृष्णो वेदाः वेदवादाश्च कृष्णः ए(वं) नं जानन् ब्राह्मणो ब्रह्म एति । स्थानं सर्वं वैष्णवं यज्ञमार्गे चातुर्होत्रं वैष्णवं तत्र कृष्णः इत्यादीनां ज्योतींषि शुक्लानि च यानि लोके त्रयो लोका लोकपालास्त्रयी च । त्रयोग्नयश्चाहुतयश्च पञ्च सर्वेदेवा देवकीपुत्र एवेत्यन्तेन सन्दर्भेण भगवदुत्कर्ष

उत्पादितः। **सनत्कुमार-नारद संवादे च।** यं विश्वमुपजीवन्ति येन सर्व-मिदं ततम्। यं प्राप्य न निवर्तन्ते तं भवान्वक्तुमर्हसीति प्रश्नोत्तरत्वेन प्रवृत्ते यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम्। तं वै शृणु महाबुद्धे नारायणमनामयम्।

'एष नारायणो नाम यं विश्वमुपजीवति।
एष स्रष्टा विधाता च भर्ता पालयिता प्रभुः।
प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्म चिन्तकाः॥
एतावदेव वक्तव्यं मया नारद पृच्छते।
परं न वेद्मि तत्सर्वं यावांश्चाहं यथाप्यहम्॥
निशासुप्तोऽथ भगवान् क्षपान्ते प्रत्यबुध्यत।
पश्चाद्बुध्वा ससर्जाप्सु तासु वीर्यमपासृजत्॥'

इत्यादि सन्दर्भे भगवदुत्कर्षवर्णनं कृतम्। **सुवर्णवैकुण्ठ संवादे च** - महता प्रबन्धेन भगवतः परत्वं प्रपञ्चितम्। **सनत्कुमार-रुद्र संवादे।**

'किं वा ज्ञानेन द्रष्टव्यं यद्भवाननुपश्यति।
यच्च ध्यात्वा न शोचन्ति यतयस्तत्त्वदर्शिनः॥
कथयस्वमिमं देवं देहिनां यत्र संमतम्।
श्रेष्ठो भावोहि सर्वेषां ब्रह्मात्मानमनिन्दितम्॥
चतुर्थस्त्वं त्रयाणान्तु ये गताः परमां गतिम्॥

इति रुद्रेण पृष्टेन सनत्कुमारेण।

'देवदानवगन्धर्वा यक्षराक्षस किन्नराः।
यं न जानन्ति कोह्येषः कुतो वा भगवानिति॥
ओमित्येकाक्षरं ब्रह्म यत्तत् सदसतः परम्।
अनादिमध्यपर्यन्तं कूटस्थमचलं ध्रुवम्॥
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगद्गतिम्।
अनादिनिधनं देवं आत्मयोनिं सनातनम्॥

अप्रमेयमविज्ञेयं हरिं नारायणं प्रभुम् ।
कृताञ्जलिः शुचिर्भूत्वा प्रणम्य प्रणतोब्रवय ॥
अनाद्यन्तं परं ब्रह्म नदेवा नर्षयो विदुः ।
एकोयं वेद भगवान् धाता नारायणः स्वयम् ॥
नारायणादृषिगणास्तथा सिद्धमहोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःख मेषजम् ॥
यमाहुर्विजितक्लेशं यस्मिंश्च विहिताः प्रजाः ।
यस्मिन् लोकाः स्फुरन्तीशे जाले शकुनयो यथा ॥'

इति भगवदुत्कर्षः प्रतिपादित इत्युक्तम् । पुण्डरीक-नारद संवादे —

'यत् श्रेयं परमं कृत्यं अनुष्ठेयं महात्मभिः ।
सारं मे सर्व शास्त्राणां वक्तुमर्हस्यनुग्रहात् ॥'

इति प्रश्नोत्तरत्वेन प्रवृत्ते —

'श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् ।
श्रोतव्यश्च त्वया सम्यक् ज्ञातव्यं च विशांपते ॥
पुण्डरीकः पुरा विप्रः पुण्यतीर्थे जपान्वितः ।
नारदं परिपप्रच्छ श्रेयो योगपरं मुनिम् ॥
नारदश्चाब्रवीदेनं ब्रह्मणोक्तं महात्मना ।
अप्रभूतं प्रभूतार्थं वेदशास्त्रार्थसागरम् ॥
यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः ।
स एव सर्वभूतात्मा नर इत्यभिधीयते ॥
नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥
नारायणाज्जगत्सर्वं सर्गलोके प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये संप्रलीयते ॥

नारायणः परं ब्रह्म तत्वं नारायणः परः ।
परादपि परश्चासौ नास्ति तस्मात्परात्परम् ॥
वासुदेवं तथा विष्णुं आत्मानं च तथा विदुः ।
संज्ञा भेदैस्स एवैकस्सर्वशास्त्राभिसंस्तुतः ॥
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ।
तस्मात्वं गहनान् सर्वांस्त्यक्त्वा शास्त्रार्थ विस्तरान् ॥
अनन्यचेता ध्यायस्व नारायणमजं विभुम् ।
मुहूर्तमपि योध्यायेन्नारायणमतंद्रितः ॥
सोपि सद्गतिमाप्नोति किं पुनस्तत्परायणः ।
नमो नारायणायेति यो वेद ब्रह्म शाश्वतम् ॥
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ।
श्रवणान्मननाच्चैव गीतिस्तुत्यर्चनादिभिः ॥
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ।
लिप्यते न स पापेन नारायणपरायणः ॥
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ॥
केशवाराधनं हित्वा नैवयाति परां गतिम् ।
जन्मान्तरसहस्रेषु दुर्लभा तद्गतामतिः ॥
तद्भक्तवत्सलं देवं समाराधय सुव्रत ।
नारदेनैवमुक्तस्तु स विप्रोप्यर्चयद्धरिम् ॥
स्वप्नेऽपि पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ।
किरीटकुण्डलधरं लसच्छ्रीवत्सकौस्तुभम् ॥'

इति सन्दर्भे भगवदुत्कर्षः प्रतिपन्नः । - एवं भगवत्पारम्य प्रतिपादकानि वचनानि बहूनि सन्ति । तानि च सामस्त्येनोदाहर्तुं न शक्यानीति दिङ्मात्रमुदाहृतम् ।

अपि च। 'श्रुतोयमर्थो रामस्य' .... 'श्रुतं मे तात रामस्य,' 'ज्ञानवृद्धा मया राजन् बहवः पर्युपासिताः। आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा। असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे। विहितोसि हि दुर्धर्ष नारदादेवलात्तथा। इत्यादिषु बहुषु स्थलेषु बहुाचार्याभिमतत्वाख्यानात् भगवत्पारम्यं भारतसिद्धान्तः।

किञ्च भीष्मसिद्धान्त एव भगवतो बादरायणस्य सिद्धान्तः। यदिहास्ति तदन्यत्र यत् नेहास्ति न तत् क्वचिदित्युक्तरीत्या सकलधर्मरहस्य निधाने प्रबले भीष्मोपदेशमुखेनैव तेषां व्यक्तीकरणात् भीष्मेणोपदेशदशायां - 'नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च। व्यास नारदयोश्चापि श्रुतं श्रुतवतां वरेत्यादिषु स्वोपदिश्यमानार्थानां व्यासस्काशाच्छ्रुतत्वाभिधानात् भीष्मस्याप्ततमत्वप्रतिपादनाच्च। - तथाहि शान्तिपर्वणि राजधर्मेषु युधिष्ठिरः - 'श्रोतुमिच्छामि भगवन् विस्तरेण महामुने। राजधर्मं द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान्। आपत्सु च यथा नीतिः प्रणेतव्या द्विजोत्तम'। एवं पृष्टः —

'तमुवाच महातेजा व्यासोथवदतांवरः।
नारदं समभिप्रेक्ष्य सर्वं जानन् पुरातनम्॥
श्रोतुमिच्छसि चेद्धर्मान् निखिलेन नराधिप।
प्रेहि भीष्मं महाबाहो वृद्धं कुरुपितामहम्॥
स ते सर्वरहस्येषु संशयान्मनसि स्थितान्।
छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वतत्त्ववित्॥
जनयामास तं देवी साक्षात्त्रिपथगामिनी।
साक्षाद्ददर्श देवान् सर्वान् शक्रपुरोगमान्॥
बृहस्पति पुरोगांश्च ब्रह्मर्षीनसकृद्विभुः।
तोषयित्वोपचारेण स च नीतिमधीतवान्॥
उशनादेव यच्छास्त्रं देवासुरगुरुर्द्विजः।
तच्च सर्वं सवैयाख्यं प्राप्तवान् गुरुसत्तमः॥

भार्गवाच्च्यवनाच्चापि वेदान् सांगोपबृंहितान् ।
प्रतिपेदे महाबाहुर्वसिष्ठाच्चरितव्रतः ॥
पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम् ।
अध्यात्मगतितत्त्वज्ञमुपातिष्ठदयं पुरा ॥
मार्कण्डेयमुखात्कृत्स्नं यतिधर्ममवाप्तवान् ।
रामादस्त्राणि शक्राच्च प्राप्तवान् पुरुषर्षभ ॥
मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि ।
तथाऽनपत्यस्य सतः पुण्यलोकादिविश्रुताः ॥
यस्य ब्रह्मर्षयः पुण्या नित्यमासन् सभासदः ।
यस्य नाविदितं किञ्चित् ज्ञानं ज्ञेयेषु विद्यते ॥
सते वक्ष्यति धर्मज्ञो धर्मान् सूक्ष्मार्थतत्त्ववित् ॥'

इत्याप्ततमत्वं प्रतिपादितम् । तथा —

'वसिष्ठशिष्यं तं तातं मनसास्मि गतो नृप ।
दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् ॥
सांगांश्च चतुरो वेदान् तमस्मि मनसा गतः ।
रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव ॥
आधारं सर्वविद्यानां तमस्मि मनसागतः ।
सहि भूतं च भव्यञ्च भवञ्च पुरुषः परः ॥
वेत्ति धर्मभृतां श्रेष्ठस्ततो मे तद्गतं मनः ।
तस्मिन् हि पुरुषव्याघ्रे शान्ते भीष्मे महात्मनि ।
भविष्यति महीपाल नष्टचन्द्रेव शर्वरी ॥
चतुर्वेद्यं चातुर्होत्रं चातुराश्रम्यमेव च ।
चातुर्वर्ण्यं च धर्मं च पृच्छ त्वं पृथिवीपते ॥
तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरंधरे ।
ज्ञानान्यल्पीभविष्यन्ति तस्मात्वां चोदयाम्यहम् ॥'

इत्यादिषु भगवता व्यासतमत्वं भीष्मस्याख्यापितम् ।

'तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ॥'

इति भीष्मे ज्ञानातिशयवत्परवचनस्य तथ्यत्वकथनं च व्याससिद्धान्तमाविष्करोति ।

'यद्भवानाह भीष्मस्य प्रभावं प्रति माधव ।
तथैव नात्र सन्देहो विद्यते मम माधव ॥

महाभाग्यं च भीष्मस्य प्रभावं च महात्मनः ।
श्रुतं मया कथयतां ब्राह्मणानां महात्मनाम् ॥
भवांश्च कर्ता लोकानां यद्ब्रवीत्वरिसूदनः ।
तथा तदवबुध्येयं वाक्यं यादव नन्दन ॥'

इत्यपि भीष्मस्याप्ततमत्वं दृढयति । तस्मात् भीष्मस्याप्ततमत्वेनोपदेशस्य तत्सिद्धान्तस्य स्वसिद्धान्तख्यापनार्थत्वात् । भगवत्पारम्यस्य तेन **भीष्मेण सभापर्व भीष्मपर्व शान्तिपर्वानुशासनिकादिषु** सामान्यप्रश्ने विशेषोत्तर-रूपेण तत्वपरेषूपाख्यानेषु बहुधा प्रपञ्चितत्वात् भारतकर्तुर्भगवत्पारम्यमेव सिद्धान्त इति सिध्यतीति सर्वमनवद्यम् ।

यदाह कश्चित् — कृष्णेन कृष्णावताररूपेण प्राक् प्रतिगृहीतैः पूर्वरूपैः परवासुदेवात्मक मूलरूपेण च सदा पूज्यमानत्वं **महाभारते** शिवस्य प्रति-पाद्यत इति तस्यैव नारायणापेक्षयोत्कर्षो भारतात् इत्युन्नीयते। तत्र तावत्

**सौप्तिके अश्वत्थामानं प्रति शिववचनम्** —

'सत्यशौचार्जवत्यागैस्तपसा नियमेन च ।
क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा ॥
अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥'

इति — **आदिपर्वणि** सुभद्रापरिणयप्रस्तावे । समुद्रमध्ये कचिद्द्वीपविशेषे कृष्णेन शिवस्य पूजार्थं प्रवर्तितो महोत्सवः प्रपञ्चितः । **उपमन्यूद्देशेन**

कृष्णस्य द्वादशाब्दावधिक पाशुपतव्रतानुष्ठानपूर्वकं शिवाराधनमानुशासनिके पर्वणि प्रपञ्चेन प्रतिपादितम्। स प्रसिद्धं भारतशेषे हरिवंशे पार्थचरितं विहाय श्रीकृष्णचरितमेव निबन्धुं कृते पारिजातसंहितायां कैलासयात्रायामन्यत्र च तत्र तत्र पूजास्तुति तपोभिः कृष्णेन शिवप्रीणनं वैकृतमिति प्रपञ्चेन वर्णितम्। **द्रोणपर्वणि**। द्रोणवधानन्तरं क्रोधेन स्वप्रहितमाग्नेयास्त्रं कृष्णार्जुनयोः प्रथितं दृष्ट्वा व्रीलया धिगिति शस्त्रं परित्यज्य दक्षिणां दिशं प्रस्थितमश्वत्थामानं प्रति मार्गेणागतस्य वेदव्यासस्य वचनम्।

'देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः।
सर्वरूपं भवंज्ञात्वा लिङ्गेर्चयति स प्रभुम्।
तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः॥'

इति—तथा तत्रैव। एतौ कृष्णार्जुनौ पूर्वं नरनारायणावृषी। ताभ्यां लिङ्गार्चनया षष्टिवर्ष सहस्राणि शिवमाराधयितवद्भ्यां शिवेनातुलबलवीर्य-पराक्रमादयो बहवो वरादत्ता इति वेदव्यासेन कथितेनाहं किं शिवपूजक इति कृतानुयोगमश्वत्थामानं प्रति तस्यैव वचनम्।

'जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः।
आभ्यां लिङ्गेर्चितो देवस्त्वयार्चायां युगे युगे॥'

इति। इदञ्च मैनाके श्रीकृष्णस्य तपश्चरणं, बहुलार्हश्चेत्युभयम्। पारिजात-जिगीषया शिवं सम्पूज्य स्तुवन् कृष्णः शिवेनैव स्मारितः।

'इति संस्तूयमानो वै भगवान् गोवृषध्वजः।
प्रसार्य दक्षिणं बाहुं वासुदेवमथाब्रवीत्॥
मनीषितानामर्थानां प्राप्तिस्तेस्तु सुरोत्तम।
पारिजातं च हर्ताहं माभूत्ते मनसो व्यथा॥
पुरा मैनाकमाश्रित्य तपार्थमकरोयदा।
तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि॥

अवध्यस्त्वमजय्यस्त्वं मत्तः शूरतरस्तथा ।
भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥'

इति — एवं कृष्णस्य स्वपूर्वपरिगृहीतरूपैः कृते शिवाराधने कानिचिद्वच
उदाहृतानि तस्य मूलरूपेण कृतं शिवाराधनं ततो वरलाभश्चेत्युभयमार
पर्वणि तीर्थयात्राविधौ दर्शितं —

'ततो गच्छेत् सुपर्णाक्ष त्रिषु लोकेषु विश्रुतम् ।
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा ॥
वरांश्च सुबहून् लेभे दैवतैरपि दुर्लभान् ।
उक्तं च त्रिपुरघ्नेन परितुष्टेन भारत ॥
अपि चान्यैः प्रियतमो लोके कृष्ण भविष्यसि ।
त्वन्मुखं च जगत्सर्वं भविष्यति न संशयः ॥'

इति — एवं दैवतकण्टकवधे सम्भावितस्य दोषस्य प्रायश्चि
शिवाराधनरूपमेव भगवता कृतमिति तीर्थयात्राविधावेव पठ्यते ।

'तीर्थं कुरुकुलश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ।
प्रयाति नाम्ना विख्यातं सर्वपापप्रणाशनम् ॥
यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ।
तत्र स्नात्वार्चयित्वा च रुद्रं दैवगणैर्वृतम् ॥
जन्मप्रभृतिपापानि कृतानि नुदतेहरः ।
देवी चात्र नरश्रेष्ठ सर्वदेवैरभिष्टुता ॥
तत्र स्नात्वा नरव्याघ्रहयमेधमवाप्नवान् ॥
जित्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतं राजन् हत्वा दैवतकण्टकान् '॥

इति । अत्र शौचशब्देन शिवाराधनरूप प्रायश्चित्तमेवोक्तम् । यत्र ब्रह
देवा उपासन्ते महेश्वरमिति सन्निधिपाठात् तीर्थयात्राविधावेव नाराय

इति हिरण्यगर्भस्य शिवपत्न्याराधकत्वोक्त्या कैमुतिकन्यायेन सदा शिवाराधकत्वमपि भगवतो नारायणस्य विभावितम् ।

'ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम् ।
सहस्रकं च तत्रैव द्वे तीर्थे लोक विश्रुते ॥
उभयोश्च नरः स्नात्वा गोसहस्रफलं लभेत् ।
तत्र ब्रह्मा स्वयं नित्यं देवैः सह महीपते ॥
अन्वास्यते कुरुश्रेष्ठ नारायणपुरोगमैः ।
सान्निध्यं तत्र राजेन्द्र शिवपत्न्या कुरूद्वह ॥
अर्चयित्वा तु तां देवीं न दुर्गतिमवाप्नुयात् ॥'

इति । अत्रक्षेत्रे देवी सान्निध्यस्य तदर्चनतत्फलयोश्च वचनेन सम्भूय स्थितैः नारायणादिभिर्देवैः अन्वास्यमानस्य ब्रह्मणोऽवस्थानं देव्याराधनार्थमित्युन्नीयते ॥

**आनुशासनिके च**—

'त्वं च ब्रह्मा च विष्णुश्च त्वं च शक्रसमाहरैः ।
अर्चयध्वं सदा लिङ्गं तस्मात् पूज्यतरो हि कः ॥'

इत्युपमन्युवचनेन ब्रह्मविष्ण्वादिना नियमेन शिवाराधकत्वं स्पष्टीकृतम् । एवं **मौसलिकादिषु** अवताररूपस्य परब्रह्मरूपस्य च श्रीकृष्णस्य च शिवपूजनैः सकलवरलाभोक्त्या यत् भारते शिवस्य पारम्यं व्यञ्जनावृत्त्या प्रतीयते तदेव **श्रीमहाभारतस्य** वाच्यम् । श्रीनारायणचरितद्वारा व्यज्यमानं श्रीमहाभारतस्य प्रतिपाद्यम् । तस्य काव्यश्रेष्ठत्वेन व्यंग्यार्थ प्रधानकत्वात् । अतो भारतस्य शिवपारम्यतात्पर्यत्वमिति —

अत्रोच्यते—न तावत् कृष्णेन शिवाराधनानुष्ठानप्रतिपादनात् शिवोत्कर्षपरत्वं भारतस्याभ्युपगन्तुं युक्तम् ।

'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।'

इति वचनेन धर्मसंस्थापनार्थायावतीर्णत्वेनावगतस्य सन्ध्यावन्दनाग्निहोत्रदर्श-पूर्णमासाद्यनुष्ठानवदस्याप्युपपत्तेः । न हि सन्ध्यावन्दनादिसम्बन्धिसूर्यादीनां कृष्णापेक्षया परत्वं वक्तुं युक्तम् । किं बहुना – 'पपौ पादोदकं मुनेरि'त्यादि-भिर्नारदाद्यभ्यर्चनत्वमपि तस्यावगम्यत इति न कृष्णार्चितत्वात् तदाधिक्यं साधकम् ।

किं च किं नारायणाभ्यर्चितः त्रिमूर्त्यन्तर्गत उत परमशिवः । नाद्यः, 'ब्रह्मपुत्रस्य तस्यानपहतपाप्मा वा .... अहमस्मिनाममेवे हि' इत्युक्त्या-ऽनपहतपाप्मत्वेनावगतस्यापहतपाप्मत्वेनावगतनारायणापेक्षयोत्कर्षोक्त्ययोगात् ।

किं च महाभारत एव सनत्कुमाररुद्रसंवादे - 'तं प्रोवाच स्वागतं महेश्वर ब्रह्मसुत एतदासनमास्ताम्' इत्यत्र ब्रह्मपुत्रत्वेनावगतस्य,

'चतुर्थस्त्वं त्रयाणां तु ये गताः परमांगतिम् ।
ज्ञानेन च प्राकृतेन निर्मुक्तो मृत्युबन्धनात् ॥
वयं तु वैकृतं मार्गमाश्रिता वै क्षरं सदा ॥'

इत्यनेन कर्मवश्यत्वप्रतिपादनात् न तस्य सनत्कुमारापेक्षया न्यूनत्वेनावगम्य-[illegible] भगवदपेक्षयाधिक्यम् । न च ब्रह्म .... भगवद्रुद्रापेक्षया संहाररुद्र-[illegible]तोऽन्य एवेति वाच्यम् । एवमपि कृष्णेनोपासितत्वं ब्रह्मपुत्रस्यावगम्यत [illegible]त्वेन संहाररुद्रस्य तदन्यैश्चैवाधिक्यसाधनासम्भवात् कथं कृष्णार्च-[illegible] [illegible]त्वं सिध्यतीति चेत् - उच्यते —

'अश्वत्थामार्चितः कृष्णोऽर्चितश्च शिव एक एव ।'

इति तावत् सिद्धम् ।

'क्षान्त्या भक्त्या च धृत्या च कर्मणामनसागिरा ।
अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा ॥
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ।'

इत्याद्यश्वत्थामाराधनपूजितशिववाक्यात् ।

'आम्यां लिङ्गेऽर्चितो देवः त्वयार्चायां युगे युगे ।'

इति व्यासवचनाचाश्वत्थामोपास्यश्च ब्रह्मपुत्र एव । युधिष्ठिरेण कथमेके-नाश्वत्थाम्ना बहवो धृष्टद्युम्ना हता इति पृष्टेन कृष्णेन ।

'नित्यं सदैव देवानां ईश्वरेश्वरमव्ययम् ।
जगाम शरणं देवमेवमस्तेनाब्रवीत् बहून् ॥'

इति रुद्रमाहात्म्यात् धृष्टद्युम्नादिहन्तृत्वमुपपाद्य ।

'सिसृक्षुरथ भूतानि स सृजेत्प्रथमं प्रभुः ।
पितामहोऽब्रवीच्चैनं भूतानि कुरु मा चिरम् ॥
हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शी तथा प्रभुः ।
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ॥'

इति ब्रह्मपुत्रत्वाविष्करणात् ।

किं चाश्वत्थामोपास्य चरित्रमुपक्रम्य ।

ततस्स यज्ञं देवेशो विव्याध हृदि पत्रिणा ।
व्यपासरत्तदा यज्ञो मृगो भूत्वा स पापकः ॥
त्र्यम्बकः सवितुर्बाहू भगस्य नयने तथा ।
पूष्णश्च दशनान् सर्वान् धनुष्कोट्याप्यशातयत् ॥'

इत्यादि चरित्रं वर्ण्यते । तस्य ब्रह्मपुत्रत्वमपि 'प्रजापतिस्तमसृजत् । तमसो-ऽन्ते महातप' इत्युपक्रम्य शतरुद्रीये ।

'प्रजापतेस्तु दक्षस्य यजतो वितते क्रतौ'

इत्यादिना वर्णनादवसीयते । अपि च क्रतुध्वंसत्रिपुरसंहरणयोरेकपुरुषचरित्रत्व-मर्जुनसाहाय्यकर्तृत्वेन प्रतिपादित पुरुषचरित्रत्वेन तयोर्द्रोणपर्वणि प्रतिपादनाद-वसीयते । त्रिपुरसंहरणं चतुर्मुखापेक्षया न्यूनस्य चरित्रमिति ।

तानब्रवीत् महादेवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं वै स्वयं संचिन्त्यमाचिरम् ॥

इत्यादि कर्णपर्ववचनबलादवगम्यते । ततोऽपि कृष्णोपास्य चतुर्मुखपुत्र न चास्य नारायणापेक्षयोत्कर्षो वर्णयितुं शक्यः ।

'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं किंचिदुपाश्रितः ॥'

इत्यादिप्रमाणविरोधात् । अत एव न द्वितीयः । उक्तप्रमाणबलात् ब्रह्म तदर्चनीयत्वावगमात् । परमशिवगामित्वायोगात् कृष्णार्चनीयत्वस्य ।

अपि च द्रोणपर्वणि लिङ्गार्चकत्वप्रतिपादनप्रकरण एव बादरायणेन ।

योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः ।
आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः ॥
रक्षिता सर्वलोकस्यानादिनिधनोऽच्युतः ।
व्याकुर्वते यस्य तत्त्वं श्रुतयो मुनयश्च ह ॥
अजेतव्यः सर्वभूतैः मनसाऽपि जगत्पतिः ।
तस्मादिमं जेतुकामोऽज्ञानतमसावृतः ॥
मा शुचः पुरुषव्याघ्र विद्धि तद्वदिहार्जुनम् ।
तस्याश्शक्तिरसौ पार्थ तस्माच्छोकमिमंत्यज ॥

इति । प्रथमं भगवतो जगत्कारणत्ववेदवेद्यत्वादिप्रतिपादनमुखेन स्वाभावि शयार्थमजय्यत्वहेतुं प्रतिपाद्य पुनरपि ।

यो द्रौणेरात्मनोजन्यत्वहेतुर्महेश्वरप्रसादादप्रतिहतवीर्यास्त्रादिलाभोऽ तत्रापि तदतिरार्थं वक्तुम् ।

विश्वे परोऽय लोकादिपरमात्माऽप्यधोक्षजः ।
सहस्रसम्मितादंशादेकांशोऽयमजायत ॥
देवानां हितकार्यार्थे लोकानां चैव सत्तम ।
व्याजायत सत्कार्यार्थं पुत्रो धर्मस्य विश्वसृक् ॥'

मन्दिना तपश्चरणं शिवस्तुतिः ततो वरलाभादिकं च प्रतिपादितमिति ।

'पुनस्त्वहं देवयोनौ वर्तामि भृगुनन्दन ।
तदेह देववत्सर्वं आचरामि न संशयः ॥
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ।
तेन वञ्चयते लोकान् मायायोगेन केशवः ॥'

इत्यादिप्रमाणप्रतिपन्नया रीत्या अवतारमर्यादानुसारित्वं स्फुटमवगम्यत इति न शिवार्चकत्वं भगवन्निकर्षापादकम् ।

किं च —

'प्रीत्यास्य वै लोकपितामहेशिवात्मानमात्मानमनन्यभावम् ।'

'विद्वानेवं ब्रह्मशुक्रमिति वचनेनापि तत्रत्येन भगवन्निकर्षपरिहारः सूच्यत इति न भगवदपेक्षया शिवाधिक्यसाधकं तदाराधकत्वम् । किं च ब्राह्मणादिसाधारणमप्यनिर्वचनीयत्वं देवतान्तरापेक्षया भगवति निकर्षशङ्कामपि जनयितुं न प्रभवति ।

'मया प्रमाणं हि कृतं लोकस्समनुवर्तते ।
प्रमाणानीह पूज्यानि ततस्तं पूजयाम्यहम् ॥
न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।
इति संचिन्त्य मनसा पुराऽहं विश्वमीश्वरम् ॥
पुत्रार्थमाराधितवानात्मानात्मानमात्मनः ।
न हि विष्णुः प्रणमति कस्मैचित् विबुधाय तु ॥
ऋतमात्मानमेवेति ततो रुद्रं नमाम्यहम् ।
स ब्रह्मकाः स रुद्राश्च सेन्द्रा देवा महर्षिभिः ॥
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम् ॥'

इति । तत्रैव भारते भगवत्कृतशर्वार्चनस्य धर्मसंस्थापनार्थत्वस्य स्वभावतस्तस्यान्यार्चनकरत्वाभावस्य ब्रह्मरुद्रार्चनीयत्वस्य चाविष्करणात् । किं च कृष्ण-

कृतशिवोपासनावर्णनप्रकरण एव कैलासयात्रायां परवस्तुनिर्धारणासमर्थमु
शङ्कापनोदनार्थमुपासकातिशयस्य तदुपास्यापरत्वस्य च ।

'एतदेव परं वस्तु नैतस्माद् विद्यते परम् ।'

इत्यनेन — 'ध्यात्वा मां सर्वयत्नेन ततो जानीत केशवम् ।
उपास्योऽयं सदा विप्रा उपायोऽस्मि हरेःस्मृतौ ॥'

इत्यनेन — 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् ॥'

इत्यनेन च प्रतिपादनात् कथं कृष्णकृतशिवाराधनं तस्यावरत्वमापादयेत् ।

ननु माऽस्तु कृष्णाद्यवतारदशाभाविधर्मसंस्थापनार्थशिवार्चनं शिव
साधकमिति मूलरूपेण नारायणकृतं तु शिवाराधनं तदतिशयसाधकं स
चेत्—न । मूलरूपेण शिवार्चनं कृतमित्यत्र भारतेऽनन्यथासिद्धवचनादर्श
'यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा' इत्येतदवतारदशाभाव्यर्चन
योगपन्नं तस्य तीर्थप्रशंसापरस्य यथाकथञ्चिदुपपन्नार्थत्वात् । अन्यथा ।

'न हि मे केनचिद्देयो वरः पाण्डवनन्दन'

इत्यादिविरोधात् । न चावतारदशाभाव्यर्चनपरत्वे ।

'तन्मुखं च जगत्सर्वं भविष्यति न संशयः'

इत्येतदनुपपन्नमिति वाच्यम् । तस्य राक्षसादिवधकरणेनावतारदशास्वपि त
सौख्यसम्पादनेन जगत्पालनं करिष्यसीत्येतावन्मात्राभिप्रायकत्वात् ।

यत्तु — 'जित्वा यत्र महाप्राज्ञ विष्णुनाप्रभविष्णुना ।
पुरा शौचं कृतं राजन् हत्वा दैवतकण्टकान् ॥'

इत्यत्र शिवाराधनमेव शौचशब्देनाभिधीयते इति तत्तु न सम्यक् । शौच
शिवाराधनपरत्वे मानाभावात् । आयुधक्षालनपरत्वेन हस्तपादक्षालनपर
पत्तेः । न च 'यं ब्रह्मादयो देवा उपासन्त' इति सन्निधिपाठात् नाराय

देव्याराधकत्वं प्रतीयत इति वाच्यम्। 'ब्रह्मादय' इत्यत्र नारायणग्रहणे प्रमाणाभावात्। न च।

'तीर्थयात्राविधावेव नारायणपुरोगमैः'

इति नारायणादिसहितस्य हिरण्यगर्भस्य शिवपत्न्याधिकत्वोक्त्या कैमुतिकन्यायेन नारायणस्य शिवाराधकत्वमपि सिध्यतीत्यत्रापि तस्य ग्रहणं युक्तमिति वाच्यम्। नारायणपुरोगमैरन्वास्यते तत्र ब्रह्मेत्येतावन्मात्रप्रतिपादनदर्शनेन देव्याराधकत्वाप्रतिपादनात्। न च ब्रह्मावस्थानस्य प्रयोजनाकाङ्क्षायां देव्याराधनमेव प्रयोजनमुन्नीयत इति वाच्यम्। क्वचित् ब्रह्मण उपासकत्वकीर्तनस्य सर्वत्र न्याय्यत्वापादनासामर्थ्यादुपास्योपासकभावात् क्रमस्य बहुशो दर्शनेनोपास्यत्वेन सन्निधिरित्यपि वक्तुं शक्यत्वाच्च। वस्तुतो ब्रह्मादय इत्यत्र नारायणस्य ग्रहणेऽपि तस्य शिवार्चकत्वमवतारदशामनुसृत्योपपन्नमिति प्रपञ्चितमधस्तात्।

न च – 'यस्य ब्रह्मा च विष्णुश्च त्वं च शक्रः सहामरैः'

इति विष्णोः शिवार्चकत्वं प्रतीयत इति वाच्यम्। अस्यापि **वराहपुराणा**द्यवगत-शिवसम्प्रदानक भगवत्कर्तृकवरप्रदानानुपालनार्थं भगवदनुष्ठितशिवार्चनमादाय रुद्रस्तावकत्वात् तानि च शिवकर्तृकस्वाराधनाभ्यर्थनतदभ्युपगमपूर्वकभगवत्कर्तृक-वरप्रदानप्रतिपादकवचनानि **प्रथमपरिच्छेदे** समुदाहृतानि।

'अहमप्यवतारेषु त्वां च रुद्र तपोधन।
तामसानां मोहनार्थं पूजयामि युगे युगे॥'

इति च **पाद्मपुराणे** प्रतिपाद्यते। न च,

'मया प्रमाणं हि कृतं लोकः समनुवर्तते'

इत्यादिना धर्मसंस्थापनार्थत्वप्रतिपादनव्याकोपप्रसङ्गः इति वाच्यम्। भगवदपेक्षया परत्वज्ञानहेतुत्वेन तामसजनव्यामोहकत्वस्य प्रचुरमतीनां भगवज्ज्ञानादि-फलार्थं शिवार्चनमनुष्ठेयम्। विशिष्टजनानुष्ठितत्वादित्येवं बुध्युत्पादनद्वारेण धर्मसंस्थापनार्थस्य चोपपत्तेः।

एतेनास्य 'काव्यस्य कवयो न समर्था विशेषण'
इत्यादिभिः भारतस्य काव्यत्वावगमात् । काव्यस्य च व्यंग्यप्रा
नारायणस्य पूज्यत्वप्रतिपादनाव्यंग्ये शिवपारम्य एव भारतस्य ता
निरस्तम् । तत्रैव भारते ।

मया प्रमाणं हि कृतं लोकस्समनुवर्तते ।
प्रमाणानीह पूज्यानि ततस्तं पूजयाम्यहम् ॥
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ।
स ब्रह्मकाः सरुद्राश्च सेन्द्रा देवा महर्षयः ॥
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम् ।
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ॥

इत्यादिवाक्येन स्वतोऽन्येन पूज्यत्वाभावस्येतरप्रणामस्यावतारमर्यादानुस
स्यैव वस्तुतः शिवादिपूज्यत्वस्य प्रतिपादनेनान्यथासिद्धेन भगवदा
ब्रह्मणादिसाधारण्येन शिवस्यैकस्य तदपेक्षया परत्वकल्पनानुन्मेषात्
कत्वस्य कल्पयितुमशक्यत्वात् ।

किं चैवं सति कुन्तीयुधिष्ठिरभीमसेनकुचेलादिप्रणामाद्यनुष्ठ
[illegible]णामादिवत् न मदपेक्षया तस्य परत्वभ्रमः कार्य इ
[illegible] स्यादिति भगवदपेक्षया परत्वमपि व्यञ्जयितुं शक्यम् ।
[illegible]मर्यादानुसरणमादायाप्युपपन्नत्वात् न शिवापरत्वव्यञ्जनमिति
तर्हि न शिवपारम्यव्यञ्जकत्वमपि व्यञ्जयितुं शक्यम् । अवतार
सरणमादाय तस्याप्यन्यथासिद्धत्वात् ।

यदपि – 'ततस्तस्मिन् प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमभयं वीर तेजसा तस्य मोहितम् ॥
ब्रह्मादिभिः सुरैः राजन् ऋषिभिश्च तपोधनैः ।
विज्ञप्तो वै महातेजा ऋषेरर्थे नराधिपे ॥'

इति । मङ्कणनृत्तेन ब्रह्मादिस्थावरान्तस्य मोहोक्त्या तदनन्तरं शिवेन मङ्कणकनृत्तविरामकरणप्रदर्शनात् तस्य मोहाभावावगत्या शिवपारम्यं व्यञ्जितमिति - तदसङ्गतम् - ब्रह्मादीनां मोहितत्वस्यात्र प्रतिपादनादर्शनात् 'स्थावरजङ्गमं च नृत्तमिमि'त्येतावदुच्यते । न च स्थावरजङ्गमप्रनृत्तत्वोक्त्या तदनन्तर्गतानां ब्रह्मादीनां प्रनृत्तत्वमपि सिद्धमिति वाच्यम् । सकलजगत्सृष्टिसमर्थस्य चतुर्मुखस्य तपः प्रभावजनितलोकोत्तरसामर्थ्यानां नारदादीनामृषीणां च किंचिन्नृत्तमात्रान्मोहितत्वोक्त्ययोगात् । तर्हि किमर्थं शिवप्रार्थनं कृतमिति चेत् - न । इतरजनव्यामोहनिवृत्त्यर्थं तदुपपत्तेः । न च स्वत एव मङ्कणनृत्तविरामकरणसामर्थ्यसम्भवे किमिति शिवप्रार्थनं कृतमिति वाच्यम् । तदंशे सामर्थ्यातिशयत्वेन तत्प्रार्थनोपपत्तेः । शिवस्य मोहाभावोऽपि न पारम्यसाधकः । नृत्तचतुरत्वेनान्यनृत्तदर्शनेन मोहितत्वोपपत्तेः ।

यदपि – 'नान्यं देवमहं मन्ये रुद्रात्परतरं महत् ।
चराचरस्य जगतो गतिस्त्वमसि शूलधृत् ॥
त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ।
त्वामेव भगवन् सर्वे प्रविशन्ति युगक्षये ॥'

इत्यादि मङ्कणेन शिवपारम्य प्रतिपादनात् सर्वोत्तरत्वमिति - तदप्यनुपपन्नम् - अनन्यथासिद्धपूर्वोक्तभारतस्थबहुवचनविरोधेन तेषां वचनानामवान्तरसृष्ट्यादिक्रमादाय संकुचितार्थत्वात् ।

एतेन मैनाके नारायणतपश्चर्यानन्तरं तत्कृतस्तुतौ जगत्कारणत्वादिकीर्तनात् शिवस्य परब्रह्मत्वमिति निरस्तम् । सामान्यप्रश्ने विशेषोत्तररूपैः पूर्वोदाहृतैर्बहुभिर्वचनैर्विरुद्धानां स्तुतिप्रकरणगतानां स्वार्थसाधकत्वासम्भवात् ।

नन्वेवमपि पाशुपतास्त्रसन्धानप्रकाशविशेषाभिज्ञानाय कृष्णार्जुनकैलासगमनवर्णनप्रकरणे ।

'स्तूयमानांस्तवैर्दिव्यैर्ऋषिभिः ।
गोप्तारं सर्वलोकानां दृष्ट्वा स परमाच्युतम् ॥

वासुदेवस्तुतं दृष्ट्वा जगाम शिरसा क्षितिम् ।
पार्थेन सह धर्मात्मा गृह्णन् ब्रह्म सनातनम् ॥
लोकादिं विश्वकर्माणं ऋषिमीशानमव्ययम् ।
तमसः परमं ज्योतिः खं वायुर्ज्योतिषांपतिम् ॥
स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पुरा ।
देवदानवयक्षाणां मनुष्याणां च शासकम् ॥'

इत्यादिना ब्रह्मधर्मोक्तिपूर्वकं परब्रह्मत्वमाविष्कृतं भगवता बादरायणेनैवेति चेत् — न - अस्याप्यवान्तरसृष्ट्यादिकर्तृत्वमादाय सङ्कोचसहिष्णुत्वात् श्रीमन्नारायणावेशावतारत्वेन भगवत्कालसत्त्वयोगसत्त्वेन भगवद्धर्मवर्णनसम्भवाच्च । भगवत्पारम्यशिवपारम्ययोरुभयोरपि तस्मिन् प्रबले प्रतीयमानत्वेनैकस्यान्यथासिद्धिवर्णनायावश्यंभावे सति भगवत्पारम्ये अन्यथासिद्धिवचनभूयस्त्वोपलम्भात् तात्पर्यातिरेके प्रतीतेश्शिवपारम्यप्रतिपादकांश एव क्वचित् कोणेस्थितोऽन्यथासिद्ध इत्युन्नीयते । न हि 'कुतस्सृष्टमिदं सर्वं' 'प्रयाणकाले किं जप्यं'

'योगमेव परं तत्त्वं मोक्षस्य वद भारत ।
कुतश्चाहं कुतश्चत्वं यं विश्वमुपजीवति ॥
.... .... येनविश्वमिदं ततम् ।
यं प्राप्य न निवर्तन्ते तं भवान् वक्तुमर्हसि ॥
किं वा ज्ञानेन द्रष्टव्यं .... .... .... ।
यज्ज्ञेयं परमं कृत्यं अनुष्ठेयं महात्मभिः ॥
सारं मे सर्वशास्त्राणां .... .... ।

इत्येवं रूपेण च प्रवृत्तप्रश्नोत्तरभूतेषु सन्दर्भेष्वन्यथासिद्धिसम्भावनोदेतुमर्हति ।

अपि च पञ्चमवेदत्वेनाभिमतस्य भारतस्योपनिषत्वेन हि भगवद्गीतांशः प्रसिद्धः ।

'अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ।'

र्मान् विशिष्य कीर्तनेन व्याससिद्धान्तत्वं च स्फुटीक्रियते । तदर्थस्य परिग्रहो-त्यतिशयितः प्रवेशान्तरापेक्षया तस्य । अतस्तदनुसारेणैव शेषोंऽशो नेयः । तस्य तदन्यपरत्वभाषणस्य लघुत्व प्राप्तिप्रकारश्च प्रथमपरिच्छेदोपपादितया-दिशा उन्नेयः ।

किं च **आनुशासनिके** —

'त्वत्त एव तु राजेन्द्र राजधर्माश्च पुष्कलाः ।
श्रुतं पुराणमखिलं नारदेन निवेदितम् ॥
गुह्यं नारायणाख्यानं त्रिविधं क्लेशनाशनम् ।
एकान्तधर्मनियमाः समासा व्यासकल्पिताः ॥

इति रहस्यतमत्वेन कथितेन - **नारायणीये** —

'गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतांकांयजेतजसः ॥
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैश्रेयसम्पदम् ।
विधिना केन जुहुयात् देवपित्र्यमथापि च ॥
मुक्तश्च कांगतिं गच्छेत् मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्यात् येन नच्यवते दिवः ॥
देवतानां च को देवः पितॄणां च पिता तथा ।
सृष्टेः परतरं यच्च तन्मे ब्रूहि पितामह ॥'

इति प्रश्नोत्तरत्वेन प्रवृत्ते सन्दर्भे नारायणाभ्यां नारदस्य संवादमुपक्षिप्य —

'यत्तु सूक्ष्ममविज्ञेयं अव्यक्तमचलं ध्रुवम् ।
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैर्विवर्जितम् ॥
स सन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।
त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति कल्पितः ॥

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।
अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरव्यया ॥
तां योनिमावयोर्विद्धि या सा सदसदात्मिका ।
आवाभ्यां पूजितोऽसौ हि दैवे पित्र्ये च कल्पिते ॥
नास्ति तस्मात् परोन्यो हि पिता देवोऽथवा द्विजः ।
आत्माहितौ हि विज्ञेयस्ततस्तं पूजयावहे ॥
तेनैव स्थापिता ब्राह्मी मर्यादा लोकभाविनी ।
दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ॥
ब्रह्मास्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः ।
मरीचिरङ्गिरश्चात्रिः पुलस्त्यः पुलहः क्रतुः ॥
वसिष्ठः परमेष्ठी च विवस्वान् सोम एव च ।
कर्दमश्चापि यः प्रोक्तः कृतोपि कृतिरेव च ॥
एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः ।
तस्य देवस्य मर्यादां सृजन्तं च सनातनीम् ॥
दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः ।
आत्मप्राप्तानि च ततो जानन्ति द्विजसत्तमाः ॥
स्वर्गस्था अपि ये केचित् तं नमस्यन्ति देहिनः ।
ते तत्प्रसादात् गच्छन्ति तदाविष्टफलां गतिम् ॥
ये हीनाः सप्तदशभिः गुणैः कर्मभिरेव च ।
कालः पञ्चदशात्यक्त्वा ते मुक्ता इति निश्चिताः ॥
मुक्तानां तु गतिं ब्रह्मन् क्षेत्रज्ञ इति कल्पितः ।
स हि सर्वगतिश्चैव निर्गुणश्चैव कथ्यते ॥
दृश्यते ज्ञानयोगेनावां च प्रसृतौ ततः ।
एवं ज्ञात्वा तमात्मानं पूजयावस्सनातनम् ॥
तं वेदाश्चाश्रमाश्चैव नानातनुसमाश्रितम् ।
भक्त्या संपूजयन्त्याद्या गतिं चैषा .... ॥

ये तु तद्भाविता लोके एकान्तत्वं समाश्रिताः ।
एतदभ्यधिकं तेषां तत्तेजः प्रविशन्त्युमे ॥'

इत्यादिना भगवत्पारम्यं प्रपञ्चितम् ।

'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव नरान् श्वेतांश्चन्द्रप्रभान् शुभान् ॥
पूजयामास शिरसा मनसा तैश्च पूजितः ।
दिदृक्षुर्जप्य परमस्सर्वाश्चर्यधरं हरिम् ॥'

इत्यादिना भगवत्स्तोत्रभगवद्दर्शनवर्णनानन्तरं —

'एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ॥
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्येकान्तिनः श्रेष्ठान् त्वं चैवैकान्तिकोमतः ॥
ममैतास्तनवः श्रेष्ठा जाता धर्मे गृहे द्विज ।
तांस्त्वं भजस्व सततं ध्यायस्व च यथातथम् ॥'

इति पाञ्चरात्रशास्त्रप्रतिपाद्यैकान्तिधर्मनिष्ठैकदृश्यत्वं धर्मात्मजनारायणादि-रूपेणावतीर्णत्वमुक्त्वा भगवतस्सर्वजगत्कारणत्वादिकमुपपाद्य —

'अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये संप्रलीयते ।
नास्ति तस्मात्परं भूतं पुरुषाद्वै सनातनात् ॥
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥'

इत्युक्त्वा सङ्कर्षणप्रद्युम्नानिरुद्धादिरूपवत्त्वं जीवमनोऽहङ्काराभिमानित्वं तैरूपैः वर्णयित्वा ब्रह्मादिवृन्दत्वमुपपाद्य मत्स्यकूर्माद्यवतारभाक्त्वमुपपादितम् । इदं च प्रघट्टं स्वप्रतिपाद्यत्वे तात्पर्यातिशयवत्, सामान्यप्रश्ने विशेषोत्तररूपेण प्रवृत्तत्वात् । 'गुह्यं नारायणाख्यानम्' इत्यानुशासनिके रहस्यतमत्वज्ञापनात् ।

'मुक्तोऽन्यानि च ते राजन् उपाख्यानशतानि च ।
यानि भूतानि धर्माणि तेषां सारोऽयमुद्धृतः ॥'

इत्यत्रापि सर्वोपाख्यानश्रेष्ठत्वप्रतिपादनाच्च ।

अपि च 'योह्यस्माकं गुरुश्रेष्ठः कृष्णद्वैपायनः प्रभुः ।
स जगौ परमं जप्यं नारायणमुदीरयन् ॥
शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः ।
पराशरसुतः श्रीमान् व्यासो वाक्यमुवाच ह ॥
य एष गुरुरस्माकमृषिः सत्यवतीसुतः ।
तेनैतत्कथितं तात माहात्म्यं परमात्मनः ॥
अस्माच्छ्रुतं मयाचेदं कथितं च तवानघ ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ॥
को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत् ।
धर्मान्नानाविधांश्चैव को ब्रूयात्तमृतेप्रभुम् ॥
एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम ।
मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥
एवं स भगवान् व्यासो गुरुर्मम विशांपते ।
कथयामास धर्मज्ञो धर्मराजे द्विजोत्तम ॥
ऋषीणां सन्निधौ राजन् शृण्वतोः कृष्णभीष्मयोः ।
तस्याप्यकथयत् सर्वान्नारदस्सुमहातपाः ॥'

इत्यादिषु नारायणीयप्रतिपादितानामर्थानां साक्षाद्व्यासोपदिष्टत्व तत्सिद्धान्तत्वमवसीयते ।

किं च नारायणीयप्रतिपादितस्यैकान्तिधर्मस्य ब्रह्मणा स्वकीं वाचिकचाक्षुषादिजन्मसु तत्तन्मुनिमुखेन प्रवृत्तिमत्त्वमुपपाद्य पुनरपि ।

'यदिदं प्रथितं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन हि ॥

पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥'

इति नारायणसकाशादधिगम्य पूर्ववत्प्रवर्तनम् ।

'ततो ज्येष्ठः सदौहित्रे प्रादात् दक्षो नृपोत्तमः ।
आदित्ये सवितृज्येष्ठे विवस्वान् जगृहे ततः ॥
त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥'

इत्यादिना वैदिकसार्वभौमप्रवृत्तित्वं चाभिधाय ।

'नारदेन तु सम्प्राप्तः सरहस्यः ससङ्ग्रहः ।
एष धर्मो जगन्नाथात् साक्षान्नारायणान्नृप ॥
एवमेष महाधर्मः आद्यो राजन् सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥
धर्मज्ञानेन चानेन संप्रयुक्तेन कर्मणा ।
अहिंसा धर्मयुक्तेन प्रीयते हरिरीश्वरः ॥'

इति भगवतोऽधिगम्य नारदेन प्रवर्तितत्वं तस्य धर्मस्यातिशयेन भगवत्प्रीतिहेतुकत्वं चोपपाद्य ।

'यत्र चैकान्तिनो यान्ति नारायणपरायणाः ।
तदेव केवलं स्थानं मुक्तानां परमं भवेत् ॥'

इत्येकान्तिधर्मनिष्ठामेव मुक्तिरित्युक्त्वा ।

'एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम ।
मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥
एवं स भगवान् व्यासो गुरुर्मम विशांपते ।
कथयामास धर्मज्ञो धर्मराजे द्विजोत्तम ॥

ऋषीणां सन्निधौ राजन् शृण्वतोः कृष्णभीमयोः ।
तस्याप्यकथयन् सर्वान् नारदः सुमहातपाः ॥'

इति स्वसंप्रदाये वैशम्पायनेन वर्णिते ।

'एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम् ।
न कुर्वन्ति कथं विप्रा आद्यं नारायणेरितम् ॥

इति पृष्टवन्तं जनमेजयं प्रति ।

'एकान्तिनो हि पुरुषा बहवो दुर्लभा नृप ।
यद्येकान्तिभिराकीर्णं जगत् स्यात् कुरुनन्दन ॥
अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः ।
जनैः कृतयुगप्राप्तिरीदृशैः कर्मवर्जितैः ॥
तिस्रस्तु भावाः ये राजन् देहबन्धेषु निर्मिताः ।
सात्त्विकी राजसी चैव तामसी चेति भारत ॥
देहबन्धेषु पुरुषश्रेष्ठः कुरुकुलोद्वह ।
सात्त्विकः पुरुषव्याघ्रः भवेन्मोक्षार्थचिन्तकः ॥
तत्रापि यो विजानाति पुरुषं ब्रह्मवर्तिनम् ।
नारायणपरं मोक्षं ततो वै सात्त्विकः स्मृतः ॥
मनीषितं च प्राप्नोति चिन्तयन् पुरुषोत्तमम् ।
एकान्तभक्तस्सततं नारायणपरायणः ॥
मनीषिणो हि ये केचित् यतयो मोक्षकाङ्क्षिणः ।
तेषां वै च्छिन्नतृष्णानां योगक्षेमवहो हरिः ॥
जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकस्स तु विज्ञेयो भवमोक्षार्थचिन्तकः ॥
नारायणेन दृष्टश्च प्रतिबुद्धो भवेत्पुमान् ।
एवमेष महाभाग प्रतिबुद्धो विजायते ॥

साङ्ख्ययोगेन तुल्यो हि धर्म एकान्तिसेवितः ।
नारायणात्मको मोक्षः ततो याति परां गतिम् ॥
राजसी तामसी चैव व्यामिश्रा प्रकृतिस्स्मृता ।
तदात्मकं हि पुरुषं जायमानं विशांपते ॥
प्रवृत्तिलक्षणैर्युक्तं नापेक्षति हरिस्स्वयम् ।
पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ॥
रजसा तमसा चैव मानसं समभिप्लुतम् ॥'

इत्यादिना भगवत्कटाक्षवीक्षापरिशुद्धहृदयसात्त्विकाग्रगण्यः सुलभतरं तदितर-जनदुर्लभतां चास्य धर्मस्य प्रतिपाद्य —

'इत्थं हि दुष्करो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथाऽन्ये तु भवन्ति विमोहिताः ॥
कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
स एव कारकश्चैव कारणं च विशांपते ॥'

इति तेनैव वैशम्पायनेन मोहाधीनमितरजनाननुष्ठानमिति प्रतिपादनात् अत्रा-दरातिशयः स्फुट इति नारायणपारम्यतदैकान्तिकत्वादिकं **भारतकृदभिमत**मिति युक्तमुत्पश्यामः ।

**उपमन्यूपाख्यानस्य** भारतस्थत्वेऽपि शिवमाहात्म्यं वदेति प्रश्ने सति तदुत्तररूपेण प्रवृत्तत्वादर्थवादतया नेतुं शक्यमिति तत्र शिवस्य सर्वोत्तमत्वप्रतिपादनात् भारतस्य तत्तात्पर्यकत्वमिति मूर्खाणां प्रलापो नादर्तव्यः ।

एतेन — 'सोऽसृजद्दक्षिणादङ्गात् ब्रह्माणं लोकसम्भवम् ।
वामपार्श्वात् तथा विष्णुं लोककर्तारमीश्वरम् ॥
युगान्ते चैव संप्राप्ते रुद्रं प्रभुरथासृजत् ॥'

इति त्रिमूर्तिसृष्टत्वप्रतिपादनात् शिवस्योत्तीर्णत्वं ततस्सिध्यतीति निरस्तम् । भगवत्कलावेशमादाय शिवस्तावकत्वादस्य वचनस्य अन्यथा बहुषु स्थलेषु भगवत्पारम्यप्रतिपादनव्याकोपप्रसङ्गः ।

—यत्तु 'यं विष्णुरिन्द्रश्शम्भुश्च ब्रह्मालोकपितामहः ।
स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ॥
तमर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते ॥'

इत्यनेनोत्तीर्णत्वं सिध्यतीति - तन्न —

'य एष रक्तपद्माक्षः पीतवासा महाभुजः ।'

इत्यारभ्य 'अस्मिन्नर्पितकर्माणं सर्वभावेन भारत ।
कृष्णे कमलपत्राक्षे दुर्गाण्यतितरन्त्युत ॥'

इत्यनेन भगवद्भजनस्य दुर्गाण्यतितरणहेतुत्वमुक्त्वा —

'लोकरक्षार्थमुत्पन्नमदित्यां कश्यपात्मजम् ।
देवमिन्द्रं नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥
ब्रह्माणं लोककर्तारं ये नमस्यन्ति सत्पतिम् ।
यष्टव्यं क्रतुभिर्देवं दुर्गाण्यतितरन्ति ते ॥'

इत्यनन्तरमस्य पाठात् पूर्वोपात्तदेवतार्चनीयत्वेनातिशयस्य प्रसिध्या शिव स्यौचित्यादस्योत्तीर्णत्वे प्रमाणाभावसम्भवात् । शम्भुश्चेत्यत्र शम्भुशब्दस्य चतुर्मुखेऽपि शक्त्या तत्परत्वोपपत्तेः । यदि तत्र विष्णुचतुर्मुखकीर्तनस्य विष्णुचतुर्मुखान्तर्गतरुद्रकीर्तनानन्तरादयं श्लोकः पठितः स्यात्, तदोत्तीर्णशिवपरत्वं स्यात्; न हि तथा । अतो यत्प्रायेश्रूयते यच्च तत्ताद्दगवगम्यत इत्यनेकान्तर्गतपरत्वमेव युक्तमिति शङ्करशब्दस्य ब्रह्मविशेषणत्वमेव स्वरसम् । अनेनापि विष्ण्वाद्यर्चनीयत्वेन शिवातिशयः सिध्यतीति वाच्यम् । अवतारसामान्यर्चनमादाय स्तावकत्वात् ।

यत्तु शिवाराधनस्य दुर्गातितरणहेतुत्वोक्त्या विष्ण्वादीनां स्तोत्रं तदर्थमित्यध्यवसीयत इति तन्न - वराहपुराणे भारतादिष्वन्यार्थत्वस्य प्रमानत्वेन भगवत्कृतस्तुतेः तदर्थत्वकल्पनानुन्मेषात् ।

यत्तु – 'ईश्वरश्चेतनः कर्ता पुरुषं कारणं शिवम् ।
विष्णुर्ब्रह्मा शशिस्सूर्यः शक्रो देवाश्च सान्वयाः ॥
सृज्यते गृह्यते चैव तमोभूतमिदं यदा ।
अप्रज्ञातमिदं सर्वं तदा ह्येको महेश्वरः ॥'

इति वाक्यशेषात् संहाररुद्रस्यापि ग्रासो विवक्षितः इति त्रिमूर्त्युत्तीर्णत्वं शिवस्य न्यस्त इति - तन्न - 'शिवश्शूलीमहेश्वर' इति कोशपाठेन महेश्वरशब्दस्य त्रिमूर्त्यन्तर्गतपरत्वात् स्वेच्छाकृतभगवदवतारस्यापि तदधीनत्वेन स्तुतिरत्र क्रियत इति न । ततश्शिवस्य विष्णवपेक्षयाधिक्यसिद्धिः ।

यदपि रुद्रनिकर्षप्रतिपादकवचनानि संहाररुद्रांशभूतब्रह्माङ्गभवरुद्रविषयकतया हरिक्रोधजरुद्रविषयतया नेतव्यानीति - तदप्ययुक्तम् —

'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
मया दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥'

इति भगवत्क्रोधजरुद्रस्य संहारकारित्वश्रवणेन संहाररुद्रहरिक्रोधजरुद्रभेदासिद्धेः । तथैव भारते —

'अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे ।
हरश्चैव क्रोधजस्तस्य तात पूर्वं सनातने ॥'

इति वचनेनैकस्यैव कल्पभेदेन हरिक्रोधजत्वब्रह्माङ्गभवत्वप्रतीतेस्तद्भेदकल्पनाया अप्यनुदयाच्च । तातेति सम्बोधनेन हि ब्रह्मपुत्रविषयत्वमस्यावगम्यते । दक्षक्रतुध्वंसरूपचरित्रमुपक्रम्य तन्निमित्ते नारायणरुद्रयोः कलहे सति तच्छान्त्यर्थचतुर्मुखवाक्यं तत्त्वाच्चास्य चतुर्मुखपुत्रविषयकत्वं सिद्धम् ।

अपि चायमेवार्जुनस्य साहाय्यकर्तेति —

'यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते'

इति अर्जुनसाहाय्यकर्तैव कृष्णोपास्य इति तत्राभिमतम् ।

'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्'

इति कृष्णेन स्वनिहतत्वेनोक्तानां रिपूणां,

'निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून्'

इति शिवनिहतत्वोक्त्या मयैव त इति आद्यतदन्तर्यामिभूतशिवपरत्वमिति त्वदुक्तेः। तथा च निष्कर्षप्रतिपादकवचनस्य कृष्णोपास्यभिन्नविषयकत्वकल्पनमसङ्गतम्।

नन्वेवमपि निकर्षप्रतिपादकवचनानां संहाररुद्रविषयकत्वं उत्कर्षप्रतिपादकवचनानामुत्तीर्णविषयकत्वमिति वक्तुं शक्यत्वेन शिवकारणत्वमपि शक्यसमर्थनमिति चेत्-न। कृष्णोपास्यशिवेतरपरब्रह्मत्वाभ्युपगमहानिप्रसङ्गस्यैवमप्यनिवार्यत्वात्।

ननु मास्तु कृष्णोपास्य शिवस्य परब्रह्मत्वमिति निर्बन्धः।

तथा – 'सोऽसृजत् दाक्षिणादङ्गात् ब्रह्माणं लोकसम्भवम्।
वामपार्श्वात् तथा विष्णुं लोकरक्षार्थमीश्वरम्॥
युगान्ते चैव संप्राप्ते रुद्रं विभुरयासृजत्॥'

इत्यादि प्रतिपाद्यस्य शिवस्य परब्रह्मत्वसिद्धिरनिवार्येति चेत् - न - एवमपि जगत्कारणतया प्रतिपाद्यमानस्य दक्षक्रतुध्वंसादिमत्त्वदर्शनेन तस्य पूर्वोदाहृतवचनैर्ब्रह्मसुतचरित्रत्वेनापि वर्णनेन निकर्षोत्कर्ष प्रतिपादनयोर्विषय विवेकस्य दुर्ग्रहत्वात्।

ननु दक्षाध्वरध्वंसादीनां चतुर्मुखसुतचरित्रत्वेऽपि तस्योत्तीर्णशिवांशयोगित्वेन तदादायोत्तीर्णे जगत्कारणीभूते शिवे दक्षक्रतुध्वंसादिविशेषणोक्तिसम्भव इति चेत् - एवं तर्हि शिवे जगत्कारणत्वादिविशेषणवैशिष्ट्यप्रतिपादकस्य नारायणांशयोगमादायोपपत्तेर्वर्णयितुं शक्यत्वेन शिवपरब्रह्मत्वप्रतिपादकवचनानामन्यथासिद्धिप्रसङ्गः। क्वचित् कीर्त्यमानविशेषणोपपादनस्यांशयोगमादाय कीर्तितव्यत्वावश्यम्भावेऽनन्यथासिद्धिभूयः प्रदेशस्थवचनसहस्रानुरोधेन कारणत्वान्तर्यामित्वादिवैशिष्ट्यकीर्तनस्य तथात्ववर्णनस्य युक्तत्वात्।

इयान् विशेषः — दक्षाध्वरध्वंसादिविशेषणानामनुयोगिनिविद्यमानानां प्रतियोगिनि कीर्तनं जगत्कारणत्वादीनां त्वंश प्रतियोगिनि विद्यमानानामनुयोगिनि कीर्तनमिति। न च नारायणस्य शिवोपासकत्वादिनिकर्षप्रतिपादनात् कथं परत्वमिति वाच्यम्।

'ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः॥
तेन वञ्चयते लोकान् मायायोगेन केशवः॥'

इत्यादिभिरपकर्षपरिहारस्य कृतत्वेन भगवतः परब्रह्मत्वप्रतिपादकवचनानां निरर्गलं प्रवृत्तेः। न च रुद्रनिकर्षप्रतिपादनांशस्य परिहारः क्वचिदुपलभ्यते।

'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः।
तवान्तरात्मा मम च ये चान्ये देहि संज्ञिताः॥
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्।
प्रजापतिं च रुद्रं चाप्यहमेव सृजामि वै॥
तौ तु नूनं न जानीतो मम मायाविमोहितौ॥'

इत्यादिषु हि निकर्षः प्रतिपादितः।

एतेन च दक्षाध्वरध्वंसिरुद्रभेदमादाय जगत्कारणे तद्विशेषणापत्तिरिति निरस्तम्। कर्मवश्यस्य जगत्कारणत्वायोगात्, उत्तीर्णशिवकारणत्वपरित्यागापाताच्च। तस्मात् भगवत्कारणत्वावेदक पूर्वोदाहृतानन्यथासिद्धवचनविरोधेन शिवस्य परब्रह्मत्वं साधयितुं न शक्नुवन्ति। क्वचित् कोणे स्थितानि शिवोत्कर्षावेदकानि वचनानि न भारतस्य शिवोत्कर्षतात्पर्यकत्वमिति स्वाभाविकसामर्थ्याभावावगमेन परब्रह्मत्वायोग्यात्। अतो ब्रह्मपदप्रयोगः परब्रह्मत्वं साधयितुं शक्नोति।

नापि शिवस्तत्र ब्रह्मपदोक्तः, 'युधिष्ठिरो धर्ममयो महाद्रुम' इत्यत्र शब्दोपात्तधर्ममयत्वकारणविशिष्टहेतुग्रहणे सम्भवितत्वाद्भूतराजभावोपगूढस्थितिहेतुग्रहणस्या योगात्। तत्र च कृष्णस्य 'वेदैश्च सर्वैरहमेव वेद्यः'

'वेदे रामायणे चैव भारते भरतर्षभ।
आदौ मध्ये तथाऽन्ते च विष्णुस्सर्वत्र गीयते।'

इत्यादिप्रमाणैर्वेदवेद्यतया प्रसिद्धस्य ब्राह्मणानां प्रमातृत्वेन प्रसिद्धानां ग्रहणेन प्रमाणस्य वेदस्यैव ग्रहणमुचितम्। प्रमातृप्रमाप्रमेयानां त्रयाणां धर्मप्रमिति-हेतुत्वेनानुष्ठानद्वारा धर्मस्याधीनत्वात् तेषामेव मूलत्वनिरूपणं युक्तम्। एवं च केनचिदप्यननुरोधेऽप्यदोषः। ब्राह्मणानां कृष्णशिवयोरिव दृष्टद्वाराजय-हेतुत्वाभावेन सर्वत्रैकरूप्यस्य त्वयाऽप्याश्रयितुमशक्यत्वात्। चेतनग्रहणस्य युक्तत्वे वा कथं शिवस्यैव तत्र ग्रहणमिति निर्णायाय भगवतो नारायणस्यैव तत्र ग्रहणसम्भवात्। न च कृष्णशब्देनोक्त्या पौनरुक्त्यम्। मूलरूपेणावतार-विशेषरूपेण च ग्रहणात्। न च तस्यमूलत्वं नेति वक्तुं शक्यम्। महत्त्वमुखेन मूलत्वासम्भवात्। न च शिवस्याग्रहणे किं निदानमिति वाच्यम्। कार्यकालाभ्यर्थनकाले सर्वैरपि देवैस्सहायकारणस्य प्रतिज्ञातत्वेन शिव-माहात्म्यस्य भगवद्व्यापारोपसर्जनत्वेन पृथग्ग्रहणानवश्यम्भावात्, कृष्णो ब्रह्मेत्यर्थत्वं वाऽस्तु। एवं चकारद्वयस्वारस्यलाभेऽपि। तस्मादुक्तरीत्या महाभारतस्य शिवपारम्यतात्पर्यकत्वाभावात्, भगवत्पारम्यतात्पर्यकत्वस्य बहुप्रमाणानु-सारेणाभ्युपगन्तव्यत्वात्, तदनुसारित्वात् सात्त्विकपुराणप्राबल्यमिति सिद्धम्॥

## रामायणस्यापि भगवत्पारम्यनिरूपणम्

एवं 'वेदोपबृंहणार्थाय तावग्राहयतप्रभुः॥'

इति वेदोपबृंहणरूपत्वेनावगतस्यासेतुहिमाचलवासिसकलवैदिकमूर्धन्यपरिगृहीतस्य श्रीमद्रामायणस्यापि भगवत्पारम्यप्रतिपादकत्वात् तदनुसारित्वमित्यपि सात्त्विक-पुराणप्राबल्यसाधकम्। तथा हि - **बालकाण्डे** —

'एतस्मिन्नन्तरेविष्णुरुपयातो महाद्युतिः।
शङ्खचक्रगदापाणिः पीतवासा जगत्पतिः॥
ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः।
तमब्रुवन् सुरास्सर्वे समभिष्टुय सन्नताः॥'

इत्युपक्रम्य 'सिद्धगन्धर्वयक्षाश्च ततस्त्वां शरणं गताः ।

त्वं गतिः परमा देव सर्वेषां नः परन्तप ॥
वधाय देवशत्रूणां नृणां लोके मनः कुरु ।
एवमुक्तस्तु देवेशो विष्णुस्त्रिदशपुङ्गवः ॥
पितामहपुरोगांस्तान् सर्वलोकनमस्कृतः ।
अब्रवीत् त्रिदशान् सर्वान् समेतान् धर्मसंहितान् ॥
भयंत्यजत भद्रं वो हितार्थं युधि रावणम् ।
सपुत्रपौत्रसामात्यं समित्रज्ञाति बान्धवम् ॥
हत्वा क्रूरं दुरात्मानं देवर्षीणां भयावहम् ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥
वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम् ।
एवं दत्वा वरं देवो देवानां विष्णुरात्मवान् ॥
मानुषे चिन्तयामास जन्मभूमिमथात्मनः ।
ततः पद्मपलाशाक्षः कृत्वात्मानं चतुर्विधम् ॥
पितरं रोचयामास तदा दशरथं नृपम् ।
ततो देवर्षिगन्धर्वाः सरुद्राः साप्सरोगणाः ॥
स्तुतिभिर्दिव्यरूपाभिः तुष्टुवुर्मधुसूदनम् ।

इत्यनेन सन्दर्भेण भगवत्पारम्यं व्यञ्जितम् । अत्र 'पीतवासा जगत्पतिरि'ति, 'सिद्धे शब्दार्थसम्बन्ध' इति न्यायेनासङ्कोचेन सर्वजगत्पतित्वं प्रतीयते ।

'तमब्रुवन् सुरास्सर्वे समभिष्टुत्य सन्नताः'

इति चतुर्मुखसहितसर्वदेवस्तुत्यत्वनन्तव्यत्वप्रतिपादनेन पारम्यं स्फुटीकृतम् ।

'त्वं गतिः परमादेव सर्वेषां नः परन्तप ।'

इति स्वतस्सर्वदेवादिशरण्यत्वमित्युक्त्याऽपि तदेव प्रकटीकृतम् । 'त्वं गतिः परमा देवे'त्यत्र रुद्रशरण्यत्वमपि भगवतोऽस्तीत्यभिप्रेतमिति 'ततो देवास्स-

गन्धर्वाप्सरुद्रा ' इत्युत्तरसन्दर्भबलादवगम्यते । देवप्रार्थनाधीनत्वस्य भगवज्जन्मनः प्रतिपादनात् च अकर्मकृत्यत्वस्फोरणेन तस्य भगवत्पारम्यं प्रकाशितम् ।

**एकोनत्रिंशे सर्गे —**

' तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ।
शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो ॥
त्वमनादिरनिर्देश्यः त्वामहं शरणं गतः ॥ '

इति सर्वजगदाधारत्वम् । अनादित्वकीर्तनात्परत्वमुक्तम् ।

**पञ्चसप्ततितमे —**

' जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ।
अधिकं मेनिरे विष्णुं देवास्सर्षिगणास्तथा ॥ '

इति शिवापेक्षयाधिक्यप्रतिपादनेन कैमुतिकन्यायेनेतरापेक्षया परत्वं सिद्धम् ।

यत्तु शिवेन सापेक्षयाधिकं शौर्यं नारायणाय दत्तमिति भारतादिभ्यो- ऽवगमात् स्वदत्तवरपरिपालनाय न्यूनबलत्वाभिमानेनान्यथासिद्धमिति नाधिक्यं गमयितुमीष्ट इति - तन्न —

' न हि मे केनचिद्देयो वरः पाण्डवनन्दन '

इत्यादिषु वरदानप्रयुक्तातिशयाभाववत्वप्रतिपादनेनावतारदशासु ' मां त्वमाराधय ' ' मत्तो वरं गृहाणे'ति शिवप्रार्थनायां ' तस्मैत्वामाराधयिष्यामि ' ' त्वत्तो वरं प्रहीष्यामी'ति वरो भगवता दत्त इति वराहपुराणवचनबलादवगम्यमानत्वेन स्वदत्तवरपरिपालनार्थं स्वाभाविकेऽतिशये वरप्रतिग्रहलब्धत्वाभिनयो भगवता कृत इति भारतवचनतात्पर्यावसायात् । ' अधिकं मेनिर ' इत्यस्य स्वाभाविकोत्कर्ष- प्रतिपादनपरत्वावसायात् ।

**अयोध्याकाण्डे** - राममधिकृत्य —

> ' सूर्यस्यापि भवेत् सूर्यो ह्यग्नेः अग्निः प्रभोः प्रभुः ।
> श्रियःश्रीश्च भवेदग्र्या कीर्त्याः कीर्तिः क्षमाक्षमा ॥
> दैवतं देवतानां च भूतानां भूतसत्तमः ॥ '

इति सर्वदेवश्रेष्ठत्वं प्रतिपादितम् ।

' तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् ' इति वाक्यं चोपबृंहितम् ।

**आरण्यकाण्डे** – ' अद्य मे सफलं जन्म स्वर्गश्चैव भविष्यति ।
त्वयि देववरे राम पूजिते पुरुषर्षभे ॥ '

इति शबरिवाक्येन सर्वदेवश्रेष्ठत्वं भगवतः प्रकटितम् ।

**सुन्दरकाण्डे** – ' किं वैष्णवं वा कपिरूपमेत्य
रक्षोविनाशाय परं सुतेजः ।
अनन्तमव्यक्तमचिन्त्यमेकं
स्वमायया साम्प्रतमागतं च ॥ '

इति भगवत्पारम्यमाविष्कृतम् । अत्र पूर्वम् ।

> ' वज्रीमहेन्द्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणोनिलो वा ।
> रुद्रोऽग्निरर्को धनदश्च सोमो न वानरोऽयं स्वयमेव कालः ॥ '

इति महेन्द्रादीनां कपिवेषधारित्वमुल्लिख्य ' किं ब्रह्मणः सर्वपितामहस्ये'त्यादिना चतुर्मुखस्य तद्रूपधरत्वमुत्प्रेक्ष्यानेन विष्णोस्तद्रूपधरत्वमुल्लिख्यते । तत्र च प्रथमश्लोकोत्तरापेक्षया चतुर्मुखस्य तदपेक्षया भगवतश्चातिशयो वाक्यशैल्य-नुरोधेन प्रतीयते । ' अनन्तमव्यक्तमचिन्त्यमेकमि'त्यत्र ' यदेकमव्यक्तमनन्त-रूपमि'ति श्रुत्यर्थोपबृंहणतात्पर्यकविशेषणप्रक्षेपप्रबलादपि सर्वोत्कर्षः प्रतीयते ।

'ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्रस्सुरनायको वा त्रातुं न शक्तो युधि रामवध्यम् ॥'

इत्यनेन च ब्रह्माद्यपेक्षयोत्कर्षः प्रतीयते ।

**युद्धकाण्डे** — 'व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनो महतः परमो महान् ॥
तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥'

इत्युक्तम् । न चात्र महायोगीत्युक्त्या जीवत्वं शङ्कनीयम् । योगाराध्यस्यापि तत्सम्बन्धित्वेन तद्व्यपदेशोपपत्तेः । अन्यथा परमात्मत्वाद्युक्ति सङ्गत्यभावापत्तेः । योगशब्दस्य सन्नहनपरत्वेन जगत्सर्जनहेतुसन्नहनपरत्वोपपत्तेः । अत एवानेन सृष्टृत्वस्य कथितत्वेन सनातन इत्यनेन सृज्यत्वाभावव्यक्तीकरणमुपपद्यते । 'महतः परमो महान्' इति 'अणोरणीयान् महतो महीयान् परात्परं यन्महतो महान्तमि'त्यर्थो विवृतः । 'तमसः परम' इति 'आदित्यवर्णं तमसः परस्तात्' 'क्षयं तमस्य रजसः पराक' इत्यादिश्रुत्यर्थोऽभिप्रेतः । 'नित्यश्रीरि'ति 'ह्रीश्चते लक्ष्मीश्च पत्न्यावि'ति श्रुत्यर्थो विवृतः । 'शाश्वतो ध्रुव' इति 'ध्रुवमचलं विष्णुसंज्ञितमि'ति श्रुतिकटाक्षेणोक्तम् ।

**विंशतितमे सर्गे** —

'कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे ।
ऋतधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः ॥
त्वं त्रयाणां हि लोकानामादिकर्तास्वयं प्रभुः ।
रुद्राणामष्टमो रुद्रः साध्यनामसि पञ्चमः ॥
अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी ।
अन्ते चादौ च लोकानां दृश्यसे त्वं परन्तप ॥'

इत्युक्तम् । तथा —

'भवान्नारायणोदेवः श्रीमांश्चक्रायुधप्रभुः ।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥
अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव ।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृग्विष्णुः कृष्णश्चैवबृहद्बलः ॥
सेनानीर्ग्रामणीश्चत्वं बुद्धिस्सत्वं क्षमादमः ।
प्रभवश्चाप्ययश्च त्वमुपेन्द्रोमधुसूदनः ॥
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभोयुगान्तकृत् ।
शरण्यं शरणं च त्वामाहुः दिव्यामहर्षयः ॥
सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षयः ।
त्वं त्रयाणां हि लोकानामादिकर्ता स्वयं प्रभुः ॥
सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परन्तपः ॥
प्रभवं निधनं वा ते न विदुः को भवानिति ।
दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च ॥
दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ।
सहस्रचरणः श्रीमांछ्छतशीर्षः सहस्रदृक् ॥
त्वं मारयसि भूतानि वसुधां च सपर्वताम् ।
अन्ते पृथिव्यास्सलिले दृश्यसे त्वं महोरगः ॥
त्रीन् लोकान् धारयन् राम देवगन्धर्वदानवान् ।
अहं ते हृदयं राम जिह्वा ते च सरस्वती ॥
देवा गात्रेषु रोमाणि निर्मिता ब्राह्मणाः प्रभो ।
निमेषस्तेऽभवत् रात्रिरुन्मेषस्तेऽभवत् दिवा ॥

संस्कारास्तेऽभवन्वेदा न तदस्ति त्वया विना ।
जगत्सर्वं शरीरं ते स्थैर्यं च वसुधातलम् ॥
अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ।
त्वया लोकास्त्रयः क्रान्ताः पुराणैर्विक्रमैस्त्रिभिः ॥
महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरम् ।
सीतालक्ष्मीर्भवान्विष्णुः देवः कृष्णः प्रजापतिः ॥
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ॥'

इति भगवत्पारम्यं प्रपञ्चितम् ।

'अक्षरं ब्रह्म सत्यं त्वमि'त्यत्र 'येनाक्षरं पुरुषं वेदे'त्यादेः 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादेश्च भगवत्परत्वमुक्तम् । 'त्वं त्रयाणां हि लोकानामादि कर्ते'त्यत्र जगत्कारणत्वप्रतिपादकवाक्यानां 'त्वं यज्ञस्त्वं वषट्कार' इत्यादिना सर्वयज्ञाराध्यत्वं वर्णितम् । 'दिक्षु सर्वासु गगन' इति स एवाधस्तादु परिष्टादित्यादीनां भगवत्परत्वमुक्तम् । 'वधार्थं रावणस्येहे'ति भगवज्जन्मनोरकर्म कृतत्वमुक्तम् ।

**उत्तररामायणे —**

'यथामृतघटं जीवा मकरा इव चार्णवम् ।
तथा रक्षोधनुर्मुक्ता वज्राशनि मनोजवाः ॥
हरिं विशन्ति स्म शरालोकास्तमिव पर्ययः ॥'

इत्यत्र दृष्टान्तत्वेन भगवतो जगल्लयस्थानत्वप्रतिपादनात् भगवत्पारम्यं प्रपञ्चितम्

**तत्रैवान्यत्र —**

'सङ्क्षिप्य च पुरो लोकान् मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मात्वं पूर्वमजीजनः ॥
भोगवन्तं ततो नागमनन्तमुदकेशयम् ।

मायया जनयित्वा तु द्वौ च सत्वौ महाबलौ ॥
मधुं च कैटभं चैव ययोस्संसेचनैर्वृता ।
इयं पर्वतसम्बाधा मेदिनी चाभवन्मही ॥
पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि ।
प्राजापत्यं च यत् कर्म सर्वं मयि निवेशितम् ॥
सोऽहं सन्यस्तभारो हि त्वामुपासे जगत्पतिम् ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥
ततस्त्वमपि दुर्धर्षः तस्मात् भावात् सनातनात् ।
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥
अदित्यां वीर्यवान् पुत्रो भ्रातृणां हर्षवर्धनः ।
समुत्पन्नेषु कृत्येषु लोकसाह्याय कल्पसे ॥'

इत्युक्तम् ।

अत्र 'सङ्क्षिप्य चे'ति जगत्संहर्तृत्वमुक्त्वा 'मां त्वं पूर्वमजीजन' इति चतुर्मुखसृष्ट्युक्त्या मध्यभाविमहदहङ्कारादिसृष्टिरप्यर्थसिद्धा । 'तस्माद्भावात्सनातनात्', रक्षार्थं विष्णुत्वमुपजग्मिवानि'त्युक्त्या स्वेच्छात एव रूपान्तरपरिग्रहमात्रमित्यस्य व्यञ्जनेन पालनाधिकृत्यत्वस्य मूलकारणत्वस्य च न भेद एवेति प्रकाशितम् । न च रक्षार्थमित्यस्यावतारान्तरपरत्वमस्त्विति शङ्कनीयम् । त्रिमूर्तिमध्यगतस्यैव रूपस्य रक्षणाधिकृतत्वात् ।

'अदित्यां वीर्यवान पुत्रो भ्रातृणां हर्षवर्धनः ।
समुत्पन्नेषु कृत्येषु लोकसाह्याय कल्पसे ॥'

इत्युपेन्द्ररूपेणावतीर्णत्वस्योत्तरत्र वक्ष्यमाणत्वात् । न चदित्यामित्यस्य पूर्वेणैकवाक्यत्वमस्त्विति वाच्यम् । लोकसाहाय्यकल्पन इति दैत्यवधादिरूपकार्येषु देवेन्द्रादिसाहाय्यकरणरूपप्रयोजनं स्यादिति पुत्रत्वात्रस्थापन्नस्योच्यमानत्वेन रक्षार्थमिति प्रयोजनसम्बन्धिरूपान्तरपरिग्रहः पूर्वत्र कीर्त्यत इत्यस्य वक्तुमुचितत्वात् ।

अन्तिमे सर्गे —

'ततः पितामहो वाणीमन्तरिक्षादभाषत ।
आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि राघव ॥
भ्रातृभिः सह देवाभैः प्रविशस्व स्वकां तनुम् ।
वैष्णवीं वा महातेजस्तद्वाकाशं सनातनम् ॥
त्वं हि लोकगतिर्देव न त्वां केचन जानते ।
ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् ॥
त्वमचिन्त्यं महद्भूतमक्षय्यं सर्वसङ्ग्रहम् ।
यामिच्छसि महातेजस्तां तनुं प्रविशस्वयम् ॥
पितामहवचः श्रुत्वा विनिश्चित्य महामतिः ।
विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥'

इत्यभिहितम् । अत्र 'स्वकां तनुमि'त्युक्त्वा ।

'वैष्णवीं वा महातेजस्तद्वाऽऽकाशं सनातनम्'

इत्युक्त्वा 'यदेष आकाश आनन्दो न स्यात्' इत्युक्त्या आकाशशब्दवाच्यं ब्रह्म नारायण इति स्फुटमवगम्यते ।

स्वतनुत्वोक्तेः । 'यामिच्छसि महातेजस्तां तनुं प्रविशस्वयम्' इत्युत्तरवाक्यानुसाराच्च । 'न त्वां केचन जानत' इत्यत्र सङ्कोचे प्रमाणाभावेन चतुर्मुखेनापि दुर्ज्ञानत्वमुच्यते । 'विवेश वैष्णवं तेजस्सशरीर' इत्युक्त्या रामशरीरस्य दीपस्य दीपान्तरेणैकीभाववत् प्रवेशस्य गम्यमानत्वेन तच्छरीरपरिग्रहस्याकर्मवश्यत्वं व्यञ्जितम् । अनन्तरं च —

'ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथापुरम् ।
येन प्राप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥'

इति सर्वान्तर्यामित्वमुपवर्णितम् । तदेवं श्रीरामायणस्य नारायणपारम्ये तात्पर्यमिति सिद्धम् ।

कश्चिदाह – 'ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥'

इति ब्रह्माच्युतहरेश्वरत्वं शिवस्य प्रतिपादितम् । मण्डलाभिमानिन्याधिकारिके ह्यन्वयायोगात्, 'रौद्राय वपुषे नम' इति विशेषणसामर्थ्याच्च । तदन्तर्वर्ति शिवे पर्यवसानात् ।

**अपि चोत्तररामायणे** – अश्वमेधारम्भात् प्राक् कर्तव्यक्रमविचार-समयेऽश्वमेधेन विष्णुनाराध्य शतक्रतुर्ब्रह्महत्यामतरदित्यश्वमेधे लक्ष्मणेन श्लाघिते तस्य श्लाघ्यतामङ्गीकृत्य स्वयमिलोपाख्यानकथनेन तस्य शिवप्रीतिकरत्वं प्रतिपादयतो रामचन्द्रस्य ।

'नान्यं पश्यामि भैषज्यमन्तरेण वृषध्वजम् ।
नाश्वमेधात् परो यज्ञः प्रियश्चैव महात्मनः ॥'

इति तदुपाख्यानान्तर्गततदीयश्लाघनेन शिव एवाराधनीय इति भावसूचनेन रहसि मन्त्राणामनन्तरंवसिष्ठादीनां भूयश्चिकीर्षिते ख्यापिते तु ।

'तेतु रामस्य तच्छ्रुत्वा नमस्कृत्य वृषध्वजम् ।
अश्वमेधं द्विजाः पूर्वे पूजयन्ति स्म नित्यशः ॥'

इति शिवसम्बन्धित्वेनैवाश्वमेधस्य श्लाघ्यतोपन्यासेन चाश्वमेधेन रामचन्द्रश्शिव-माराधितवानिति तदाराध्यत्वं विभावितम् ।

आरण्यकाण्डे ––

'कृताभिषेकः सरराज रामः सीताद्वितीयः सहलक्ष्मणेन ।
कृताभिषेकेत्वगराजपुत्र्या रुद्रः सनन्दी भगवानिवेशः ॥'

इत्युपमानिबन्धव्याजेनाप्यादिकविना शिवोत्कर्षः प्रतिपादित इति - तदसारम् - 'ब्रह्मेशानाच्युतेशाये'त्यत्र शिवे त्रिमूर्त्युत्तीर्णत्वाप्रतीतेः । सूर्यस्य हि तद्वि-शेषणम् । न च सूर्यस्य तन्न सम्भवतीति शक्यम् । अनेन प्रसिद्धसूर्यातिरिक्त

सूर्यकल्पनासम्भवात् । स्तुतिरूपत्वेनास्य कथञ्चित्सूर्य एव सङ्क्रमनसम्भ
'रौद्राय वपुषे नम' इत्यस्यापि सूर्यविशेषणत्वेन **गुणानां च परार्थत्व**
(जै. सू. 3-1-12) न्यायेन परस्परान्वयाभावेन ब्रह्मेशानाच्युतेशा
रुद्रान्वयित्वस्य वक्तुमशक्यत्वात् । सर्वभक्षायेति द्वादशादित्यसङ्घ
प्रलयकाले सर्वसम्भर्तृत्वावगमे उग्रवपुष्कत्ताप्रतीतिपरत्वात् । त्वत्पक्षे परम
संहारमात्रकारित्वाभावेन सर्वभक्षायेत्यनेन तत्प्रतीतिप्रतिबन्धात् ।

'एष ब्रह्मा च विष्णुश्च शिवःस्कन्दःप्रजापतिः'

इति सर्वनिर्वाहकत्वप्रतिपादनमपि स्तुतिरूपत्वादेवोपपादनीयम् । न च तदन्त

---

## गुणानां मिथोऽसंबंधाधिकरणम् —

आधानप्रकरणे दारुपात्रं होमार्थं यज्ञार्थं च श्रूयते – 'तस्मा
यज्ञावचरः स्यान्नत्वेतेन जुहुयात्, वैकङ्कतो यज्ञावचरः स्याज्जुहुयाद
इति । यज्ञावचरो यज्ञप्रचारहेतुः । तत्र - वारण वैकङ्कतादिपात्रं प्र
बलादाधाने प्रथममन्वेति । एतेन पात्रेणाऽऽधाने प्रयोजनाभावादाधा
पवमानहविष्ष्वेव तत्पात्रं निविशते । अस्ति हि पवमानहविषामाधानाङ्ग
तत्प्रकरणे पाठात् । 'कृत्तिकास्वग्निमादधीत' इत्यस्मिन्प्रकरणे 'प्रजापति
सत्यमपश्यत्' इत्यस्मिन्ननुवाके 'त्रीणि हवींषि निर्वपति' इत्यादिना
विहितानि । ततो यथा सप्तदशारत्नित्वं वाजपेये साक्षादसंभवात्तदङ्गप
निविशते ; तद्वदिदमपि – इति पूर्वः पक्षः ।

सिद्धान्तस्तु – अग्निमुद्दिश्याऽऽधानं यथा विहितं, तथा प
हवींष्यपि । 'यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतः' इत्याह
द्देशेन पवमानहविर्होमविधानात् । तस्मादग्निसंस्कारत्वेन समाम्नातानां
हविषां नास्ति परस्परमङ्गाङ्गिभावः । तथा सति प्रकरणस्य पात्रं
विनियोजकत्वाभावात् 'वैकङ्कतो यज्ञावचरः' इति वाक्येन दर्शपूर्णम
सर्वयज्ञेषु तद्विनियुज्यते ॥ (जै. सू. 3-1-12)

शिवे पर्यवसानमस्त्विति वाच्यम् । शिवस्य सूर्यमण्डलान्तर्वर्तित्वासिद्धेः । प्रपञ्चयिष्यते चायमर्थस्तृतीयपरिच्छेदे ।

यदप्यश्वमेधाराध्यत्वमुक्तम् — तदप्यनुपपन्नम् — न ह्यश्वमेधेन श्रीरामः शिवमाराधितवानित्याहत्य श्रीरामायणे प्रतिपाद्यते । न चेलोपाख्यानस्य रामोक्तत्वेन शिवाराधनरूपत्वमश्वमेधस्य तदभिमतमिति तदाराधनरूपमेवाश्वमेधं रामोऽनुष्ठितवानिति कल्प्यत इति वाच्यम् । ब्रह्महत्यानिवर्तकत्वेन परमपावनत्वं इन्द्रवृत्तान्तप्रदर्शनेन लक्ष्मणेनानुप्रदर्शितेऽनिवर्तनीयस्त्रीत्वहेतुतानिवर्तकत्वेनापि तस्य परमपावनत्वं कथयता भगवता रामेण तादृशोपाख्यानं प्रदर्शितमिति तस्य शिवाराधनतात्पर्येणैव प्रवृत्तिरिति निश्चेतुमशक्यत्वात् । न च ।

'नान्यं पश्यामि भैषज्यमन्तरेण वृषध्वजम् ।
नाश्वमेधात्परो यज्ञः प्रियश्चैव महात्मनः ॥'

इत्युक्त्या शिवप्रियत्वं रामाभिप्रेतमिति गम्यत इति वाच्यम् । तस्यान्यवाक्यत्वेनैवानुवादेन साक्षाद्रामवाक्यभावात् ।

'स्त्रीभूतपौरुषं लेभे यद्वाऽन्यदपि दुर्लभम् ।'

इत्येतावद्धि रामेण साक्षात्प्रतिपाद्यते । न च कर्दमोक्त्याऽनुवादस्य प्रयोजनाकाङ्क्षायां शिवाराधनरूपत्वमभिमतमिति गम्यत इति वाच्यम् । रुद्रकृतस्त्रीभावं तदनुग्रहादेवोपकृतवत इत्यर्थसूचनाय तदनुवादोपपत्तेः । न चैवमपि 'ते तु रामस्य तच्छ्रुत्वा नमस्कृत्य वृषध्वजम्' इति कविवाक्यबलाच्छिवाराधनरूपत्वं गम्यत इति वाच्यम् । वृषध्वजप्रीतिकरणत्वश्रवणेन तन्नमस्कारोपपत्तेः । न च लक्ष्मणं प्रत्येव वृषध्वजप्रीतिकरत्वं कथितम्, न तु मुनीन् प्रतीति कथं मुनिकृतनमस्कारस्य तच्छ्रवणहेतुकत्वं इति वाच्यम् । 'अश्वमेधः कर्तव्य' इत्यभिप्रायाभिधानदशायां मुनीन् प्रत्यपीलोपाख्यानं कथितमिति मुनिकृतनमस्कारबलादेव कल्पनात् । न च नमस्कृत्य वृषध्वजं 'अश्वमेधं पूजयन्ति स्मेत्यनेन शिवसम्बन्धित्वेनाश्व श्लाघ्यताभिमतेति गम्यत इति वाच्यम् ।

'एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण'

इतीन्द्रकृतविष्णूद्देश्यकाश्वमेधानुष्ठानाभ्युपगमदर्शनेन शिवसम्बन्धित्वेनैव श्लाघ्यताभिमतेत्यस्य कल्पयितुमशक्यत्वम्। न च विष्णुप्रीतिहेतुत्वस्य रामाभ्युपगमत्वेऽपि मुनीनां शिवसम्बन्धित्वेनाभिमतमिति वाच्यम्।

'ते तु रामस्य तच्छ्रुत्वा नमस्कृत्य वृषध्वजम्।
अश्वमेधं द्विजास्सर्वे पूजयन्ति स्म नित्यशः॥'

इत्यनन्तरं 'तमेषा द्विजमुख्यानां वाक्यमद्भुतदर्शनम्।
अश्वमेधाश्रितं श्रुत्वा भूयः प्रीतिरवर्धत॥'

इत्युक्त्या मुनिभिरश्वमेधाश्रितोपाख्यानान्तरकथनस्य गम्यमानत्वेन देवताविशेषौदासीन्येनाश्वमेधश्लाघ्यतामात्रमेव मुन्यभिमतमिति कल्पनात्। शिवनमस्कारस्तु रामोक्तलीलोपाख्यानश्रवणेन तदीयसामर्थ्यातिशयप्रतिबोधादुपपद्यते। तर्हि कां देवतामुद्दिश्याश्वमेधानुष्ठानं कृतमिति कल्पयितुं युक्तमिति - चेत् —

'गते पुरोहिते रामः स्नातो नियतमानसः।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत्॥
प्रगृह्य शिरसा पात्रीं हविषो विधिवत्तदा।
महते देवतायाज्यं जुहाव ज्वलितेऽनले॥
शेषं हविषस्तस्य प्राश्याशास्यात्मनः प्रियम्।
ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे॥
वाग्यतः सह वैदेह्या भूत्वा नियतमानसः।
श्रीमत्यायतने विष्णोश्शिश्ये नरवरात्मजः॥'

इति श्रीरामायणेऽयोध्याकाण्डे नारायणस्यैव तत्कुलदेवतात्वावगमात्।

अस्तु वा शिवमुद्दिश्य रामेणाश्वमेधकल्पनं तथापि मर्यादामनुसृत्य कृतत्वोपपत्तेर्न तदपेक्षया शिवस्याधिक्यं कल्पयितुमीष्टे। न च 'रुद्रः स विष्णुरि'त्यादिनिर्देशेन विष्ण्वपेक्षया शिवस्याधिक्यं कल्पयितुं शक्यम्।

'सन्ददर्श ततो रामं तिष्ठन्तमपराजितम् ।
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ॥'

इत्यादिनिर्देशेनेन्द्राद्यपेक्षयास्यावरत्वमिति कल्पनापत्तेः । 'सेन्द्रैरपि सुरासुरैः' 'ततो देवर्षिगन्धर्वाः सरुद्रास्साप्सरोगणाः' इत्यादिनिर्देशात् रुद्रेन्द्राद्यपेक्षया इतरेषां देवानामाधिक्यापत्तेश्च । तस्मात् स विष्णुरिति निर्देशस्य विष्णुपरत्व-तात्पर्यकत्वकथनं उन्मत्तप्रलपितमेव । रुद्रः स नन्दिरिति पाठो बहुषु कोशेषु दृश्यत इत्यसङ्गतम् ।

यत्तु — 'तत्र तु ब्रह्मणः स्थानमनेकस्थानमेव च ।
विष्णोस्स्थानं महेन्द्रस्य स्थानं चैव विवस्वतः ॥
सोमस्थानं भगस्थानं स्थानं कौबेरमेव च ।
धातुर्विधातुः स्थानं च वायोः स्थानं तथैव च ॥
स्थानं च पाशहस्तस्य वरुणस्य महात्मनः ।
स्थानं तथैव गायत्र्याः वसूनां स्थानमेव च ॥
स्थानं च नागराजस्य गरुडस्य तथैव च ।
कार्तिकेयस्य च स्थानं धर्मस्थानं च पश्यति ॥'

इति सर्वेषां देवानां स्थाननिर्देशदशायां शिवस्य स्थाननिर्देशाभावादगस्त्योपास्यः शिव एवेति निर्णीयते ।

'अत्र देवास्सगन्धर्वाः सिद्धाश्च परमर्षयः ।
अगस्त्यं नियताहारं सततं पर्युपासते ॥
अत्र देवाश्च यक्षाश्च नागाश्च पतगैस्सह ।
वसन्ति नियताहाराः धर्ममाराधयिष्णवः ॥'

इति, पूर्वं सामान्येन सर्वेषां देवानामुपासकत्वमुक्त्वा विशिष्य तानुल्लिख्यस्थान-निर्देशेन तदुपासकत्वावसायादिति - तदप्यमञ्जुलम् - अगस्त्यस्य चतुर्मुखाद्युपास्य-त्वस्य वक्तुमशक्यतया 'अत्र देवा' इत्यस्य चतुर्मुखाद्यतिरिक्तपरत्वस्य

'अगस्त्यं पर्युपासत' इत्यस्य समीपावस्थानप्रतिपादनपरत्वस्य वा वक्तव्यत्वात्। न ह्यगस्त्यस्य चतुर्मुखविष्णूपासकत्वमुत्प्रेक्षितुं शक्यम्।

किं च 'अत्र देवा' इत्यत्रोक्तानामेव स तत्र ब्रह्मण: स्थानमित्यत्र स्थानसम्बन्धित्वेन कीर्तनमित्यत्र किं नियामकमस्ति। अत्र देवाश्चेत्यस्य रामवाक्यत्वेन स तत्र ब्रह्मा इत्यस्य कविवाक्यत्वेनैकवाक्यत्वात्।

एतेन 'अत्र देवाश्च यक्षाश्चे'ति श्लोके 'धर्ममाराधयिष्यत्र' इति धर्माराधकत्वं चतुर्मुखादीनां प्रतीयत इति परास्तम्। स तत्र ब्रह्मण स्थान-मित्यनेनैकवाक्यत्वाभावात्। न चास्य सङ्कोचार्थं चतुर्मुखादिपरत्वम्। तर्हि शिवपरत्वस्यापि प्रसङ्गात्। न च शिवस्यापि सन्निधाने तस्य स्थाननिर्देश: स्यादिति वाच्यम्। येषां धर्माराधकत्वं तेषां स्थाननिर्देश इत्यत्र नियामका-भावेन स्थाननिर्देशाता तयोर्देवशब्देन ग्रहणाग्रहणयोरनियामकत्वादगस्त्योपासना-प्रीतानामपि देवानां कामविशेषे प्रेम्णा तदाश्रमे कश्चित्कालमवस्थिति संभवात् तस्मादेतादृशकुशकाशावलम्बनेन शिवपारम्ये रामायणस्य तात्पर्यमस्तीति वर्णयितुमशक्यत्वात्। पूर्वोदाहृतभूयस्तरवचनानुरोधात् भगवत्पारम्यतात्पर्य-कत्वमेवेति सकलमहाजनपरिग्रहावगतप्रमाणमूर्धन्यभाव श्रीमद्रामायणानुसारित्वात् सात्त्विकपुराणानां प्राबल्यमिति मैत्रेयोपनिषदुपबृंहणस्य कर्तव्यतया तदनु-सारेण श्रुतीनां भगवत्येव तात्पर्यमिति शिवहिरण्यगर्भादिविभूतिक श्रीमन्नारायण एव जगत्कारणं ब्रह्मेति सिद्धम्॥

इति श्रीशठमर्षणकुलतिलकनिखिलवेदान्तविद्यानिषद्यायितहृदयकमल श्रीताताचार्य-नन्दनस्य हयवदनकरुणाकटाक्षवीक्षालब्धपदवाक्य प्रमाणसारस्य श्रीमन्निगम-शिखगुरुचरणसरसीरुहचञ्चरीकायमाणमानसस्य श्रीवेङ्कटदेशिकपदसेवा-समधिगत श्रीमच्छारीरकमीमांसाभाष्यहृदयस्य वेङ्कटाचार्यस्य कृतिषु

सिद्धान्तरत्नावल्यां

द्वितीय: परिच्छेद:॥

---

हरि: ओम् । श्रीमच्छ्रीशैलपूर्णकुलतिलकशतक्रतु चतुर्वेदि श्रीमद्वेङ्कटाचार्य-
महागुरवे नमः ॥ श्रीमन्नारायणगुरवे नमः ॥

सिद्धान्तरत्नावली वेङ्कटाचार्यकृता ।

## तृतीयः परिच्छेदः

रङ्गेशः यच्छ्रुतिकिरीटरहस्यमात्म-
पादाब्जभक्तिरिति नः कथयन् कराभ्याम् ।
लीलोपधानपरजानुविलम्बिताभ्यां
भक्तिं परांदिशतु भव्यसमृद्धिहेतुम् ॥

उक्तं परिच्छेदयुगेन विश्व-
हेतुत्वमाश्रित्य हरेः परत्वम् ।
तदेव चास्मिन्ननवद्यविद्या-
वेद्यत्वमालम्ब्यनिगद्यतेऽद्य ॥

मोक्षसाधनभूताःस्युर्विद्या ब्रह्मैकगोचराः ।
अतस्तद्वेद्यता लक्ष्मीपतेर्ब्रह्मत्वसाधनम् ॥
तत्रादितः सूत्रभाष्यप्रणेतृभ्यां प्रकाशितः ।
न्यायः प्रकाश्यते सर्वविद्यावेद्यत्वगोचरः ॥

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि । नारायणानुवाकः** कृत्स्नो-
विषयः । संशयस्तु किं सर्वविद्यासु नारायण एवोपास्यः उत दहरविद्यामात्रे । किं नारायणानुवाकेन सर्वविद्यानामुपास्यविशेषोनिर्धार्यते । उत दहरविद्याया एव । किमत्र दहरोद्देशेन नारायणत्वं विधीयते उत सर्वविद्योपास्योद्देशेन । किं हृदयायतनत्व श्रवणमनुरोद्धव्यम् । उत लिङ्गभूयस्त्वमिति । तत्र हृदया-यतनत्वानुरोधे दहरोद्देशेन नारायणत्वविधानान्नारायणानुवाकस्य दहरविद्या-मात्रोपास्य विषयत्वात्तस्यामेव नारायण उपास्यः स्यादिति पूर्वपक्षे फलफलिभावः । राद्धान्ते तु लिङ्गभूयस्त्वानुरोधे सर्वोपास्योद्देशेन नारायणत्वविधानान्नारायणानु-

वाक्यस्य सर्वविद्योपास्य विशेषनिर्धारकतया सर्वविद्यासु नारायण एवोपास्य इति फलफलिभावः। तत्र पूर्वः पक्षः। अस्मिन्ननुवाके पद्मकोशप्रतीकाशमिति हृदयायतनत्वश्रवणेन दहरविद्या प्रत्यभिज्ञानात्। अणोरणीयानित्यस्मिन्ननुवाके दहरविद्यायाः प्रकृतत्वाच्च दहरोद्देशेन नारायणत्वविधायकत्वस्य युक्तत्वात् दहरविद्योपास्यनिर्धारकत्वात्तत्रैव नारायणस्योपास्यत्वं ततः सिध्यति न सर्वविद्यासु न च नारायणपरोज्योतिरित्यादिवाक्यैः सर्वपरविद्यासम्बन्धः तद्वाक्येषु **द्वादशाहीनस्येतिव** तत्तद्विद्योद्देशेन नारायणविध्यप्रतीतेः। अतो **न वाक्यात् प्रकरणबाधशङ्का।** सहस्रशीर्षं देवमिति द्वितीयाविभक्तिदर्शनेन कारकत्वेन क्रियाकाङ्क्षित्वेन पूर्वानुवाकोदितोपासिना सम्बन्धाच्च तदैक्यं प्रतीयत इति दहरविद्योपास्योद्देशेन नारायणत्वविधायकत्वं युक्तमिति।

राद्धान्तस्तु सर्वपरविद्योपास्यवस्त्वनुवादेन नारायणत्वविधायकत्वमेवास्य युक्तं तत्तद्विद्यास्वक्षरशिवशम्भुपरब्रह्मपरंज्योतिः परमात्मपरतत्वादिशब्दनिर्दिष्टं वस्तु तैरेव शब्दैरनूद्य तस्य नारायणत्वविधानस्य वाक्यप्रमाणकत्वात् प्रकरणेन दहरविद्योपास्यनिर्धारकत्वस्य वक्तुमशक्यत्वात्। **प्रकरणस्य वाक्यापेक्षया दुर्बलत्वात्।** (जै. सू. 3-3-13)

---

## द्वादशोपसत्तायाः अहीनांगताधिकरणम् —

ज्योतिष्टोम प्रकरणे श्रूयते – 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति। एकेनाह्ना निष्पाद्यत्वात्साह्नो ज्योतिष्टोमः। दीक्षादिवसादूर्ध्वं सोमाभिषव दिवसात्पूर्वं कर्तव्या होमा उपसदः। तासां द्वादशत्वं प्रकरणबलात् ज्योतिष्टोमे निविशते। अहीनशब्दश्च तस्मिन्नेव कल्पते। ज्योतिष्टोमस्य निखिलसोमयाग प्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेश विकलविकृतीनामिव हीनत्वाभावात्। अतो द्वादशत्वत्रित्वयोर्विकल्पः इति पूर्वः पक्षः।

सिद्धान्तस्तु — आवृत्त सोमयागरूपो द्विरात्र त्रिरात्रादिरहर्गणः। तस्मिन्नहीनशब्दो रूढः। यौगिकत्वे तु 'न हीनः' इति विगृह्य समासे कृते

न च पद्मकोशप्रतीकाशमित्यादिबलाद्दहरविद्याशेषत्वमत्रगम्यत इति वाच्यम्। ऐतदात्म्यमिदं सर्वमिति सामान्येनोक्तस्य ब्रह्मात्मकत्वस्य तत्त्वमसीति जीवविशेषे उपसंहारवत् सर्वविद्योपास्यतयाभिहितस्य नारायणस्य विद्याविशेषे उपसंहारमात्रपरत्वात्। न च विद्यान्तरानुवादादर्शनमिति युक्तं ज्योतिरादि-शब्दैस्तदुपास्यानुवादस्योक्तत्वात्। तत्र 'अथ परायया तदक्षरमधिगम्यत' इत्यादि वाक्यनिर्दिष्टमक्षरं 'विश्वं नारायणं देवमक्षरं परमं' प्रभुमित्यनूद्य नारायणत्वं विधीयते। 'अथ यदितः परो दिवो ज्योतिर्दीप्यत' इत्यादिवाक्योपात्तं वस्त्वनूद्य नारायणपरोज्योतिरिति नारायणत्वं विधीयते। 'आत्मा वारे द्रष्टव्यः' 'आत्मा-वा इदमेक एवाग्र आसीत्' आत्मानमेव लोकमुपासीत, तमेवैकं जानथात्मान मित्यादिवाक्योपास्यमनूद्य आत्मा नारायणः पर इति नारायणत्वं विधीयते। एवमन्यत्राप्यूह्यम्।

न च सहस्रशीर्षमिति द्वितीयाविभक्तिदर्शनात्तस्य च पूर्वानुवाक-स्थोपासिना सम्बन्धाद्वाक्यादेव नारायणस्य दहरविद्यामात्रान्वयो गम्यत इति वाच्यम्। उपासितव्यमिति कृत्यप्रत्ययेन कर्मणोऽभिहितत्वेन द्वितीयाविभक्ते-रन्वयात्। शाब्दस्मृतौ हि कृत्तद्धितसमासैरभिहिते द्वितीयानुशासनम्। अतः प्रथमार्थ एव द्वितीया। उत्तरत्र नारायणः पर इति प्रथमार्थत्वदर्शनाच्च। न च प्रथमार्थत्वस्वीकारे उपासिनान्वयः सुतरां स्यादिति वाच्यम्। स्वारसिकेन सर्वस्मात्परत्वप्रतिपादनेन वाक्यस्य निराकाङ्क्षत्वे सत्यपि पूर्वानुवाकस्य-पदाकर्षणेनान्वयायोगात् नारायणं परं ब्रह्मेत्याद्यनेकवाक्यवैयर्थ्यप्रसङ्गाच्च। अतः सर्वपरविद्योपास्यवस्त्वनुवादेन नारायणत्वविधायकत्वमेवास्य युक्तमिति।

---

सत्ययज्ञादिशब्दवदाद्युदात्तः स्यात्। मध्योदात्तस्त्वाम्नायते। रूढिश्च विग्रह निरपेक्षत्वाच्छीघ्रबुद्धिहेतुः। अतो ज्योतिष्टोमवाचिनः साह्नशब्दाद्भिन्नेयमहीन-संज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते। तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं द्वादशत्वं निवेश्यते। तत्सिद्ध्ये प्रकरणादिदमपनेतव्यम्। (जै॰ सू॰ *3-3-13*)

**शङ्करादयस्तु-लिङ्गभूयस्त्वादिति** सूत्रं राद्धान्तोपक्रमत्वेनोत्तराधिकरणशेषतया व्याचक्षते। तदनुपपन्नम्। लिङ्गैरेव राद्धान्तोपक्रमे दुर्बलप्रकरणावलम्बनेन पूर्वपक्षोत्थानानवकाशात्। कथञ्चिल्लिङ्गान्यथाकरणपूर्वकं पूर्वपक्षोत्थितिवर्णने श्रुत्यादिबलीयस्त्वादिति सूत्रे आदिशब्दोपात्तत्वं लिङ्गस्यानुपपन्नं स्यात्। तत्र प्राबल्यहेतुर्विवक्षित इति चेन्न। अशाब्दत्वात्प्रकरणेन पूर्वपक्षं वर्णयित्वा तन्निराकरणपूर्वकं सिद्धान्तवर्णनस्य कर्तुं शक्यत्वेन तावतैवोपपत्त्या-लिङ्गभूयस्त्वादिति सूत्रवैयर्थ्यप्रसङ्गश्च। तस्मादस्मद्व्याख्यातमर्यादैव सूत्रकृदभिमतेति नारायणानुवाको नारायणस्य सर्वविद्योपास्यत्वसाधक इति सिद्धम्।

**यदाह कश्चित्**-एवं सति यदा तम इति मन्त्रे सौबालवाक्यसिद्धकालविशेषप्राप्ततमोऽनुवाद इति मन्यमानानां कथं न सुबालोपनिषदः शिवपरत्वं सिध्येत्। तत्र यद्वृत्तयोगेन तत्कालवर्तिनस्तमोऽधिष्ठातुः सुबालोपनिषत्प्रतिपाद्यस्यानुवाद इत्यस्य इतोऽपि स्पष्टत्वात्। अपि च एवं 'सर्वो वै रुद्र' इत्यादिमन्त्राणां त्वदुक्तरीत्या सर्वपुरुषसन्महः प्रभृतिशब्दैः **शाण्डिल्यविद्यापुरुषसूक्तसद्विद्याव्याहृतिविद्यादि** सकलपरविद्योपास्यवस्त्वनुवादेन रुद्रत्वविधायकत्वस्याभ्युपगन्तव्यतया कथं नारायणः सर्वविद्योपास्य इति निर्णयः। बलाबलविचारे तु 'सर्वो वै रुद्र' इत्यादिमन्त्रैः रुद्रः सर्वपरविद्योपास्यः सिध्यतीति निर्णय एव युक्तः। सर्वो वै रुद्र इत्यादिवाक्यानां स्पष्टभेदानां सर्वपुरुषाद्यनुवादेन रुद्रत्वविधायकत्वस्य स्पष्टत्वात्। सहस्रशीर्षं देवमित्यादिमन्त्राणां तद्विश्वमुपजीवतीति नारायणस्य विश्वोपजीवित्वोपवर्णनेन तत्प्रशंसापरतया प्रतीयमानानां तत्र तत्र वाक्यभेदस्य द्वितीयान्तानां प्रथमार्थत्वस्य च कल्पनीयत्वात् सर्वपरविद्योपास्यवस्त्वनुवादेन नारायणत्वविधिपरत्वकल्पनस्य क्लिष्टत्वात्। किं च अथर्वशिखायां कश्चिद्ध्येय इति विद्याविशेषोपक्रमाभावात् सकलपरविद्यासु ध्येयप्रश्ने शिवस्य ध्येयत्वनिर्धारणस्य स्पष्टत्वेन सहस्रशीर्षं देवमित्यादिमन्त्राणां तद्विरुद्धार्थत्वकल्पनानोन्मेषमर्हति। अतो न नारायणस्य सर्वपरविद्यावेद्यत्वमिति।

अत्र वदामः — यदा तम इति मन्त्रस्य सौबालवाक्यसिद्धतमोऽनुवादकत्वमात्रेण कथं त्वस्या उपनिषदः शिवपरत्वं सिध्येत् । तत्र शिव एव केवल इति शिवत्वविधानात् सिध्यतीति चेन्न । तथा सति दिवानिशाद्यभावस्यापि विधेयत्वप्रसङ्गात् । न च शिवशब्दार्थविध्यभावे वैयर्थ्यमस्येत्युपपादितमधस्तात् । किं च नारायणत्वेन सौबालवाक्यावगते तमोऽधिष्ठातरि कथं शिवत्वविधिसम्भवः कथं तर्हि शिवशम्भ्वादिशब्देनोपास्यवस्त्वनूद्य नारायणत्वविधिरुपपद्यत इति चेन्न । अनुपहतपाप्मावा अहमस्मीत्यादिवाक्यैः प्रसिद्धशिवस्यकर्मवश्यत्वावगमेन परविद्योपास्यत्वायोगेन तदतिरिक्तपरत्वे अवश्यवाच्ये सति सक इत्याकाङ्क्षायां तदनुवादेन नारायणत्वविधिसम्भवात् । अपि चेत्यपि न सर्वो वै रुद्र इत्यस्य तस्मै रुद्राय नमोऽस्त्विति कीर्त्यमान नमस्कारोद्देश्यत्वोपयोगित्वेन सर्वात्मकत्ववर्णनपरत्वेनान्यथासिद्धस्य शाण्डिल्यविद्यावेद्यवस्त्वनुवादेन रुद्रत्वविधायकत्वासिद्धेः । पुरुषो वै रुद्र इत्यस्यापि कीर्तितसर्वात्मकत्वोपयोगित्वेन रुद्रशब्दस्य पुरुषशब्दवाच्य नारायणपर्यन्तत्वकीर्तनपरत्वेन पुरुषसूक्त प्रतिपाद्ये रुद्रत्वविधायकत्वायोगात् त्वया पुरुषो वै रुद्र इत्यादिवाक्यबलाद्रुद्रस्य पुरुषशब्दवाच्यत्वसिद्धिरित्यन्यत्रोक्तत्वेन तद्विरोधापाताच्च । एतेन बलाबलविचारेत्वित्यादिकमपास्तम् । न च सहस्रशीर्षमित्यादिना तत्तद्विद्योपास्य वस्त्वनुवादेन नारायणत्वविधाने वाक्यभेदः स्यादिति वाच्यम् । "विश्वं नारायणं देवं" 'विश्वं नारायणं हरि'मिति नारायणपदपौनः पुन्यानर्थक्यापातात्तदपेक्षया वाक्यभेदाङ्गीकारस्य युक्तत्वात् । एतेन तद्विश्वमुपजीवतीति कर्माकाङ्क्षयान्वयसम्भवे द्वितीयान्तानां प्रथमार्थकत्वकल्पनं क्लिष्टमिति अपास्तम् । नारायणपद पुनः पुनः श्रवणानर्थक्यापातात् 'अन्तर्बहिश्चतत्सर्वं व्याप्यनारायणःस्थितः' इत्यनन्तरश्रुतानामनन्तमव्ययमित्यादीनां प्रथमार्थत्वकल्पनस्यावश्याभ्युपगन्तव्यत्वाच्च विद्योपास्यवस्त्वनुवादेन नारायणत्वविधिपरत्वानङ्गीकारे कृत्स्नस्यानुवाकस्य प्रयोजनशून्यत्वापत्तेश्च । न च नारायणप्रशंसापरत्वमानर्थक्यापातात् ।

यत्तु **अथर्वशिखायां** विद्याविशेषोपक्रमाभावाच्छिवस्य सर्वपरविद्यासु ध्येयत्वं सिध्यतीति, तन्न । तस्य कारणानुवादेन ध्येयत्वनिर्धारकत्वेन शिवस्य

ततो ध्येयत्वानवगमात् । विस्तरेण चायमर्थो द्वितीयपरिच्छेदे प्रतिपादितः । तस्मान्नारायणानुवाकस्य सर्वपरविद्यावेद्यनिर्धारकत्वं निष्कण्टकमिति संक्षेपः ।

अथ तत्तद्विद्या प्रकरणपर्यालोचनया भगवतः परविद्यावेद्यत्वं दिङ्मात्रेण प्रदर्श्यते । *तत्रान्तरादित्यविद्या तावत् भगवन्निष्ठा । तथा हि छान्दोग्ये 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदितिर्नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद"ति श्रूयते । एतद्वाक्यप्रतिपाद्यमानत्वं भगवत एव वक्तुमुचितं पुरुषशब्दस्य तदुपस्थानात् सर्वेभ्यः पाप्मभ्यः उदित इति अपहतपाप्मत्वस्य एव सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इति सौबालवाक्ये भगवद्धर्मतया श्रुतस्य श्रवणात् अक्षिद्वित्वाम्नानात् पुण्डरीकाक्षत्वोपन्यासाच्च ।

अत्र कश्चिदाह - न तावत्पुण्डरीकनयनत्वं तस्यासाधारणं लिङ्गं । लोकवेदयोरन्यत्रापि बहुलं तत्प्रसिद्धेः । तस्यासाधारण्येऽपि पुण्डरीकाक्षशब्दस्य विष्णावसाधारण्योपपत्तेश्च । न च यथेत्यादिश्रुतिरिति वक्तुं शक्यते । न च योगरूढशब्दवदवयवार्थप्रतिपादकवाक्यस्यापि प्रयोगनियमोऽस्ति । अतो न पुण्डरीकाक्षत्वोक्तिबलाद्विष्णुपरत्वम् । नाप्यक्षिद्वित्वोपन्यासात् अक्षिद्वित्वस्य

---

***अन्तरादित्यविद्या —**

य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेव मक्षिणी तस्योदितिः नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातै तस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ।

**ग्रहैकत्ववदुद्देश्यगतत्वे** ( जै. सू. 3-1-7 ) नाविवक्षिततया संमार्गस्य सर्वग्रहविषयत्ववत् पुण्डरीकसादृश्यस्याक्षित्रयविषयत्वसम्भवेन सूर्यान्तर्वर्तिविग्रहस्य शैवत्वेऽप्युपपत्तेः । न च कप्यासशब्दोक्तसूर्यकरविकसितत्वविशिष्ट पुण्डरीकसादृश्यं मुकुलिते तृतीयलोचने न सम्भवतीति कथमक्षित्रयविषयत्वमिति

---

**ग्रहसंमार्जनाधिकरणम्** —

सोमे श्रूयते — " दशापवित्रेण ग्रहं संमार्ष्टि " इति । दशापवित्रं वासः खण्डः । — यथा " पशुनायजेत " इत्यत्रोपादेय पशुगतमेकत्वं विवक्षितम्, तद्वदुद्देश्यग्रहगतमप्येकत्वं विवक्षितव्यम् । किं च ग्रहशब्दस्य जातिवाचित्वेन जातेः संस्कार्यत्वे सति तदाश्रयभूते यस्मिन्कस्मिन्नपि द्रव्येऽनुष्ठितेन संस्कारेण जातिः संस्कृता भवति । तस्मात् एक एवग्रहः शोधनीय इति पूर्वः पक्षः —

सिद्धान्तस्तु — " ग्रहम् " इति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्तया च प्राधान्यं गम्यते । ग्रहं प्रति गुणः संमार्गः । प्रतिप्रधानं च गुण आवर्तनीयः इति न्यायेन यावन्तो ग्रहाः सन्ति ते संमार्जनीयाः । एवं निश्चये सति संमार्गयितव्यग्रहेयत्ताया अबुभुत्सितत्वादुद्देश्यगतमेकत्वं श्रूयमाणमप्यविवक्षितम् । अत्रोच्येत — नेदमुद्देश्यगतम्, किन्तु द्वयं विधेयम्, इति । तन्न । वाक्यभेदापत्तेः । ' ग्रहं संमृज्यताम्, तं चैकम् ' इत्येवं विधेयार्थभेदाद्वाक्यभेदः । ' पशुना यजेत ' इत्यत्र तु यागं प्रति गुणभूतः पशुः । नहि ' प्रतिगुणं प्रधानस्याऽऽवृत्तिः ' इति कश्चिन्न्यायोऽस्ति । तत इयत्ताया बुभुत्सितत्वाच्छ्रूयमाणमेकत्वं विवक्ष्यत इति वैषम्यम् । न च जातिः संस्कार्या, तस्या अमूर्तत्वात् । ततो द्रव्यलक्षको ग्रहशब्दः । तत्र चाऽऽवृत्तिरुक्ता । तस्मात् सर्वे ग्रहाः संमार्जनीयाः । ( जै. सू. 3-1-7 )

वाच्यम् । कप्यासशब्दस्य तदर्थकत्वासिद्धेः **प्रोद्गातृन्यायेन** (जै. सू. 3-3-6) योगापेक्षया रूढिपूर्वकलक्षणाया ज्यायस्त्वेन कपिर्मर्कटः तस्यासं आस्यते उपविश्यते अनेनेति पश्चाद्भागः तत्सादृश्यात्तच्छब्दं तथा च मर्कट-पश्चाद्भागवल्लोहितं यत् पुण्डरीकं तत्सादृश्यमर्थ इति व्याख्यानस्य युक्तत्वात् । 'य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्समा वृषभो रोहिताक्ष' इति मन्त्रे मण्डलान्तर्वर्तिनो लोहिताक्षत्ववर्णनदर्शनेनात्रापि श्रुत्यन्तरप्रतिपन्नार्थ-वर्णनसम्भवेऽर्थान्तरवर्णनानौचित्यात् । न चैवं सति हीनोपमादोषः । उपमितोपमात्वात् ।

ननु पुण्डरीकं सिताम्भोजमित्यनुशासनेन तस्य सिताम्भोजवाचकत्वात्तत्र कप्यासविशेषणोपनीतस्य रक्तसाहित्यस्य कथमन्वय इति चेन्न । **नवमाध्याये पौण्डरीकाणि बर्हींषि** (जै. सू. 9-3-2) भवन्तीति विहितेषु पौण्डरीकेषु

---

## समाख्यायाःविनियोजकताधिकरणम् —

याज्या पुरोनुवाक्या पाठादयो धर्मा ऋग्वेदे प्रोक्ताः । दोहन निर्वा-पादयो यजुर्वेदे । आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे । तत्र अस्यैवैते धर्माः इति नियामकस्य दुर्निरूप्यत्वादेन केनाप्यृत्विजा यः कोऽपि धर्मइच्छया संपाद्यत इति पूर्वपक्षः ।

सिद्धान्तस्तु — मैवम् । हौत्रम्, आध्वर्यवम् औद्गात्रम् इति समा-ख्यानेन नियतिर्बोध्यते । न च समाख्यानस्य बाधकं किञ्चित्पश्यामः । तस्मा-द्बोधकत्व बाधितत्वयोर प्रामाण्यकारणयोरभावाच्छ्रुतिलिङ्गादि पञ्चकवत्प्रमाणेन सामाख्यानेन धर्मा व्यवस्थाप्यन्ते । (जै. सू. 3-3-6)

## पौण्डरीकेषु बर्हिःषु स्तरणमंत्रस्योहाधिकरणम् —

"मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः" इत्यत्र "पौण्डरीकाणि बर्हींषि भवन्ति" इति श्रुतम् । तत्रस्तरणमन्त्रश्चोदकप्राप्तः - "दर्भैः स्तृणीत हरितैः"

दर्भैस्तृणीत हरितैरित्यतिदेश प्राप्तस्य मन्त्रस्य हरितपदस्थाने रक्तपदमूहितव्यमिति वदद्भिः शबरस्वाम्याद्यभियुक्तैः रक्ताम्भोजपरत्वाङ्गीकारात् । तद्विरोधेन कतिपय-काव्यदर्शि कोशकारवचनस्य बाधात् । अस्तु वा अक्षिणी इत्यत्र द्वित्वविवक्षा। कप्यासमित्यस्य सूर्यकरविकसितत्वमर्थः । तथापि पुत्रत्रयवन्तं पुरुषं निर्दिश्यास्य पुत्रौ द्वावग्निकल्पौ इत्युक्ते यथा पुत्रगतद्वित्वं न पुत्रान्तरव्यवच्छेदकं किन्तु अग्निसादृश्यमात्रव्यवच्छेदकं तथाक्षिगतद्वित्वं नाक्ष्यन्तरव्यवच्छेदकं किंतु तत्र सूर्यकरविकसितपुण्डरीकसदृशत्वस्यैवेति नाक्षिद्वित्वोपन्यासाद्विग्रहत्वस्य वैष्णवत्वं सिध्यतीति ।

अत्रोच्यते - पुण्डरीकनयनत्वस्य साधारण्यान्न ततो भगवदुपस्थितिरिति यदुक्तं तदनुपपन्नम् । तस्य साधारण्येऽपि भगवति प्रचुरप्रसिद्धिकपुण्डरीकाक्ष-शब्देन योगार्थोपस्थितिदशायामेकपदोपात्तत्वप्रत्यासत्तिमतो रूढ्यर्थस्यापि सहोप-स्थितिसम्भवेन ततो भगवदुपस्थितेरप्रत्यूहत्वात् ।

यदप्यक्षिद्वित्वस्योद्देश्यगतत्वेनाविवक्षितत्वात् पुण्डरीकसादृश्यमक्षित्रय-विषयकमिति तदप्यविचारितरमणीयम् । उद्देश्यगतत्वेनाविवक्षितत्वोक्तावक्ष्य-क्षित्रयानुवादकत्वे बहुवचनप्रसङ्गस्यावर्जनीयत्वात् । अत एव बृहस्पति-सवादिषु बार्हस्पत्यं गृह्णातीत्यादिना समाम्नातानां वैकृतग्रहाणां प्राकृतैन्द्र-वायवादिनिवर्तकत्वमस्ति न वेति संशय्य ग्रहाणां यागनिर्वृत्त्यर्थकैनैक-कार्यत्वात्प्रत्यक्षश्रुतैर्वैकृतग्रहैर्निर्वर्तिते यागे चोदकप्राप्ता निवर्तन्त इति पूर्वपक्षं

---

इति । तत्र - पूर्वन्यायेन दर्भशब्दस्थाने पुण्डरीकशब्दः प्रयोक्तव्यः । हरित शब्दस्तु प्रकृतौ नापूर्वीय द्रव्यवाची । ततोऽसमवेतत्वा द्विकृतावप्यदृष्टार्थमनूहेन प्रयोक्तव्य इति पूर्वः पक्षः ।

सिद्धान्तस्तु — गुणद्वारा गुणिद्रव्यप्रकाशने सति दृष्टार्थत्वलाभेन समवेतार्थत्वात् । तस्मात् – 'पुण्डरीकैस्तृणीत रक्तैः' इत्यूहनीयम् । (जै. सू. 9-3-2)

प्राप्य यागानुवादेन बार्हस्पत्यग्रहविधायकस्य बार्हस्पत्यं यजेतेत्येवंविधस्य वाक्यस्याभावेन प्रयोगवचनस्यैव शरणीकरणीयतया तस्य चोपदेशातिदेशोभया-नन्तरं प्रवर्तमानस्य यौगपद्येन समुच्चितप्राकृतवैकृतग्रहयागान्वयबोधकत्वाद्विनापि ग्रहणेन यागनिर्वृत्तिसिद्धिः। ग्रहणानां दृष्टार्थत्वाभावात्। प्रत्यक्षेणापि निरपेक्ष-यागसाधनत्वस्य वक्तुमशक्यत्वाच्च। न वैकृतैः प्राकृतानां बाध इति सिद्धान्त-यित्वा ग्रहान् गृह्णातीत्यादावेतन्न्यायप्रसरेऽपि बार्हस्पत्यं गृह्णातीत्यस्य नोदा-हरणत्वम्। सत्यां गतौ विशिष्टविधिगौरवस्यान्याय्यत्वात् देवतावाचकपदस्या-प्रमादपाठत्वाय ग्रहणविधिपक्षेऽपि वाक्यार्थविधेरवर्जनीयत्वात् श्रुत्यर्थविधिरीप्सया ग्रहणविधिरिति पक्षस्यानुन्मेषात् चोदकस्य कार्यप्रधानत्वेऽपि तन्मुखेन पदार्था-नामप्यतिदिष्टतया प्राप्तग्रहानुवादेन बृहस्पतिदेवतारूपगुणविधिरित्येवाङ्गीकर्तुं युक्तम्। विकृतौ शब्दवत्त्वात् प्रधानस्य **गुणानामधिकोत्पत्तिसंनिधाना-दित्यधिकरणे** तथा व्यवस्थापनादित्याशङ्क्य प्राकृतग्रहानुवादेन देवतारूप-गुणविधिरित्येवाङ्गीकर्तुं युक्तं, विकृतौ विधौ तेषां बहुत्वादाग्नेया ग्रहा भवन्तीति बहुवचनं स्यात्। यद्यपि चानुवाद्यगतसंख्या न विवक्षिता। तथापि बहुषु बहुवचनेनैव भवितव्यम्। सोऽयमभिधानबाधः। विशिष्टविधौ तु गौरवमात्रं तस्माद्देवताविशिष्टग्रहणान्तरविधिरेव न्याय्य इति युक्तमुदाहरणत्वमिति व्यवस्थापितं पूर्वतन्त्रे।

नन्वेवं **ग्रहं संमार्ष्टीत्यत्र** यागसाधनीभूतग्रहोद्देशेन संमार्गविधानाभ्यु-पगमो विरुध्येत। तेषां बहुत्वेन बहुवचनप्रसङ्गस्यानिवार्यत्वादिति चेत्, न। ग्रहोद्देशेन संमार्गविधिमनङ्गीकृत्य ग्रहसाधनक संमार्गविधौ द्वितीयाश्रुतिबाध-प्रसङ्गात् ग्रहोद्देशेन संमार्गविधौ कर्मत्वप्रतिपादकत्वेन द्वितीयाया उपपन्नत्वा-देकवचनस्य जात्यैक्यावलम्बनत्वसम्भवात्। बार्हस्पत्यं ग्रहं गृह्णातीत्यत्र तु ग्रहानुवादे ग्रहान्तरविधाने वा संस्कार्यत्वेन द्वितीयाया अबाधात्। वचनानु-ग्रहार्थं ग्रहान्तरविधानस्य युक्तत्वात्। नन्वत एव सर्वे ग्रहोद्देशेन संमार्गविधाने बहुवचनप्रसङ्गात्। ग्रहैकत्वं विवक्षितमापद्येतेति चेत्, न। एकत्वस्य विवक्षितत्वे उद्देश्यतया उद्देश्यविशेषणतया विधेयतया वान्वयः स्यात्। तत्र

नाद्यः । ग्रहैर्जुहोतीति वाक्यान्तरेण ग्रहाणां प्राप्तत्वेन ग्रहविधेस्तदुद्देश्यकत्वस्य वक्तुमशक्यत्वात् संमार्गे विधीयमाने तस्योद्देश्यत्वमित्यपि न सम्भवति । ग्रहोद्देश्यकत्वात्संमार्गविधेः एकत्वस्याप्युपदेश्यत्वे सत्युद्देश्यानेकत्वकृतवाक्यभेदः ।

न द्वितीयः । युगपद्विभक्त्या संख्याकारकयोरभिधीयमानत्वेन प्रथमं संख्याममिधाय पश्चात्कर्मत्वाभिधानाभावेन संख्याविशिष्टस्य कर्मत्वेनान्वय इति पक्षस्यासम्भवात् ।

न तृतीयः । ग्रहोद्देशेन तद्विधानेन संमार्गस्यापि तदुद्देशेन विधानाद्वाक्यभेदप्रसङ्गात् । संमार्गोद्देशेन तद्विधानमपि न सम्भवति । द्वितीयायाः प्राधान्यवाचित्वात् । अन्यथा ग्रहस्यापि गुणत्वप्रसङ्गः । एवं च पूर्वपक्षावलम्बने वाक्यभेदप्रसङ्गात् ग्रहसाधनक संमार्गविधाने द्वितीयायाः सर्वथा बाधप्रसङ्गात् । ग्रहं संमार्ष्टीत्यत्र एकवचनस्य जात्याख्यया कथञ्चिन्नयनेऽपि न बार्हस्पत्यं ग्रहं गृह्णातीत्यत्र गत्यन्तराभावकल्प्यं जात्यैक्यावलम्बनमभ्युपगन्तुं युक्तं विशिष्टविधिस्वीकारेण वचननिर्वाहसम्भवात् । एवं च तन्न्यायेनात्रापि लोचनत्रयानुवादे बहुवचनप्रसङ्गात् लोचनद्वयानुवाद(क)त्वमेव वक्तुं युक्तम् । एतेन स्तनादीनां द्वित्वविशिष्टाजातिः प्रायेणेति वामनसूत्रे विधानात् 'स्रान्तीनां बृहदमलोदबिन्दुचित्रं रेजाते रुचिरदृशामुरोजकुम्भौ' इत्यादिप्रयोगदर्शनात् ।

'तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ।
दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिन्दवः ॥'

इति रामायणे दशाननकोपवर्णने च नेत्राभ्यामिति द्विवचनदर्शनाच्च । लोचनत्रयानुवादपक्षेऽपि द्विवचनमुपपद्यत इति निरस्तम् । जात्यालम्बनत्ववर्णनस्यानन्यगतिकत्व एव प्रवृत्तेः । अन्यथा बार्हस्पत्यं गृह्णातीत्यत्रापि प्रसङ्गात् । तस्माल्लोचनद्वयोपन्यासाद्भगवत्परत्वमिति सुष्ठूक्तम् ।

यदपि योगापेक्षया रूढिपूर्वकलक्षणाया ज्यायस्त्वान्मर्कटपश्चाद्भागसदृशपुण्डरीकसादृश्यमर्थ इति, तत्तुच्छम् । अक्षित्रयानुवादेन लौहित्यमात्रविधाने-

ऽभ्युपगम्यमाने कप्यासपदवैयर्थ्यापत्तेः। रक्ताम्भोजसादृश्योक्तिमात्रेण लौहित्य-प्रतीतेरुपपन्नत्वात् अत्यन्तलौहित्यविधानेऽभ्युपगम्यमाने वामदक्षिणलोचनयोर्महा-पुरुषलक्षणप्रान्तलौहित्यमेव ऊर्ध्वलोचन एव तु सर्वात्मना लोहितत्वमिति त्वयाप्युक्तत्वे नात्यन्तलोहितत्वस्याक्षित्वय निष्ठत्वासिद्धेरयोग्यार्थत्वापातात् । न चोर्ध्वलोचन एव तद्विधीयत इति वाच्यम्। पुण्डरीकसादृश्यस्याक्षित्वयविषयत्वं भविष्यतीति स्ववाक्यविरोधप्रसङ्गात्। अपि च योगाङ्गीकारस्यात्यन्तजघन्यत्वेऽपि कं जलं आस उपवेशने इति धातुरपि पूर्वः 'वष्टि भागुरिरल्लोपमवाप्यो-रुपसर्गयोः' इति वचनादकारलोपः। कप्यासं सलिलस्थमित्यपरित्यक्तरूढ्यर्थं व्याख्यानान्तरं विहाय कपिगुदे तव रुचिः कथं जातेति न विद्मः। किं च 'कपयोऽर्के च वानरा' इति सूर्येऽपि नैघण्टुकैरनुशासनेन 'कपिर्बिभर्ति तेजन'मिति वैदिक प्रयोगेण च तत्रापि रूढेरेव सत्त्वेन सूर्यकरविकसितत्व-रूपार्थस्य जघन्यत्वकथनमप्यसङ्गतं प्रत्युत त्वत्पक्ष एव कपिगुदसादृश्ये लक्षणाङ्गीकाराज्जघन्यत्वमिति न्यायविद्गोष्ठीबहिष्कारः।

यदपि समावृषभोरोहिताक्ष इति श्रुत्यन्तरप्रतिपन्नार्थवर्णनसम्भवेऽर्थान्तर-वर्णनानौचित्यादिति, तदप्यज्ञानात्। कपिगुदसादृश्यस्य तत्र श्रुतावप्रति-पादनेन कप्यासशब्देऽर्थान्तरवर्णनस्य प्रकृतश्रुत्यविरोधात् पुण्डरीकशब्दस्य रक्ताम्भोजपरत्वेन न तत एव लोहिताक्षत्वप्रतिपत्तेः। न ह्यस्माकीनैराचार्यैः श्वेताम्भोजपरत्वं पुण्डरीकशब्दस्याङ्गीकृतं येन लोहिताक्षत्वप्रतिपादकश्रुति-विरोधः स्यात्। प्रत्युत श्रुतप्रकाशिकायां कप्यासपुण्डरीकशब्दयोरनन्वय-कथनाभावेन कप्यासशब्दे गौणतास्यादित्युक्त्या च पुण्डरीकपदस्य रक्ताम्भोज-परत्वमेवाभ्युपगतमित्यवसीयते। 'य एष रक्तपद्माक्ष' इत्यादिप्रमाणबलादपि भगवल्लोचनयोस्तथात्वमवगतम्।

यदपि उपमितोपमात्वाद्धीनोपमानतादोष इति, तदप्यसारम्। उपमेयाति-शयानाधायकत्वेन तन्निकर्षवृत्त्या च हीनोपमाया दोषत्वेन तद्दोषकथनस्य कप्यासशब्दवैयर्थ्यतात्पर्यकत्वात्। अत एव हि न्यायार्यैः श्लाघ्यार्थतया निर्वाहे

सम्भवति हीनोपमायोगादित्युक्तम् । एतेन वेदपरिहरणीयन्यायविरोधमगणय्य काव्यपरिहरणीयहीनोपमादोषभयात् कपिशब्दस्य सूर्ययोगाश्रयणमारोपितवृश्चिक-भयात् पलायमानस्याशीविषमुखनिपतनमिति प्रलपितमपास्तम् । कप्यासशब्द-स्यार्थ्यस्योक्तत्वात् । एवं च योगाङ्गीकारप्रसङ्गभीत्या कप्यासशब्दस्य मर्कटगुद त्वाश्रयणमेव वृश्चिकभयात्पलायमानस्याशीविषमुखनिपतनम् । आनर्थक्यस्य महादोषत्वात् । **'आनर्थक्याद्वरं मुख्यार्थभङ्गः' इति हि मीमांसकानां घण्टाघोषः** (जै. सू. 3-1-9) अत एव च हीनोपमानदोषमेकं परिहर्तु-कामानामश्लीलनिहतार्थत्वरूपौ द्वौ दोषौ प्रसज्येयातामिति वचनमकाण्डे ताण्डवितं बोध्यम् ।

---

**आनर्थक्यतदंगन्यायाधिकरणम् —**

वाजपेय प्रकरणे श्रूयते – "सप्तदशारत्निर्वाजपेयस्य यूपो भवति" इति । तत्र – यूपद्रव्यगतं सप्तदशारत्निशब्दोदितं यदूर्ध्वमानं तद्वाजपेय कर्मणोऽङ्गम्, सप्तदशारत्निशब्द वाजपेय शब्दयोरानन्तर्यात् । प्रकरणं चैवमनुगृह्यते । यदि कर्मणः साक्षादूर्ध्वमानं न संभवेत्, तर्हि वाजपेयगतं खादिरमूर्ध्वं यत्षोडशिपात्रं तस्मिन्नद उन्मानं प्रथमं संबध्य तद्वारा कर्मणा-ऽन्वेति इति पूर्वपक्षः ।

सिद्धान्तस्तु — 'सप्तदशारत्निर्यूपः' इति सामानाधिकरण्याद्यूपेन साक्षात्संबध्यते । तस्य यूपस्य पश्वङ्गत्वादुन्मानं यूपद्वारा पशोरङ्गं भवति । तस्यापि पशोर्वाजपेयाङ्गत्वात्पशुद्वारा कर्मणोऽङ्गम् । यद्यपि वाजपेय यूपशब्दयो-रानन्तर्यमस्ति, तथाऽपि वाजपेयस्य सोमयागतया साक्षाद्यूपसंबन्धाभावा-त्पशुव्यवधानमभ्युपेयम् । 'वाजपेयस्य' इति षष्ठ्याः संबन्धमात्रवाचित्वेन व्यवहित संबन्धमप्यसावभिधत्ते । 'देवदत्तस्य नप्ता' इति प्रयोगात् । यत्तु – सप्तदशारत्निवाजपेयशब्दयोरानन्तर्यम्, यच्च प्रकरणम् । तदुभयमप्यविरुद्धम्, पश्वङ्गत्वेऽप्यन्ततो वाजपेयाङ्गत्वाङ्गीकारात् । किं च – पूर्वपक्षे यूपशब्देन षोडशिपात्रं लक्षणीयम् । सिद्धान्ते तु नासौ दोषः । (जै. सू. 3-1-9)

श्रीकण्ठेनोक्तं – अक्षिगतद्वित्वं नाक्ष्यन्तरव्यवच्छेदकं किं तु रविकर-विकसितपुण्डरीकसादृश्यस्यैव । द्वावस्य पुत्रावग्निकल्पावित्यत्राग्निसादृश्य-व्यवच्छेदस्यैव दर्शनादिति, तदतिस्थवीयः । अनुवादपक्षे अक्षिद्वित्वविवक्षायां वाक्यभेदप्रसङ्गेन तद्विवक्षाया असम्भावितत्तया द्वावस्य पुत्राविति वाक्य-तुल्यत्वाभावात् ।

नन्वेवं द्वावस्य पुत्रावित्यत्रापि वाक्यभेदप्रसङ्ग इति चेत्, न । पुत्रमात्रोद्देशेनाग्निकल्पत्वविधाने द्वावित्यस्यानन्वयप्रसङ्गात् । लौकिकवाक्यस्य वक्तृविवक्षाधीनत्वेन वाक्यभेदप्रसङ्गस्यादोषत्वाच्च । द्वित्वविशिष्टोद्देशांगीकारात् । प्रकृते तु तद्विवक्षायां प्रमाणाभावात् न लोचनान्तरे रविकरविकसितपुण्डरीक-सादृश्यव्यवच्छेदकत्वम् । कथं तर्हि लोचनद्वयानुवादबलाद्विग्रहस्य वैष्णवत्व-मिति चेन्न । अनुवादस्वारस्यात् । शैवत्वे अक्षिणी इत्यत्र बहुवचनप्रसङ्गात् । तस्मादस्य पुत्रावग्निकल्पावित्यत्र यथा पुत्रान्तरव्यवच्छेदः तथात्राप्यक्ष्यन्तर-व्यवच्छेदः प्रतीयत इति विग्रहस्य वैष्णवत्वसाधनमप्रत्यूहम् ।

किं च उद्देश्यविशेषणत्वे परमेवं लोचनत्रय प्रतिपादनशङ्कावकाशः तदेव न निश्चयार्हं अक्षिविधानसम्भवात् । न च विग्रहत्वसामान्याल्लोचन-प्राप्तिरिति वाच्यम् । 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति शास्त्रेणापोदितस्य लोचनद्वयस्य **द्वारलोपापोदित कृष्णलश्रवणवद्वि** (जै. सू. 10-1-1)

---

## विकृतौ लुप्तार्थप्राकृतानां बाधसाधकाधिकरणम् —

"रत्निनामेतानि हवींषि भवन्ति" इति वाक्येन राजसूये रत्निनामकानां देवानां संबन्धीनि कानिचिद्धवींषि दर्शपूर्णमासेष्टि विकृति रूपाणि विहितानि । तेषु मैत्राबार्हस्पत्ये हविषि श्रूयते – "स्वयंकृतावेदिर्भवति, स्वयंदितं बर्हिः, स्वयंकृत इध्मः" इति । इष्टावुद्धननखननपरिलेखनादिभिः क्रियाविशेषैर्वेदि-र्निष्पाद्यते । "स्फ्यनोत्तमां त्वचमुद्धन्ति," देवस्य त्वा सवितुः प्रसवे – "इति खनति, स्फ्येन वेदिं परिलिखन्परिगृह्णाति" इति तद्विधानात् ।

धानसम्भवात् विग्रहत्वसामान्याल्लोचनद्वयाक्षेपे लोचनत्रयस्याप्राप्त्या शिव-व्यवच्छेदाच्च । न च पुराणप्रसिद्ध्या लोचनानुवाद इति शक्यशङ्कम् । तथा सति पुण्डरीकसादृश्यस्यापि तत एव प्राप्तिसम्भवेन तद्विधानमपि भज्येत । न च श्रुत्यन्तरासिद्धलोचनानुवादसम्भव इति वाच्यम् । विनिगमनाविरहेण श्रुत्यन्तर-स्यैतच्छ्रुतिप्रामाक्ष्यनुवादित्वमिति वक्तुं शक्यत्वात् ।

---

“यज्ञस्य घोषदसि” इत्यस्मिन्ननुवाके प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं बर्हिः सम्पद्यते । “त्रीन् परिधीन्” इत्यादिमन्त्रोपेताभिक्रियाभिरिध्मः सिद्ध्यति । विकृति रूपे तु हविष्युद्धननाद्यपेक्षां वारयितुं ‘स्वयं’ इत्युक्तम् । यथावस्थित एव भूप्रदेशो वेदित्वेन स्वीकर्तव्यः । इध्माबर्हिषी अपि स्वत एव च्छिन्ने शास्त्रीय-च्छेदन निरपेक्षे ग्राह्ये इत्यर्थः । तत्र प्रकृतौ सप्रयोजनानां उद्धननादीनां विकृतौ प्रयोजनं लुप्यते । उद्धननादिकृतस्य वेद्युपकारस्य स्वयंशब्देन निवारितत्वात् । बर्हिस्तरण हविरासादनादयो वेदिधर्मा विकृतावप्यलुप्तार्थाः । तत्र संशयः – ‘किं लुप्तार्थमलुप्तार्थं च सर्वमङ्गजातं विकृतावप्यनुष्ठेयम्, उत लुप्तार्थं वर्जनीयम्’ इति पूर्वः पक्षः ।

सिद्धान्तस्तु – अङ्गी अङ्गैरुपकृतः फलं साधयति । तथा सत्यङ्गिनो-ऽङ्गकृत उपकारे साक्षादपेक्षा, उपकारद्वारात्वङ्गेषु । प्रत्यासन्नश्चाङ्गिनं प्रत्यङ्गेभ्य उपकारः । योग्यतापि साक्षादपेक्षां पूरयितुमुपकारस्यैवास्ति । नत्वङ्गानाम् । वेदिनिष्पादन लक्षणदृष्टोपकार युक्तानि प्रकृतावुद्धननाद्यङ्गानि । विकृतौ तु वेद्याः स्वतः सिद्धत्वेन निष्पादनोपकारो लुप्यते । तत उपकार द्वारकाण्याकाङ्क्षा सन्निधियोग्यत्वान्युद्धननाद्यङ्गेषु हीयन्ते । तस्मात् - उद्ध-ननादीनि नानुष्ठेयानि । सोयं चोदकप्रापितस्योद्धननाद्यनुष्ठेयत्व प्रत्ययस्य भ्रान्तित्वेन निश्चयो बाध इत्युच्यते । चोदकस्त्वलुप्तोपकारैरुपकारद्वारेणा-काङ्क्षा सन्निधियोग्यत्वयुक्तैर्हविरासादनाद्यङ्गैश्चरितार्थता सम्पाद्यते । (जै. सू. 10-1-1 )

अथोच्येत विशिष्टविधिगौरवपरिजिहीर्षया अत्रानूद्य गुणविधानमिति, तन्न। गुणान्तरश्रवणरहितकेवलाक्षिप्रापकश्रुत्यन्तरदर्शनात्। गुणान्तरश्रवणे तु श्रुत्यन्तरेऽपि विशिष्टविधिगौरवप्रसङ्गात्। न च सूर्यमण्डलान्तर्वर्तिविग्रहेऽक्षिविधिः। तत्र च पुण्डरीकसादृश्यविधिरित्यर्थद्वयविधानाद्वाक्यभेदप्रसङ्ग इति वाच्यम्। 'य एषोऽन्तरादित्य' इति वाक्यस्योपासनाविधायकत्वेन पुण्डरीकसादृश्याक्षिविग्रहाद्यनेकविशेषणविशिष्टाया स्तस्या विधानेन "**एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती**"त्यादिविशिष्टविधिस्थल (जै. सू. 1-4-7) इव वाक्यभेदप्रसङ्गाभावात्। अतोऽक्षिद्वयोपन्यासात् 'य एषोऽन्तरादित्य' इत्यस्य भगवत्परत्वमिति युक्तमभ्युपगन्तुम्। **एवं मैत्रायणीयोपनिषदपि** भगवत आदित्यान्तर्वर्तित्वे मानम्। एवं हि श्रूयते —

---

## आग्नेयादीनामनामताधिकरणम् —

दर्शपूर्णमासयोः श्रूयते – "यदाग्नेयोऽष्टाकपालोऽमावास्यायाम्, पौर्णमास्यां चाच्युतो भवति" इति। तत्र यथाऽग्निहोत्र शब्दः 'अग्नये होत्रमत्र' इत्यमुमर्थं निमित्तीकृत्य नामधेयम्। तथाऽऽग्नेयशब्दोऽग्नि संबंधं निमित्तीकृत्य कर्मनाम स्यादिति पूर्वपक्षः।

सिद्धान्तस्तु – मैवम्। नामत्वे देवताराहित्य प्रसङ्गात्। अग्निहोत्रे तु "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति" इत्यनेन वचनेन विहितो मन्त्रः प्रत्यक्षविहित इति मान्त्रवर्णिकी देवता लभ्यते। इह तु न तादृशो मन्त्रोऽस्ति। आग्नेयशब्दस्तु देवतां विधातुं शक्नोति। 'अग्निर्देवताऽस्य' इत्यस्मिन्नर्थे तद्धितस्योत्पन्नत्वात्। न च द्रव्यदेवतयोरुभयोर्गुणविधानाद्वाक्यभेद इति शङ्कनीयम्। कर्मणोऽप्राप्तत्वेन गुणद्वय विशिष्टस्य कर्मण एकेन वाक्येन विधानात्। तस्मात् - आग्नेय शब्देन देवतागुणो विधीयते। (जै. सू. 1-4-7)

'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
सत्यं पूषन् अपावृणु सत्यधर्माय विष्णवे ॥'

'योऽसावादित्ये पुरुषः सोऽसावह'मिति । विष्णवे इत्यस्य विष्णुं द्रष्टुमित्यर्थः । 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी । 'योऽसावादित्ये पुरुष' इत्यत्र पूर्वप्रकृतविष्णुमसाविति निर्दिश्य आदित्ये पुरुष इत्यादित्यान्तरवस्थितत्वेन सिद्धवन्निर्देशादित्यन्तर्वर्तित्वं भगवतः स्फुटतरं प्रतीयते। ततः शुद्धतत्वान्तरवस्थितमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वाधारं धामेत्यादिनाऽचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितमित्यस्य बहुशो अभ्यासेनास्या उपनिषदो भगवदेकान्तत्वम् । तथा तत्रैव । अत्र हि सौरसौम्याग्नेयसात्विकानि मण्डलानि उक्त्वा ततश्शुद्धसत्वान्तरवस्थितमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वाधारं धाम सत्यकाम सर्वज्ञत्वसंयुक्तं स्वतन्त्रचैतन्यं स्वे महिम्नितिष्ठमानं पश्यति । अत्रोदाहरन्ति —

'रविमध्येस्थितस्सोमस्तस्य मध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्वं सत्वमध्येस्थितोऽच्युतः ॥'

'शरीरप्रादेशमात्रमङ्गुष्ठमात्रमणोरप्यणुतरं ध्यातः परमतां गच्छती'त्युक्तम् । अपि च स्वर्णधर्मानुवाकोऽपि भगवत आदित्यान्तर्वर्तित्वे प्रमाणम् । अन्तरादित्ये मनसाचरन्तं अजस्रं ज्योतिर्नभसा सर्वेदेति' इति तत्प्रतिपाद्यस्यादित्यान्तर्वर्तित्वावगमात् तत्प्रतिपाद्यत्वं हि 'त्वष्टारं रूपाणि विकुर्वन्तं विपश्चित' मित्यत्र 'तस्य त्वष्टा विदधद्रूपमेती'त्युत्तर नारायणानुवाकार्थप्रत्यभिज्ञानात्तस्य लक्ष्मीपतित्वलिङ्गेन भगवदेकान्तत्वात् । 'इन्द्रं निचिक्युः परमे व्योम'न्निति 'तदक्षरे परमे व्योमन्नि'त्यस्यानुवाकवाक्यश्रुतपरमव्योमवर्तित्वस्य 'समुद्रे अन्तःकवयो विचक्षत' इति समुद्रशायित्वस्य च श्रवणात् 'यज्ञो वै विष्णु'रिति श्रुत्या 'यज्ञेन यज्ञमयजन्ते'त्यादि प्रयोगैश्च भगवत्परतयावागतस्य यज्ञशब्दस्य 'अमृतस्य प्राणं यज्ञमेत'मित्यत्र श्रवणाच्च भगवत एवेत्यवगम्यते ।

उपबृंहणान्यपि भगवत आदित्यान्तर्वर्तित्वं स्पष्टं प्रतिपादयन्तीति ।

**पुराणे** —

‘ वैष्णवोंशः परस्सूर्ये योन्तर्ज्योतिरवस्थितम् ।
अभिधायकमोङ्कारं तस्य तत्प्रेरकं परम् ॥’

इति तृतीये अंशे याज्ञवल्क्यादित्यस्तोत्रे —

‘ ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ।’

इति । **उदकाञ्जलिविधौ च** —

‘ **नमो विवस्वते ब्रह्म** भास्वते विष्णुतेजसे ।’

**इति । हरिवंशे** घण्टाकर्णस्तुतौ —

‘ सूर्यो मां रक्षतां विष्णो नमस्ते सूर्यतेजसे ।’

इति । सनकश्च आदित्यमण्डलान्तर्वर्तिनं विष्णुं स्मरति —

‘ आदित्यमण्डले ध्यायेत्परमानन्दमव्ययम् ।
विष्णुं चतुर्भुजं रक्तपङ्कजासनमध्यगम् ॥’

इति । **नारसिंहपुराणे** —

‘ अर्चन्ति मुनयोनित्यं जलेन रविमण्डले ।
आदित्यमण्डले नित्यं देवदेवमनामयम् ॥
शंखचक्रगदापाणिं ध्यात्वा विष्णुमुपासते ॥’
‘ ध्येयस्सदा सवितृमण्डले’त्यादि ।

**योगयाज्ञवल्क्ये** —

‘ ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ध्यात्वामृतमुपाश्नुते ॥
हृद्व्योम्नि तपतिह्येष बाह्ये सूर्यस्य चान्तरे ।
अग्नावधूमके ह्येष ज्योतिश्चित्ततरोह्ययम् ॥’

इति । **अत्रिस्मृतौ** —

'योसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्हृदिस्थितः ।
सोऽहं नारायणो देवः पुरुषो लोकभावनः ॥'

इति । **मोक्षधर्मे** —

'विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः सांख्यानिश्चितनिश्चयाः ॥'

इति : **नामनिर्वचनाध्यायवचनं च** प्रमाणम् ।

अत्र विद्येति लक्ष्मीरुच्यते ।

'सा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दते ॥'

इति कैलासयात्रागतवचनात् । त्रिधामेति समाख्यापि भगवत आदित्यान्तर्वर्तित्वे प्रमाणम् ।

'क्षीराब्धिर्मण्डलं भानोर्योगिनां हृदयानि च ।
त्रीणि धामानि मे सन्ति त्रिधामाहमतः स्मृतः ॥'

इति नामनिर्वचनात् । तस्मात् सोपबृंहणाभिरुदाहृत श्रुतिभिर्भगवानेवादित्यमण्डलान्तर्वर्तीति सिद्धम् ।

ननु **तैत्तिरीयोपनिषदि** 'आदित्यो वा एष एतन्मण्डल'मित्याद्यन्तरादित्यविद्या प्रकरणे 'सर्वो वै रुद्र' इत्यारभ्य 'नमो हिरण्यबाहवे हिरण्यपतये अम्बिकापतये उमापतये पशुपतये नमो नमः' इति मन्त्रोपनिषदि असौ यस्ताम्रोऽरुण इति प्रस्तुत्य 'असौ योवसर्पति नीलग्रीवो विलोहित' इति मन्त्रः कृच्छ्राङ्गादित्योपस्थापनमन्त्रेषु 'नमो रुद्राय पशुपतये महते देवाय त्र्यम्बकायैकचरायाधिपतये शर्वायेशानायोग्राय च वज्रिणे घृणिने कपर्दिने नमो नमः । सूर्यायादित्याय नमो नमः । नीलग्रीवाय शितिकण्ठाय नमो नमः । चन्द्र-

ललाटाय कृत्तिवाससे नमः' इत्यादिमन्त्राश्च उमासहायत्वनीलग्रीवत्वादिर्वि रूपमुपदिशन्ति । अतश्शिवस्यादित्यान्तर्वर्तित्वमभ्युपगन्तव्यमिति चेत्' ; न तावत्तैत्तिरीयकवाक्याच्छिवस्यान्तरादित्यविद्यावेद्यत्वसाधनं पुरुषशब्दस्य भग साधारणस्य 'य एषोन्तरादित्ये हिरण्मयः पुरुष' इति तत्रत्यवाक्यश्रवण भगवत एव तस्माच्छब्दादुपस्थितेः । **तथा चोत्पत्तिशिष्टगुणावरु गुणान्तरनिवेशायोगस्य 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन मित्यत्र सम्प्रतिपन्नत्वेन** (जै. सू. 7-3-8) तदवरुद्धायामुपासना शिवस्योपास्यत्वस्य वक्तुमशक्यत्वात् । **सर्वो वै रुद्र** इत्याद्यनुवाकस्य **'उपायोऽस्मिन्हरेःस्मृतो'** इत्यादिप्रमाणावगतभगवज्ज्ञाननिष्पत्तिहेतुभूतशिवस्तुति **परत्वेन प्रकृतसङ्गतत्वस्य** सम्भवात् । न च 'पुरुषोवैरुद्र' इत्यनेन 'य **एषोऽन्तरादित्ये** हिरण्मयः पुरुषः इत्यत्र वाक्ये प्रतिपाद्यमानः पुरुषो रुद्र एवेत्यवगम्यत इति वाच्यम् । तेन तस्य रुद्रत्वसाधनासम्भवात् । तथाहि — पुरुषो रुद्र इति भिन्नार्थकयोः पदयोः सामानाधिकरण्यासम्भवादन्यतरशब्द-वाच्यत्वविधिपरं इदं वाच्यम् । तत्र किं पुरुषशब्दार्थोद्देशेन रुद्र शब्द वाच्यत्व-

---

## प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम् —

चातुर्मास्येषु श्रूयते — "द्वयो; प्रणयन्ति । तस्मात् द्वाभ्यां यन्ति" इति । तत्र - सौमिकं यत्सधर्मकमग्निप्रणयनम्, तदेव ग्रहीतव्यम् । कुतः सोमस्य चातुर्मास्य प्रकृतित्वाभावेन तदीय प्रणयनस्यात्र चोदकाप्राप्तस्य विध्यर्ह-त्वात् । दर्शपूर्णमासगं त्वग्निप्रणयनं चोदक प्राप्तत्वादविधेयम् । तस्मात् — सौमिकस्य धर्मा अत्र प्रणयनशब्देनातिदिश्यन्ते इति पूर्वपक्षः ।

सिद्धान्तस्तु — नायं प्रणयन शब्दः सौमिकस्य प्रणयनकर्मणो-नामधेयम् । किन्तु निर्मन्थ्यबर्हिरादिशब्दवल्लौकिक एव । ततो न धर्मातिदेशः । यदि प्राकृत प्रणयनस्य प्राप्तत्वाद्विधिवैयर्थ्यम्, तदर्थवाद संबन्धाय तद्वाक्य-मस्तु । (जै. सू. 7-3-8)

विधिपरमिदं वाक्यं उत रुद्रशब्दार्थोद्देशेन पुरुषशब्दवाच्यत्वविधिपरम्। नाद्यः। पुरुषशब्दस्य।

'यद्वा पुरुषशब्दोऽयं रूढ्यावक्ति जनार्दनम्'

इत्यादिप्रमाणसहस्रेण भगवदसाधारणत्वेन तस्य रुद्रशब्दार्थत्व प्रतिपादनमुखेन 'सर्वो वै रुद्र' इत्यस्य भगवत्परत्वप्रतिपादनपर्यवसायितयात्वदिष्टासिद्धि-प्रसङ्गात्। न च हिरण्मयः पुरुष इति पुरुषशब्दश्चेतनसामान्यवाचक इति तत्र रुद्रत्वविधिपरमिदं वचनमिति वाच्यम्। चेतनसामान्यपरत्वाभावस्य प्रथम-परिच्छेदे प्रतिपादितत्वात्। पुरुषशब्दस्य चेतनसामान्यपरत्वप्रकरणे रुद्रशब्द-श्रवणादेव **छागपशुन्यायेन** (जै. सू. 6-8-9) रुद्ररूपतासिद्धया 'पुरुषो वै रुद्र' इत्यस्यानर्थक्यापाताच्च।

न द्वितीयः — पुरुषशब्दस्यानुवादद्योतकवैशब्दशिरस्कत्वविरोधापत्तेः। 'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षण'मित्युक्तरीत्या प्रथमोपात्तपुरुषशब्दार्थ-स्यैवोद्देश्यत्वस्य वक्तुं युक्तत्वाच्च। तस्मान्नेदं वाक्यं हिरण्मयः पुरुष इति वाक्य-प्रतिपाद्यस्य रुद्रत्व साधकं किं तु 'सर्वो वै रुद्र' इति वाक्यप्रतिपाद्य सार्वात्म्यस्योपपत्तिप्रतिपादकतया पुरुष एव रुद्रशब्दवाच्य इति रुद्रान्तर्यामिणो भगवतः सर्वात्मकत्वात् सर्वो वै रुद्र इत्युपपन्नम्। आपो वा इदं सर्वमित्यादि-

---

**छागपशुन्यायाधिकरणम्** —

ज्योतिष्टोमे श्रूयते — "अग्निषोमीयं पशुमालभेत" इति। तत्र विहिते पशौ विशेषाश्रवणाद्यः कोऽपि पशुरालब्धव्यः इति पूर्वपक्षः।

सिद्धान्तस्तु — मैवम्। छागस्य वपाया मेदसोऽनुब्रूहि इति मन्त्रे विशेषितत्वात्। तस्मात् - छाग एवाऽऽलब्धव्यः - शाखान्तरे विधावेव "अजोऽग्नीषोमीयः" इत्येवं विशेषः श्रूयते - इति चेत्। तर्हि कृत्वा-चिन्ताऽस्तु। (जै. सू. 6-8-9)

वदित्यभिप्रायेण पुरुषो वै रुद्र इति वाक्यं प्रवृत्तमिति वर्णयितुं युक्तम्। अतो न हिरण्मयस्य पुरुषस्य रुद्रत्वसिद्धिः।

**वेदान्तविजयकृतस्तु** – 'आदित्यो वा एषः' 'आदित्यो वै तेज इति द्वाभ्यामनुवाकाभ्यां सफलामन्तरादित्यविद्यामभिधाय तदन्ते इत्युपनिषदित्युपसंहारात्तद्विद्याप्रकरणविच्छेदान्न सर्वो वै रुद्र इत्यादिकमन्तरादित्यविद्यायाः शिवपरत्वं साधयितुं शक्नोति। न च हिरण्यबाहव इति बाहुग्रहणस्योपलक्षणतया हिरण्मयपुरुषप्रत्यभिज्ञा। हिरण्यबाहव इति बहुव्रीहिणा हिरण्यालङ्कृतबाहव इत्यर्थकत्वात्। अन्यथालक्षणाप्रसङ्गादित्याहुः।

**न चैवमपि,**

> 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
> ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः॥'

इति पूर्वानुवाक प्रतिपन्नपुरुष एव 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति पुरुषशब्देनोच्यत इति ततश्शिवपरत्वं साधयितुं शक्यमिति वाच्यम्। तथापि शिवपरत्वासाधनात्। न हि ऋतं सत्यमित्यादिकं शिवपरमित्यत्र किञ्चित्प्रमाणमस्ति। न च विरूपाक्षशब्दबलात् तत्परत्वम्। उपक्रमस्थ पुरुषशब्दविरोधात्। भगवल्लोचनयोस्सूर्यचन्द्रात्मकत्वेन शीतोष्णत्वेन वैरूप्याद्वि रूपाक्षशब्दस्य भगवत्युपपन्नत्वात्। पुल्लिङ्गस्यैव रुद्रपरत्वे नपुंसकलिङ्गस्यात्र रुद्रपरत्वासिद्धेश्च। न च कृष्णपिङ्गलत्वोक्तया उमासहायत्वं प्रतीयत इति रुद्रपरत्वं प्रतीयत इति रुद्रपरत्वं शङ्कितुं शक्यम्। लक्ष्मीशोभायुक्ततया भगवतः कृष्णपिङ्गलत्वोपपत्तेः। 'मयूरकण्ठच्छविशुद्धहेमे'ति शिल्पशास्त्रानुसारेण मयूरग्रीवासदृशवर्णतया शुद्धसुवर्णस्य हिरण्मयस्य भगवतः कृष्णपिङ्गलत्वोपपत्तेश्च।

> 'तन्मध्ये परमात्मानं वपुषा कृष्णपिङ्गलम्।
> नारायणं जगन्नाथं वासुदेवमनामयम्॥'

इति योगार्णववचनाद्भगवद्धर्मत्वाकातेश्च विश्वरूपशब्दस्य —

> ‘ विष्णुः कृष्णः केशवो मुञ्जिकेशः
> श्रीवत्साङ्कः श्रीपतिः पीतवासाः ।
> विष्वक्सेनो विश्वरूपो मुरारिः
> शौरिः शार्ङ्गी पद्मनाभोमुकुन्दः ॥ ’

इति हलायुधनिघंटुनुसारेण भगवत्परत्वाच्च ऋतं सत्यमित्यादेर्भगवत्परत्वमिति तदनुसारेऽप्युत्तरानुवाकस्य भगवत्परत्वमेव । तस्मान्न तैत्तिरीयोपनिषद-वलम्बनेन शिवस्यान्तरादित्यविद्यावेद्यत्वं सिध्यति । उपबृंहिताचेयमुपनिषत् भगवत्परत्वेन श्रीविष्णुपुराणे —

> ‘ सर्वा शक्तिः पराविष्णोः ऋग्यजुस्सामसंज्ञिता ।
> सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति यत् ॥
> सैव विष्णुःस्थितस्सत्यां जगतः पालनोद्यतः ।
> ऋग्यजुस्समभूतोऽन्तः सवितुर्द्विज तिष्ठति ॥
> मासि मासि रविर्योयस्तत्र तत्र हि सापरा ।
> त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै ॥ ’

इति । अत्र ‘ सैषात्रय्येव विद्या तपती’ति वाक्यस्यैव किञ्चिद्विकृतस्य निबन्धनादृग्यजुस्साममयत्ववर्णनाच्च तदुपबृंहणत्वं स्फुटम् । अत इयमुपनिषत् भगवत एवान्तरादित्यविद्यावेद्यत्वमवगमयतीति न शिवस्य तथात्वमवगन्तुं शक्यम् । नाप्यसौ योऽवसर्पतीति वाक्याद्रुद्रस्य अष्टमूर्तित्वेन सूर्याभिमानि-देवतात्वेन तदादायाभेदेन व्यपदेशोपपत्तेः । एतेन ‘ नमो रुद्राय पशुपतये महते देवाये’त्यपि व्याख्यातम् ।

यत्तु ‘ यश्शुक्र इव सूर्यो हिरण्यमिव रोचत ’ इति रुद्रसूक्तवाक्यं तत्र प्रमाणमिति , तन्न । शुभ्रत्वगुणविशिष्टसूर्यवद्रोचत इत्यर्थवर्णनसम्भवेन सूर्यान्तर्वर्तित्वासाधकत्वात् । तस्माद्देवतान्तरस्यान्तरादित्यविद्यावेद्यत्वसाधका-

नन्यथासिद्धप्रमाणाभावात्। भगवत एव पूर्वोक्तप्रमाणबलादन्तरादित्यविद्या-वेद्यत्वं सिध्यतीति निरवद्यम्। ननु।

'आदित्यमण्डलासीनं रुक्माभं पुरुषं परम्।
ध्यायञ्जपेत्तदित्येतां निष्कामो मुच्यते द्विजः॥
आदित्यमण्डलान्तस्स्थं परं ब्रह्माधिदैवतम्।
छन्दो निचृत् स्याद्गायत्री मया दृष्टा सनातनी॥'

इत्यादिस्मृतिवचनैरादित्यान्तर्वर्ति परंब्रह्म गायत्री प्रतिपाद्यमिति तावदवसीयते। गायत्रीप्रतिपाद्यश्च शिव एव। भर्गशब्दस्य शिववाचकस्य तत्र श्रवणात् —

'हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः'

इति निघंटुनुसारेण तस्य शिवे रूढत्वात्। सवितुर्वरेण्यमिति सवितुर्वरणीयत्व-प्रतिपादनादपि तस्य तेजः प्रदतया समाश्रयणीये तदन्तर्वर्तिनि तात्पर्यमस्याः सिध्यति। न च सवितुर्भर्ग इत्यन्वयोऽस्तु। तथा सति सवितृशब्दस्य जगत्प्रसवितरि ब्रह्मणि वृत्त्या भर्ग इत्यस्य भञ्जो आमर्दने इति धातोरसुन् प्रत्ययेन निष्पन्नस्य पापभञ्जके तस्मिन्नेव ब्रह्मरूपे ज्योतिर्वृत्त्या राहोः शिर इति वदुपचारेण सवितुर्भर्ग इत्यस्य ब्रह्मैवार्थःस्यादिति वाच्यम्। सवितृशब्दस्य संनिहितं प्रति सम्बन्ध्यपेक्षणं तदन्तरं तत्सवितुर्वरेण्यं तां सवितुर्वरेण्यस्य चित्रामित्यादिमन्त्रान्तरेषु क्लृप्तसत्वान्वयं वरेण्यशब्दं विहायान्यान्वयासम्भवा-दुदाहृतस्मृतिवचनजातसिद्धस्यादित्यान्तर्वृत्तिपरं ब्रह्म गायत्र्यादैवमित्यस्यार्थस्य प्रसिद्धये सवितृशब्दस्य रविपरत्वावश्यम्भावाच्च। मैत्रायणीयानां गायत्र्यर्थ-निरूपणप्रकरणगतेन 'यदेष रुद्रो भर्गाख्यो ब्रह्मवादिन' इति वाक्येन तलवकारिणां द्वितीयः पादो भर्गमय इति वाक्येन,

'आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः'

इति योगयाज्ञवल्क्यस्मृतिवचनेन तद्भर्गाख्यं किमपि परमं ब्रह्म धाम प्रपद्ये इति साम्बस्तोत्रप्रयोगेण चाकारान्ततयावगतस्य तत एव रूढ्या शिवपरस्य

भर्गशब्दस्य सकारान्तत्व ज्योतिःपरत्वयोरयोगाच्च । न चाकारान्तत्वे धीमहीत्यनेन कर्माकाङ्क्षेणान्वयो न स्यादिति वाच्यम् । छन्दसिविभक्तयादिव्यत्ययस्मरणेण 'सुपां सुलुगिति' अत स्वादेशेन वा भर्ग इत्यस्य कर्मार्थतोपपत्तेः प्रधान-प्रकृत्यंशमुख्यार्थलाभात् प्रथमाविभक्तिव्यत्ययादिकल्पनोपपत्तेः । न च तथा सति तदिति नपुंसकनिर्देशानुपपत्तिः । नपुंसकलिङ्गस्य तत्पदस्य ब्रह्मनामतया तदुपपत्तेः । तदिति वा एतस्य महतो भूतस्य नाम भवतीत्यैतरेयोपनिषदि—

'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधःस्मृतः'

इति गीतासु च तस्य तन्नामत्वप्रसिद्धेः । न च तथा सत्युत्तरार्धगतं यत्पदा-काङ्क्षापूरणाय तत्पदान्तरमध्याहरणीयमिति वाच्यम् । उत्तरवाक्यगतयत्पदस्य तत्पदनिरपेक्षतायाः 'वीरप्रसूर्जगति भार्गवरेणुकैव या त्वां त्रिलोकतिलकं सुतमभ्यसूत' इत्यादिप्रयोगेषु प्रसिद्धत्वात् ।

यदि भर्ग इत्यस्य सकारान्तत्वमिष्यते तथापि च्छान्दसो वर्णविकार इत्यकारान्तरूढ्या शिववाचित्वमेव तस्य सिध्यति न तु सान्तयोगेन ज्योतिर्वाचित्वम् । रूढिशब्दत्वकल्पनसम्भवे यौगिकशब्दत्वाभ्युपगमायोगात् । किञ्चिद्वर्णविकारेऽपि बहुसारूप्येलोकवेदयोः शब्दार्थानन्यत्वस्य **लोकवेदाधि-करणसिद्धत्वात्** (जै. सू. 1-3-10) 'गूढोत्मा न प्रकाशते' 'सर्वं

---

**लोकवेदाधिकरणम्** —

वैदिकौ पदपदार्थौ लौकिकाभ्यां पदपदार्थाभ्यामन्यौ । कुतः । रूपभेदात् । पदे तावद्रूपभेदोदृश्यते । आत्मशब्द आकारादित्वेन लोके नियतः । वेदे तु क्वचिदाकाररहितः पठ्यते - "प्रयतं पुरुषात्मना" इति 'ब्राह्मणाः' इति लोके, वेदे त्वन्यथा पठ्यते - "ब्राह्मणासः पितरः सोम्यासः" इति । अर्थभेदोऽपि स्फुटः । "उत्ताना वै देवगवा वहन्ति" इति श्रूयते । मनुष्यगवास्त्वत्राञ्चो वहन्ति । वेदे वनस्पतिर्हिरण्यपर्णः । तथा

प्रोक्तं त्रिविधं ब्रह्ममेतत्' 'चक्षोस्सूर्यो अजायत' इत्यादिष्वात्मादिशब्दानामा-काराभावादविकारे सत्यप्यात्मादिशब्दरूपत्वस्य प्रसिद्धार्थपरत्वस्यचाङ्गीकाराच्च। एवं च देवस्य द्युतिमतः सवितुरादित्यस्य वरेण्यं तेजः प्रदत्वेन समाश्रयणीयं भर्गं शिवं ध्यायामः य आदित्यान्तर्वर्ती भर्गोनोऽस्माकं धियः प्रचोदयात् अन्तर्यामित्वेन प्रेरयतीति मन्त्रयोजना। ननु —

'योदेवस्सवितास्माकं धियोधर्मादिगोचराः।
प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे॥'

इति स्मृतौ यदिति विशेषणेन सान्तत्वं भर्ग इत्यस्य प्रख्याप्य तस्य सवितुरित्यनेनान्वयं धीप्रेरकत्वस्य सवितृविशेषणत्वं च समाश्रित्य विधान्तरेण

---

च श्रूयते - देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्" इति तस्मात् लोक वेदयोः पदपदार्थान्यौ इति पूर्वः पक्षः।

सिद्धान्तस्तु — य एव लौकिकाः पदार्थाः, त एव वैदिकाः। तथाहि - वर्णानां तावन्नित्यत्वं प्रथमपादे साधितम्। यथा प्रयोक्तॄणां पुरुषाणां भेदेऽप्येकैकस्य पुरुषस्य बहुकृत्व उच्चारणभेदेऽपि 'त एवामी वर्णाः' इति प्रत्यभिज्ञानाद्वर्णैक्यम्। तथा 'यानि लोके गवादिपदानि, तान्येव वेदे-ऽधीयमानानि' इत्यबाधित प्रत्यभिज्ञया पदैकत्वमभ्युपेयम्। 'त्मना देवासः' इत्यादिपदभेदस्तु काचित्कः। नैतावता बहुतरप्रत्यभिज्ञात्वगतं पदैक्यमपोढुं शक्यम्। अन्यथा 'सोयं देवदत्तः' इति प्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदमात्रेणापोद्येत। पदैकत्वे चार्थैकत्वमवश्यंभावि। अन्यथा वेदे पृथग्व्युत्पत्त्यभावादबोधकत्वं प्रसज्येत। एतदेवाभिप्रेत्योक्तम् - "लोकावगत-सामर्थ्यः शब्दो वेदेऽपि बोधकः" इति। स्वरुयूपाहवनीयादिशब्दानां तदर्थानां चालौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहाराद्व्युत्पत्तिः संभवति। उत्तानवहनादिकं त्वर्थवादः। अस्तु वा तथावहनम्' तथाऽप्युत्तानादिशब्दास्तदर्थाश्च लोकसिद्धा एव। तस्माद्य एव लौकिकाः पदपदार्थास्त एव वैदिकाः। (जै. सू. 1-3-10)

कल्पना दर्शिता, सत्यम्। पूर्वोदाहृतसवितृवरेण्य शब्दान्वयोपपादकन्याय-विरुद्धत्वान्नातीव श्रद्धेया सा। धियोयोन इत्यस्यादित्यपरत्वे च प्रकाशदानेन चाक्षुषज्ञानजनकतामात्रं तदर्थःस्यात्। असङ्कुचितधीप्रेरकत्वं तदर्थो न स्यात्। तदेव हि तदर्थत्वेन वाच्यम्। असङ्कोचलाभात्। न च न्याय-विरोधमुपन्यस्य स्मृतिवचनं कथमुपेक्ष्यत इति वाच्यम्। विध्यन्तरेणापि मन्त्रयोजनाप्रदर्शकानां स्मृतिवचनानां दर्शनेन परस्परपराहतेषु तेषु न्यायस्यानु-गेध्यत्वात्। दृश्यन्ते हि,

'देवस्य सवितुर्मध्ये यो भर्गोनोधियःक्रमात्।
प्रचोदयात्तं वरेण्यं धीमहीत्यन्वयक्रमः॥'

इत्यादीन्यपि स्मृतिवचनानि श्रुतिविरोधाच्च तदुपेक्षणीयमुदाहृतानि हि भर्ग-शब्दस्याकारान्तत्वे सवितृवरेण्यशब्दयोः परस्परान्वये च गमकानि श्रुति-वचनानि। तस्माद्गायत्रीप्रतिपाद्यश्शिव एव। ननु आश्वमेधिके पर्वणि —

'तन्मण्डलस्थं मांध्यायेत्तेजोमूर्तिं चतुर्भुजम्।
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि॥
गायत्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम्॥'

इति कृष्णवचनेन विष्णोरादित्यान्तर्वर्तित्वं गायत्र्युपास्यत्वं च प्रकाशितम्। मैवं सन्ध्यासु विष्णुभक्तैरादित्यमण्डले तन्मूर्तिर्ध्यातव्येत्येतावत्परं तद्वचनजातं न तु विष्णोरादित्यान्तर्यामित्वगायत्री प्रतिपाद्यत्वपर्यन्तस्थापनक्षमम्। श्रुतिविरुद्धेऽर्थे तस्य तात्पर्यायोगात्।

'ततष्षडक्षरं मन्त्रं षट्कृत्वः परिवर्तयेत्'

इति पूर्वश्लोके षडक्षरमन्त्रजपविधानदर्शनेन तदनन्तरमादित्यमण्डले तदर्थध्यान-विधेरौचित्याच्च तत्तद्देवतामन्त्रजपनिष्ठानां सर्वेषामपि हि तत्तद्देवतामन्त्रजपानन्तरं तत्तद्देवतापूजानन्तरं चादित्यमण्डले तत्तद्देवताध्यानविधिरुपलभ्यते। अत एवाग्नेयपुराणे विष्णुपूजां विधाय तदवसाने 'ध्येयस्सदे'त्यादिश्लोकः

पठितः । किं चाश्वमेधिके वैष्णवधर्मशास्त्रात्मकः कृष्णयुधिष्ठिरसंवादो
वैष्णवागमधर्मविधानार्थं प्रवृत्तो न तु वैदिकधर्मविधानार्थम् ।

'भगवन् वैष्णवाधर्माः किं फलाः किंपरायणाः ।
कथंत्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते ॥
कथं वैखानसा ब्रूयुः कथं वा पाञ्चरात्रिकाः ।
एवमेतत् पुरावृत्तं वैष्णवं धर्मशासनम् ॥'

इति । तत्रादिमध्यान्तवचनोपलम्भात् उपक्रमे च 'श्रुतामे मानवा धर्मा
इति वैदिकधर्मेभ्यः श्रुतेभ्यो व्यावर्त्य —

'युष्मदीयान् परान् धर्मान् पुण्यान् कथयमेऽच्युत'

इति तान्त्रिकधर्माणां प्रश्नविषयत्वेनोपक्षिप्तत्वात् मानवधर्मा इति हि वैदिकध
एवोच्यन्ते । 'यद्वै किं च मनुरवदत्तद्भेषज'मिति श्रुतेः । एवं च तन्त्रनिष्ठै
गायत्र्या विष्णुचिन्तने कर्तव्येऽपि न तद्वैदिकैः कार्यम् ।

'कश्चित्तन्त्रानुरोधेन धर्मान् पौराणिका अपि ।
वदन्ति तादृशोंऽशस्तु ग्राह्यस्तान्त्रबलं विना ॥
यत्तु तन्त्रानुसारेण कथितं तत्परित्यजेत् ।
धर्मशास्त्रे पुराणे च यत्नतो वैदिकोजनः ॥'

इति पौराणिकैरेव तथा व्यवस्थायाः प्रदर्शितत्वात् । तस्माच्छिव एव गाय
प्रतिपाद्य इति ।

अत्रोच्यते — न तावद्गायत्र्या रुद्रपरत्वे भर्गपदवत्त्वरूपं लिङ्गं प्रमा
धीमहीति क्रियापेक्षितकर्मसमर्पकेण द्वितीयान्तसकारान्तशब्दत्वावसायेन रुद
वाचक भर्गशब्दभिन्नत्वावसायेन तद्वत्त्वस्य प्रमाणयितुमशक्यत्वात् । न
व्यत्ययेन प्रथमायाः कर्मत्वपरत्वमिति वक्तुं शक्यम् । लक्षणाप्रसङ्गात् ।
च मुख्यप्रकृत्यर्थरूढ्यनुग्रहाय विभक्तौ लक्षणाङ्गीक्रियते । तेजः परत्वे योग

वाच्यत्वेन रूढिभङ्गप्रसङ्गादिति वाच्यम् । 'भर्गसीरेत आलोका' विति वैजयन्त्यां तेजस्यप्यनुशासनेन भर्गशब्दस्य तत्र रूढतया विभक्तिव्यत्यय-कल्पनाया अप्रसरात् । न चच्छन्दसि व्यत्ययानुशासनात्तदङ्गीकारेण रुद्र परत्वं वक्तुं शक्यमिति वाच्यम् । गत्यन्तरसत्त्वे क्लिष्टगत्याश्रयणायोगात् । छन्दस्यपि विभक्तिव्यत्ययकल्पनस्य क्लिष्टगतित्वात् । अन्यथा प्रास्मा अग्निं भरतेत्यध्रिगुप्रैषस्य पुरुषधर्माणां (जै. सू. 9-4-6) सामानविध्यपक्षे मेध्यानिवृत्त्यङ्गीकारस्यानुपपन्नत्वप्रसङ्गात् लिङ्गव्यत्ययेन निर्वाहसम्भवात् । एतेन 'सुपांसुलुक्' इत्यादिना छान्दसत्वादेशाश्रयणेन निर्वाहोऽपि परास्तः । छान्दसत्वकल्पनस्य क्लिष्टगतित्वात् । न च किञ्चिद्वर्णविकारेऽपि लोकवेदयो-श्शब्दार्थानन्यत्वस्य लोकवेदाधिकरणसिद्धत्वात् सान्तस्यापि रुद्रोपस्थापकत्व-मिति युक्तम् । लोकवेदाधिकरणे "देवास" 'त्मने'त्यादौ न्यूनातिरेककृतभेदे

---

## अध्रिगुप्रैषेश्येनादिशब्दानां कात्स्न्र्यवचनाधिकरणम् –

अध्रिगुप्रैषवचन एतदाम्नायते – "श्येनमस्य वक्षः कृणुतात्" इति । तत्र - यथा अमीपिष्टपिण्डाः सिंहाः क्रियन्ताम्' इत्युक्ते प्रसिद्ध सिंह संनिधानात्पिष्ट पिण्डेषु सिंहसादृश्यं कर्तव्यतया प्रतीयते । तथैव 'अस्य पशोर्वक्षः श्येनं कृणुतात्' इत्यत्र श्येनसादृश्यं वक्षसि कर्तव्यतया प्रतीयते । ततो वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरण चञ्च्वादिकं संपाद्य श्येन संस्थानं कर्तव्यम् इति पूर्वपक्षः ।

सिद्धान्तस्तु – वक्षसि श्येनसादृश्यं स्वत एव पूर्वमस्ति । ततो 'यथा तन्न नश्यति तथा साकल्येनोद्धरणीयम्' इति विवक्षया श्येनशब्दः प्रयुज्यते । तथा सति हविरविकलं भवति ।

अंसादिष्वनेन न्यायेन साकल्य विवक्षया तत्तद्रूपकोक्तिर्द्रष्टव्या । एतदेवाभिप्रेत्य श्रूयते - "गात्रं गात्रमस्यानूनं कृणुतात्" इति । (जै. सू. 9-4-6)

सत्यपि तद्रूपस्यार्थान्तरानक्रमात् । किञ्चिद्रूपभेदे सत्यपि लौकिकाभेदप्रत्यभिज्ञानाद्वेवात्मशब्दैक्याङ्गीकारेऽपि लोकत एव न्यूनातिरेकवशात्प्रतीयमानता यत्रार्थान्तरस्य, तत्रापि शब्दैक्याङ्गीकारस्य तदधिकरणन्यायाविषयतया तेजोरूपार्थान्तरस्य सकारान्तस्थले रूढिवशादुन्मिषितप्रतीतिकत्वेन तन्न्यायेन रुद्रोपस्थापकत्वस्य वक्तुमशक्यत्वात् । न च रूढिरसिद्धेति वाच्यम् । 'भर्गसीरेतु आलोका'विति कोशबलात्तत्सिद्धेः । न चाकारान्तभर्गशब्दत्वेऽपि यो भर्गो नोधियः प्रचोदयादित्युत्तरपादान्वयेन छान्दसत्वादिकल्पनं विनैव निर्वाहः कर्तुं शक्य इति वाच्यम् । व्यवहितान्वयकल्पनाप्रसङ्गात् । न चाव्यवहितान्वयसम्भवे व्यवहितान्वयो युक्तः । अन्यथा मूलतः शाखां परिवास्योपवेषं (जै. सू. 4-3-2) करोतीत्यत्रापि मूलत उपवेषं करोतीत्यन्वयाङ्गीकारप्रसङ्गात् । वरेण्यशब्दस्य विशेष्याकाङ्क्षाशान्त्यभावप्रसङ्गेन तच्छन्दे लिङ्ग-

---

## नैमित्तिकानामनित्यार्थत्वाधिकरणम् –

"अपः प्रणयति" इति प्रकृत्य श्रूयते - मृण्मयेन प्रतिष्ठाकामस्य प्रणयेत्" इति । तत्र - अपां प्रणयनस्य नित्यप्रयोगेऽपि मृण्मयपात्रमेव साधनम् । कुतः - नित्येऽपि पात्रस्याऽऽकाङ्क्षितत्वात् । न च - लोकसिद्धं किञ्चित्पात्रमुपादीयते - इति वाच्यम् श्रौते कर्मण्यत्यन्तगश्रुताच्छ्रुतस्य संनिहितत्वात् इति पूर्वपक्षः ।

सिद्धान्तस्तु - कामार्थं मृण्मयमाम्नातम् । तच्च सति कामे योग्यम् । न हि पाक्षिकं कामं निमित्तीकृत्य प्रवृत्तं नित्यस्य योग्यं भवति । पात्राकाङ्क्षा तु सामान्यतो विहितेन निवर्तते । "अपः प्रणयति" इति हि पात्रविशेषमनुपन्यस्य विहितम् । तच्चान्यथाऽनुपपन्नं तत्पात्रं किञ्चित्सामान्येन कल्पयति । तस्मान्नित्यप्रयोगे तत्काम्यं मृण्मयं नाप्नोति, किन्त्वितरत्पात्रं यत्किञ्चिदुपादेयम् । "चमसेनापः प्रणयेत्" इति नित्ये पात्रं विधीयते - इति चेत् । तर्हि कृत्वा चिन्ताऽस्तु । (जै. सू. 4-3-2)

व्यत्ययस्य वातमित्यध्याहारस्य वा प्रसङ्गाच्च । न च तच्छब्दस्य ब्रह्मवाच-कत्वाङ्गीकारेण वरेण्यशब्दाकाङ्क्षा पूरणमशक्यमिति वाच्यम् ।

'भर्गः प्रचोदयति योधियमस्मदीयाम् ।
तं धीमहीति घटनाविनिमाय लिङ्गम् ॥'

इति त्वदभियुक्तवचनविरोधप्रसङ्गात् । तथा सति य इत्यस्य सवितृपरामर्शकत्वे-नाप्युपपन्नत्वेन रुद्रस्य ध्यानकर्मत्वे प्रमाणाभावेन गायत्र्यर्थत्वहानिप्रसङ्गाच्च तच्छब्दस्य सर्वनामत्व एव हि तदैकार्थ्याय यच्छब्दस्य सवितृव्यतिरिक्तपरत्व-मभ्युपेयम् । न च प्रधानपरामर्शित्वसिद्धये सवित्रतिरिक्तपरत्वमभ्युपेयमिति वाच्यम् । सावित्रीति समाख्यायाः किञ्चिदनुग्रहलिप्सया सवितृपरामर्शकत्वस्यैव युक्तत्वात् न च सवितृपरामर्शकत्वे भर्ग इति व्यर्थमिति वाच्यम् । सवितृ-रुद्राभेदबोधनद्वारा ध्यानकर्मस्तुत्यर्थत्वात् । न च तस्या एष द्वितीयःपादो भर्गमय इति श्रुतिबलादकारान्तत्वावसायाच्छान्दसत्वादिकल्पनं युक्तमिति वाच्यम् । तस्या भर्गश्शब्दैकदेशानुवादकत्वेन चरितार्थत्वेनाकारान्तत्वाभावात् । न हीयं श्रुतिर्गायत्रीस्थोऽकारान्तो भर्गशब्द इत्याहस्य प्रतिपादयति । येन तन्निर्धारणं स्यात् । किं तु निर्देशबलात्कल्पनीयं कल्पनं च यथा 'आदित्यानेव स्वेन भागधेयेनोपधावती'त्यनेन 'आदित्यं चरुं निर्वपे'दित्यत्र देवताप्रतिपादक आदित्यशब्दः नादितिशब्द इति कल्पनं तथा न स्वरसतः सम्भवतीति च्छान्द-सत्वादिकल्पनया निर्वाह्यम् । तथा चावश्यके क्वचित् क्लेशाश्रयणे तस्या एष द्वितीयः पादो भर्गमय इत्यत्रैव तदाश्रयणं युक्तम् । तस्य भर्गशब्द प्राथम्योक्ति-मुखेन पादोपस्थित्युपलक्षणत्वेन तत्र भर्गशब्दस्य लक्षणया शब्दपरत्वेनैकदेशस्य सकारान्तशब्दलक्षकत्वस्य वक्तुं युक्तत्वात् सकारान्तशब्दस्य तत्पादप्राथम्येऽपि तदेकदेशाकारान्तशब्दप्राथम्यस्यापि सत्त्वेन भर्गमयशब्दस्य क्लेशं विनैव निर्वाहाच्च । न च रुद्रप्रचुरत्वोक्तिमुखेन पादोपस्थापकत्वं गायत्र्याः कृत्स्नाया अस्ति । त्वत्पक्षे तत्प्रचुरत्वेन द्वितीयपादस्यैव तत्प्रचुरत्वासिद्धेः । तस्मान्न तलवकारश्रुतिबलादकारान्तशब्दत्वाध्यवसानम् ।

नन्वथापि मैत्रायणीयानां गायत्र्यर्थनिरूपणप्रकरणगतेन यदेष रुद्रो भर्गाख्य इति वाक्येन रुद्रपरत्वोक्त्या निर्देशबलाच्चाकारान्तत्वं सिध्यतीति चेन्न। मैत्रायणीयश्रुतावेव,

'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे॥'

'योऽसावादित्ये पुरुषः सोसावह'मित्यनन्तरं यदादित्यस्य मध्ये-ऽक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्ग एतत्सत्यधर्म' इत्यादित्यान्तर्वर्तित्वेन प्रतिपन्ने भर्गवति प्रयुक्तत्वेन रुद्रवाचकाकारान्तशब्दत्वाध्यवसानायोक्तत्वात् हिरण्मयेन पात्रेणेत्यत्र हि सूर्यनिष्ठशुद्धसत्वान्तरवस्थविष्णुदर्शनप्रतिबन्धकनिवृत्ति प्रार्थनं प्रतिपाद्यते योऽसावादित्ये पुरुषः सोसावहमित्युत्तरवाक्यानुसारात् —

'रविमध्ये स्थितस्सोमस्तस्य मध्ये हुताशनः।
तेजोमध्येस्थितं सत्त्वं सत्वमध्येस्थितोऽच्युतः॥'

इत्युक्तत्वाच्च। स एव च यदादित्यस्य मध्येऽक्षिण्यग्नौ चैतदित्यत्र प्रतिपाद्यत इत्येतद्भर्ग इति प्रयोगो भगवद्विषयकः। न च भगवद्विषयकत्वेऽपि रुद्रान्तर्या-मित्वप्रतिपादनोपपन्नत्वान्न तेजोवाचकत्वं साधयितुं शक्नोतीति वाच्यम्। न भसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतत् यदादित्यस्य मध्ये भगवत एव तत्स-वितुर्वरेण्यमित्युत्तरत्र गायत्रीस्थस्य वरेण्यशब्दस्यैतच्छब्दावस्थित तेजोविशेषणत्व-दर्शनेन एतद्ब्रह्म एतदमृतमित्यत्र तत्तद्देवतात्मत्वोक्त्यदर्शनेन च तेजोवाचकत्वा-वश्यम्भावात्।

न चास्यादित्यान्तर्वर्ति प्रतिपादकत्वेऽपि गायत्र्यर्थनिरूपणपरत्वानवश्यम्भा वात् गायत्रीस्थभर्गशब्दस्य सकारान्तत्वतेजोवाचकत्वयोर्न प्रमाणयितुं शक्यमिति वाच्यम्। गायत्र्या आदित्यान्तर्वृत्तिपरत्वस्य बहुप्रमाणसिद्धत्वेन तथात्वेन प्रतिपन्नस्य भगवतो गायत्रीप्रतिपाद्यार्थत्वकथने सति गायत्र्या अप्यर्थात्तत्परत्वस्य कथितत्वात्तद्व्याख्यानत्वसम्भवात्। यच्छन्दस्तदेतदोमिति यदस्याग्रं तच्छान्तम-

शब्दमुभयमानन्दतृप्तं सुस्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञकं सर्वाधारं धामेत्यारभ्य —

'योऽसौ परावरो देव ओङ्कारो नामनामतः ।'

इत्यन्तेन प्रणवं व्याख्याय हिरण्मयेन पात्रेणेत्यादिकं प्रवृत्तमिति गायत्रीपदप्रत्यभिज्ञानेन गायत्रीव्याख्यानत्वावसायाच्च ।

न च गायत्र्यर्थनिरूपणत्वानवश्यम्भावेऽपि विष्णोरादित्यान्तर्वर्तित्वप्रतिपादनस्य गायत्र्या अन्यपरत्वविरोधित्वाभावे च भर्गाख्यत्वप्रतिपादकश्रुतिविरोधादियं श्रुतिः कथं विष्णोरादित्यान्तर्वर्तित्वं गमयितुमीष्ट इति वाच्यम् । अत्र हि सौरसौम्याग्नेयमण्डलानि भित्त्वा ततश्शुद्धसत्वान्तरवस्थमचलममृतं ध्रुवं विष्णुसंज्ञं सर्वाधारं धाम सत्यकामसर्वज्ञत्व संयुक्तं स्वतन्त्रचैतन्यं स्वे महिम्नीति तिष्ठमानं पश्यतीत्यादित्यान्तर्वृत्तित्वं भगवतः प्रतिपाद्य स्वोक्तार्थदृढिम्ने अत्रोदाहरन्ति —

'रविमध्ये स्थितस्सोमस्तस्य मध्येहुताशनः ।
तेजोमध्येस्थितं सत्वं सत्वमध्येस्थितोऽच्युतः ॥'

इति श्रुत्यन्तरमुपादाय यच्छन्दस्तदेतदोमिति यदस्याग्रं तच्छान्तमशब्दमुभयमानन्दतृप्तं सुस्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञं सर्वाधारं धामेत्यावर्त्य-हिरण्मयेन पात्रेणेत्यादिना भगवतो गायत्रीस्थपदार्थत्वकथनपूर्वकमादित्यान्तर्वृत्तित्वं कथयतीति ध्रुवमचलमित्याद्यभ्यासेन श्रुत्यन्तरसंवादप्रदर्शनेन चास्याः श्रुतेस्तात्पर्यातिशयावगमात् भर्गाख्यमित्यस्य पूर्वत्रासिद्धत्वाभावकल्पनयोपपन्नत्वाच्चदेष रुद्र इत्यस्य गौण्या लक्षणया वा भगवत्परत्वेन नेतुं शक्यत्वाच्च । 'आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ।' इति योगयाज्ञवल्क्यवचनमपि शिवपरत्वसाधकम् ॥

'ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ध्यात्वामृतमुपाश्नुते ॥'

इति तत्रत्यवचनान्तरेण भगवत्परत्वावसायात् । तत् भर्गाख्यं किमपीत्यादिवचनमपि भर्गश्शब्दाभिधेयं तेजः प्रपद्ये इत्यर्थकत्वात्तेजः परत्वानुकूलमेव । न च सकारान्तशब्दत्वाङ्गीकारेतस्य तेजोवाचकत्वेन संबन्ध्याकाङ्क्षितत्वेन तदनुसारात् सवितुरित्यनेन नान्वयस्य वाच्यत्वेन तदक्षरं तत्सवितुर्वरेण्यं 'तां सवितुर्वरेण्यस्य चित्रामिति वरेण्यशब्दान्वयप्रतिपादकश्रुतिविरोधप्रसङ्ग इति वाच्यम् । गायत्र्यां विशेष्योपादाने वरेण्यशब्दस्य वरणीयत्वमात्रपरत्वेऽपि तदक्षरं तत्सवितुर्वरेण्यमित्यत्र भर्गशब्दानुपादानेन वरणीयत्वविशिष्टभर्गशब्दार्थपर्यन्ततया वरेण्यशब्दस्य तत्संबन्धित्वश्रवणस्य गायत्र्यां सवितृशब्देन भर्गश्शब्दान्वयबाधनासमर्थत्वात् । न च (भर्ग) शब्दस्य तेजोवाचकत्वमङ्गीकृत्य विष्णुपरत्वाङ्गीकारे सवितृशब्दस्य जगत्सवितृपरत्वं वाच्यम् । अन्यथा सूर्यधर्मत्वापातात् तथा - विश्वामित्रऋषिच्छन्दो गायत्रीदेवतारविरिति स्मृतिविरोधप्रसङ्ग इति वाच्यम् । त्वत्पक्षेऽपि सवितृशब्दस्य वरेण्यमित्यनेनान्वयेन भर्गशब्दार्थस्यैव देवतात्वेन सूर्यदेवताकत्वस्मृतिविरोधस्यानिवारणात् । न च ह्यन्तर्यामिणो देवतात्वप्रतिपादकं तद्वचनजातमिति वाच्यं तुल्यत्वात् । सवितृशब्दस्य तदन्तर्यामिपरत्वसंभवात् ।

वस्तुतस्तु सवितृशब्दस्सूर्यपर एव, भर्गश्शब्दश्च तेजस्त्वेन निमित्तेन भगवन्तमभिधत्ते । न चैवं तस्य ध्येयत्वात् कथं गायत्र्यास्सूर्यदेवताकत्वमिति वाच्यम् । सूर्यसंबन्धितेजस्त्वेनैव ध्येयत्वप्रतिपादनेन सूर्यदेवताकत्वाविरोधात् । न चैवं भगवतस्सूर्यधर्मत्वप्रसङ्गः । इष्टत्वात् । न च तावता स्वातन्त्र्यहानिः निरङ्कुशस्वतन्त्रस्य भगवतः पार्थसारथ्येन्द्रानुजत्वादिपरिग्रहवदुपपत्तेः । एवं सति सावित्रीं गायत्रीं त्रिरन्वाहेति तद्धितश्रुतिरुपपद्यते । तथा च तेजोवाचकस्सकारान्त एवायं शब्दः । व्युत्पादितश्चायमसुन्प्रत्ययान्तत्वेनोणादिषु "अञ्ज्यजी युजिरुजिभ्रजां रुचे"ति सूत्रेण ।

यत्तु भंजो आमर्दन इति धातोरसुन्प्रत्यये व्युत्पन्न इति तद्व्याकरणशास्त्रपरिज्ञानजृम्भितं नलोपरेफकृत्वप्रापकशास्त्राभावेन भर्ग इति रूपस्यासिद्धि-

प्रसङ्गात् । अतो भृजिधातोरसुन्प्रत्यय एव भर्गशब्दोऽव्युत्पन्नः । एवमसुन्नन्तत्वा-देवाद्युदात्ततयाम्नानमुपपद्यते । असुनोऽनित्येन जनित्यादीन्नित्यमित्याद्युदात्तत्व-विधानात् अकारान्तत्वपक्षे च भर्जयतीति भर्ग इति पचाद्यच् संज्ञादित्वात् कुत्वमिति टीकासर्वस्वोक्तरीत्या अच्प्रत्ययान्तत्वे चित इत्यन्तोदात्तत्व-प्रसङ्गात् । पुंसि संज्ञायामिति घप्रत्ययान्तत्वेऽपि प्रत्ययस्वरस्य सति शिष्टत्वेन प्रबलत्वात्तत्स्वरेणान्तोदात्तत्वप्रसङ्गस्यानिवारणात् । न च घञन्तत्वमङ्गीकृत्य स्वरनिर्वाहात् 'अकर्तरि च कारके संज्ञाया'मिति तस्य कर्तृव्यतिरिक्तकारक एव विधानात् भर्जने च शिवस्य कर्तृत्वात्तत्प्रसक्त्यभावात् । न च कर्तरि करणत्वो पचारान्निर्वाहः । उत्कृष्टे अपकृष्टधर्मारोपस्यातिशयानाधायकत्वात् । कर्तुश्च सकलकारकनिर्वाहकत्वेनोत्कृष्टत्वात् । उक्तं च महाभाष्ये 'सकलसाधन-विनियोगकारी खल्वसा'विति 'उतमादेशमप्राक्ष्य' इत्यत्रादेशशब्दे आङ्पूर्वस्य विशेषशासने रूढित्वेन मुख्यप्रकृत्यर्थानुसारेण प्रत्यये क्लिष्टगतिराश्रीयते । न चेह तदाश्रयणं युक्तमसुन्नन्ततयोपपत्तेः । न च शिववाचकशब्दस्यानन्य-गतिकत्वं, अच्प्रत्ययान्तत्वेन व्युत्पादितत्वात् । एतेन शब्दस्मृतेरसुनि वा घञ् वा पदान्ते युक्तम् । वदन्त्युभयथा स्वरमाद्युदात्तं 'व्यत्यस्तकारकमवैमिपदं घञन्तं मैत्रायणश्रुतिपराहतसान्तभाव'मिति प्राचीनशैवजल्पितं निरस्तं वेदितव्यम् । अतस्तेजो वाचक एवायं शब्दः । तथाचायमर्थः - नो धियो यः प्रचोदयात् तस्य सवितुर्देवस्य तत् प्रसिद्धं वरेण्यं भर्गस्तेजो धीमहीति । "यो देवस्सविता-स्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यत् भर्गस्तद्वरेण्यमुपास्महे" ।

'देवस्य सवितुस्तस्य धियो यो नः प्रचोदयात् ।
भर्गो वरेण्यं तद्ब्रह्म धीमहीत्यर्थ उच्यते ॥'

इति अगस्त्यविश्वामित्रवचनानुसारात् ।

ननु देवस्य सवितुर्मध्ये यो भर्गो नो धियः, क्रमात् प्रचोदयात्तं वरेण्यं धीमहीत्यन्वयक्रम इत्यनेन प्रकारान्तरेणाप्यर्थः प्रतिपाद्यत इति चेन्न । उभयथा स्मृतिवचनसत्त्वे न्यायानुगृहीतस्मृतेरेव स्वीकर्तुमुचितत्वात् । भर्ग-

शब्दस्य उत्तरपदान्वये व्यवहितान्वयप्रसङ्गात्, वरेण्यशब्दस्याकाङ्क्षापूर्त्यभाव-प्रसङ्गात्तदित्यस्य व्यत्ययाङ्गीकारे तस्यैव दोषत्वात्। पूर्वपादान्वये छान्दस-स्वादेशादिकल्पनस्य स्वरव्यत्ययकल्पनस्य च प्रसङ्गात्। असुन्नन्तत्वे तद-भावाच्च तेजोवाचकत्वाङ्गीकारेण प्रवृत्तस्यैव स्मृतिवचनस्य न्यायानुग्रहात्। किञ्च त्वदुदाहृतस्मृतिवचनं सवितुर्वरेण्यं भर्गो ध्यायाम इति त्वदभिहितान्वय-विरुद्धत्वेन नोदाहरणत्वयोग्यम्। न च तेजः परत्वपक्षे यच्छब्दस्य सवितृपरत्वे धीशब्दस्य प्रत्यक्षज्ञानमात्रपरत्वेन सङ्कोचप्रसङ्ग इति वाच्यम्। प्रथमश्रुत-भर्गशब्दे अस्वारस्यद्वयाङ्गीकारापेक्षया धीशब्दसङ्कोचस्याभ्यर्हितत्वात्। अतो न गायत्र्या रुद्रपरत्व भर्गपदवत्त्वं साधयितुं शक्नोतीति दिक्।

**वेदान्तविजयकृतस्तु** — पूर्वानुभूतभर्गशब्दान्वयसंभवे उपसर्जन-वरेण्यशब्दान्वयायोगात् विशेषणस्याप्यव्यवधायकत्वाच्च सवितुरित्यस्य भर्ग-शब्देनान्वयो युक्तः। किञ्च सवितुरिति देवविशेषण व्यावर्तकत्वात्। ततश्च देवस्येत्यनेनैव वरेण्यशब्दस्य चान्वयो वाच्यः। देवस्येत्यनेन भर्गशब्दस्यैवाव्यव-धानमिति तस्यैव तेनान्वयो न्यायः। यस्सवितेत्यनुक्त्वा यो देव इति वदन्न-गस्त्योप्यमुमेवार्थमाह। न च तदक्षरं तत्सवितुर्वरेण्यमिति श्रुत्यनुसारात् तथान्वयः। तत्र किं प्रकृतशिवापेक्षया वरेण्यमिति निर्देशः किं वा गायत्रीस्थ-भर्गापेक्षया, नोभयथापि नपुंसकोपपत्तिः। अतो गायत्रीस्थवरेण्यशब्दस्य द्वितीयान्तस्य भर्गविशेषणतया नपुंसकस्याविपरिणामेन प्रथमान्ततया निर्देश इत्यास्थेयतया अनेन वाक्येन गायत्र्यां सकारान्तभर्गशब्दासिद्ध्या घट्टकुट्यां प्रभातः। ततश्च सवितुर्वरेण्येन भर्गसा वान्वये भगवत्परत्वेन, किञ्चिदपि बाधकम्। अथापि सविता वै देवः योऽस्य भार्गाख्यस्तञ्चिंतयामीति मैत्रायणीयश्रुत्या सवितुर्देवस्य भर्गसान्वयस्य दर्शितत्वात्तथैवान्वयः। तस्याः श्रुतेर्गायत्र्यर्थपरतया तच्छेषत्वादिदं तु वाक्यं न तत्परं, किन्तु प्रकृत-शिवस्योत्कर्षप्रतिपादनाय गायत्रीनेयतापरम्। तस्मात् भर्गसो विशेष्यपदस्य पुरोवादप्रसिद्धस्यानिर्देशेन विशेष्यविवक्षयैव विशेषणपदप्रयोगः कृतः। अतो न तत्सवितुर्वरेण्यमित्यादिकं भर्गशब्दान्वयाभावसाधकम्। न च तलवकारिणां

भर्गाय इति श्रुतेरकारान्तत्वावगमः। उपक्रमे प्रथमपदार्थकथने 'अग्निर्वै वरेण्य-मापो वै वरेण्यं चन्द्रमा वै वरेण्य'मिति त्रिष्वपि नपुंसकैकवचननिर्देशेन गायत्रीस्थ-वरेण्यशब्दस्य नपुंसकत्वावगमात्। तन्निर्देशस्य व्याख्येयानुरोधित्वात्। अन्यथा....दिशब्दानुरोधेनानालिङ्गवचननिर्देशापत्तेः। गायत्र्यां च वरेण्य-शब्दस्य विशेष्यलिङ्गत्वात् सकारान्तं विशेष्यपदं भर्गमय इति तु भर्गशब्दे अकारान्त्याक्षरांशेन पादो निरूपितः। दृष्टं च पदैकदेशेनापि निरूपणम्। यथा वारवन्तीयमिति। तत्र हि वारवन्तीयसामयोनिभूतायामृचि 'अश्वं' नत्वा वारवन्तामिति द्वितीयान्तवारवन्तशब्देन तद्वदसाम्नो निर्देशः। तस्या एष द्वितीयपाद इत्यनन्तरं भुवो भर्गो धीदेवस्य धीमहीति वक्तव्यं, भर्गमय इत्यतिरिक्तमाम्नातं, तस्य चैतत् प्रयोजनं धियो य इति पुंलिङ्गानुरोधात् भर्गशब्दोऽयमकारान्तस्तृतीयपादान्वयीती — तत्तुच्छान्दसमिति शङ्कयेत द्वितीय-पादान्तर्भाव उच्यते। भर्गमयः भर्गशब्दप्रचुरोऽयं पादः। प्राचुर्यं चार्थतः स्वरूपतश्च तत्रैवान्वयात् पादस्य विशेष्यशब्दार्थकत्वात्। भर्गशब्दे मयट् प्रकृत्यर्थस्वरसतोऽवगम्यते। भर्गशब्दस्य द्वितीयपादान्वयस्य शङ्कितत्वान्तस्यैव द्वितीयपादान्तर्गतेर्वाच्यत्वात्। सकारं विना पदैकदेशनिर्देशः कृतः। मुक्तामरकतयोर्मरकताज्ञानात् मुक्तामात्रे चोरेणापहृते तावन्मात्रमेव हि पुनरा-हर्तव्यं, न तु मरकतमपि। सामंतस्य एवान्वयोपपत्तिः। द्वितीयान्तत्वात् न त्वकारान्तत्व इति तात्पर्यतो रुद्रस्य गायत्रीप्रतिपाद्यत्वाभावसिद्धिः। तेजस्त्व-सामान्यरूपेणापि तत्परत्वे अकारान्तत्वेन तृतीयपादान्वयेऽपि तदेवेति तन्निवारणवैयर्थ्यात्। अन्वयविशेषमात्रार्थत्वस्यार्थविशेषलाभरूपप्रयोजनवत्त्वे संभवत्यग्राह्यत्वात्। न च वाच्यं द्वितीयः पादोभर्गमयो रुद्रमय इति। गायत्र्या रुद्रपरत्वज्ञापनं प्रयोजनमिति। गायत्र्या एव रुद्रपरत्वेन पादविशेषे भर्गमयत्व-कथनस्य प्रयोजनविशेषाभावेनानुचितत्वात्। विभक्तिव्यत्ययादिकल्पनारहित-प्रयोजनसंभवे तस्यैव ग्राह्यत्वात्। मैत्रायणीयोपनिषदि भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धामेति दर्शनेन तद्विरोधाच्च।

ननु भर्गमय एवायं न भर्गोमय इत्येवमकारान्तत्वप्रतिपादनार्थमेवेदमिति चेत्, किं मयट् विकारार्थकः, उत प्राचुर्यार्थकः। नाद्यः। पदत्रयात्मकस्यास्य पादस्य एकपदरूपत्वोक्त्यसंभवात्। न द्वितीयः। प्राचुर्योक्तेः प्रयोजनाभावात्। सकारान्तत्वभ्रमवारणार्थं भर्गशब्दसंबन्धमात्रं हि वक्तव्यम्। सिद्धान्ते तु देवतान्तरनिरासः प्रयोजनमित्युक्तमेव। अथ स्यात् सिद्धान्तरीत्यास्मिन्नेव पादे अर्थान्वयोऽप्यतिविवक्षया प्राचुर्यार्थमुपपद्यत इति चेन्न। अकारान्तत्वे उत्तरान्वयस्यैवाभ्यर्हितत्वात्। इहैवान्वये विभक्त्यस्वारस्यात्। न चास्य पक्षे तदिति नपुंसकांतस्य भर्गशब्देनान्वयः, तस्य ब्रह्मपरत्वाभिधानात्। उत्तरवाक्यस्थयच्छब्दस्य प्रतिनिर्देशकतच्छब्दानपेक्षा चोक्ता। एवं च देवस्य सवितुर्वरेण्यं तद्धीमहि। यो भर्गो नो धियः प्रचोदयादिति अन्वयः। एवं च न किञ्चिदपि अस्वरसं, तस्मादकारान्तत्वेनोत्तरान्वयो निषेधार्हः। व्यवहितान्वयस्य दुष्टत्वान्निषेधे विभक्त्यस्वारस्यमपि परित्याज्यमेवेति कथं तदविनाभूताया अकारान्तताया विधानम्। तस्मात् यादृशसमन्वये गायत्र्या पदास्वारस्यं व्यवहितान्वयश्च नास्ति तस्मिन्नेव समन्वये गायत्रीं प्रतिपादयितुमिदं वाक्यं प्रवृत्तमितीदमुत्तरान्वयनिषेधमुखेन सकारान्तत्वव्यञ्जनार्थमेव, अतो सकारान्तत्वख्यापनमस्य प्रयोजनमिति युक्तम्। एवं च तलवकारश्रुतिरेव भगवति भर्गशब्दप्रयोगप्रयुक्तरुद्रपरत्वभ्रमवारणाय सकारान्तत्वं ख्यापयितुं प्रथमपादव्याख्याने भिन्नलिङ्गवचनैर्वरेण्यशब्दस्य नपुंसकैकवचनस्य सामानाधिकरण्येन द्वितीयपादव्याख्याने भर्गशब्दस्य तदन्वयकथनेन तृतीयव्याख्यानेन तस्या एष तृतीयः पादः धियो योनः प्रचोदयात् इति। यज्ञो वै प्रचोदयतीति यज्ञस्य प्रचोदयितृत्ववचनेन च गायत्री विष्णुपरेति दृढीकरोति। सविता वै देवः योऽस्य भर्गाख्यस्तं चिन्तयामीति मैत्रायणीयश्रुतावपि शब्दैकदेशे आख्याशब्दो औपचारिकः अकारान्तत्वे च योऽस्य भर्गाख्य इति सवितृशब्देनान्वयदर्शनं न स्यात्। न हि सवितृरुद्र इत्यन्वयस्समञ्जसो भवति। तु सवितुस्तेज इति तस्मादेव ताभिः श्रुतिभिर्भगवान् गायत्र्या प्रतिपाद्यत इत्याहुः।

**आनन्दतीर्थीयास्तु —**

‘ गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः ।
भारतीज्ञानरूपत्वात् भर्गो ध्येयोऽखिलैर्जनैः ॥
प्रेरकोऽशेषबुद्धीनां गायत्र्यर्थ इतीरितः ॥ ’

इति **ऋग्भाष्ये** “ स एव भर्गशब्दार्थः ” **इत्यनुव्याख्याने** च भर्गशब्दस्या-कारांतत्वाश्रयणेन गायत्रीस्थोऽकारान्त एव भर्गशब्दः । स च एतत् सवितु-र्वरेण्यं ध्रुवमचलममृतं भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धामेति मैत्रायणीयश्रुत्या —

‘ ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ध्यात्वामृतमुपाश्नुते ॥ ’

इत्यादि **योगयाज्ञवल्क्यादि**वचनैश्च विष्णुवाचकभर्गशब्दस्य शिवे रूढत्वे-ऽप्युक्तप्रमाणानुसारात् उपक्रमे तदित्यस्य —

‘ ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ’

इति प्रमाणसिद्धपरब्रह्माभिधानस्य श्रवणेन नारायणातिरिक्तस्य कार्यत्वकर्म-वश्यत्वादिभिः परब्रह्मत्वायोगेन तदनुसाराच्च भर्गशब्दस्य योगार्थाश्रयणं युक्तमिति गायत्री भगवत्परेत्याहुः ।

यत्त्वाश्वमेधिकवचनजातं, ‘सन्ध्यासु विष्णुभक्तैरादित्यमण्डले तं मूर्तिं ध्येयेत्येतावन्मात्रप्रतिपादनक्षमं न तु तस्यादित्यान्तर्वर्तित्व गायत्रीप्रतिपाद्यत्व-पर्यन्तस्थापनक्षममिति तदसम्बन्धं तन्मण्डलस्थ’मित्यनेन मण्डलान्तर्वर्तित्वस्य तेजोमूर्तिमतीत्यनेन भर्गशब्दार्थत्वस्य च सिद्धेः । न च तन्मण्डलस्थस्य तन्मण्डलस्थत्वेन ध्यानं विधीयत इति वक्तुं युक्तं, सूर्यमण्डलस्थत्वाभाव-ग्राहकप्रमाणाभावेन स्वारसिकप्रामाण्यानपवादात् । न च शिवस्यादित्यान्तर्वर्तित्व-ग्राहकप्रमाणानामेतदभावसाधकत्वं अन्यपरत्वस्य प्रपञ्चितत्वाद्यदपि ‘ ततः षडक्षरं मन्त्रं षट्कृत्वः परिवर्तये’दिति पूर्वं षडक्षरमन्त्रजपविधानदर्शनेन

तदर्थध्यानविधिपरत्वं तन्मण्डलस्थम् ध्यायेदित्यस्येति तदसङ्गतं दर्भेषु दर्भपाणिस्सन् प्राङ्मुखस्तु समाहितः ।

' प्राणायामांस्ततः कुर्यान्मद्गतेनान्तरात्मना ।
सहस्रकृत्वस्सावित्रीं शतकृत्वस्तु वा जपेत् ॥'

इति प्राधान्येन सावित्रीजपविधानदर्शनेन प्रधानभूतसावित्रीप्रतिपाद्यध्यानत्वस्यैव वक्तुं युक्तत्वात् । प्रधानमन्त्रार्थध्यानकथनं ह्यनुचितम् । " मद्गतेनान्तरात्मने"ति गायत्रीप्रतिपाद्यध्यानं विहितमिति चेत्, सिद्धं नस्समीहितम् ।

किञ्च " शतकृत्वस्तु वा जपे"दित्यनन्तरम् —

' समाप्ते तु जपे तस्मिन्सावित्र्या चाभिमन्त्र्य च ।
मन्देहानां विनाशाय रक्षसां च प्रतिक्षिपेत् ॥
जलं सीत्यथाचान्तः प्रायश्चित्तजलं क्षिपेत् ।
अथादाय स पुष्पाणि तोयान्यञ्जलिना द्विजः ॥
प्रक्षिप्य प्रतिसूर्यं च व्योममुद्रां प्रकल्पयेत् ।
ततो द्वादशकृत्वस्तु सूर्यस्यैकाक्षरं जपेत् ॥
ततः षडक्षरं मन्त्रं षड्वारं परिवर्तयेत् ।
सदक्षिणं परामृश्य मुद्रया सुमुखं तथा ॥
ऊर्ध्वबाहुस्ततो भूत्वा सूक्ष्ममीक्षेत्समाहितः ।
तन्मण्डलस्थमाध्यायेत्तेजोमूर्तिं चतुर्भुजम् ॥
उदुत्यं तु जपेन्मन्त्रं चित्रं तत् चक्षुरित्यपि ।
सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ॥
मन्मयानि च सामानि पुरुषव्रतमेव च ।
ततश्चालोकयेदर्कं हंसश्शुचिषदित्यृचा ॥
प्रदक्षिणं समावृत्य नमस्कृत्य दिवाकरम् ॥'

इति ग्रन्थसन्दर्भेण सावित्रीजपाङ्गजातप्रतिपादनात् तन्मध्यनिविष्टयोः कृष्णमन्त्र-जपभगवद्ध्यानयो'र्गुणानां च परार्थत्वादसंबन्धस्समत्वात् स्या'दिति न्यायेनैकस्यान्यतराङ्गत्वं वक्तुमनुचितमिति कथं कृष्णमन्त्रार्थध्यानविधिपरत्वं तन्मण्डलस्थमित्यस्य ।

यदपि **वैष्णवधर्मशास्त्रस्य** तान्त्रिकधर्मविधानार्थं प्रवृत्तत्वान्न तत्र विहितमादित्ये विष्णुचिन्तनं वैदिकैः कार्यमिति । तन्मौढ्यविलसितम् । वैष्णव-धर्माणामवैदिकत्वग्राहकप्रमाणाभावात् । न च "श्रुता मे मानवा धर्मा" इति मानवधर्मेभ्यो व्यावर्तितत्वादवैदिकत्वमिति वाच्यम् । वासिष्ठाः काश्यपा-स्तथेति कीर्त्यमानवासिष्ठादिधर्माणामप्यवैदिकत्वप्रसङ्गात् । किञ्चैवम् —

'एतेभ्यस्सर्वधर्मेभ्यो विशिष्टास्त्वन्मुखनिस्सृताः ।
पावनत्वाद्यथार्थत्वाद्विशिष्टा इति मे मतिः ॥
तस्माच्च त्वां प्रपन्नस्य त्वद्भक्तस्य च भावतः ।
युष्मदीयान्परान् धर्मान्पुण्यान् कथयमेऽच्युत ॥'

इति सर्वाधिकत्वकीर्तनमुखेनात्यादरेण धर्मसूनुप्रश्नोऽनुपपन्नः स्यात् । तदा —

'युधिष्ठिरस्तु धर्मात्मा हृदिकृत्वा जनार्दनम् ।
तद्भक्तस्तन्मना युक्तस्तद्याजीतत्परोऽभवत् ॥'

इति धर्मसूनोस्तद्धर्मनिष्ठत्वकीर्तनमप्यसङ्गतं स्यात् ।

'एवमुक्तः पुरावृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन् पवित्रं पापनाशनम् ॥
तच्छृणुष्व महाराज विष्णुप्रोक्तं कुरूद्वह ।
तेन गच्छसि नान्येन तद्विष्णोः परमं पदम् ॥'

इति वैशंपायनेन जनमेजयस्य तत्र प्रवर्तनमप्यनुपपन्नं स्यात् । न हि वैदिकस्या-वैदिकधर्मेषु प्रवर्तनमुपपद्यते ॥

यत्तु पुराणाद्युक्तमपि तन्त्रानुसारि चेन्न ग्राह्यमिति । तदत्यन्ताज्ञान-विजृम्भितम् । भस्मोद्धूलनरुद्राक्षधारणलिङ्गार्चनप्रभृतीनां शिवपुराणोक्तानां शैवागमानुसारित्वेन त्वन्मतप्रविष्टानां तदनुष्ठानस्याधर्मत्वप्रसङ्गात् । किं बहुना । शिवपारम्यप्रतिपादकसूतसंहितादिवचनानां तत्प्रतिपादकशैवतन्त्रानु-सारित्वमनिवार्यमिति । तद्बलात्तच्छिवपारम्यसाधनमुच्छिद्येत । न च तत्र श्रुतयस्सन्तीति तदनुसारित्वमिति वाच्यम् । श्रुतेरर्थान्तरवर्णने त्वया उपबृंहण-विरोधकथनस्यानुपपन्नत्वप्रसङ्गात् । उपबृंहणानां शैवतन्त्रानुसारित्वेन प्रमाणत्वस्य शिथिलत्वात् । स्वबुद्धिकल्पितान्यात् गरीयो ह्युपबृंहणमिति उपबृंहण प्राधान्यमाश्रित्य हि त्वया तत्र श्रुत्यर्थो वर्णितः । न चौत्सर्गिकं श्रुतिमूलत्वं बाधकाभावेन त्यागार्हमिति वाच्यम् । तस्यादित्यान्तर्वर्तित्वं भगवत आवेदयन्तीनां श्रुतीनामत्रापि मूलत्व संभवान्न त्यागार्हमिति समस्समाधिः ॥

वस्तुतस्तु पञ्चरात्रतन्त्रस्य कृत्स्नस्य प्रमाणतमत्वेन तदनुसारित्वेऽपि वैष्णवधर्मशास्त्रस्य नावैदिकधर्मप्रतिपादकत्वम् । न तु पञ्चरात्रस्य कथं प्रमाणतमत्वमिति चेदित्थं - प्रामाण्ये हि परिग्रहः, कर्तुराप्ततमत्वं चेति द्वयं हेतुः । तदुभयमप्यत्र समस्ति । निरस्तसमस्तदोषत्वेनापहतपाप्मादिव्यो देवः एको नारायण इत्यादिप्रमाणसिद्धेन भगवता नारायणेन प्रणीतत्वस्य —

'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्'

इति भारतवचनादवगम्यमानत्वेन कर्तुराप्ततमत्वसिद्धेः । कर्षणादिप्रतिष्ठान्तानां कर्मणां भगवत्समाराधनतदुत्सवादीनां च पञ्चरात्रोक्तमार्गेणानुष्ठीयमानत्वेन तदर्थादररूपपरिग्रहस्य सत्त्वाच्च । महाभारते तत्प्रशंसा कृतेति शास्त्रान्तर-प्रशंसारूपश्शास्त्रपरिग्रहोऽपि निरङ्कुशः । तथा हि —

'इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्यमतिमन्थानं दध्नोघृतमिवोद्धृतम् ॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदस्य ओषधीभ्यो यथामृतम् ॥

इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्यायोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥
भविष्यति प्रमाणं वै एतन्मदनुशासनम् ॥'

इति तत्प्रामाण्यं प्रसाधितं **नारायणीये** । किञ्च महता प्रबन्धेन च तत्र तत्प्रशंसा कृता । तत्प्रदर्शनार्थं **व्यासार्यग्रन्थो** लिख्यते — तत्र,

'रूढं मां प्राश्नवित् प्रश्नं पृच्छसेत्वमिहानघ ।
न ह्येष कृत्स्नशश्शक्यं वक्तुं वर्षशतैरपि ॥
ऋते देवप्रसादाद्वा राजन् ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानमाख्यातव्यं तवारिहन् ॥
अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ॥'

इति । पृष्टार्थस्य परमरहस्यत्वमयोग्येष्ववक्तव्यत्वं च दर्शितम् ।

'तेनैव प्रथिता ब्रह्मन् मर्यादा लोकपावनी'

इति लोकहिताय प्रवृत्ततया बाह्यागमव्यावृत्तिर्दर्शिता ।

'तत्र प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक् समभवन्मनो दुष्टं च नाभवत् ॥
संस्थिते तु नृपे तस्मिन् शास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सत्यमेतद्वा कथितं मम ॥'

योग्यजनभूयिष्ठकाले प्रवृत्तिः । कालान्तरे तिरोधानं चेति वैलक्षण्यमुक्तम् । तत्राप्याविर्भावतिरोभावकथनादर्थशरीरस्य वेदार्थवदनादित्वं दर्शितम् । ततश्च बाह्यागमव्यावृत्तिः ।

'उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च ॥'

इति बाह्यागमानामर्वाक्कालिकत्वस्मरणात् ।

'वेदैश्चतुर्भिस्संमितं कृतं मेरौ महागिरौ'

इति सर्वमर्यादास्थापकमुनिजनभूयिष्ठे मेरौ प्रवर्तिततया देशतो वैलक्षण्यमुक्तम्

'एकाग्रमनसो दान्ता ऋषयस्संयमेरताः । इति —
'दिव्यवर्षसहस्रं वै सर्वे ते मुनिसत्तमाः ।' इति —
'नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तान् ऋषीन् सर्वान् लोकानां हितकाम्यया ॥' इति —
'तैरेकमतिभिर्दृष्ट्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।'

इति च प्रवर्तकानां ऋषीणामत्र गुणवत्त्वं तपोमहिमवत्त्वं भगवत्प्रसादलब्ध-सरस्वतीकत्वं ब्रह्मनामैकमत्यं च दर्शितम् ।

'उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतश्शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥' इति —
'युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यंते मुनिसत्तमाः ॥'

इति प्रकृष्टदेवऋषिपरिग्रहः । प्रकृष्टशिष्याधिगमश्च दर्शितः । वेदैश्चतुर्भि-स्संहितं इदं महोपनिषदम् । अत्र धर्मार्थकामाभिमोक्षः पश्चाच्चिकीर्षेत इति सर्ववेदवेदान्तसारत्वम् । गुळजिह्विकान्यायेन त्रिवर्गप्रतिपादकत्वं मोक्षैकपरत्व-मनुवृत्तमहिमवत्त्वं चोक्तम् ।

'सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम् ।
भविष्यति प्रमाणं वै एतन्मदनुशासनम् ॥
अस्मात्प्रवक्ष्यते धर्मान्मनुःस्वायम्भुवःस्वयम् ॥'

इति मन्वादिभिरप्युपजीव्यत्वमितरप्रबन्धप्रामाण्ये दृष्टान्तभूतत्वमव्यवधानेन भगवदनुशासनरूपत्वं भविष्यति प्रमाणमिति भगवता नियमितत्वं च दर्शितम् ।

'तस्य यज्ञो महानासीदश्वमेधो महात्मनः ।
बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह ॥'

इति पञ्चरात्रनिष्ठस्योपरिचरस्याश्वमेधकथनाद्वैदिकपञ्चरात्रकर्मणां कर्तृसामान्यं दर्शितम् ।

'प्रीतस्ततोऽस्य भगवान्देवदेवः पुरातनः ।
साक्षात्तं दर्शयामास अदृश्योऽन्येन केनचित् ॥'

इति वेदपञ्चरात्रोक्तकर्मणामव्यवधानेन फलदेवतासामान्यं च दर्शितम् ।

'अत्र श्येनहृतो भागो देवेन हरिमेधसा ।'

इति सर्वदेवतासाक्षात्कारिबृहस्पत्यदृश्यतया उपरिचरेण दृष्टतया चाधिकारिवैलक्षण्यं दर्शितम् । एकतद्वितत्रितवृत्तान्तमुखेनार्थवादरूपं तात्पर्यलिङ्गं दर्शितम् ।

'मेरोरुत्तरभागेऽत्र क्षीरोदस्यानुकूलताम् ।
सदेशो यत्र नस्तप्तं तपः परमदारुणम् ॥' इति ।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ।
गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः ॥' इति ।
'ततो नो दृष्टविषयस्तदा प्रतिहतोऽभवत् ।' इति ।
'व्रतावसानेऽस्य शुभान्नरान्ददृशिमो वयम् ।' इति ।
'बलिः किलोपह्रियते तस्य देवस्य तैः सुरैः ।
वयं तु तेजसा तस्य सहसा नष्टचेतसः ॥' इति ।
'पुरुषाणां सहस्रेषु तेषु वै शुद्धयोनिषु ॥
अस्मान्न कश्चिन्मनसा चक्षुषा वाप्यपूजयत् ॥'

इति भगवद्धर्मनिष्ठपुरुषाध्युषितदेशस्य प्राप्यत्वं, तस्य बहुतपोलभ्यत्वं धर्मान्तर-निष्ठैस्तद्धर्मनिष्ठानां दुर्दर्शत्वं, तेषां बहुतपोदृश्यत्वं, तेषामितराधिकारिष्व-नादरत्वं, तन्मुखेनेतराधिकारिणां निकृष्टत्वं, भगवद्धर्मनिष्ठानां प्रकृष्टत्वं, भगवता स्वयमागत्यदर्शनप्रदानाच्च तेषां महत्त्वं दर्शितम् ।

'एकश्च शब्दो विरत श्रुतोऽस्माभिरुदीरितः ।
आकाशं पूरयन्सर्वं शिष्टाक्षरसमन्वितः ॥'

इति भगवत्स्तोत्रश्रवणस्यापि तपस्साध्यत्वेन भगवद्धर्मप्रकर्षो ज्ञापितः ।

'दृष्टा वः पुरुषा श्वेताः पञ्चेन्द्रियविवर्जिताः ।
दृष्टो भवति देवेश एभिः दृष्टैर्द्विजोत्तमाः ॥'

इति भगवद्दर्शनतुल्यत्वं तेषां दर्शनस्य प्रतिपादितम् ।

'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव नरान् श्वेतांश्चन्द्रप्रभान् शुभान् ॥
पूजयामास शिरसा मनसा तैस्तु पूजितः ॥' इति ।
'न ह्येतत् ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् ।'

इति भगवद्धर्मनिष्ठानां देवर्षिवंद्यत्वं ब्रह्मादिभ्योऽपि महत्त्वं दर्शितम् ।

'उवाच वचनं भूयो गच्छ नारद माचिरम् ।
इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः ॥

एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नोभवेदिति चोक्तम् । नारदसंभाषणस्यापि विघ्नरूपताकथनेन नारदादपि तेषामासन्नतरत्वं दर्शितम् ।

'अहो हि दुरनुष्ठेयो मोक्षधर्मस्सनातनः ।
यं हित्वा देवतास्सर्वा हव्यकव्यभुजोऽभवन् ॥
नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रियः ।
एकान्तिनो हि पुरुषा गच्छन्ति परमे पदे ॥
यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन ॥

भवेत्कृतयुगप्राप्तिः ।

> एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् ।
> ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥'

इति कृतयुगैकान्तस्य भगवद्धर्मस्य परममोक्षप्रदत्वं तन्मुखेनाधिकारिवैलक्षण्यं दर्शितम् । तथा —

> 'मया सृष्टः पुरा ब्रह्मा यद्यज्ञमयजत्स्वयम् ।
> ततस्तस्मै वरान्प्रीतोऽददामहमनुत्तमान् ॥
> मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च ।
> एष माता पिता चैव युष्माकं च पितामहः ॥
> मयानुशिष्टो भविता सर्वभूतवरप्रदः ।
> अस्य चैवानुजो रुद्रो ललाटाद्यः समुत्थितः ॥
> ब्रह्मानुशिष्टो भविता सोऽपि सर्ववरप्रदः ।
> स ब्रह्मकास्सरुद्राश्च सेन्द्रा देवा महर्षिभिः ॥
> अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुम् ॥'

इत्यादिभिः वेदान्तवेद्यपरदेवताया एवात्र प्रतिपाद्यत्वं दर्शितम् । 'वेदैश्चतुर्भिस्संमित'मित्युपक्रमः । 'इदं महोपनिषद'मित्युपसंहारः । एवमभ्यासादिलिङ्गानि दर्शितानि । एवमाशयदोषविरहदेशकालप्रवर्तकवक्तृश्रोतृप्रबन्धतदुक्तधर्मकर्तृतद्धर्मतत्फलप्रदायिदेवतावैलक्षण्यमुखेन बहुमुखं प्रामाण्यं प्रपञ्चितमिति ।

ननु भवतु उपरिचरवसूपाख्यानस्थवचनानां पञ्चरात्रप्रामाण्यविषयप्रमाणभावः । भगवद्धर्मनिष्ठातिशयप्रतिपादकवचनानां तु कथं तत्र प्रमाणतयोपन्यास इति चेदुच्यते । प्रकरणं हि धर्माणां भगवदेकान्ततां प्रतिपादयितुं प्रवृत्तम् । तथैवोपक्रमात् तदुपपादयितुं प्रवृत्ते चोपाख्याने भगवदेकान्ततायाः प्रमाणतां पञ्चरात्रप्रतिपन्नत्वनिबन्धनश्रेष्ठतां स्फोरयितुं पञ्चरात्रप्रामाण्यमुपक्षिप्तमिति तत्प्रमाणक भगवदैकान्त्यनिष्ठश्रेष्ठता प्रतिपादनमपि

तत्प्रामाण्यपर्यवसाय्येव । किञ्चैकान्तिधर्मप्रतिपादनानन्तरम् —

'इदं महोपनिषदं गुह्यं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥'

इति वचनात् ।

'धर्मं च मत्तो गृह्णीष्व सात्वतं नाम नामतः । ' इति ।
'अतोऽत्र सात्वतो धर्मो व्याप्य लोकानवस्थितः ।'

इति वचनाच्च । तस्य पञ्चरात्रधर्मत्वमवसितं इति तत्प्रामाण्यपर्यवसाय्येव भगवद्धर्मातिशयप्रतिपादनम् । एतेन 'मया सृष्टाः पुरा ब्रह्मे'त्यादिभिर्वेदान्तवेद्यपरदेवतायाः प्रतिपादनेऽपि पञ्चरात्रस्य तत्प्रतिपादकत्वं कथं प्रतिपाद्यत इति शङ्का निरस्ता ।

'इदं महोपनिषद'मिति सन्दर्भबलात्तथावगमात् । न चास्य नारायणीयप्रघट्टकस्य प्रक्षेपशङ्कासंभवः ।

'गुह्यं नारायणाख्यानं त्रिविधं क्लेशनाशनम् ।'

इत्यानुशासनिकेऽनुवाददर्शनात् भारतकथामनुसृत्य भाषाप्रबन्धं कृतवतातिचिरन्तनेन नारायणीयोक्तार्थप्रपञ्चनात् । यादवप्रकाशमतानुसारिभिर्नारायणार्यैरत्रत्यवचनान्तत्वनिर्णयाख्ये स्वप्रबन्धे उदाहरणात् ।

शङ्करभाष्येऽपि " स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनवकाशदोषप्रसङ्गादिति सूत्रव्याख्यानदशायां ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन् । ता उदाहरिष्यामः । यत्तत्सूक्ष्ममविज्ञेयमिति परं ब्रह्म प्रकृत्य"स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।" इति चोक्त्वा ।

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।'

इत्याह । तथान्यत्रापि —

'अव्यक्तं पुरुषं ब्रह्म निष्क्रिये संप्रलीयते ।'

इत्याहेत्येतत् सन्दर्भस्योपन्यासात् त्वयापि ।

'तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ।
यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते ॥
तं रुद्रं विद्धि कौन्तेय देवदेवं कपर्दिनम् ।
निहतास्तेन पूर्वं त्वं हतवानसि वैरिपून् ॥'

इत्यादिवचनानां त्वदभिलषितसिद्धये समुदाहृतत्वाच्च । तस्मान्नारायणीयवचन-सन्दर्भो निरङ्कुशः पञ्चरात्रप्रामाण्ये प्रवर्तते । ननु तत्र —

'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ॥'

इत्यादिना सांख्यादीनामप्यादरणीयतोच्यत इति चेन्न । तदसिद्धेः । तथाहि । सांख्ययोग इत्यादिप्रश्नस्य तावदयमर्थः — सांख्ययोगपाशुपतवेदपञ्चरात्राण्येक-तत्वप्रतिपादनपराणि, किं वा पृथक्तत्वप्रतिपादनपराणि । यदैकतत्वप्रतिपादन-पराणि, किं तदैकतत्वं, यदा तु पृथक्तत्वप्रतिपादनपराणि, तदैषां परस्पर-विरुद्धार्थप्रतिपादकत्वाद्वस्तुनि विकल्पासंभवाच्चैकमेव प्रमाणमङ्गीकरणीयम् । किं तदेकमिति । अस्योत्तरम् —

'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥
साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥
अपान्तरतपा नाम वेदाचार्यस्स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः स्मृतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ॥

सर्वे(षु)च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ।
यथागमं यथान्यायं निष्ठा नारायणः परः ॥'

इति । अस्य चायमर्थः । किन्त्वया तत्तद्ग्रन्थकाराभिप्रायः पृष्टः, उतार्थस्थितिः पृष्टा । आद्ये साङ्ख्ययोगादीनां पौरुषेयाणां तन्त्राणां परस्परविरुद्धवस्तुवादितया अपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तु विरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यदुर्लभमित्यभिप्रायेण 'साङ्ख्ययोगः पञ्चरात्र'मित्याद्युक्तं 'अपान्तरतपानाम वेदाचार्यस्स उच्यत' इति वेदानामपौरुषेयत्वं 'सांख्यस्य वक्ता कपिल' इत्यादिभिः पौरुषेयत्वं वर्णितमित्ययमर्थो लभ्यते । द्वितीये उत्तरं — 'सर्वेषु च नृपश्रेष्ठे'ति । एवं च किमेकनिष्ठानि पृथङ्निष्ठानि [illegible] तत्तद्ग्रन्थकाराभिप्रायपर्यालोचने पृथङ्निष्ठत्वं तत्र च वेदस्य [illegible] च प्रामाण्यमित्युत्तरं न्यायानुगृहीततत्तदागमोक्तवस्तुपर्यालोचने चैकनिष्ठत्वं स चैको नारायण इत्युत्तरम् । न चैवं पञ्चरात्रस्याप्यप्रामाण्यं सांख्यादितुल्यकक्ष्यतया स्यादिति वाच्यम् । वेदविरोधाभावेन तदुक्तययोगात् । न च नानागमतत्वोक्त्या सांख्यादिवत् पञ्चरात्रस्यापि वेदापेक्षया पृथक् प्रस्थानत्वं गम्यत इति वाच्यम् ।

'यथागमं यथान्यायं निष्ठा नारायणः परः ।'

इति परत्वेन प्रतिपाद्यमानस्यैव नारायणस्य 'वक्ता नारायणः स्वयमिति कर्तृतया प्रतिपादनात् । वाग्दोषराहित्यसूचनेन वेदापेक्षया पृथक्स्थानत्वस्य वक्तुमयुक्तत्वात् । तस्माद्वेदपञ्चरात्रे एकराशीकृत्य साङ्ख्ययोग इति वचनोक्तनानामतत्वोक्तिर्निर्वाह्या । अत एव —

'एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते ॥'

इति तत्रत्यवचनान्तरैकार्थ्यं भवति । तस्य ह्ययमर्थः — साङ्ख्यं च योगश्च साङ्ख्ययोगं वेदाश्चारण्यकानि च वेदारण्यकं परस्परान्वितान्येतानि एकतत्व-

प्रतिपादनपरतया एकीभूतानि एकं पञ्चरात्रमिति कथ्यत इति । साङ्ख्योक्तानि पञ्चविंशतितत्त्वानि योगोक्तं च यमनियमाद्यात्मकं योगं वेदोदितकर्मस्वरूपाण्यङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वं योगस्य च ब्रह्मोपासनप्रकारत्वं कर्मणां च तदाराधनरूपत्व- मभिदधाति । ब्रह्मस्वरूपं प्रतिपादयन्त्यारण्यकानि एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतमिति यावत् । एवं च पञ्चरात्रस्य सारनिष्कर्षरूपत्वकथनेन प्रमाणतमत्वद्योतनया न तस्य वेदविलक्षणप्रस्थानत्व- शङ्कावकाशः । न च साङ्ख्याद्युक्तप्रक्रियाङ्गीकारे शारीरके कथं तदप्रामाण्यकथनं घटेत । कथं चात्र नानातमत्वकथनं वेति वाच्यम् । साङ्ख्यप्रतिपादिततत्त्व- स्वरूपमात्राङ्गीकारेऽपि तत्प्रतिपादितब्रह्मात्मकत्वांशमादाय तदप्रामाण्यकथनस्य नानातमत्वस्य निर्वाहसंभवात् । एवं योगस्यापि केवलनिमित्तेश्वरादित्वमादाय तथात्वं निर्वाह्यम् । एतेनाप्रमाणभूतसाङ्ख्यादिसारनिष्कर्षत्वकथनादप्रामाण्यमपि द्योत्यत इति परास्तम् । परस्पराङ्गान्येतानीत्यनेन वेदान्तांशस्यैव पञ्चरात्रमूलत्व- कथनात् । तस्मान्नारायणीयवचनजातं साङ्ख्यादिविलक्षणमेव प्रामाण्यं प्रतिपादयतीति दिक् ॥

नन्वथापि नैतानि वचनानि पञ्चरात्रप्रामाण्यं साधयितुं शक्नुवन्ति । तन्त्रानुसारित्वेनैतेषामपि वचनानां दृढप्रमाणभावासिद्धेरिति चेन्न । न हीदं प्रकरणं पाञ्चरात्रिकधर्मान् प्रति उत्तरत्वेन प्रवृत्तं येन तथात्वमुच्येत । किन्तु—

> ‘ ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
> य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः ॥ ’

इत्यादिप्रश्नोत्थापने सति कथं तन्त्रानुसारित्वम् । यद्येवमपि अवैदिकाधिकारि- कतन्त्रानुसारित्वमुच्येत तदा —

> ‘ एवं बहुविधं धर्मं प्रतिबुद्धैर्निवेदितम् ।
> न कुर्वन्ति कथं विप्रा आद्यं नारायणं परम् ॥ ’

इति पृष्टवन्तं जनमेजयं प्रति —

'एकान्तिनो हि पुरुषा बहवो दुर्लभा नृप ।
यद्येकान्तिभिराकीर्णं जगत्स्यात् कुरुनन्दन ॥
अहिंसकैरात्मविद्भिस्सर्वभूतहितेरतैः ।
भवेत्कृतयुगप्राप्तिरीदृशैः कर्मवर्जितैः ॥
निसृष्टकृतयो राजन् देहबन्धेषु निर्मिताः ।
सात्विकी राजसी चैव तामसी चेति भारत ॥
देहबन्धेषु पुरुषश्रेष्ठः कुरुकुलोद्वह ।
सात्विकः पुरुषव्याघ्र भवेन्मोक्षार्थचिन्तकः ॥'

इत्यादिना सात्विकजनानामेव भगवदेकान्त्यरुचिमत्त्वेन, तदेकानुष्ठे
प्रतिपाद्य —

'एष ते कथितो धर्मस्तत्वतः कुरुपाण्डव ।
कुरुष्वैनं यथान्यायं यदि शक्नोषि भारत ॥
एवमेष महाभागो नारदो गुरवे मम ।
श्वेतानां यमिनामाह एकान्तगतिमव्ययाम् ॥
व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते ।
स एवायं मयातुभ्यमाख्यातं प्रशिषा गुरोः ॥
इत्थं हि दुष्करो धर्म एष पार्थिव .... मा ।
यथैवत्वं तथैवान्ये न भजन्ति विमोहिताः ॥'

इति वैदिकजनादृतत्वकथनपूर्वकं मोहाधीनमितरजनानुष्ठानमिति वैशंपायनेनं
कथनमसङ्गतं स्यात् । यद्यप्यत्राप्यतिशङ्का भवति तदा भारतप्रामाण
दूरोत्सारितं स्यात् । विप्रलिप्साकलङ्कितत्वात् । तस्मान्नात्रान्यथासिद्धि
इति पञ्चरात्रप्रामाण्यं नारायणीयवचनबलात् सिद्धमेव । भीष्मपर्वणि च

'ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥
सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ॥'

इति भगवतस्सात्वतः शास्त्रविहितमर्यादया पूजनीयत्वमुत्कर्षहेतुत्वेन प्रतिपादनमिति तन्त्रोऽपि प्रामाण्यं सिद्धम् । तथा आनुशासनिके श्राद्धपात्रविधौ —

'इमे परे महाभागा विज्ञेयाः पङ्क्तिपावनाः ।
यतयो मोक्षधर्मज्ञा योगिनश्चरितव्रताः ॥
पञ्चरात्रविदो मुख्यास्तथा भागवताः परे ॥'

इति पञ्चरात्रविदां पङ्क्तिपावनत्वकीर्तनेन तत्प्रामाण्यं व्यञ्जितम् । वाराहे —

'पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् ।
संहिताजपमास्थाय ते मां पश्यन्ति ब्राह्मणाः ॥'
'अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि ।
मार्गेण मां प्रपद्यन्ते ते मां पश्यन्ति मानवाः ॥
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति ॥
एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् ।
पञ्चरात्रसहस्राणां यदि कश्चिद् ग्रहीष्यति ॥
कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति ।
तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति ॥'

एतदुदाहरणे जिह्वाच्छेद इति निषिद्धवेदश्रवणानामपि शूद्राणां तदभिहितस्यसत्यवचनाहिंसादावधिकारवत् पञ्चरात्रश्रवणानधिकृतानामपि तेषां सर्ववर्णानामधिकृत्य विहितेषु चक्राङ्कनादिधर्मेष्वधिकारसंभवेन शूद्रैश्च कृतलक्षणैरित्यनेन विरोधाप्रसक्तेरुपदेष्टृत्वनिषेधकल्पनायोगात् । न च तच्छ्रवणनिषेधेऽपि तद्धर्माधिकारसंभवे शूद्राधिकारधर्मप्रतिपादकत्वेऽपि पञ्चरात्रस्य शूद्रादीनां न

तच्छ्रोत्रमिति वचनमुपपद्यत इति वाच्यम् । यथात्रवचनमधिकारकल्पनेन तत्प्रतिपादितमर्यादातिलङ्घीकल्पनाकारीत्यनेन तत्रत्यसर्वधर्माणां शूद्राधिकारिकत्वकल्पनाया अप्रसारात् । तद्विहितधर्मेषु शूद्रानधिकारप्रतिपादकत्वेऽपि न तद्विरोधः । **उत्सर्गापवादन्यायेन** सर्ववर्णसाधारणधर्मातिरिक्तविषयकत्वकल्पनं तत् । एवं च शास्त्रान्तरप्रशंसारूपशास्त्रपरिग्रहबलात् प्रामाण्यं सिद्धम् । एतेन नारायणस्य भ्रमासंभवेऽपि विप्रलिप्सासंभवेन तन्मूलत्वं पञ्चरात्रस्य संभवति । तत् प्रयुक्तम् । परिग्रहबलात्तत्प्रामाण्याङ्गीकारात् । न च साङ्गेषु वेदेषु निष्ठामलभमानश्शाण्डिल्यः पञ्चरात्रं शास्त्रमधीतवानिति वेदनिन्दादर्शनादप्रामाण्यमिति वाच्यम् । न हि निन्दान्यायेन पञ्चरात्रस्तावकत्वेन वेदनिन्दातात्पर्यसिद्धेः । **ऋग्वेदं भगवो ध्येयंयजुर्वेदं सामवेदमाथर्वणमित्यारभ्य** सोऽहं **भगवो, मन्त्रविदे** वास्मिन्नात्मवदिति **भूमविद्याप्रकरणगतवाक्ये** तथात्वस्य वक्तव्यत्वात् । अन्यथा —

> ' चत्वार एकतो वेदा भारतंत्वेकमेकतः ।
> समागतैस्सुरर्षिभिस्तुलामारोपितं पुरा ।
> महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते ॥ '

इति दर्शनात् । भारतस्याप्रमाणत्वप्रसङ्गः । वस्तुतस्तु वेदार्थस्य दुर्ज्ञेयतया **तत्सुखावबोधकत्वात्** पञ्चरात्रस्य चतुर्षु वेदेष्वित्यादिकं प्रतिपादयतीति न शङ्काशङ्कावकाशः । अत एव ।

> ' वेदान्तेषु यथासारं संगृह्य भगवान् हरिः ।
> भक्तानुकंपया सिद्धान् सञ्चिक्षेप यथासुखम् ॥ '

इति तत्रत्यवचनं दृश्यते । न च मूलाभावादप्रामाण्यम् । मन्वादिस्मृतिवन्मूलानुमानसंभवात् । एकायनश्रुतिमूलत्वाच्च । जाबाल, बाष्कल, माध्यंदिन, शाखानामिव एकायनशाखाया अपि देशान्तरेऽधीयमानत्वात् । ऋग्वेदं भगवो ध्येयमित्याद्यारभ्य वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यामिति

मूलविद्योपक्रमे तदुपादानाच्च। न च ऋग्वेदादिभिः पृथक्कृत्य निर्देशादवेदत्वं शङ्कनीयम्। ब्रह्मविद्याशब्दवाच्यवेदान्तभागस्येव तदुपपत्तेः। न च ब्रह्मविद्या-शब्दो ब्रह्मज्ञानपरं, सोऽहं मन्त्रविदेवास्मिनात्मविदिति तदभाववचनविरोधापत्तेः।

'ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे।
पश्चिमे सामवेदःस्यादथर्वं चोत्तरे भवेत्॥
एकायनीयशाखोक्तमन्त्रान् सर्वासु दिक्षु च।
श्रावयेत् पावनान् पश्चादग्निसंस्कारमारभेत्॥
ततः प्रीतमना नाथस्साक्षात्सद्ब्रह्मसंज्ञितम्।
वेदमेकायनं ब्रह्म व्याकर्तुमकुतोभयम्॥
व्याजहार स सद्ब्रह्ममयं प्रणवमादितः॥'

इत्यादिकालोत्तरसंहितादिवचनेषु वेदपरत्वेन प्रसिद्धस्यैकायनशब्दस्याप्रसिद्धार्थ-कल्पनायोगाच्च। अतस्तस्य वेदत्वस्यापह्नोतुमशक्यत्वात्, तन्मूलत्वात्, पञ्चरात्रस्य प्रामाण्यं दुर्वारम्। अस्यार्थस्य विस्तरस्तु श्रुतप्रकाशिकाया-मनुसन्धेयः।

नन्वेवमपि न पञ्चरात्रं प्रमाणमिति निर्णेतुं शक्यम्। कूर्मपुराणे —

'एवं संचोदितो रुद्रो माधवेन मुरारिणा।
चकार मोक्षशास्त्राणि केशवोऽपि शिवेरितः॥
कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम्।
पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः।
बुद्धश्रावकनिर्ग्रन्थाः पाञ्चरात्रविदो जनाः॥
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः।
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः॥
न तस्य तद्भवेच्छ्राद्धं प्रेत्येह चैवतत्फलम्॥'

इत्यादिवचनैस्तस्य मोहशास्त्रत्वादिप्रतिपादनात् । ननु भारते तन्त्र समर्थितमिति तद्विरोधः स्यादिति चेन्न । अनुष्ठेयांशेषु कुण्डगोलकस्त्रीशू वेदानधिकृतविषयतया प्रामाण्यं वैदिकानधिकारिवर्णनविषये श्रुतियुक्तिस्व विरुद्धविषये चाप्रामाण्यमिति व्यवस्थोपपत्तेः । इयं च व्यवस्था कौम तत्र हि —

'स तेषां मायया जातं गोवधं गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ॥
भविष्यथ त्रयीबाह्या महापातकिभिस्समाः ॥'

इत्यादिना वेदबाह्यत्वेन गौतमशप्तान् प्रस्तुत्य —

'सर्वे संप्राप्य देवेशं शङ्करं विष्णुमव्ययम् ।
अस्तुवन् लौकिकैः स्तोत्रैरुच्छिष्टा इव सेवकाः ॥'

इत्यादिना शिवकेशवसन्निधौ तेषां वैदिकमन्त्रैः स्तोत्रेऽनधिकारात् प्रबन्धैःस्तुतिपूर्वकं गतिप्रार्थनामुपन्यस्य —

'तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यामो वृषध्वज ॥
एवं संचोदितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥'

इत्यादिना वेदबाह्यत्वेऽप्यन्तःकरणशुद्धिमतां रक्षणार्थं वैदिकत्वेऽपि चित्तानां विमोहनार्थं च शिवकेशवाभ्यां पाशुपतपञ्चरात्रशास्त्राणि निर्मि श्रुतम् । कुण्डगोलकादीनां पञ्चरात्राधिकारोऽपि कौर्मे दर्शितः ।

'अथांशस्सात्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रुतम् ॥

तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥'

इति पञ्चरात्रे स्त्रीशूद्राधिकारस्वीकरणमुखमुपक्रोशं प्रस्तुत्य भागवते वर्णितः —

'तेनोक्तं सात्वतं तन्त्रं यत् ज्ञात्वा मुक्तिभाक् भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥'

इति पञ्चरात्रप्रविष्टस्यापि क्रमेण वैदिकमार्गावाप्तिद्वारा श्रेयः प्राप्तिरित्युक्तम् ।

**वासिष्ठलैङ्गे** - तत्र हि शाण्डिल्यं प्रति भगवद्वचनम् —

'मत्तन्त्राश्रयणेनैव मत्पूजा च कृता त्वया ।
तया न प्रीतवानस्मि तव शाण्डिल्य मे प्रियः ॥
कुमार्गेणापि शाण्डिल्य कृता पूजा मम त्वया ।
अतः कालेन महता वेदमार्गं गमिष्यसि ॥' इति ।

ये तु पञ्चरात्रमार्गेण विष्णुं प्रपन्ना अपि प्राचीन शापदोषेण शिवनिन्दादिषु प्रवर्तन्ते तेषामाकल्पं निरय एव, न तु भवान्तरेऽपि वेदमार्गप्राप्तिः । तदुक्तं **कौर्मे** ।

'एवमुक्त्वा तु विप्रर्षिश्शशापेश्वरविद्विषः ।
समागतान्ब्राह्मणांस्तान्दक्षसाहाय्यकारिणः ॥
यस्माद्बहिष्कृता वेदा भवद्भिः परमेश्वरः ।
विनिन्दितो महादेवः शङ्करो लोकवन्दितः ॥
भविष्यथ त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः ॥
निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः ॥
मिथ्याधीतसमाचारमिथ्याज्ञानप्रलापिनः ।
प्राप्य घोरं कलियुगं कलौ कलिपीडिताः ॥

त्यक्त्वा तपोवनं घोरान् गच्छध्वं नरकान्पुनः ।
भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः ॥'

इति पुष्करप्रायश्चित्तपापापादितवैदिकमार्गबहिर्भावानामपि तन्त्रेष्वधिकारः पुराणे दर्शितः ।

'श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥
भयदुर्बलचित्तानां मरणे जायते भृशम् ।
तेषामेवाभिरक्षार्थं खल्वहं तन्त्रमुक्तवान् ॥' इति ।
'पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् ॥'

इति च । तस्माद्भारतादिषु पञ्चरात्रप्राशस्त्यवचनान्यधिकारिविशे तत्प्रामाण्यव्यवस्थापनपराणीत्युन्नीयते ।

यत्तु भारते —

'भविष्यति प्रमाणं वै एतत् वृद्धानुशासनम् ।'

इति पञ्चरात्रं प्रस्तुत्य वचनं, तत्तु कूर्मपुराणादिगतकलिदोषकीर्तनप्रव

'कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु च ।
दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥
निन्दन्ति च महादेवं तमसाविष्टचेतसः ।
इत्यादिवचनैर्येषां कलौ प्राचुर्यमुत्तरे ॥'

सर्वेऽपि वैदिकान्प्रति वस्तुतोऽप्रमाणमपि प्रमाणत्वेन प्रह तस्मिन्युगे वैदिकमार्गप्रच्युति प्राचुर्याच्चेऽपि तद्ग्रहीष्यन्तीत्येतत्परम्

कदलीफलरक्ततादिवत् भाविप्रामाण्यपरम् । पूर्वमप्रमाणस्य पश्चात् प्रमाणत्वा-भ्युपगमादिति न कश्चिद्विरोधः । किञ्च स्कान्दे पञ्चरात्रे च कापाले तथा कालामुखेऽपि च ।

'श्रद्धया दीक्षया यूयं भवन्तु ब्राह्मणाधमाः ।'

इति पञ्चरात्रस्य तदुक्तदीक्षायाश्चावैदिकत्वप्रतिपादनेन तस्य मोहशास्त्रत्वमङ्गी-करणीयम् । अतः पञ्चरात्रप्रामाण्यमाद्धूनविशीर्णमिति - अत्र प्रतिविधीयते । न ह्येवमेतानि वचनानि पञ्चरात्रस्याप्रामाण्यं साधयितुं शक्नुवन्ति । परस्पर-विरोधात् । न ह्यधिकारिविशेषहितावहत्वप्रतिपादकवचनानां मोहशास्त्रत्व-प्रतिपादकवचनानां चाविरोधसंभवः । न चाधिकारिविशेषे हितावहत्वप्रतिपादक-शास्त्रान्तरापर्यालोचनदशायां वैदिकानामनधिकारप्रतीत्या तदादाय मोहशास्त्रत्व-वर्णनमुपपद्यत इति वाच्यम् । तादृशभ्रमजननमादाय मोहशास्त्रत्ववर्णनस्याति-प्रसञ्जकत्वात् । न चावैदिकानुष्ठेयानां वैदिकानुष्ठेयत्वप्रतिपादनान्मोहशास्त्रत्व-मधिकारिविशेषत्वमधिकृत्य प्रामाण्येऽप्युपपन्नमिति वाच्यम् । पञ्चरात्रप्रतिपाद्य-सर्वधर्माणां तन्त्रवैदिकैरेवानुष्ठेयत्वप्रतिपादनस्यासिद्धेः । केषांचित्तदनुष्ठेयत्व-प्रतिपादनेऽपि तदंशे मोहशास्त्रत्वमेभिर्वचनैः प्रतिपाद्यत इति पर्यवसानेन तच्छास्त्रमात्रस्य मोहशास्त्रत्वप्रतिपादकवचनानां सङ्कोचावश्यंभावेन पञ्चरात्र-प्रामाण्यप्रतिपादकवचनैरपि तत्सङ्कोचस्यैव युक्तत्वेन तत्प्रामाण्यस्य निरर्गलं प्रवृत्तेः । न च सर्वांशप्रामाण्याङ्गीकारे मोहशास्त्रत्ववर्णनं न कथञ्चिदुपपद्यत इति वाच्यम् । पञ्चरात्रशास्त्रे स्वप्रतिपाद्यधर्माणां सर्वोत्तमत्वप्रतिपादकार्थवाद-मात्रपर्यालोचनया वैदिककर्मश्रद्धायां चलचित्तानां शैथिल्यजननात्तदनुकूलत्वेन च तस्य तदादाय मोहशास्त्रत्ववर्णनापरत्वात् । न च तत्तत्प्रतिपाद्यधर्मातिशय-प्रतिपादकार्थवादजनितधर्मान्तरश्रद्धावैकल्यमादाय मोहशास्त्रत्ववर्णनं प्रमाणान्तरा-पर्यालोचनादशोत्पन्नभ्रमहेतुत्वस्यापि सर्वसाधारणत्वेन त्वत्पक्षेऽप्यनुयोगस्य तुल्यत्वात् । न च सामान्येन प्रवृत्तवचनेष्वापातप्रतीतिजननेऽपि वैदिक-जनानुष्ठेयत्वप्रतिपादकवचनेषु तात्पर्यपर्यालोचनानन्तरोत्पन्नभ्रमहेतुत्वमादायैव मोह-

शास्त्रत्वमुपवर्ण्यत इति न प्रसङ्गतौल्यमिति वाच्यम् । वेदप्रोक्तदुष्करधर्मानुष्ठाना-शक्तानां पुरुषाणां स्वप्रतिपाद्यधर्मविषयकप्रवृत्ति जननोपयोगिविश्वासजननार्थं तत्प्रतिपाद्यमिति, त्वदीया वैदिकेतराधिकारप्रतिपादकवचनप्राबल्येन तात्पर्य-निर्णयसंभवात्तात्पर्यनिर्णयानन्तरभ्रमजनकत्वासिद्धेः । तस्मात् स्वारस्यत्यागाति-प्रसङ्गयोः पक्षद्वयेऽपि तौल्येन **विशेषोत्त्ययोगात्** ( जै. सू. 9-2-1 )। त्वत्पक्षेऽपि मोहशास्त्रत्ववचनं सङ्कुचितमेवेति प्रामाण्यप्रतिपादकवचनबलादपि तत्सङ्कोच एव न्याय्यः । न तु मोहशास्त्रत्वोक्तिबलात् प्रामाण्यप्रतिपादकभारत-वचनसङ्कोचः दृष्टः । सङ्कोचवचनानामेव सङ्कोचस्य युक्तत्वेन तादृशानां तादृश-वचनैस्सङ्कोचायोगात् । अत एव **संस्थिते संस्थितेहनि गृहपतिर्मृगयां याति स यान्मृगान्हन्ति तेषान्तरसमया सवनीयाः पुरोडाशा इति** ( जै. सू. 8-8-28 ) वाक्ये पुरोडाशानलङ्कुर्वित्यत्र प्रकृतो दृष्टलक्षणा-

---

## गीतीनां सामनामताधिकरणम् —

नवमेद्वितीय पादस्य प्रथमाधिकरणे ( गीतीनां सामनामता प्रदर्शकम् ) प्रथमवर्णकमारचयति —

सामान्यवाची सामशब्दः विशेषवाचिनो बृहद्रथन्तरादिशब्दाश्च गानमात्रे वर्तन्ते, न तु गानविशिष्टायामृचि इत्ययं निर्णयः सप्तमस्य द्वितीय-पादे सिद्धः सोऽत्र वक्ष्यमाण विचारोपयोगितया स्मार्यते । ( जै. सू. 9-2-1)

## सवनीयानां मांसमयताधिकरणम् —

षट्त्रिंशत्सु संवत्सरेष्वनुष्ठेयं शाक्यायनम् । तत्र श्रूयते । संस्थिते-ऽहनि गृहपतिर्मृगयां याति, स यान्मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशाः भवन्ति । इति । तत्र यथा नवनीतं सर्वेष्वङ्गेषु निविष्टं तथा मांसत्वमपि सर्वेषु पुरोडाशेषु निविशते इति चेत् ।

वृत्तिकपुरोडाशपदस्यैव लक्षणाभ्युपगता । न त्वदष्टलक्षणसवनीयशब्दस्येति सवनीयानामेव तरसत्वमिति शेषलक्षणेऽभिहितम् । अत एव **जननरूप-निमित्तानन्तरं** ( जै. सू. 4-3-19 ) कर्तव्यत्वेन प्राप्ता जातेष्टिः प्रयोजन-विरोधादुत्कृष्टा जातकर्मानन्तरं कर्तव्यत्वेन प्राप्ताशौचकालाद्यङ्गोपसंग्रहाय पुनरुत्कृष्टा सत्याशौचविगमे पौर्णमास्यादिकाले कर्तव्येति **प्रयुक्तिलक्षणे-**स्थितम् । कथं तर्हि भक्ता शैवपुराणानामप्रामाण्योक्तिरुपपद्येत । श्रुत्याद्यनु-सारितात्पर्यनिर्णयानन्तरं तेषां भ्रमजनकत्वाभावादिति चेन्न । तात्पर्यं हि तदर्थप्रतीतीच्छयोच्चरितत्वं, तच्च न श्रुत्याद्यानुगुण्येन तेषामस्तीति तत्स्वरूपेण ज्ञायत इति शास्त्रादवगम्यते । न च पञ्चरात्रस्य वैदिकधर्मप्रतिपादकत्व-तात्पर्यग्राहकतया किञ्चित्प्रमाणमस्तीत्यभ्युपगतम् । येनावैदिकाधिकारप्रतिपादक-वचनानुसारेण पञ्चरात्रवचनानि न निर्वहेरन् । तस्मात् तात्पर्यपर्यालोचनानन्तर-भाविभ्रमहेतुत्वस्यापि तामसपुराणेषु सत्वात् पञ्चरात्रे तदभावाद्वैषम्यमस्तीति पञ्चरात्रस्य मोहशास्त्रत्वोक्तिरस्वरसैवेति तादृशमोहशास्त्रत्वोक्तिर्न प्रामाण्य-

---

मैवम् – तदाहि ये पुरोडाशास्ते तरसाः इति वचनव्यक्तौ व्यव-हितान्वयः स्यात् । तरस शब्द पुरोडाश शब्दयोर्मध्ये सवनीय शब्देन व्यवधानात् । इह तु तरसाः सवनीयाः, इति संनिधिः श्रूयते । तथा सति ये सवनीयास्ते तरसाः इत्यनेन संनिध्यनुगृहीतेन वाक्येन मांसत्वं सवनीय पुरोडाशेष्वेव नियम्यते । ( जै. सू. 3-8-28 )

**जातेष्टिन्यायाधिकरणम्** —

यद्यपि जातकर्मानन्तरमेव तदनुष्ठाने निमित्तभूतं जन्म सन्निहितं भवति, तथाऽप्यशुचिना पित्राऽनुष्ठीयमानमङ्गविकलं भवेत् । जातकर्मणि तु विपत्तिपरिहाराय तात्कालिकी शुद्धिः शास्त्रेणैव दर्शिता । ततो मुख्य संनिधेरवश्यं बाधितत्वाच्छुद्धि लक्षणाङ्ग वैकल्यं वारयितुं आशौचादूर्ध्वमिष्टिं कुर्यात् । ( जै. सू. 4-3-19 )

प्रतिपादक वचनविरोधिनीति निष्कण्टकभारतवचनबलात्प्रामाण्यं सिद्ध्यतीति दिक् ।

नन्‍ु दुष्टसङ्कोचवचनत्वं प्रामाण्यप्रतिपादकवचनानामप्यस्ति । कुण्ड-गोलकस्त्रीशूद्रवेदभ्रष्टाधिकारिकत्वप्रतिपादकवचनबलात् सङ्कोचावश्यंभावात् । अतो मोहशास्त्रप्रतिपादकवचनैः प्रामाण्यप्रतिपादकवचनानां न बाध इति कथं निर्णय इति चेन्न ।

'अथांशः सात्वतोनामा विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चनेरतः ॥' इति ।

कौर्मवचने, होतृत्वदाननिरतत्वनारदाधिगतज्ञानवत्त्वाद्युपक्रमश्रुतकर्तृगुणकीर्तन-स्वारस्यानुसारेण कुण्डगोलदिभिः श्रुतमित्यस्य तैरपि श्रुतमित्यभिप्रायकल्पनात् कुण्डादीनां हितावहमित्यस्यापि तथैव कल्पनात् नारदस्य वचनाच्छास्त्रं प्रवर्तया-मासेत्यन्वयेऽपि महामुनेर्नारदस्यावैदिकाधिकारप्रवर्तकत्वस्य असमञ्जसत्वाच्च । 'सात्वतं नाम शोभनं प्रवर्तन्ते महाशास्त्र'मिति शोभनत्वमहाशास्त्रत्वकीर्तनं च कुण्डगोलकमात्राधिकारिकत्वेऽनुपपन्नम् । महत्त्वं हि शास्त्रस्य मुक्तिसाधनी-भूतज्ञाननिष्पादकत्व एव संगच्छते । शोभनत्वं चासङ्कुचितदुःखासंभिन्न-सुखसाधनसंपादकत्व एवोपपद्यते । भागवते च – 'यद्ज्ञात्वा मुक्तिभाग्भवे-दि'त्युक्त्या वैदिकानामधिकारप्रतीतेः । यत्र स्त्रीशूद्रदासानामित्यस्यापि तन्मात्राधि-कारिकत्वप्रतीतिः । अपशूद्राधिकरणे हि अध्ययनगृहीतस्वाध्याय-निष्पन्नब्रह्मज्ञानानामेवोपासनाधिकारः प्रपञ्चितः । न च परंपरया मुक्त्युपयोगमादाय तथोक्तिरुपपद्यत इति वाच्यम् । धर्मप्रतिपादकशास्त्रमात्रस्य क्रमेण मुक्त्युपयोगित्वस्य सत्त्वेन विशिष्योक्तिवैयर्थ्यात् । क्रममुक्तिफलकत्वस्य 'मत्तन्त्राश्रयणेनैव मत्पूजा च कृतात्वये'त्युपक्रम्य 'अतः कालेन महता-वेदमार्गं गमिष्यसीत्युक्त्या केवलतन्त्रमार्गविषयत्वप्रतीत्या वैदिकधर्मानुष्ठान पूर्वकतान्त्रिकधर्मानुष्ठाननिष्ठानां मुक्त्यविरोधेन भागवतवचनसङ्कोचायोगात् ।

यत्तु — ' यावत्कर्म स्वगृह्योक्तं न्यूनं वाधिकमेव वा ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥ '

इति वचनविरोधात् न वैदिककर्मप्रयोगमध्ये तान्त्रिककर्मानुष्ठानसंभवः । वैष्णवाग्नौ कर्तव्यानां तान्त्रिकहोमानां स्वगृह्योक्ताग्निषु होमासंभवाच्च । नापि वैदिककर्मानुष्ठानानन्तरं वैष्णवाग्निसंपादनपूर्वकं तान्त्रिकधर्माणां प्रयोगभेदेनानुष्ठानसंभवः । वैदिकानां तान्त्रिकधर्मानुष्ठाने प्रत्यवायाभावादिति तन्न । कर्मप्रयोगमध्येऽनुष्ठेयत्वेन भगवच्छास्त्रविहितानां तन्मध्ये वैदिकप्रयोगसमाप्त्यनन्तरमनुष्ठेयत्वेन विहितानां च तदनन्तरं मर्यादानतिलङ्घनेनानुष्ठानसंभवात् । यावत्कर्मसु गृह्योक्तमित्यस्य पुरुषबुद्धिकल्पनया धर्मान्तरसाङ्कर्येणानुष्ठानमात्रनिषेधपरत्वात् वचनेनाहत्य किञ्चित्प्रयोगमध्ये विहितानां च वचनबलादेवानुष्ठानसंभवात् गृह्यान्तरोक्तधर्ममात्रनिषेधपरत्वोपपत्त्या च यावत्कर्मेति वचनस्य सर्वसाधारणं भगवच्छास्त्रविहितानां धर्माणां सर्वत्रावापसंभवाच्च । स्वस्वगृह्याग्निषु वैदिककर्मणः क्रियमाणत्वेऽपि तस्यैव वैष्णवत्वसंपादनसंभवात् तन्मध्ये भगवच्छास्त्रोक्त धर्मानुष्ठानाविरोधः । तद्धि ज्ञानविशेषविषयत्वमात्ररूपतया गृह्याग्निस्वरूपप्रच्यवनेनैव संभवत्सर्वाश्रमसर्ववर्णसाधारण्येन विहितानां च धर्माणामननुष्ठाने प्रत्यवायस्य भगवच्छास्त्रे श्रवणेन प्रत्यवायाभावात् तान्त्रिकधर्मानुष्ठानं वैदिकैः कर्तव्यमित्यपि परास्तम् । न च तत्र प्रकरणादिपर्यालोचनया तन्त्रदीक्षायुक्तब्राह्मणादिमात्रपरो ब्राह्मणादिशब्द इति युक्तम् । देवालयार्चनोपयुक्तदीक्षाविधानप्रकरणातिरिक्तस्थलेष्वपि सर्ववर्णाश्रमसाधारण्येन विधानात् । अन्यथा शैवपुराणाद्युक्तशिवार्चनादिधर्माणां शिवद्विजविषयत्वप्रसङ्गात् । अतः क्रममुक्तिफलकत्ववचनस्य केवलतन्त्रमार्गनिष्ठविषयत्वेन न भागवतस्थस्य " यद्ज्ञात्वे "त्यस्य वासिष्ठलैङ्गवचनात् सङ्कोचः । यत्तु ये तु पञ्चरात्रमार्गेण विष्णुं प्रपन्नाः अपि प्राचीनदधीच्यादिशापदोषेण शिवनिन्दादिषु प्रवर्तन्ते । तेषामाकल्पं निरय एवेति , तदिष्टापत्त्यैव परिहृतम् ।

ननु तर्हि शिवनमस्कारादित्यागादिकं भवदीयानां कथमुपपद्यत इति चेत् न, 'नान्यं देवं नमस्कुर्यात्' 'येऽनन्यदेवताभक्तया' इत्यादिवचन-सिद्धत्वेन तदुपपत्तेः ।

'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताःस्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥'

इति वचनं च तत्र प्रमाणम् । अस्य वचनस्य परोक्तार्थान्तरनिराकरणप्रकारः प्रथमपरिच्छेदे प्रपञ्चितः ।

नन्वेवं "सर्वधर्मान् परित्यज्ये"ति वचनबलात् सर्वधर्मपरित्यागोऽपि कर्तव्यःस्यात् । न च सर्वधर्मपरित्यागस्य सागरतरणवदशक्यानुष्ठानतया न विधानार्हतेति वाच्यम् । तथासति स्वस्वशाखान्तर्गत"देवव्रत" "शतरुद्रीया"-ध्ययनकालीनवाचिकनमस्काराणां वर्जनीयतया वैदिकानां शिवनमस्कारत्यागस्यापि विधानानर्हत्वमिति तुल्यत्वात् । न च कायिक एव नमस्कारो न नमश्शब्दोच्चारण-मिति वाच्यम् । लोके वाचिकनमस्कारप्रसिद्धेर्निरालम्बनत्वापातात् । '**नमस्ते हरसेशोचिष इत्याह नमस्कृत्य हि वसीयां समुपचरन्तीति**' वैदिक-लिङ्गविरोधप्रसङ्गाच्च । अतो न देवतान्तरनमस्कारनिषेध उपपद्यत इति चेन्न । प्रपन्नमेवाधिकृत्य 'मनीषी वैदिकाचारं मनसापि न लङ्घये'दिति विधानेन तद्विरोधप्रसङ्गेन सर्वधर्मपरित्यागस्य विधानासंभवात् । विशिष्टविधिगौरव-प्रसङ्गाच्च । उपायान्तरनैराकाङ्क्षयानुवादेन प्रपत्तिमात्रविधायकत्वस्यैव वक्तुं युक्तत्वात् । विशिष्टविधानाङ्गीकारेऽपि प्रमाणविरुद्धार्थान्तरविधानसंभवस्य आचार्यपादैः प्रपञ्चितत्वेन न तस्य सर्वधर्मत्यागविधायकत्वमिति न सर्वधर्म-परित्यागकर्तव्यता प्रसज्यते । न चैवं शिवनमस्कारत्यागोऽपि न विधानार्हः । शतरुद्रीयाध्ययनविधायकनित्यस्वाध्यायाध्ययनप्रापकवाक्यविरोधादिति वाच्यम् । नित्यकर्मसंबन्धिभिन्नतन्नमस्कारतत्पूजादिनिषेधपरत्वसंभवात् । न च नित्यं सदा यावदायुर्न कदाचिदतिक्रमेदिति शिवपूजायाः नित्यत्वप्रतिपादकवचनबलान्नित्यत्वेन शिवार्चनं वैष्णवानामनिवार्यं स्यादिति वाच्यम् । 'महादेवं महापुरुषं

र्चयेदिति वचनेन विकल्पप्रतिपादनात्तत्र च नान्यं देवं नमस्कुर्यान्नान्यं देवं पूजयेदिति वैष्णवस्य देवतान्तरपूजनादिनिषेधवचनानुसारेण वैष्णवातिरिक्तविषयत्व। तन्नित्यत्वस्य समर्थनीयत्वात्। न च **स्कान्दपुराणे** वैष्णवान्प्रत्येव शिवार्चननित्यत्वं प्रतिपन्नमिति न तद्व्यतिरिक्तविषयत्वमिति वाच्यम्। तस्यैकान्तिव्यतिरिक्तविषयकत्वेऽप्युपपत्तेः। अन्यथा विकल्पस्यागतिकत्वप्रसङ्गात्। अतो वाचनिकशिवनमस्कारत्यागो न शिवनिन्दापादकः।

यत्तु भविष्यति प्रमाणं वै इत्येतन्न भाविप्रामाण्यपरं, पूर्वं प्रमाणस्य पश्चात् प्रमाणत्वायोगात्। किन्तु वस्तुतोऽप्रमाणमपि प्रमाणत्वेन ग्रहीष्यन्ति इत्येतत् परमिति तन्न भविष्यति प्रमाणमित्यस्यानुष्ठानसद्भावप्रतिपादनतात्पर्येणानुष्ठानशिरस्कत्वस्य प्रामाण्ये तेन प्रतिपादनात्। तस्मात्पञ्चरात्राप्रामाण्यप्रतिपादकतया त्वदुदाहृतानां वचनानां तदप्रामाण्यसाधनासमर्थत्वादुदाहृतमहाभारतादिवचनैस्तत्प्रामाण्यं निष्कण्टकं सिद्ध्यतीति दिक्।

वस्तुतस्तु—'इतिहासपुराणं पञ्चम'मितिहासपुराणाभ्यां वेदं समुपबृंहयेदित्यादिष्वितिहासशब्दस्य पूर्वनिपातबलादभ्यर्हितत्वावगमेन पुराणापेक्षया प्रबलत्वान्न पुराणवचनानि भारतसिद्धप्रामाण्यबाधनक्षमाणि। **कौर्मादीनां** तामसत्वाच्च न भारतविरुद्धार्थं साधयितुं प्रभवन्ति। न च तत्प्रामाण्येऽप्यधिकारिविशेषविषयकं तदिति वक्तुं शक्यम्। पञ्चरात्रधर्माणां अश्वमेधानुष्ठानपुरुषानुष्ठितत्वप्रतिपादनादि विरोधापातात्तदनुष्ठानस्य मोहनिबन्धनत्वप्रतिपादनविरोधापाताच्च। तस्मान्महाभारतादिप्रमाणबलात् पञ्चरात्रप्रामाण्यं वैदिकैरवश्यं स्वीकरणीयमिति तदनुसारित्वेऽपि न वैष्णवधर्मशास्त्रस्यावैदिकाधिकारिकत्वमिति तदीयवचनबलाद्विष्णोरादित्यमण्डलान्तर्वर्तित्व गायत्री प्रतिपाद्यत्व योस्सिद्धिरविकलेत्यन्तरादित्यविद्या भगवत्परेति सिद्धम्।

एवं **गायत्रीविद्यापि** भगवत्परा। तथाहि गायत्री वा इदं सर्वं भूतं यदिदं किञ्चेति वाक्ये **कुण्डपायिनामयने** मासमग्निहोत्रं जुहोतीत्यत्र यथा अग्निहोत्रशब्दः प्रयुज्यमानस्तत् सादृश्यविशिष्टानुष्ठानार्थः तथा गायत्रीशब्दो

ब्रह्मणि प्रयुज्यमानस्तत्सादृश्यानुसन्धानार्थं इति ब्रह्मणो गायत्रीसादृश्यानुसन्धान-रूपविद्यात्र विधीयते। न चात्र प्रसिद्ध गायत्र्येव किमिति नोच्यत इति वाच्यम्। तस्याः भूतपृथिवीशरीरहृदयाख्यपादचतुष्टयसंबन्धाभावात्। 'तस्या हि भूतं यदिदं किञ्चे'ति भूतपादवत्त्वं, 'या वै सा गायत्री इयं वाव सा येयं पृथिवीति' पृथिवीरूपपादवत्त्वं, या वै सा पृथिवी इयं वावसा यदिद-मस्मिन् पुरुषे शरीरमिति शरीराख्यपादवत्त्वं' 'यद्वै तत् तत् पुरुषे शरीरं' 'इदं वा एतत् यदिदमस्मिन्नन्तः पुरुषे हृदय'मिति हृदयाख्यपादवत्त्वं च प्रतिपाद्य सैषा चतुष्पदा षड्विधा गायत्रीति भूतादिपादचतुष्टयसंबन्धः प्रतिपादितः। उक्तं च सूत्रकृता – 'छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथाहि दर्शनं,' 'भूतादिपादव्यपदेशोपपत्तेश्चैव'मिति ब्रह्मणो गायत्रीसादृश्यं च ब्रह्मण उक्तपादचतुष्टयवत् गायत्र्याश्च इन्द्रः शचीपतिः। वलेन पीडितः। दुश्च्यवनोवृषा। समत्सुसासहिरिति पादचतुष्टयवत्त्वाच्च। सैषा विद्या भगवद्विषयिणी। उक्तपादचतुष्टयवत्त्वजनितपरिच्छिन्नत्वशङ्का-निराकरणाय प्रवृत्ते तदेतदृचाभ्युक्तं 'तावानस्य महिमा अतो ज्यायांश्च पुरुषः। पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवीत्यु'त्तरसन्दर्भे पुरुषसूक्तार्थ-प्रत्यभिज्ञानात् पुरुषसूक्तस्य भगवत्परत्वं प्रथमपरिच्छेदे प्रपञ्चितम्। अत इयं गायत्रीविद्या भगवन्निष्ठेति दिक्। तथा प्रतर्दनविद्यापि भगवत्प्रवणा। इन्द्रशरीरकपरमात्मोपासनपरत्वेन प्राणस्तथानुगमादित्यधिकरणे निर्णीताया स्वर्णघर्मानुवाके इन्द्रस्यात्मानं बहुधा चरन्तीमितीन्द्रात्मत्वेन प्रतिपन्ने पर्यवसाना-त्समभ्यावात्। तस्यानुवाकस्य भगवत्परत्वं तु समुद्रे अन्तः कवयो विचक्षत इति समुद्रशायित्व लिङ्गात् त्वष्टारं रूपाणिविकुर्वन्तं विपश्चितमित्यत्र लक्ष्मीपतित्वलिङ्गावगत भगवद्विषयता उत्तर नारायणानुवाक प्रत्यभिज्ञानात्। तत्रत्वष्टाविदधद्रूपमेतीति श्रवणात्। इन्द्रं निचिक्युः परमेव्योमन्नित्यस्मस्यानु-वाकार्थस्य सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितंगुहायां परमेव्योमन्निति वाक्यार्थस्यानन्त शब्दाभिधेयस्य प्रत्यभिज्ञानाच्च। विपश्चितमित्यत्र च सोऽश्नुते सर्वान् कामान् सह ब्रह्मणाविपश्चितेत्यर्थः प्रत्यभिज्ञाप्यते। न च सत्यं

ज्ञानमनन्तमित्यत्र प्रथमान्तत्वेनानन्तशब्दरूढ्यर्थाविवक्षेति शक्यं वक्तुम्। यो वेदेत्यनेनान्वितत्वेन द्वितीयान्तत्वात्। यथा चैतत्तथोपपादितमथर्वशिरोविचारे —

'सच्चासच्चैव गोविन्दस्तस्मात्सत्यः सतां मतः।'

इति नामनिर्वचनाध्यायवचनात्, सत्यशब्दस्यापि भगवत्परत्वेन, ततोऽपि सत्यं ज्ञानमित्यस्य भगवत्परत्वम्। तदेवं स्वर्णधर्मानुवाकस्य भगवत्परत्वं तत्रचेन्द्रान्तर्यामित्वस्य भगवति कीर्तनात् प्रतर्दनविद्योपास्यो भगवानिति सिद्धम्। तथा शाण्डिल्यविद्यापि भगवदुपास्यतालङ्कृता। मनोमयत्वादि गुणविशिष्टस्य तत्रोपास्यत्वात्। मनोमयत्वं हि विशुद्धमनोग्राह्यत्वम्। तच्च हृदामनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भगवन्तीत्यम्भस्यानुवाके भगवद्धर्मतयाऽवगतम्। भारूप इत्येतदादित्यवर्णं तमसः परस्तादित्येतत्प्रत्यभिज्ञापकम्। 'एष आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाक तण्डुलाद्वा। एष आत्मान्तर्हृदये ज्यायान् पृथिवी ज्यायानन्तरिक्षाज्ज्यायानेभ्यो लोकेभ्य इति यस्मान्नाणीयो न ज्यायोऽस्तिकश्चिदित्येतत् प्रत्यभिज्ञापकं, सर्वतोज्यायस्त्वश्रवणं च अतो ज्यायांश्च पुरुष इत्येतत् प्रत्यभिज्ञापयति।

ननु मनोमयत्वादिकं नोपास्यकोट्यन्तर्गतन्त्युत्पत्तिशिष्ट सर्वात्मकत्वावरोधात्। सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीतेति ह्युपासनविधायकमितिचेन्न। सर्वात्मकस्योत्पत्तिशिष्टत्वासिद्धेः तज्जत्वतल्लत्वतदन्त्वैः सर्वमिदं ब्रह्म खल्विति प्रसिद्धवन्निर्देशेन ह्युपासनविध्येकवाक्यत्वं निर्धार्यते, सर्वं खल्विदं ब्रह्मेत्यस्य न ह्युपासीत खल्विति वचनव्यक्तिर्घटते।

नन्वेवमुपास्य समर्पकपदाभावात् कथमुपासनाविधिरुपपद्येतेति चेन्न। उपासीतेत्यस्योपासनाकाङ्क्षायां पूर्ववाक्योपस्थित ब्रह्मण उपास्यत्वेनान्वयसंभवात्। नचैतावता सर्वात्मकत्वमप्युपास्यतयान्वेति ब्रह्मणः सर्वात्मकत्वेन यत्रक्वचित् क्रियमाणस्यापि द्वेषादेरात्मद्वेषपर्यवसन्नत्वेनायुक्तत्वात्। शान्तः सन्नुपासीतेति शान्तिहेतुतया प्रतीयमानस्य तस्योपासनान्वयित्वे प्रमाणा-

भावात् । तस्मान्मनोमयत्वादेरुपास्यकोट्यन्तर्भावात्ततो भगवत उपा
सिद्ध्यत्येव। सर्वात्मकत्वमपि भगवद्धर्म इति प्रथमपरिच्छेदे प्रपञ्चितं
**तस्माच्छाण्डिल्यविद्या** भगवत्परेति सिद्धम् ।

**एवमुपकोसलविद्यापि** भगवत्पर्यवसायिनी। 'य एषोऽक्षिणि पु
दृश्यते एष आत्मे'तिहोवाच एतदमृतमभयमेतद्ब्रह्मेत्यत्र तद्विद्योपास्ये पुरुषः
श्रवणात्तस्य च भगवदसाधारण्यं प्रथमपरिच्छेदे प्रतिपादितम्। कं ब्रह्म
ब्रह्म यद्वावकं तदेवखमित्यत्र यदेष आकाश आनन्दो न स्यादिति आनन्
विषयकवाक्य प्रत्यभिज्ञानाच्च भगवत्परत्वम्। आनन्दमयश्च नारायणः।
आनन्दमनन्तं ब्रह्मेत्युपक्रमात् सयश्चायं पुरुषो यश्चासावादित्ये स एक इ
दित्यान्तर्वर्त्यैक्यप्रतीतेश्च । अपि च बृहदारण्यके इन्धो वै नामैष यं
दक्षिणेऽक्षिणि पुरुषः तमुवा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण। प
प्रिया इवहि देवाः प्रत्यक्षद्विषः । अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य
विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाश इति श्रूयते
दक्षिणाक्षिस्थः पुरुषोत्तम एव। 'य एष एतस्मिन्मण्डले पुरुषः, य
दक्षिणेऽक्षिन्निति दक्षिणाक्षिस्थस्यादित्यान्तरवस्थितत्व श्रवणात् । तस्य
पुण्डरीकाक्षत्वात् इन्द्रशब्दवाच्यत्वाच्च नारायण एव । इन्द्रं निचि
परमेव्योमन्निति स्वर्णघर्मानुवाकप्रयोगाद्वामाक्षिस्था तत्पत्नी साक्षाल्लक्ष्मीरेव।
शब्द वाच्यपत्नीत्वेन प्रतीतेः। तैत्तिरीयके च राजसिबृहती श्रीरसि इन्
धर्मपत्नीतीन्द्र पत्न्याः श्रीशब्दवाच्यत्वावगमात्। अतस्तत्पत्नीकोऽक्ष्यन्तर्वर्त
नारायण एव । 'इन्द्रपत्नी व्यापिनी सुरसिदिहेति'। इन्द्रसूक्ते विष्णु
महींदेवीं माधवप्रियां विष्णुवल्लभामितिवत् प्रयोगाच्चेन्द्रशब्दो नारायण
संभवति। एवं च बृहदारण्यके अक्ष्यन्तर्वर्तिनो नारायणत्वात् य
ऽन्तरक्षिणि पुरुषोदृश्यत इत्येतदपि तत्परमेव । **तदेवमुपकोसल**
भगवत्परा ।

तथा **वैश्वानरविद्यापि** भगवता पुरुषोत्तमेन परिष्कृता तदुपास्यस्य-द्युमूर्धत्वाद्याम्नानात् द्युमूर्धत्वादीनां 'चाग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौदिशः श्रोत्रे **वाग्विवृताश्च वेदाः** ।

'वायुः प्राणोहृदयं विश्वमस्य पद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मा', इति मुण्डकोपनिषदि भगवद्धर्मतया आम्नानादत्राग्निशब्दोद्युलोकपरः असौ लोकोऽग्निरिति श्रुतेः ।

> द्यां मूर्धानं यस्य विप्रावदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।
> दिशः श्रोत्रेविद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूत प्रणेता ॥
> यस्याग्निरास्यं **द्यौर्मूर्धा खं नाभिश्चरणौ** क्षितिः ।
> सूर्यश्चक्षुर्दिशः **श्रोत्रं तस्मै लोकात्मने नमः** ॥

इति महाभारतोपबृंहणदर्शनात् **मुण्डकोपनिषदश्च** भगवदेकान्तत्वं प्रथम-परिच्छेदे स्फुटमुपपादितम् । वैश्वानर विद्योपास्यस्य द्युमूर्धत्वादित्वं तु वैश्वानर जिज्ञासया समागतैः केकयेन पृष्टैरौपमन्यव सत्य यज्ञेन्द्रद्युम्न प्रभृतिभिः षड्भि**र्दिवमेव भगवो** राजन्नादि**त्यमेव भगवो** राजान्वा**युमेव भगवो राजन्नाकाशमेव भगवो राजन् पृथिवीमेव भगवो राजन्निति** प्रत्येकं स्वोपास्य वैश्वानर स्वरूपेवर्णिते मूर्धात्वेष **आत्मनश्चक्षुष्येव** तदात्मनः **प्राणस्त्वेष आत्मनः सन्देहस्त्वेष आत्मनस्तिस्तेष आत्मनः पादौत्वेतावात्मन** इति द्युलोकादित्यावाय्वाकाश पृथिवीनां मूर्धत्व चक्षुष्ट्व प्राणत्व मध्यतायत्व मूर्धस्थानत्व पादत्ववर्णनादवगम्यते । किंच "पुरुषमपि चैनमधीयत" इति सूत्रखण्डोपात्त पुरुषशब्द वाच्यत्व हेतुरपि स एषऽग्निर्वैश्वानरो यत्पुरुष इति बृहदारण्यवाक्यस्थो, नारायणस्य वैश्वानरस्य विद्यावेद्यत्वमावेदयति । न च पुरुषशब्दवाच्यत्व हेतुश्चेतनत्वमात्रावेदनेनापि चरितार्थ इति वाच्यम् । **अत एव न देवता भूतं** चेत्युत्तर सूत्रे देवता विशेषस्य तथात्व निवारणा-यातः शब्देन परामर्शानुपपत्तेः । न चासंभवादिति हेतुरेवातः शब्देन परामृश्यत इति युक्तम् । तथा सति देवताविशेषपरत्वस्यापि पूर्वपक्षिणां

शङ्कितत्वेन तन्निराकरणासमर्थहेतूपन्यासस्य सूत्रकृतः चातुर्यावहत्वेन, पुरुषमपि चैनमधीयत इत्यस्याचेतनमात्रनिराकरणपरत्वकल्पनायोगात् तथात्वतुः सूत्रकारस्य पुरुषशब्दो न चेतनसामान्यशक्तिकः किन्तु परमात्मासाधारण इत्यभिमतमिति कल्पनाया एव युक्तत्वात्। अतो **नारायण एव वैश्वानर-विद्यावेद्यः**।

> अहं वैश्वानरोभूत्वा प्राणिनां देहमाश्रितः।
> प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥

इति भगवद्गीतावचनमप्यत्र प्रमाणमिति सर्वं सुस्थम्।

**एवं भूमविद्यापि** भगवत्प्रवणा। 'श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविद् सोऽहं भगवः शोचामि तंमा भगवान् शोकस्य पारं तारयत्विति प्रश्ने तं होवाचेत्यादिना शोकतरण हेतूपदेशप्रवृत्तस्य नामोपास्वेत्यनन्तरमस्ति भगवोनाम्नोभूय इत्यादिना प्राणोपदेशपर्यन्तं प्रश्नप्रतिवचनरूपेण परिदृश्य मानसन्दर्भस्यास्तिभगवः प्राणात् भूय इति प्रश्नादर्शनेऽपि 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादीभव'तीत्युक्तप्राणातिवाद्यपेक्षया एष तुवा अतिवदतीति सत्यातिवादिनोऽतिशय कथनात्। प्राणशब्दानिर्दिष्ट जीवापेक्षया सत्यशब्दनिर्दिष्टस्य भूयस्त्वस्य प्रतीत्या सत्यं ज्ञानमनन्तं ब्रह्मेति अनन्त शब्दसामानाधिकरण्यावगतनारायणोपस्थापनशक्तिमत्सत्य शब्दाभिहिते परि-समाप्त्यवगमादुत्तरत्र च 'यो वै भूमातत्सुखं नाल्पे सुखम'स्तीति प्रचुरसुख-रूपत्वप्रतिपादनेनानन्दमयत्वप्रतीतेश्च। तत्र च 'रसो वै सः। रसंह्येवायं लब्ध्वानन्दीभवति। को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यादि'ति विपुलसुखरूपत्वमिति विप्रतीयते। स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नीत्युच्यमानं स्वमहिम्नि प्रतिष्ठितत्वं च स्वतन्त्रचैतन्यं स्वमहिम्नितिष्ठमानं पश्यतीति मैत्रायणीय श्रुत्युक्त्या भगवद्धर्मः। अतो **भूमविद्या भगवत्परा**।

एवं **दहरविद्यापि** भगवदेकशीला। छान्दोग्ये 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्त-

न्वेष्टव्यमित्यन्वेष्टव्यस्य दहराकाशस्य एष आत्मा अपहतपाप्मा विजरो विमृत्युरित्यपहतपाप्मत्व श्रवणात् अपहतपाप्मत्वं च भगवद्धर्मः एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण इत्युक्तेः ।

नन्वपहतपाप्मत्वस्य प्रजापतिवाक्ये मुक्तेऽपि श्रुतत्वेन भगवदसाधारण्यं वक्तुं युक्तमिति चेन्न। परेणापि शिवादित्यमणिदीपिकायां अन्तस्तद्धर्माधिकरणे असंकुचित सकलपापराहित्यं तु परमेश्वर एव संभवतीति वदता तस्य परमसाधारणत्वाङ्गीकारात् अतिरोहितापहतपाप्मत्वस्य मुक्तसाधारण्याभावाच्च । प्रजापतिवाक्ये पूर्वं तिरोहितस्वरूपस्याविर्भूतस्वरूप कथनात् परमात्मनस्तु शरीरान्तरवस्थितस्यैव गुणाष्टक प्रतिपादनादतिरोहितमेवापहतपाप्मत्वमित्यवगम्यते । मौद्गलवाक्येऽपि 'यः पृथिवीमन्तरे सञ्चरन्नित्यारभ्य एष सर्वभूतान्तरात्मापहतापाप्मा दिव्यो देव एको नारायण' इत्याम्नानेन सर्वान्तरवस्थितस्यैव तच्छ्रवणादतिरोहितमेव तदित्यवगतमिति दहरविद्यावेद्यस्य नारायणत्वमपहत पाप्मत्वबलात् साधयितुं शक्यमेव ।

नन्वपहत पाप्मत्वं न नित्यासंस्पृष्टपाप्मत्वमशाब्दत्वात् । किन्तु प्रध्वस्तपाप्मत्वं तथा च कर्मसंबन्धस्य प्राग्विद्यमानत्वमेव ततोऽवगम्यत इति परमात्मधर्मत्वस्यैवासिद्धया कथं तद्बलान्नारायणस्य परमात्मत्वसाधनमिति चेत् उच्यते – परस्य तावत् पाप्माभावप्रतिपादकानि वाक्यानि विविधानि श्रूयन्ते । 'सर्वेभ्यः पाप्मभ्य उदित इति पाप्मभ्य उदयः श्रूयते । अपहतपाप्मेति पाप्मनामपहतिः श्रुता' 'नैतं सेतुमहोरात्रे तरतो । न जरामृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतोनिवर्तन्त इति तरतेः प्राप्तित्वादप्राप्तिर्निवृत्तिश्च श्रूयते । स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानिति कर्मफलास्पर्श उच्यते । तत्र प्रथममुदित शब्दस्य मुख्यार्थोऽनुपपन्नः । विभोः परस्य पाप्मान्वितदेशादूर्ध्वगमनायोगात् । तस्मादश्लेष लक्षणायुक्ता । तत्राकृत कर्माश्लेषस्य सर्वसाधारणस्य प्रतिपादनवैयर्थ्यं स्यात् । अतः कृतानामपि कर्मणामश्लेषपरत्वं तस्य वाक्यस्याभ्युपगन्तव्यम् । क्रियायाः कर्तृसमवेतत्वेन

स्वरूपाश्लेषस्य व्याघातादेव । फलाश्लेषपरत्वमाश्रयणीयं तत्र हेत्वकथनां-त्तिरोधानाविर्भावयोर्निष्प्रमाणकत्वाच्च तत्स्वाभाविकत्वं नित्याविर्भूतत्वं च सिद्धम् । अपहतशब्दश्च हिंसारूपधात्वर्थासंभवाद्विनाशंलक्षयन् क्रियास्वरूपस्य नश्वरतया स्वरूपनाशप्रतिपादन वैयर्थ्यात् फलजननशक्तिविशिष्टरूपेण नाशं प्रतिपादयन्ति । यथा —

'सर्वमेकपदेनष्टं दानमश्रोत्रिये यथा । इति नाशशब्दो दानस्य फलजननशक्तिहानिं प्रतिपादयति तद्वत्, अत ईश्वरेण कृतानि पुण्यपाप-जातीयानि कर्माणि न शुभाशुभफलाजननशक्तानिस्युः । ईदृशमपहतपाप्मत्वं च पूर्वोक्तं न्यायं निरुपाधिकं नित्याविर्भूतं चाभ्युपगन्तव्यम् । नासाधुना कर्मणा [illegible]साधुकर्म फलास्पर्शस्तत्प्रायश्चित्तरूप साधुकर्म निबन्धन इति शङ्का च साधुकर्म निषेधेनैव निरस्ता । न च साधुकर्महतिस्तस्यापि निर्वर्तक विद्याबलादिति शङ्कनीयम् । ध्यानकर्तृत्वानुक्तेः 'उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति ध्येयत्वश्रवणाच्च । साधुकर्म निषेधादेव ध्यानकर्तृत्वमपि निषिद्धम् । यज्ञादिकमुपासनात्मकं च कर्महि साधुकर्म शब्दाभिलापार्हम् । अतः प्रायश्चित्तादिभिर्विनैव कर्मफलाश्लेष इति अपहतपाप्मशब्दस्थो हन्ति धातुश्च हानिपरः न प्रध्वंसपरः । नैनं सेतुमित्यत्र कृतानामेव कर्मणां फलशक्तिमत्त्वविशेषेण प्राप्त्यभाव उच्यते । अतो निरुपाधिकमपहतपाप्मत्वं नाम कर्मवश्यतागन्धरहितत्वम् । न च परमात्मनि फलजननासमर्थस्यतत्कृत कर्मणस्तं प्रतिपाप्मत्वमिति श्रुतिवाक्यस्थ पाप्मशब्दस्यामुख्यत्वमिति वाच्यम् ।

अनन्तख्याति निर्वीर्यं जरयामास तद्विषम् । जपन्विष धरोहरः, इत्यादिषु निगीर्ण जीर्णविषानीश्वरान् प्रति विषशब्दस्यैव मुख्यत्वोपपत्तेः लोकेषु प्रत्यवायकरपाप सजातीयानां कर्मणां स्वलीलाकृतानामपि फलजननशक्ति प्रतिभटत्वं नाम कश्चिदयमीश्वरस्य स्वभावविशेषः । परिशुद्धात्मविषयस्यापहत पाप्मशब्दस्यायमेवार्थः स तु तस्य तिरोधानर्हः । प्रतिबन्धनिवृत्तावाविर्भूतः । ईश्वरस्यत्वतिरोधानार्हः । नित्याविर्भूत इति विशेषः अतोऽपहतपाप्मत्व-

वाक्यश्रुतीनां यथोक्त एवार्थ इति परमात्मत्व साधनसमर्थं नारायणधर्मत्वेन च इन्द्रेन्द्रान्नारायणोच्छेदसाधनसमर्थमिति **दहरविद्याया** भगवत्परत्वं ततः सिद्धमत्येव । किञ्च उत्तरत्र तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सत्तीयमिति । अथ यत्सत्तदमृतं अथ यत्तन्मर्त्यमथ यन्तेनोभावच्छतीति सत्य शब्द निर्वचनात्तस्य च ।

'सत्ये प्रतिष्ठितः कृष्णः सत्यमस्मिन् प्रतिष्ठितम् ।
सत्यासत्येच गोविन्दस्तस्मात्सत्यः सतां मतः ॥'

इत्युद्योगपर्वणि वासुदेवादिनामनिर्वचनमध्ये निर्वचनेन भगवत्परत्वावसायात् । अतः छान्दोग्योक्तदहरविद्यावेद्योनारायण एव । **एवं तैत्तिरीयोपनिषत्प्रति**-पाद्योऽपि दहरविद्यावेद्योभगवानेव ।

'दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दहं गगनं विशोकस्तस्मिन्यद(न्त)दुपासितव्यम् ॥'

इत्यत्र दहराकाशे विशोकत्व श्रवणेन अपहतपाप्मा विजरोविमृत्युर्विशोको-ऽविजिघत्सः इति वाक्योक्तविशोकत्वविशिष्टः छान्दोग्यदहराकाशैक्य प्रतीतेः । किञ्च दहं विपाप्मं परवेश्मभूतमिति हृदयपुण्डरीकस्य परवेश्मभूतस्य विपाप्मत्वोक्तिरपि तत्स्थस्यापहतपाप्मत्वमवगमयतीति तद्बलादपि नारायणत्वमवसीयते तैत्तिरीयके दहरविद्योपास्यस्य । ननूपक्रमे यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं सनो देवः शुभयास्मृत्या संयुनक्तु इति शिवस्य प्रस्तुतत्वात् कथं भगवत्परत्वाध्यवसाय इति चेन्न । शिवस्य हिरण्यगर्भजन्यत्वेन श्रुत्यन्तर प्रतीतस्य तज्जनकत्वोक्त्ययोगाद्धिरण्यगर्भनारायण-जन्यत्व प्रतिपादनेन तद्विरोधात् । यो देवानामित्यनुवादत्व द्योतकयच्छब्द-सत्वादनुवादकत्वप्रतीतेश्च । नारायण परत्वावगमेन रुद्रशब्दस्य रोदयतीति व्युत्पत्या भगवत्परत्वात् ।

नन्वेवमपि — यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।

तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥

इति महेश्वरपदघटित श्रुतिविरोधः कथं परिहरणीय इति चेन्न । वेदप्र
प्रणव प्रकृति भूताकारवाच्योद्देशेन महेश्वरत्व विधायकस्य तस्य अकारे
विष्णुरिति श्रुत्यन्तरे नारायणस्याकार वाच्यत्वावगमेन जुहूद्देशेन वि
मानस्य पर्णत्वस्य कपालगामित्वाभाववद्देवतान्तरगामित्वाभावात् ।
भगवत एव ह्यनेन दहर विद्योपास्यत्वं सिद्ध्यति तदुक्तं वेदार्थ
भगवता भाष्यकारेण—अणोरणीयानित्येतस्मिन्ननुवाके वेदाद्यन्तरूपतया
भूतप्रणवस्य प्रकृति भूताकार वाच्यतया महेश्वरत्वं प्रतिपाद्य दहरपुण
मध्यस्थाकाशतयोपास्यत्वमुक्तम् । अयमर्थः सर्वस्य वेदजातस्य प्रकृतिः
उक्तः प्रणवस्य च प्रकृतिरकारः प्रणव विकारो वेदः स्वप्रकृतिभूते
लीनः प्रणवोऽप्यकारविकारभूतस्वप्रकृतावकारे लीनः तस्य प्रणव
भूतस्याकारस्य यः परोवाच्यः स एव महेश्वर इति सर्ववाचकजा
भूताकार वाच्यः सर्ववाच्य जातप्रकृतिभूतनारायणो यः स महेश्वर इ
यथोक्तं भगवता —

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥

अक्षराणामकरोऽस्मीति अ इति ब्रह्मेति श्रुतिः । अकारोवै सर्व
च वाचकजातस्याकार प्रकृतित्वम् । वाच्य जातस्य ब्रह्मप्रकृतित्वं च श्रु
अतो ब्रह्मणोऽकारवाच्यतया प्रतिपादनादकार वाच्यो नारायण इति सि

यत्वत्र केनचिदुक्तम् — न तावत् यो देवानामिति मन्त्रो नार
अथर्वशिखायां शिवस्य ब्रह्मकारणत्व प्रतिपादनात्तदनुवादसंभवे रु
मुख्यार्थत्व कल्पनायोगात्तत्प्रतिपादनं क्वापि नास्तीत्यभिमानवतः यो
मित्यादेरनुवादत्व शङ्काया एवोत्थानानर्हत्वादेतस्यैव मन्त्रस्य स

ब्रह्मकारणत्वविधायित्वपर्यवसानात् । न हि प्रतीयमानार्थस्य - प्राप्तिमन्तरेण रूपवन्ध सहस्रेणापि शक्यते कल्पयितुमनुवादकत्वं नारायणस्य ब्रह्मकारणत्वं श्रुत्यन्तरसिद्धमिति चेन्न । शिवस्य ब्रह्मकारणत्वपरवचनस्य पुरोवादापेक्षायां नारायणस्य कारणत्वपर श्रुत्युपन्यासस्य व्यधिकरणत्वात् । न हि यदाग्नेय वाक्ये यदुपबन्धेऽपि ( जै. सू. 2-2-8 ) पुरोवादाभावाद्विधायकत्वोक्तौ

---

## आधाराद्याग्नेयादीनामंगांगिभावाधिकरणम् —

इदमाम्नायते – 'य एवं विद्वान्पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति । अत्र यजतिना कर्मान्तरं विधीयते, न तु प्रकृता आग्नेयादयः षड्यागा अनूद्यन्ते । आग्नेयादयश्च कालसंयुक्तास्तस्मिन् प्रकरण एवमाम्नायन्ते – 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति, 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति, 'ऐन्द्रं दध्यमावास्यायाम्' इति, 'ऐन्द्रं पयोऽमावास्यायाम्' इति । एतेभ्यः प्रकृतेभ्यः षड्भ्य आग्नेयादिभ्यो विद्वद्वाक्यविहितस्य, कर्मणोऽन्यत्वे सति पूर्वाधिकरणन्यायेन विध्यभ्यास उपपद्यते । न च कर्मान्तरे द्रव्यदेवतयोरभावः, ध्रौवाज्यसद्भावात् । अत एवोक्तम् —

> 'ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी ।
> रूपवन्तौ ततो यागौ विधीयेते पृथक्तया' इति ।

सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम् इति ध्रौवस्य साधारणत्वं श्रुतम् । देवताया मान्त्रवर्णिकत्वमित्थमुन्नेतव्यम् —

'तस्माद्वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्'

इति वार्त्रघ्न्यौ वृधन्वत्यौचर्चौ क्रमेण कालद्वयोपेते कर्मणि विधीयेते । तत्र– 'अग्निर्वृत्राणि जङ्घनत्' इत्येको वार्त्रघ्नो मन्त्रः, 'त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा' इत्यपरः । तयोरुक्तावग्नीषोमौ पौर्णमासदेवते । एवमनन्तर

सौर्यादिवाक्यमस्तीति प्रत्यवस्थानं शोभते। नारायणे रुद्रपदस्य लक्षणाभ्युपगमेन विरोध इति चेन्न । अग्न्यादिशब्दानामपि यत्किञ्चिदर्थे लक्षणायां तत्प्रापकं यत्किञ्चित् प्रमाणं संभवतीति यदाग्नेयादि वाक्यानामप्यविधायकत्व

---

माम्नातयोर्वृधि धातु युक्तयोर्मन्त्रयो रुक्तावग्नीषोमावमावास्या देवते। आभ्यां द्रव्यदेवताभ्यां रूपवत्त्वाद्यागान्तरमत्र विधीयते। षड्यागानुवादत्वे तदनुवादेन विधेयान्तरस्य कस्यचिददर्शनाद्विद्वद्वाक्यमनर्थकं स्यात् । न केवलं तदानर्थक्यम्, किन्तु 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्याया ममावास्यया यजेत' इत्येतदपि व्यर्थं स्यात् । न चैतत्कालविधायकम्, 'यदाग्नेयः' इत्याद्युत्पत्ति वाक्यैरेव तद्विधानात्। कर्मान्तरत्वे तु कालं विधास्यति। तस्मात्कर्मान्तरविधिः इति पूर्वः पक्षः ।

सिद्धान्तस्तु — आस्तां तावद्द्रव्यम् । देवता तु विधित्सितस्य कर्मान्तरस्य सर्वथा न लभ्यते। वार्त्रघ्नयोर्वृधन्वत्योश्चाऽऽज्यभाग देवता प्रतिपादकत्वात् । हौत्रे मन्त्रकाण्डे सामिधेनीरावाहननिगदंप्रयाजमन्त्रांश्चाम्नाय प्रयाजानन्तरभाविनोराज्यभागयोः क्रमेवार्त्रघ्नयौ वृधन्वन्त्यौ चाम्नाते । लिङ्गं चाग्निविषयं सोमविषयं च तत्रोपलभ्यते। ततो लिङ्गक्रमाभ्यामाज्यभाग विषयत्वमवगम्यते । यत्तु - 'वार्त्रघ्नी पौर्णमास्याम्' इत्यादि वाक्यम्, तल्लिङ्गक्रमक्लृप्तयोराज्यभागाङ्गयोर्मन्त्रयुगलयोः कालद्वये व्यवस्थामाचष्टे । न तु नूतनकर्माङ्गतामनयोर्विदधाति । अतो रूपराहित्याद्विद्वद्वाक्यं कर्मान्तरविधायकं न भवति, किं तर्हि - पूर्वप्रकृतेष्वाग्नेयादिषु षट्सु त्रिकरूपौ द्वौ समुदायावनुवदति। न च कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागानुवादानुपपत्तिः, तत्तत्कालविहितयोः यागत्रिकयो रुपलक्षितत्वात्। न चानुवादोव्यर्थः समुदाय द्वित्वसिद्धेस्तत्प्रयोजनत्वात्। तत्सिद्धौ च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्मिन्फलवाक्ये षड्याग विवक्षया द्विवचननिर्देश उपपद्यते। यदप्युक्तम् - अनुवादपक्षे 'पौर्णमास्याम्' इत्यादिवाक्य वैयर्थ्यम् — इति। तदयुक्तम्, कालविधानासंभवेऽप्येकस्य त्रिकस्य सहप्रयोग विधानात्।

प्रसङ्गात् अन्योन्याश्रयापाताच्च रुद्रशब्दस्य नारायणे लक्षणासिद्धौ वैयधि-करण्याभावात् नारायणाद्ब्रह्मा जायत इत्यादेः पुरोवादत्वसिद्धिः तस्य पुरोवादकत्वसिद्धौ पुरोवादानुसारेण तस्य तत्र लक्षणेति, तस्मात् प्राप्त्यसंभवे बहुपबन्धादीनां नानुवादलिङ्गत्वमिति न तद्बलादनुवादकत्व कल्पनं युक्तम्।

---

आग्नेयोपांशुयागाग्नीषोमीयाणां त्रयाणां पौर्णमासीकालविहितानां सहप्रयोगः 'पौर्णमास्या' इत्यनेन तृतीयैकवचनान्तेन विधीयते। एवमितरत्रापि। ननु - विद्वद्वाक्यस्य कर्मान्तरविधायकत्वाभावेऽपि नानुवादकत्वम्, तस्य याग-विधायकत्वाभ्युपगमात्। 'आग्नेयोऽष्टाकपालः' इत्यादिवाक्यानि तु विहित यागानुवादेन द्रव्यदेवता लक्षणगुण विधायकानि - इति चेत्। न, तथा सत्येकेन वाक्येनानेक गुणविध्यसंभवात्। प्रतिगुणं पृथग्विधौ विध्यावृत्तिः प्रसज्येत। आग्नेयादि वाक्यानां विधायकत्वे तु विशिष्टविधित्वान्नास्ति विध्या-वृत्तिदोषः। तस्मादाग्नेयादिवाक्यविहितानां विद्वद्वाक्यमनुवादकम्। किञ्चानु-वादत्वमनभ्युपगम्य कर्मान्तरविधिं वदतः प्रयाजादीनामाग्नेयादीनां च गुणप्रधान-भावो न सिद्ध्येत्। तथाहि – 'समिधो यजति' 'आघारमाघारयति' इत्यादयः कालयोगरहिताः केचिद्विधय आम्नातः। 'यदाग्नेयोऽष्टाकपालो-ऽमावास्यायां च पौर्णमास्यां च' इत्यादयः कालयुक्ता अपरे। तेषामुभयेषां प्रकृतत्वात् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ये सर्वेषां फलसंबन्धो बोधनीयः। दर्शपूर्णमासाभ्यां, इति द्विवचनं बहुवचनत्वेन परिणेतव्यम्। विद्वद्वाक्यविहिते द्वे कर्मान्तरे प्रयाजादयः आग्नेयादयश्चेति एतेषु द्वित्वासंभवात्। सर्वेषां च फलसंबन्धे राजसूयगतेष्टि पशुसोमवत्सम-प्राधान्यात्प्रयाजादीनां गुणभावो न स्यात्। तदभावे चानङ्गत्वात् सौर्यादि विकृतिष्वाग्नेयादीनामिवातिदेशो न स्यात्। अनुवादपक्षे तु त्रिकयोः काल-योगेन दर्शपूर्णमासशब्दार्हत्वात्, समुदायद्वित्वेन द्विवचनार्हत्वाच्चाऽऽग्नेया-दीनामेव फलसंबन्धेन प्राधान्यम्। प्रयाजादीनां तु गुणभाव इति नकोऽपि दोषः। तस्माद्विद्वद्वाक्यमनुवादकम्। (जै. सू. 2-2-3)

यदि तु द्वयोर्हिरण्यगर्भकारणत्वं न संभवेत्तदाश्रुतिविशेषश्रुतयोरुद्रनारायणपदयो-रन्यतरस्य लक्षणाया आवश्यकत्वात् । यदुपबन्धानुग्रहाय नारायणाद्ब्रह्मा जायत इति श्रुत्यनुरोधात् यो देवानामित्यत्र रुद्रपदस्यैव लक्षणोच्यत इति शङ्क्येतापि संभवति तु द्वयोरपि कल्पभेदेन कारणत्वम् । किञ्चैकस्मिन्नपि कल्पे तयोस्तत्कारणत्वं मातापितृभावेन संभवति नारायणस्यैव शक्तित्व व्यवस्थापनात् । तस्मात्सर्वथायं मन्त्रः शिवपर एव । अस्यायमर्थः —

'महर्षिर्महाद्रष्टा यः सर्वज्ञः सर्ववित् ।
अशेष विषयामोघशुद्धबुद्धि विजृम्भणे ॥'

इत्यादि श्रुतिस्मृतिप्रतिपन्नाशेषविषयबोधः । विश्वस्माच्चिदचिदात्मक प्रपञ्चा-दधिकः कृत्स्नस्य नियन्तृत्वात् । यो रुद्रः मुक्तानां संसारदुःखस्य द्रावको देवः देवानां मध्ये प्रथमं हिरण्यगर्भं पुरस्तात् कल्पादौ स्वसङ्कल्पेन स्वस्माज्जायमानं करुणा परिपूर्णया सकलभुवन सृष्टिसामर्थ्य वितरणविचक्षणया आज्ञादृष्ट्या अपश्यत्सदेवोऽस्मान् शुभया परमानन्द प्राप्तिकारिण्या 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति श्रुतिप्रसिद्धया स्वविषयया संयोजयत्विति ।

यत्त्वन्यथा व्याख्यानं महर्षियोगबलेन कालत्रयवृत्तान्त साक्षात्कार समर्थो रुद्रः स्वाविर्भावात् प्रागेव नारायणाज्जातं हिरण्यगर्भजायामानावस्था-विशिष्टं योगबलात् साक्षादकृतेति । तन्न – श्वेताश्वतरे —

'हिरण्यगर्भं जनयामास पूर्वं'

इति अस्य मन्त्रस्य पाठदर्शनात् । एवं चैतदनुरोधेन यस्मात्परमित्यनन्तर मन्त्रोपि शिवपर इति स्पष्टमेव ।

यच्च यद्वेदादाविति मन्त्रस्य नारायणपरत्वकथनं, तदप्ययुक्तम् । परमते शब्दानां भूतपञ्चकगुणत्वेन तन्मतेऽपि तेषामन्योन्यमुपादानोपादेय भावा-योगात् । प्रकृतिवाच्यत्वविवक्षायां तस्य या प्रकृतिः तस्या यः पर इति

वाच्यत्वेन तस्य प्रकृतिलीनस्य यः पर इति शब्दायोगाच्च कथं चिदुपपत्त्योगे-ऽपि अकारस्य प्रणव प्रकृतित्वे मानाभावाच्च ।

नन्वकारोवै सर्वावागिति श्रुत्या अकारस्य सर्वत्राव्ययप्रकृतित्वं प्रतिपद्यामहे, स एव तस्य प्रणव प्रकृतित्वमपि सिद्ध्यति । न चैवमोङ्कारेण सर्वावाक् संतृण्णेत्यपि श्रवणाद्वैपरीत्यं शङ्क्यम् । अकारस्य प्रणव इव तस्याकारे-ऽनुगमादर्शनेन तस्याः स्तुतिपरत्व कल्पनादिति चेन्न । मात्रा मात्राः प्रतिमात्राः कृत्वेति श्रुतौ अकारोकारमकारार्थमात्राणामुत्तरोत्तरस्य पूर्वपूर्वलयस्थानत्व विभावनेनार्धमात्राया एव त्रिमात्राप्रकृतित्व स्फुटीकरणादप्रकृतौ लयासंभवा-दकारोवै सर्वावागिति श्रुतेरग्निः सर्वादेवता इतिवत् स्तुतिपरत्वेनाप्युपपत्तेः । भागवते —

'समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।'

इति नादरूपार्धमात्रां प्रस्तुत्य ततोत्र प्रदोङ्कार इति तस्याः प्रणवप्रकृतित्वस्य कण्ठरवेणाभिधानाच्च , तस्मादस्य मन्त्रस्य पूर्वोक्तरीत्यार्थकल्पनेऽपि योऽर्धमात्रा वाच्यः समहेश्वर इत्यर्थः पर्यवस्यति , अर्धमात्रावाच्यश्च शिव एवेति स्पष्टीकृतमथर्व-शिखाविचारे । यद्यपि प्रणवप्रकृतिरकारः , तथापि — 'अकारो ब्रह्म विष्णवी शकमठेष्वङ्कुणे रणे' । इति कोशकारैरनेकार्थानुशासनादकारवाच्यस्य महेश्व-रत्वाभिधानं विष्णावेकान्तेन न पर्यवस्यति । अपिचास्यमन्त्रस्य विधान्तरेणा-ऽप्यर्थोत्प्रेक्षणसंभवान्न भगवत्परत्वाध्यवसानं सुशकम् । अग्निमीळे पुरोहितं योनिस्समुद्रो बन्धुः समानं परमित्येषु श्रुतानामकारोकारमकाराणां वेदादिमध्यान्तवत्व प्रसिद्धेरकारो वेदादौ प्रोक्तःस्वरः स एव तदन्ते प्रतिष्ठितः समानं परमित्यत्रोपान्त्यः ततः परं स्वराभावेन तस्यैवान्त्यस्वरत्वात्तस्य प्रकृति लीनस्य प्रकृतिः विष्णुर्वासुदेवः पराप्रकृतिरिति श्रुतेः प्रकृतिस्त्वं पुमान् रुद्र इति स्मृतेश्च तस्मिन् लीनस्य वाच्यवाचकभावेनाभेदं प्राप्तस्य ।

'वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित्'

इति वायुक्तेः । तस्य वेदान्त्य पाठगामित्वाभ्यर्हित भावाकारं वाच्य प्रकृतिरूपस्य विष्णोः यः परः प्रधानभूतः प्रकृतिस्त्वं पुमान् रुद्र इति वचनसिद्धो रुद्रः ततस्तदालोकनतत्पराणामित्यादौ परशब्दस्य प्रधाने प्रयोगात् समहेश्वरः स रुद्रो महानीश्वर इति ।

अथवा अस्य मन्त्रस्य यजुर्वेद पठितत्वाद्वेदो यजुर्वेदः तस्यादौ पठितः स्वर इकारः स एवतावदन्ते प्रतिष्ठित एव तपतीति प्रकृतिर्लक्ष्मीः,

'तत्र श्रीरभवद्देवी कमलायतलोचना'

इत्युपक्रम्य मूलप्रकृतिरव्ययेति कौर्मेप्रयोगात् तस्यां वाच्यवाचकभावेन...कमला दीर्घभावं प्राप्तस्येति यावत् ईकारस्य लक्ष्मीवाचकत्वात् । तस्य यः परः पश्चाद्भावी तस्मात् उत्तरो वर्णः स महेश्वरः उकारवाच्यो महेश्वर इति । तस्मात् स्वतन्त्रोत्प्रेक्षणेऽर्थव्यवस्थित्यसिद्धेरैदम्पर्यावधारणाय प्रकरणादिक-मुपासनीयम् । प्रकरणं च शिवराघवसंवादे त्रिपुण्ड्धारणाङ्गभस्म-संपादने शैवे कर्मणि विनियुक्तेन धातुः प्रसादान्महिमानमीशमिति शिवनामाङ्कितेन अणोरणीयानिति मन्त्रेणोपक्रमान्मध्ये यो देवानामिति मन्त्राम्ना-नाच्च शिवविषयमवसीयते । धर्मपरः स महेश्वर इत्यत्र महेश्वरशब्दस्य रूढि शक्त्यादनादितस्य परस्य स्ववाच्य शिवरूपताविधौ तात्पर्यं निश्चीयते । अतो विधित विधेयानुरोधेनैवानेकधा योजयितुं शक्यस्यानुवादभागस्य योजन-मुचितम् । यस्योभावग्नीदनुगतावभिनिम्रोचेदभ्युदीयाद्वा पुनराधेयं तस्य प्रायश्चित्तिमित्यत्र हविरार्त्यधिकरणन्याये (जै॰ सू॰ 6-4-6)

---

## एकहविरार्तावपि पंचशरावनिर्वापाधिकरणम् —

दर्शपूर्णमास्योर्दोहौ प्रकृत्य श्रूयते — 'यस्योभयं हविरार्तिमार्छेत् — ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति । सोऽयं यागो दोहद्वयक्षयं निमित्ती-कृत्यानुष्ठेयः । नत्वेकदोहक्षयम् । कुतः — उभयशब्दस्य श्रुतत्वात् । आर्ति-शब्दविशेषणत्वेन श्रूयमाणो हविश्शब्दो यथा विवक्षितार्थः, तथा हविःशब्द

न्दग्निद्वित्वस्याविवक्षया एकैकाग्न्यनुगमस्यापि पुनराधेयनिमित्ततयानुवादप्रतीते-
र्व्यवस्थितत्वेऽप्यग्निद्वयोत्पादकतया वाक्यान्तरावगताधानाभ्यासरूपस्य विधेयस्य
पुनराधेयस्य एकाग्निमात्रोत्पादनाक्षमतया विधेयानुरोधेनानुवादभागेऽग्नि द्वित्व
विवक्षायाः '**पुनराधेयमोदनवदित्य**'धिकरणे निर्णीतत्वेनाव्यवस्थितानु-
वादार्थ प्रतीतिस्थले विधेयानुरोधेनानुवादार्थवर्णनौचित्यस्य कैमुतिकन्याय
सिद्धत्वादिति सर्वथा शिववैभवपर एव मन्त्रः। अक्षरार्थोऽप्यस्य – वेदादौ
यः स्वरः प्रोक्तः प्रणवप्रतिपाद्य प्रतिपादकाभेदोपचाराल्लक्षणया तत्प्रतिपाद्यं
निर्विशेषं ब्रह्म तदेव वेदान्तभागे च प्रतिष्ठितं वेदान्तभाग प्रतिपाद्यत्वात्तस्य
प्रकृतावविद्याख्यायां प्रतिबिम्बभावेन लग्नस्य प्रकृतिसहितस्य पुरुषस्य यः परः
नियन्तृत्वेन प्रधानभूतः प्रधानक्षेत्रज्ञ पतिर्गुणेश इत्यादि श्रुतिप्रसिद्धः स
महेश्वर शब्दित श्रीसदाशिव एव न देवतान्तरमिति स्वीकार्यम्। एवं चोपक्रमोप-
संहार परामर्शैः शिवपरत्वेन निर्णीते अणोरणीयानित्यनुवाके विधीयमाना
दहरविद्या शिव दैवत्यैवेति नात्रोपास्यतया देवतान्तरान्वयावकाश इति। अपि
च **कैवल्योपनिष**दाख्यात गुणनिकर प्रत्यभिज्ञानादप्यस्यास्तदेकविषयत्व-
मवसीयते, तथाहि स्पष्टं तावदुपासनास्थानसाम्यं तथोपास्यरूपमपि तत्र
उमासहायमित्यादिना प्रतिपादितम्। इहापि तथैवोपवर्णितम्। ऋतं
सत्यमित्यादिमन्त्रेण विरूपाक्ष कृष्णपिङ्गलपदयोस्त्रिलोचनोमासहायपद समानार्थ-
त्वाद्विरूपाक्ष विश्वरूप श्रुतिभ्यां – '**नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम्**'

---

*विशेषणस्योभय शब्दस्यापि विवक्षितार्थत्वादुभय हविरार्तिरेव* निमित्तम्। इति
पूर्वपक्षः।

सिद्धान्तस्तु – मैवम्। आर्तिमात्रोपन्यासे साकाङ्क्षत्वान्निमित्तं न
पर्यवस्यतीति हविः शब्दार्थो विवक्षितव्यः। तावतैव निमित्तस्य पर्यवसितत्वादुभय
शब्दार्थो न विवक्षितः। हविरार्तिमात्रस्य निमित्तत्वे सति सायंदोह
प्रातर्दोहाख्योरुभयोर्निमित्तत्वं सिद्धमेवात्रोभयशब्देनानूद्यते। तस्मात् – एकनाशे
द्वयनाशेऽप्यसावोदनो निर्वपणीयः। (जै. सू. 6-4-6)

**इति कौर्मे** शिवनमस्कारे विनियोगविधानाद्**बोधायन सूत्रे** 'अथातो महादेवस्य पादोदकविधिं व्याख्यास्याम इत्युपक्रम्य ऋतं सत्यमिति मन्त्रेण प्राशयेदिति शिवपादोदक प्राशने विनियोगाच्च शिवपरत्वेन निश्चितेऽस्मिन्मन्त्रे-श्रुतस्य तथैवार्थवर्णस्य न्याय्यत्वाच्च, ऊर्ध्वरेता इत्यत्र ऊर्ध्वज्वलनात्मक कृशानुरेतस्त्वोक्तेः । न चास्य मन्त्रस्य शिववैभवपरत्वेऽपि दहरोपासनाया-मुपास्यरूपमर्पणपरत्वे न मानमिति वाच्यम् । तस्यामपेक्षितोपास्यरूपसमर्पण क्षमस्याकाङ्क्षानुरोधेनान्वयस्यावश्यम्भावात् । अतोऽस्याः दहरविद्यायाः शिवपरत्वमेवोपपन्नम् ।

नन्वेवं कथं मध्ये नारायणकीर्तनपराणां सहस्रशीर्षं देवमित्यादि मन्त्राणां सङ्गतिरिति चेन्न । नारायणान्तरत्वेन शिखोपासनार्थत्वेन मध्ये नारायण कीर्तनस्य तत्पराणां मन्त्राणां सुसङ्गतत्वात् । यद्वा - स ब्रह्मा स शिव इति कैवल्यश्रुतिप्रत्यभिज्ञानुरोधात् तस्याः शिखायाः मध्ये परमात्मा व्यवस्थित इत्यादि प्रागुपास्यत्वेनोपदिष्टमहेश्वरमेव, मध्ये नारायणकीर्तनं तु प्रथमं नारायणात्मना स्वात्मानमनुसन्धाय स्वहृदम्बुजे वैश्वानराग्निशिखामध्य-वर्तित्वेन ध्यातव्यः परमशिव इति ध्यानप्रकारकल्पनादुपपन्नम् । प्रथमं नारायण गुणकीर्तनमनन्तरं हृदयकमलस्य ततो महाग्नेस्ततस्तच्छिखायास्ततः प्रागुपास्यत्वेनोपदिष्ट परमात्मन इति क्रमदर्शनादेवं ध्यान प्रकार कल्पनस्यो-चितत्वात् ।

नन्वेवं नारायणपरब्रह्मेति कण्ठोक्त्या परब्रह्मभावेनोपदिष्टस्य नारायणस्य कथमन्योपसर्जनभावः कथ्यते । नैष दोषः नारायणपरमित्यस्य समानपदत्वे तत्त्वं ब्रह्म नारायणात् परं ज्यायः नारायणस्तु परः तदन्य इतीत्यत्रैव ऋतं सत्यं परं ब्रह्म इत्युपास्यत्वेन निर्दिष्टस्य परब्रह्मणः शिवस्य च नारायणस्य च विवक्षित प्रधानोपसर्जनभावोपपादनपरतयैव तन्मन्त्रव्याख्यानोपपत्तेः ।

ननु **महोपनिषदि** समान प्रकरणे नारायणः परं ब्रह्मेति पदविच्छेदे-नाध्ययनदर्शनात्तदनुरोधेनापि भिन्नपदस्य नारायणेत्यस्य सुपां सुलुगित्यादिना

ञ्चम्या विभक्तेर्लुगादेशस्य कल्पनीयत्वात् । समस्तपदत्वेऽपि **निषादस्थपति-न्यायेन** ( जै. सू. 6-1-13 ) सामानाधिकरण्य एवोचितत्वात् ।

अहमेव परं ब्रह्म परतत्वं पितामह: ।
अहमेव परं ज्योति: परमात्मा त्वहं विभु: ॥

इति **लैङ्गे** उपबृंहणदर्शनाच्च । नारायणस्यैव परब्रह्मभावप्रतिपादनपरोऽयं मन्त्र इति चेन्न । महोपनिषद्येतन्मन्त्राम्नानस्यैव तावत्संप्रदायक्रमागतेषु कोशेष्वनुपलम्भात् । तत्र तत्सत्त्वेऽपि नारायणानुवाकपाठानुरोधेन महोपनिषत्पाठ एव सुपां सुलुगित्यादिना पञ्चम्या: स्वादेशकल्पनोपपत्ते: । समर्थपरिभाषानुरोधेन सामानाधिकरणसमासस्याप्यसङ्गतत्वात् । लक्षणविरुद्धात् कर्मधारयात्तदनुरोधिन: पञ्चमीतत्पुरुषस्याभ्यर्हितत्वात् । त्वत्पक्षे अस्मिन् मन्त्रे ब्रह्मपरशब्दयो: पुलिंगयोस्तत्वंज्योतिर्विशेषणत्वस्याप्यन्याय्यत्वात् । अहमेव परं ब्रह्मेत्यादिलैङ्गश्रुतनारायणवचनस्य महालिङ्गप्रादुर्भावात् पूर्वं ब्रह्म नारायणयो: परस्परोत्कर्ष विवादप्रस्तावे पठितस्यानन्तरतद्विवाद प्रशमनार्थोद्भूतमहालिङ्ग-मध्यसंनिहितस्य शिवस्य ।

---

## निषादस्थपत्यधिकरणम् —

'वास्तुमयं रौद्रं चरुं निर्वपेत्' इति प्रकृत्य श्रूयते – 'एतया निषादस्थपतिं याजयेत्' इति वास्तुशब्द: किञ्चित्प्रकृतिद्रव्यविशेषमाह । एतस्यामिष्टावधिकारी स्थपतिशब्दवाच्यस्त्रैवर्णिक: । कुत: - ' निषादानामधिपति: ' इति षष्ठी समासस्य त्रैवर्णिके संभवात् । तस्यचाधीत वेदत्वेन विद्यासंभवाच्च । इति पूर्वपक्ष: ।

सिद्धान्तस्तु – मैवम् । 'निषादश्चासौ स्थपतिश्च' इति कर्मधारय समासस्य मुख्यत्वात् । षष्ठी समासे तु संकीर्णजाति विशेषवाचिना निषाद शब्देन तत्संबन्ध उपलक्ष्येत । न त्वयं कर्मधारये दोषोऽस्ति । ततस्तात्कालिकाचार्योपदेशादिना विद्यां सम्पाद्य धनिको निषादो रौद्रयागं कुर्यात् । ( जै. सू. 6-1-13)

पश्यतं मां महादेवं भयं सर्वं विमुच्यताम् ।
युवां प्रसूतौ गात्राभ्यां मम पूर्वं महाबलौ ॥
त्रिधाभिन्नोऽस्म्यहं विष्णो ब्रह्मविष्णुभवाख्यया ।
सर्गरक्षालयगुणैः निष्क(ल)ः परमेश्वरः ॥

संमोहं त्यज विष्णो त्वं इत्यादिभिर्वचनैस्तत्रैवापोदितस्य तथात्वाव्यवस्थापकत्वात् तादृशापवादरहितेन ।

स परः सर्वशक्तीनां ब्रह्मणः समनन्तरः ।

इति **विष्णुपुराणवचनेन** ब्रह्मापरत्वस्यैवोपबृंहितत्वाच्च, परोक्तार्थ ग्रहणेऽपि **नारायणं परं ब्रह्म**, ऋतं सत्यं परं ब्रह्मेति द्वयोः परभावोपदेशासंभवेनावश्यके कस्यचिदन्यथानयने '**अङ्गगुणविरोधाधिकरण**' (जै. सू. 12-2-9) न्यायेन गुणभूतस्य नारायणस्य परभावोपदेशस्य ब्रह्मेत्युच्यते । 'परमसौ परम च तत्वमिति श्लोकेन सुदर्शनाचार्यैरुपदिष्टयोरन्यथानेयत्वेन तद्बलादुपक्रमादि प्रतिष्ठापितार्थ व्याकुलीकरणायोगाच्च '**अङ्ग गुणविरोधे च तादर्थ्यादि त्यधिकरणे** एकाहादिदीक्षापक्षेषु दीक्षणीया सोमयागयोरन्यतरस्यासंभवात् ।

---

## अंगगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम् —

'य इष्टया पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इति श्रूयते । तत्र – अङ्गभूताया दीक्षणीयेष्टेः प्रधानभूतायाः सुत्याया श्चैकमेव पर्वदिनं वचनाद्भासते । तच्च विरुद्धम्, 'एका दीक्षातिस्र उपसदः, पञ्चमी प्रसुतः' इत्युपसद्भिस्तयोर्मध्ये व्यवधानावगमात् । तत्र पूर्वोक्ताम्ना यैणन्यायेनेष्टेः प्रथमपठितत्वादीक्षणीयेष्टिः पर्वण्यनुष्ठेया । तदनुसारेण दिनान्तरे सुत्याया उत्कर्षः । इति पूर्वपक्षः ।

सिद्धान्तस्तु – प्रधानत्वात्सुत्यैव दर्शेऽनुष्ठेया । तदनुसारेण शेषभूता दीक्षा दिनान्तरेऽपकृष्यते । (जै. सू. 12-2-9)

**वाक्ष्याद्** वाक्य प्राप्त पर्वकालत्वस्यावश्यकेत्यागे प्रधानानुग्रहस्योचितत्वादीक्षणीया त्याग इति निर्णीतं तस्मान्न कश्चिदुपपादितेऽर्थे विरोधगन्ध इति ।

**अत्राचक्ष्महे** – न तावत् तैत्तिरीयोपनिषदि दहरविद्योपास्यत्वं शिवस्य सिद्धमिति त्वया वक्तुं शक्यम् । **सहस्रशीर्षं** देवमित्यस्य दहरविद्याप्रकरणाविच्छेदानङ्गीकारेण तत्र च **नारायण महिमवर्णनदर्शनेन** तस्यैवोपास्यत्वकल्पनाया युक्तत्वात् ।

न च अणोरणीयानित्यनुवाके — धातुः प्रसादान्महिमानमीशं, विश्वाधिको रुद्रो महर्षिः, यः परः स महेश्वरः इति शिववाचक शब्दाम्नानारुद्रस्योपास्यत्वकल्पनं युक्तम् । उपक्रमस्थत्वेन प्राबल्यादिति वाच्यम् । पुनः पुनरावृत्तनारायणपद **हरि पुरुषाच्युतपदानां भूयस्त्वेन** प्राबल्याच्छिवोपस्थिति बाधात् । तदुक्तं व्यासार्यैः **अन्तर उपपत्तेरित्यधिकरणे** उपक्रमस्थमेकं चरममुपरितनानेक **गुणविरोधे दुर्बलमिति । पूर्वतन्त्रेऽपि ऐन्द्राग्न एकादश** कपालः प्राजापत्यं दधिमधुघृतमाप इति पञ्चानां हविषामाद्ययोरैन्द्राग्न सान्नाय्य विकारत्वेनामावास्याविध्यन्त प्राप्तावुपांशुयाजविकाराणां मधूदकघृतानां चरमत्वेऽपि भूयस्तया तदनुग्रहाय पौर्णमासविध्यन्त इति निर्णीतम् । **विप्रतिषिद्ध धर्माणां समवाये** भूयसां **स्यात्सधर्मत्वमित्यत्र**, तथा च नारायणस्योपास्यत्वं त्वत्पक्षे दुर्निवारम् ।

नन्वेवं सहस्रशीर्षमित्यस्य सर्वविद्या **वेद्यनिर्धारणपरत्व पक्षे** दहरविद्या विधायक वाक्यैकार्थाभावेनोपक्रम श्रुत शिवोपास्यत्व **प्रसङ्ग इत्यादिरिति** चेन्न । अणोरणीयानिति मन्त्रस्य कठवल्लीषु पठितत्वेन **तत्प्रत्यभिज्ञया** भगवत एवोपस्थितेः ईशमित्यस्य कबन्ताजन्तसाधारण्येनाजन्तत्वे **ऽप्यर्थस्तथैव** प्रयुक्तथा तन्निबन्धनसाधारण्येन च कांस्यभोजिन्यायेन भगवति वृत्युपपत्या प्रत्यभिज्ञाबाधनासमर्थत्वेन शिवोपस्थापकत्वसिद्धेः । रुद्रशब्दस्यापि हिरण्यगर्भजनके प्रत्युक्तत्वेन भगवत्परस्य वक्ष्यमाणत्वात् तेनेदं पूर्णं पुरुषेण सर्वमित्यत्र पुरुषशब्दरूढ्या भगवत उपस्थित्या तस्यैवोपास्यत्वस्य कल्पयितुं युक्तत्वेन

शिवस्योपास्यत्व कल्पनायोगात् । महेश्वरशब्दस्तूपक्रमश्रुतपुरुषशब्दविरोधादकार वाच्य नारायणे प्रयुक्तत्वाच्च न देवतान्तरोपस्थापकः । न च दहरविद्या प्रकरणान्वयित्व पक्षेऽपि सहस्रशीर्षमित्यादीनां प्रमाणपाठस्यान्यथासिद्धिवर्णीन संभवान्न तद्बलान्नारायणस्योपास्यत्वकल्पनं युज्यत इति वाच्यम् । तदन्यथासिद्धिवर्णनस्य शिवोपस्थापक प्राबल्य निबन्धनत्वेन तदसिद्धौ स्वरसिद्धार्थपरित्यागेनान्यथा कल्पनाया अनुन्मेषात् ।

यत्तु शिवस्योत्पत्तिशिष्टतया तदवरुद्धायामुपासनायां नान्यस्य संबन्ध इति तत्तुच्छम् । तत्रापि दहं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमित्युपासनाविधायक वाक्ये शिवप्रतिपादनादर्शनेन तस्योत्पत्ति शिष्टत्वासिद्धेः । न च यच्छब्दस्य संनिहित परामर्शित्वाच्छिवस्य च पूर्वं विश्वाधिको रुद्रो महर्षिरित्युक्तया संनिहितत्वादुत्पत्तिशिष्टत्वमिति वाच्यम् । अस्यच्छान्दोग्ये दहरविद्याविधायक वाक्यैकार्थ्यावश्यम्भावेन तस्य च दहर उत्तरेभ्य इत्यधिकरणे भगवत बादरायणेन दहराकाश ब्रह्मत्वतात्पर्यकत्ववर्णनेनात्रापि तथात्वस्य वक्तव्यतयान्तर्वर्ति ब्रह्मत्वतात्पर्यस्य वक्तुमशक्यत्वात् । न च छान्दोग्यवाक्यस्याप्यन्तर्वृत्ति ब्रह्मत्व तात्पर्यकत्वमेवेति वाच्यम् । उत्तर सन्दर्भविरोधात् । तथा हि तस्मिन्यदन्तरित्यनन्तरं किं तदत्र विद्यते यदन्वेष्टव्यमिति प्रश्ने यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति दहराकाशस्यातिमहत्त्वमभिधाय उभे अस्मिन् द्यावापृथिवी अन्तरे समाहिते उभावग्नीति पुनरन्यस्मिन्निति तदेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यच्चास्यास्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय देहावयवभूत हृदयान्तर्वर्तिनोऽपि दहराकाशस्य देहस्य जराप्रध्वंसादौ सत्यपि निर्विकारत्वमुक्त्वा तत एव एतत्सत्यं ब्रह्मपुरमिति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिल जगदाधारभूतमित्युपपाद्य अस्मिन् कामाः समाहिता इति दहराकाशमस्मिन्निति निर्दिश्यते । एषां दहराकाशस्यान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूत कल्याणगुणविशिष्टत्वं तस्यात्मकत्वं च एष आत्मापहत-

पाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्य कामः सत्यसङ्कल्पः इत्यनेन स्फुटीक्रियते । अत्र दहराकाशान्तर्वृत्तित्वेन प्रतिपाद्यमानस्यापहतपाप्मत्वादिकल्याणगुणजात रूपत्वमवगम्यते किं तदत्र विद्यते यदन्वेष्टव्यमिति प्रश्नस्य अस्मिन् कामाः समाहिता इति ह्युत्तरम् । अस्मिन्नित्यनेन दहराकाश एव परामृश्यते । काम्यमानाश्च अपहतपाप्मत्वादय इति उत्तरवाक्य बलादवगम्यते । न चैतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता इत्युक्त्या ब्रह्मपुरपरामर्शादिं शब्दवाच्यम् । तथापि **निषादस्थपत्यधिकरणन्यायेन** कर्मधारयस्याभ्यर्हितत्वेन ब्रह्माख्यपुरप्रतिपादकाकाशपरत्वात् । न च कर्मधारयेऽप्याकाशपरत्वं कुत इति वाच्यम् । यावान्वा अयमाकाश इति प्रस्तुतमाकाशमस्मिन्निति परामृश्य सर्वं तदस्मिन् समाहितमिति सकलभोग्याधारत्वोक्त्यनन्तरम् अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितम् । सर्वाणि च भूतानि सर्वे च कामा-यदैतत् जरामाप्नोति प्रध्वंसते वा किं ततोऽपि शिष्यत इति तस्याधारत्वानुपपत्तौ शङ्कितायां 'नास्य जरयैतत् जीर्यति न वधेनास्य हन्यते' एतत्सत्यं ब्रह्मपुरमिति तत्समर्थनार्थं प्रवृत्तब्रह्मपुरशब्दस्याकाशपरत्वावश्यम्भावात् । न च ब्रह्मपुरशब्दस्याकाशपरत्वेऽपि षष्ठीतत्पुरुषमाश्रित्य परमाकाशपरत्वोपपत्त्या दहराकाशातिरिक्त ब्रह्मतात्पर्यत्वेऽपि सर्वमुपपद्यत इति वाच्यम् । तदानीमस्मिन् कामाः समाहिताः इत्यत्र कामशब्दः किं परमात्मपरः उत द्यावापृथिव्यादिपरः, नाद्यः, बहुवचनान्तत्वात् आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानिति भेदनिर्देशाच्च ।

न द्वितीयः – परमात्मगुणाधारतया प्रतीयमानस्य परमात्मात्तावापत्तावस्मत्पक्षपरिग्रहप्रसङ्गात्, न हि परमात्मगुणानां धर्मी परमाकाशः । नापि तृतीयः - उपास्य रूपतदन्तर्वृत्ति प्रश्नस्योत्तरत्वायोगात् । अन्तर्वृत्ति प्रश्नस्योत्तरमेष आत्मेति वाक्यमितिचेन्न । एकवचनान्तस्यैतच्छब्दस्य ब्रह्मपुरविषयत्वेन तदन्तर्वृत्तिविषयत्वायोगात् । एतेन शक्तिविशिष्टस्य शिवस्य ब्रह्मत्वादन्तरन्वेष्टव्यस्य ब्रह्मत्वेऽपि दहराकाशरूपचिच्छक्तिगतत्वेनापहतपाप्मत्वादिपरमात्मगुणप्रतिपादनोपपत्तिरिति निरस्तम् । तस्मिन्यदन्तस्तदन्वेष्टव्यमिति प्रश्ने चिच्छक्ति

गुणकथनस्य व्यधिकरणत्वप्रसङ्गात् । न च भवत्पक्षे तस्मिन् यदन्तस्त-दन्वेष्टव्यमिति दहराकाशातिरिक्तस्यैवान्वेष्टव्यत्वं कथमुपपद्येतेति वाच्यम् । उत्तरत्र अथ य इहात्मानमनुविद्यव्रजन्त्येतांश्च सत्यान् कामानिति प्रतिपादनदर्शनेन तदन्वेष्टव्यमित्यस्योभयान्वेष्टव्यतापरत्वात् । अतश्छान्दोग्यवाक्यैकार्थ्याय तस्मिन् यदन्तस्तदुपासितव्यमित्यस्यापि कल्याणगुणपरत्वेन संनिहितशिवोपस्थापकत्वा-सिद्धेः [illegible]स्योत्पत्तिशिष्टत्वम् । अस्तु वा आकाशान्तर्वर्तिन एव ब्रह्मत्वपक्षः [illegible] शिवस्योत्पत्ति शिष्टत्वम् । यो देवानां प्रथममित्यनन्तरं यस्मात् परं नापरमस्ति किञ्चिदित्यस्याम्नानेन तत्प्रतिपाद्यस्य पुरुषशब्दार्थस्यैवा-[illegible]हितत्वात् । तेनेदं पूर्णं पुरुषेण सर्वमिति पुरुषस्य सर्वान्तर्वृत्तित्वकथनेन [illegible]न्तरिति यच्छब्दस्य तत्परत्वौचित्याच्च । न चोपक्रमगतेशरुद्र-[illegible] पुरुषशब्दो लक्षणया शिवपर इति वाच्यम् । महिमान-[illegible]न्यथासिद्धेरुक्तत्वात् । विश्वाधिको रुद्रोमहर्षिः हिरण्यगर्भं पश्यत जायमानमिति हिरण्यगर्भजनके प्रयुक्तत्वेन प्रसिद्धरुद्रपरत्वासंभवात् । प्रत्युत भगवदुपस्थापन एव स्वरसत्वाच्च । न च हिरण्यगर्भजनकत्वं शिवस्याप्यस्त्विति वाच्यम् । तस्य विरूपाक्षाय ब्रह्मणः पुत्रायेत्यादिषु हिरण्यगर्भजन्यत्वेनावगमात् ।

ननु हिरण्यगर्भजन्यत्व तज्जनकत्वयोः कल्पभेदमादायोपपत्तिरिति चेन्न । तथा सति शास्त्रद्वयस्य विकल्पप्रसङ्गात् तदपेक्षया रुद्रशब्दस्य नारायणे लक्षणाङ्गीकारस्य युक्तत्वात् । तथैव पर्युदासाधिकरणे महापितृयज्ञानूयाज-योश्योचदक वचनप्राप्तयोरार्षेयवरण येयजामहकरणयोर्नार्षेयं वृणीते नानूयाजष्विति वचनाभ्यां विधीयमानयोस्तत्प्रतिषेधयोश्च विकल्पः उतनियमेन वर्जनं तथा **नार्षेयं वृणीते नानूयाजेष्विति प्रतिषेधः** उत पर्युदास इति संशय्य प्रतिषेधे श्रुतिवृत्तत्वं पर्युदासे च नानूयाजेष्वित्यत्र कल्पान्तराणां नार्षेयं वृणीत इत्यत्राङ्गान्तराणां च लक्षणीयतया लक्षणाप्रसङ्गः । न च श्रुतिसंभवे लक्षणा युक्ता । एवं च निषेधकस्य प्राप्तिपूर्वकत्वात् शास्त्रप्राप्तस्य शास्त्रेण बाधा-योगाद्विकल्प इत्येवं पूर्वपक्षं प्रापय्य यतः प्रतिषेधे विकल्पः अत एव शास्त्रस्य पाक्षिकत्वप्रसङ्गः तदपेक्षया लक्षणैव ज्यायसी तथा च पर्युदासत्वाश्रयणमेव

युक्तमिति सिद्धान्तितत्वात् । एतेन परमशिवस्य हिरण्यगर्भजनकत्वं संभवतीति निरस्तम् । हिरण्यगर्भस्य नारायणजन्यत्व प्रतिपादकवचनविरोधात् । कल्प-भेदेन तज्जनकत्व कल्पने तु शास्त्रद्वयस्य पाक्षिकत्वप्रसङ्गस्यापरिहारात् । न च हिरण्यगर्भस्य रुद्रजन्यत्व प्रतिपादकश्रुत्यनुसारात् नारायणजन्यत्व प्रतिपादक-वाक्य एव लक्षणेति वैपरीत्यमेवास्त्विति वाच्यम् । हिरण्यगर्भस्य नारायण-जन्यत्व प्रतिपादक श्रुतीनां भूयस्त्वात्तस्य रुद्रजन्यत्व प्रतिपादकवाक्येऽनुवादत्व द्योतक यच्छब्दसत्वात् । कथं तर्हि भवतां कल्पभेदेन नारायण हिरण्यगर्भयो रुद्रजनकत्वाङ्गीकार उपपद्यत इति चेन्न । उभयत्रानन्यथासिद्धवचनसत्वेनो-भयाङ्गीकारात् ।

क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गे संभूतौ तस्मात् केशवनामवान् ॥

इत्यादिभिर्वचनैर्नारायणजन्यत्वम् ।

सनत्कुमारो भगवान् ब्रह्मपुत्रो महायशाः ।
पूर्वजातास्त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ॥
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।

इत्यारभ्य,

हैरण्यगर्भः स मुनिर्वसिष्ठः पञ्चमः स्मृतः ।
षष्ठः स्थाणुः स भगवानमेयात्मा त्रिशूलधृक् ॥

इति ब्रह्मपुत्रेषु **सनत्कुमारनारदसंवादे** परिगणनदर्शनेन हिरण्यगर्भ जन्यत्वं हि प्रतीयते, एवम् —

प्रजापतिस्तामसृजत्तमसोऽन्ते महातपाः ।
तस्य चैवानुजो रुद्रो ललाटाद्यः समुत्थितः ॥

इत्यादीनि वचनानि द्रष्टव्यानि ।

एवमन्यथासिद्धवचनबलात् क्वचिद्विकल्पोऽङ्गीकृत इति न सर्वत्र विकल्पाङ्गीकारो युक्तः । तथा **सति 'न तौ' 'पशौ करोति', 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाती'त्यादौ (जै. सू. 10-8-8)** विकल्पोऽङ्गीकृत इति नार्षेयं वृणीते इत्यादावपि तथात्व **प्रसङ्ग इति** पर्युदासाधिकरणोच्छेदःस्यात् । न चैवमप्यथर्वशिखायां शिव-जन्यत्वं हिरण्यगर्भस्य प्रतिपादितमिति तदनुसारेण यो देवानामिति मन्त्रस्य रुद्रपरत्वमस्त्विति वाच्यम् । तस्य कारणानुवादेन ध्येयत्वविधिपरत्वेन तत्परत्वा-भावस्याथर्वशिखावाक्य विचारदशायामुपपादितत्वात् ।

---

**अतिरात्रे षोडशिग्रहनिषेधस्य विकल्परूपताधिकरणम् —**

ज्योतिष्टोमस्य संस्थाविशेषे श्रूयते – 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति । तत्र - यथा - अनुयाजेषु 'ये यजामहे' इति विधिनिषेधयोः समावेशे पर्युदासः, एवमत्रापि - इति पूर्वपक्षः ।

सिद्धान्तस्तु — मैवम् । एकविषयत्वेन व्याहतिप्रसङ्गात् । 'अतिरात्र-व्यतिरिक्तेऽतिरात्रे इत्युक्ते कथं न व्याहन्येत । दृष्टान्ते - विधिः सर्वविषयः, निषेधोऽनुयाजमात्र विषयः इत्यनुयाजपर्युदासेऽपि न विधेर्निर्विषयत्वम् । तर्हि 'न पशौ करोति' इत्यत्र 'न सोमे' इतिवदर्थवादोऽस्तु । इति चेत् ।

मैवम् । स्तुत्यस्तावकयोर्विधिनिषेधयोरेकविषयत्वेन व्याहति ताद-वस्थ्यात् । 'अपशवोऽन्ये गो अश्वेभ्यः' इत्यत्र पश्वन्तरनिषेधेन गो अश्व विधेः स्तुतिर्दृष्टा । इह तु षोडशि निषेधेन षोडशिन एव स्तुतौ स्पष्टो व्याघातः । तस्मात् - प्रतिषेधः - इति तृतीयः पक्षोऽस्तु । न च अत्रापि व्याघातः शङ्क्यः, अनुष्ठान विकल्पाङ्गीकारेण भिन्न प्रयोग विषयत्वात् । सत्स्वप्यष्टसु दोषेषु गत्यन्तराभावाद्व्रीहियववद्विकल्पोऽभ्युपेयः । तस्मात् - प्रतिषेधः । इति राद्धान्तः । (जै. सू. 10-8-8)

यदपि मास्तु कल्पभेदेन तथात्वम्। तथापि नारायणस्य शिवपत्नीत्वान्माता पितृभावेनोभयोरपि जनकत्वं संभवतीति। तदपि नारायणस्य शिवपत्नीत्वं द्वितीयपरिच्छेदे विस्तरेण निराकृतमिति निरस्तं निरसिष्यते **चतुर्थ परिच्छेदे** ।

भगवतः शिवशक्त्यंशत्वं तस्माद्यो देवनामिति मन्त्रस्थ रुद्रपदस्य रुद्रपरत्वाभावान्नतद्बलात् तेनेदं पूर्णं पुरुषेणेति पुरुषशब्दस्य लक्षणाप्रसङ्गः । अस्तु वा शिवस्य हिरण्यगर्भजनकत्व प्रतिपादकत्वमस्य मन्त्रस्य। तथापि शिवात् स्मृतिनिष्पत्तेः प्रार्थनं प्रतिपादयता तेन न यस्मात्परमित्यादेरेकार्थकत्वनिर्बन्धः। शिवस्य उपायोऽस्मि हरेःस्मृताविल्यादौ भगवज्ज्ञानसाधनत्वावगत्या तावन्मात्रेण प्रकरण निवेशोपपत्तेः। न च हिरण्यगर्भजनकत्वस्य परमकारणत्व व्याप्तत्वात्तत्प्रतिपादकस्य परमात्मप्रतिपादकेनैकार्थ्यमवश्यंभावीति वाच्यम् । विकल्पपकथन व्याघातात्। नहि कल्पभेदेनेश्वरभेद संभवः। किञ्च हिरण्यगर्भजनकत्वं परमात्मधर्म इति पक्षेऽपि यो देवानामित्यस्य यस्मात्परमित्यादिना नैकार्थ्यमवश्यंभावि तस्य हिरण्यगर्भजनन साक्षात्कार प्रतिपादन परत्वेन तज्जनकत्व परत्वाभावात् ।

यत्तु – एवं सति श्वेताश्वतरे अस्य मन्त्रस्य हिरण्यगर्भं जनयामासेति पाठो विरुद्ध्येतेति। तन्न, जनयामासेत्यस्य लक्षणाङ्गीकारेण सत्वनिर्वाहसंभवात्। अन्यथा तस्य नारायणजन्यत्व प्रतिपादक बहुश्रुति व्याकोप प्रसङ्गः। तस्माद्योदेवानामिति मन्त्रगत रुद्रशब्दानुसारात् 'तेनेदं पूर्णं पुरुषेणे'ति पुरुषशब्दस्य न शिवपरत्वं, नापि यद्वेदादाविति मन्त्रगतमहेश्वरशब्दानुसारात्। पुरुषशब्दस्योपक्रमगतत्वेन तदनुसारेण महेश्वर शब्दस्य नयनात् । किं च तदर्थपर्यालोचनायां न तस्य रुद्रपरत्वं शङ्कितुं शक्यम । तथाहि —

ओंकार प्रथमान् वेदान् विद्धि मां त्वं भृगूद्वह ।
प्रणवाद्या मुने वेदाः प्रणवे पर्यवस्थिताः ॥

इत्यादि प्रमाणावगतवेद प्रकृतिभाव प्रणवप्रकृतिभूताकारवाच्योद्देशेन विधीयमानं महेश्वरत्वं न देवतान्तरे पर्यवस्यति । 'अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः'। अकारो विष्णुवाचकः, इत्यादि श्रुतिस्मृत्यनुसारेणाकारस्य भगवद्वाचकत्व प्रसिद्धेः । **न हि जुहूमुद्दिश्य विधीयमानं पर्णत्वं कपालस्य भवति** (जै. सू. 8-6-11) तथाचैतद्वाक्यार्थ पर्यालोचनायां भगवत एवैतद्वाक्यार्थत्वं सिद्ध्यति । यदुक्तं शब्दानां भूतपञ्चक गुणत्वेन तेषामन्योन्योपादानोपादेयभावायोगात् प्रणवस्य वाऽकारस्य वा न प्रकृतित्वं वक्तुं शक्यमिति । तत्र - वस्तुत उपादानोपादेय भावाभावेऽप्य'कारो वै सर्वावा'गित्यादि वाक्यान्तर [illegible]मात्रेण तथा व्यपदेशोपपत्तेः '**त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति** [illegible] संपश्यन्ती'त्यत्र 'त्रिवृतमेव वज्रं संभृत्य भ्रातृव्याय प्रहरती'ति [illegible] त्रिवृत्स्तोमस्य वज्रत्व व्यपदेशमात्रेण वज्रशब्दस्य त्रिवृद्रूपस्य [illegible] **माथवादिभि**स्त्रिवृदर्थकत्ववर्णनात् प्रकृतिवाच्यत्व विवक्षायां तस्य या प्रकृतिस्तस्य यः पर इति वक्तव्यत्वेन तस्य प्रकृतिलीनस्येत्याद्ययुक्तमित्युक्ति-

---

## स्रुवादिषु खादिरतादिविधेः प्रकृतिगामिताधिकरणम् —

अनारभ्य श्रूयते — 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इति । तत्र - अव्यभिचरित क्रतुसंबन्धवर्ती जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधीयते - 'या जुहूः सा पर्णमयी' इति । वाक्यं च प्रकृतिविकृत्योस्तुल्यमेव प्रवर्तते, उभयत्राऽऽश्रय भूताया जुह्वाः सत्वात् । तस्मात् - प्रकृतिविकृत्योरुभयोरप्ययं विधिः इति पूर्वपक्षः ।

सिद्धान्तस्तु — किमयं विधिर्विकृतौ चोदकात्पूर्वं निविशते, पश्चाद्वा । नाऽऽद्यः, आश्रयभूताया जुह्वाश्चोदकमन्तरेणासंभवात् । द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते । तत्र पुनर्विधिवैयर्थ्यादयं विधिः प्रकृतिमात्रगः । एवं 'यस्य खादिरः स्रुवो भवति' इत्युदाहरणीयम् । (जै. सू. 8-6-1)

रप्यनुपपन्ना । प्रकृतिलीनस्येत्यनेन सोऽर्थोऽनुगम्यत इत्यभिमतम् । उत तथोक्ति संभव एव मुक्तयोग इति , किं वाऽनेन स्वरससिद्धोऽन्योऽर्थोगम्यत इति , नाद्यः — प्रकृतिलीनस्येत्यस्य प्रकृत्यवस्थापन्नस्येत्यर्थकतया पर्यवसान गत्या अकारवाच्यत्वस्य प्रतीयमानत्वात् ।

न द्वितीयः — श्रुतिवाक्यस्यापौरुषेयत्वेनास्माभिः शिक्षणायोगात् । स्थितस्य गतिश्चिन्तनीयेतिन्यायेन यथा श्रुति वाक्यस्यैवार्थवर्णनौचित्यात् ।

न तृतीयः — अस्य वाक्यस्यार्थान्तरवर्णनासंभवस्य प्रपञ्चयिष्य-माणत्वात् । ओंकारेण सर्वावाक् सन्तृण्णेत्यस्य सर्वेऽपि प्रणवस्य प्रणव-प्रकृतित्वासंभवात् प्रकृतिशब्देनात्राकार एवोच्यते । न च मात्रामात्राः प्रतिमात्राः कृत्वेति **तापनीये प्रणवप्रकृतित्वेनार्धमात्रायाः** कीर्तनात् । अकारो वै सर्वा वागित्यस्यान्यपरत्वमिति वाच्यम् । अत्र प्रकृतित्व द्योतकशब्दाभावात् । न चोत्तरोत्तरस्य पूर्वपूर्वं लयस्थानत्वोक्तया प्रकृतित्वं प्रतीयत इति वाच्यम् । लयस्थानत्वोक्त्यसिद्धेः कृत्वेति हि करणमुच्यते । न चोपासकेन तथा करणं संभवति तथा च चिन्तयेदिति प्रकृतित्वेन लक्षणया कृत्वेत्यस्य तथात्वेन विचिन्तनपरत्वान्न ततस्तल्लयस्थानत्वं प्रतीयत इति न तद्बलादर्धमात्रायाः प्रकृति शब्देनात्राभिधानं संभवति ।

ननु संबन्धान्तरेणापि अकारो वै सर्वावागित्यस्योपपत्तेः कथं तेन तत्प्रकृतित्वप्रतिपत्तिरिति चेन्न । 'समस्त शब्दमूलत्वादकारस्य स्वभावतः । समस्त वाच्यमूलत्वाद्ब्रह्मणोऽपि स्वभावतः' ।

'वाच्यवाचकसंबन्धस्तयोरर्थात् प्रतीयते' ।

इति **वामनपुराणादि**वचनेषु प्रसिद्धत्वात् गुणगुणिभावाद्यभावस्थले सामानाधि-करण्यनिबन्धनत्वेन मृद्धट इत्यादावुपादानोपादेय भावस्य दृष्टत्वात् संबन्धान्तरानु-पलब्धेश्च तस्यैव तस्मिन्नर्थवादे प्रतीयमानत्वात् ।

हृदाकाशादभून्नादो ब्रह्मणः परमेष्ठिनः ।

ततो हि त्रिवृदोङ्कार, इति **भागवतवचनम**पि नादोत्पत्त्यनन्तरं ब्रह्मण एव त्रिवृदोङ्कार उत्पन्न इत्यर्थकमिति नादनात्तदुत्पत्तिरपि सिद्ध्यति। एवं वर्णने सति 'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठंभित्वा-विनिर्यातौ' इति वचनान्तरानुगुण्यं भवति। अर्धमात्रायाः प्रकृतित्वाङ्गीकारे वा कस्तेलाभः। न चाथर्वशिखायां अर्धमात्रावाच्यः शिव एवेति प्रतीतेः शिव एव महेश्वरः सिद्ध्यतीति वाच्यम्। अथर्वशिखायाः भगवत्परत्वस्य विस्तरेणा-ऽस्माभिः प्रपञ्चितत्वात्।

यदपि अकारो ब्रह्मविष्णवीशकमठेष्वङ्कणेरणे। इति **कोशकारै**-**रनेकार्थानुशासनाद**कारवाच्यस्य महेश्वरत्वं विष्णावैकान्त्येन न पर्यवस्यतीति **तदप्यसंगतम्**। '**अकारेणोच्यते** विष्णुरि'ति श्रुत्यन्तरे कण्ठरवेण विष्णु-**वाचकत्वस्याभिहितत्वेन** वैदिकत्वसामान्यात् भगवत एव शीघ्रोपस्थितिकत्वात्। **अश्वप्रतिग्रहेष्टिनये** यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान् निर्वपेदित्युपक्रमा**दधिकरणन्यायेनेष्टि**निमित्ततया निर्णीतत्वे दानं किं लौकिकं वैदिकं चेत्युभयम्, उत लौकिकमेव आहोस्विद्वैदिकमेवेति संशय्य विशेषादुभयमिति प्रथमपूर्वपक्षं, दोषनिर्घातार्थत्वादिष्टेर्दोषवत एव विधेय सामर्थ्येन निमित्तत्वनिर्णयाद्वैदिकस्य कर्माङ्गदानस्य विशेषविहितत्वेन प्रतिषेधा-संभवाद्दोषवत्त्वाभावाल्लौकिकस्यैव न केसरिणो **ददाती**ति निषेधाद्दोषवत्त्वाल्लौकिक-स्यैवाश्वदानस्य निमित्तत्वमिति द्वितीयपूर्वपक्षं लोकप्रसिद्धमेव निमित्तत्वेनोदिश्यनै-मित्तिकस्य कर्मणोविधानात् पूर्वसिद्धावालोच्यमानायां नैमित्तिकस्य वैदिकत्वा-द्वैदिकस्यैवाश्वदानस्य शीघ्रोपस्थित्या तस्यैव निमित्तत्वं युक्तम्। न च लौकिकस्य दोषवत्त्वाद्विहिताया इष्टेर्दोषनिर्घातार्थत्वस्यैव निमित्तत्वमितिवाच्यम्। इष्टेर्यादृश जलोदररूपदोषशान्तिहेतुत्वं वाक्यशेषेऽवगम्यते तादृशदोषहेतुत्वासिद्धेः। न ह्यश्वदानस्य जलोदर हेतुत्वे किञ्चिन्मानमस्ति, वाक्यस्य प्रसिद्धदोषानुवादेन तन्निर्मोकार्थप्रायश्चित्तेष्टिविधिपरत्वादनेन तद्दोष हेतुत्वस्य प्रतिपादनासंभवात्। तत्परत्वे वाक्यभेद प्रसङ्गात्।

नच जलोदर शान्तेरिष्टिसाध्यत्वं प्रतिपादयदिदं वाक्यमेव तत्सिध्यर्थमर्थादश्वदानस्य जलोदरहेतुत्वमाक्षिपतीति वाच्यम् । जलोदर शान्तेरपि साध्यत्वस्य कल्प्यत्वेनैतद्वाक्य प्रतिपादितत्वाभावात् ।

न चैवमप्यर्थवादस्यानतिपरोक्षत्वार्थं जलोदर शान्तेरेव फलत्व कल्पनावश्यम्भावात्तत्सिध्यर्थमश्वदानस्य जलोदर हेतुत्वमपि कल्प्यतामिति वाच्यम् । वाक्यशेषमनादृत्य वैदिकक्रियात्व सामान्याद्वैदिकाश्वदानस्य शीघ्रोपस्थित्यातेन च तत्संबन्धिक्रतूपकारस्यैवोपस्थितस्य फलत्वकल्पनानौचित्येन जलोदरशान्तेः फलत्वकल्पनावश्यंभावात् । अतो वैदिकमेवाश्वदानं निमित्तमित्येवं राद्धान्तितत्वात् । **सप्तमचतुर्थपादे च** ( जै. सू. 7-4-1 ) सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्रोपदेशेनेतिकर्तव्यताया असमर्पणाद्भावनाया इति कर्तव्यताकाङ्क्षया अशान्तेरन्यतः सिद्धेतिकर्तव्यताग्राहेणाभ्युपगतेत्येवं निश्चिते सति किं लौकिकी इतिकर्तव्यता प्राप्नोति वैदिकीवेति संशय्य वैदिक्याः क्वचिद्दर्शपूर्णमासादौ निबद्धत्वेन प्रथमं तत्र धर्मान् विधाय पुनरपि सौर्यादौ विधाने विरम्य व्यापार प्रसङ्गात् प्रकरणबलात् व्यवस्थितत्वेन साधारण्येन विधानासंभवाच्च तस्या अप्राप्ते लौकिक्याश्च पार्वणकादि साधारण्य दर्शनात् क्वचिदनिबद्धत्वाल्लौकिकीतिकर्तव्यता प्राप्नोतीति पूर्व पक्षं प्रापय्य वैदिकत्व सामान्याद्वैदिक्या एव शीघ्रमुपस्थितेर्लौकिक्या अपूर्वत्वेन शीघ्रमुपस्थित्यभावाद्वैदिक्येव प्राप्नोति । न च निबद्धत्वान्नान्यत्र नेतुं शक्येति वाच्यम् । निबद्धत्वस्योपदेश-

---

## सौर्ये चरावितिकर्तव्यतावत्त्वाधिकरणम् —

' सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ' इत्यत्रावघातादयो धर्मा न प्राप्यन्ते । कुतः — प्रापकप्रमाणानां श्रुतिलिङ्गादीनामभावात् - इति पूर्वपक्षः ।

सिद्धान्तस्तु — मैवम् । ' विमतो याग उपकरणापेक्षः , करणत्वात लौकिक वैदिक भोजन दर्शपूर्णमासवत् ' इत्यनुपातेन तत्प्रापणात् । ( जै. सू. 7-4-1 )

मात्र प्रतिबन्धकत्वात् । न हि समानविधानत्वमभ्युपगतं, किन्तु अतिदेशेनेति कर्तव्यता प्राप्नोतीत्यभ्युपगम्यते । अतो वैदिकत्वसामान्यात् वैदिक्येव प्राप्नोतीति राद्धान्तिततत्वाच्च । अथर्वशिखादिषु ब्रह्मदेवत्येत्याद्युक्तावपि न वाचकत्वं कण्ठरवेणाभिहितमिति न चतुर्मुखस्याप्युपस्थितिः प्रसिद्धिप्राचुर्यं चाकारस्य विष्णुवाचकत्वेनेति नान्यथासिद्धिसंभवः अतो 'यद्वेदादाविति मन्त्रस्य' न शिवपरत्वं ।

दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥

इत्यपि भगवत एव हृदयान्तर्वर्तित्वमुपदिशति ।

यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥

इत्युत्तरवाक्यानुसारात् तस्मिन्यदन्तरिति किमुच्यत इत्यकाङ्क्षायां तदुपासनाङ्ग मन्त्रप्रतिपाद्यत्वमुखेन देवतानिर्धारणं क्रियते तत्र च प्रणवप्रतिपाद्यत्वमात्रोक्तौ ब्रह्मपदेनेव देवतानिर्धारणासिद्धिरिति भगवति प्रसिद्धेर्नाकार वाच्यत्वेन देवतानिर्धारणं क्रियते । तत्राप्युपासनाङ्गभूत प्रणव प्रतिपाद्यत्वोपदेशाय इत्थं संनिवेशः । अणोरणीयान् महतोमहीयान् महादेव इत्यादिना महेश्वरत्वस्य प्राप्तत्वान्महेश्वरः को देव इति देवतानिर्धारणाकाङ्क्षायां महेश्वर इत्यनूद्य यतोवेत्यादिवाक्ये प्रकृतब्रह्मानुवादेन प्रसिद्धकारणाभेद विधानेन जगत्कारणं ब्रह्मेति ब्रह्मनिर्धारणवत् प्रसिद्धाकारवाच्याभेदविधानेन देवतानिर्धारणं क्रियते अकारस्यान्यत्रापि प्रयोगेऽपि रूढियोगस्वारस्यं भवत्येव, रूढिस्वारस्यं सुप्रसिद्धं, योगस्वारस्यमपि त्रिषु मूर्तिषु रक्षणाधिकारात् । विष्णुर्मन्वादयः काल इति रक्षणमात्रस्य भगवत्कार्यत्वस्मरणाच्च । न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिमि'ति च वैदिकानां प्रसिद्धमेव । 'अव रक्षणे' इति धातोरुत्पन्नश्चायमकारः यः पर इत्यन्तेनानूद्य तस्य प्रसिद्धमहेश्वराभेदविधानं किं न स्यात् । तदर्थस्याप्रकृतत्वान्नस्यात् । न हि प्रकृतानुवादसंभवे दूरस्थात्रनं

युक्तम्। प्रसिद्धाभेदविधाने यत्पदान्वित पदोपस्थापिताभेद विधायकस्वारस्याच्च, यथा यतोवेत्यादि।

ननूपक्रमे महिमानमीशमिति पदं श्रूयते। किं तेन रुद्रोऽभिधीयते उतान्यः। आद्ये उपक्रम एव देवतानिर्धारणसिद्धेः न पुनर्निर्धारणापेक्षा। द्वितीये कथमस्वारस्य परिहार इति उच्यते — ईशशब्दस्य सर्वेश्वरे स्वारस्यम्। इहतेन तदाभिधानं चावयोः संप्रतिपन्नम्। अतो नेशशब्दस्वारस्यबलादेवता निर्धारण संभवः। नापि यो देवानां प्रथममिति मन्त्रेणास्य प्रणवप्रतिपाद्यपरतत्व स्मृत्यभ्यर्थनात्मकस्य प्राकरणिक प्रधानार्थ निर्धारणासामार्थ्यात्।

वस्तुतस्तु - 'रुद्रंतु सारथिं कृत्वा उपायोऽस्मि हरेः स्मृतौ' इत्युक्त-रीत्या अस्य मन्त्रस्य भगवत्स्मृत्यभ्यर्थनात्मतयानेन मन्त्रेणैव भगवन्निर्धारण सिद्धिः। यद्यपि तेनेदं पूर्णमित्येव देवतानिर्धारिता तथापि पुरुषशब्दस्य साधा-रण्यप्रसिद्धया मन्दप्रतिभानुजिघृक्षया इदं निर्धारणमिति मन्तव्यम्। प्रणवस्य तावद्वेदाद्यन्तयोरनुसन्धेयत्वं वैदिकानां सुप्रसिद्धम्।

'ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्येनः कृतं पूर्वं परस्तात्तु विशीर्यते॥'

इति मनुस्मृत्युक्तेः तदिदमाह - यद्वेदादाविति। तस्य प्रकृतिलीनस्येति अकारोवै सर्वावागित्यार्थवाद निर्देशमभिप्रेत्यात्र प्रकृति शब्देनाकार उच्यते मृद्घट इति यदकारो वै सर्वावागित्युपादानोपादेय भाव प्रतीतेर्लयोऽपि तत्रैव वक्तुं योग्य इति लयस्थानत्वमुत्प्रेक्ष्य प्रकृतिलीनस्येत्यभेदोपचारेणोच्यते परः प्रधानः अर्थप्रतिपत्त्यर्थो हि शब्दः 'गावो वा एतत्सत्रमासते'त्यर्थवादानुसारात् गवामयनमिति व्यपदेशवदिहाप्यर्थवादानुसारेण प्रकृतिव्यपदेशोयुक्त एव।

यद्यपि भागवते — समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः। हृदाकशादभूत् नादः, इति नादरूपार्धमात्रां प्रकृत्य ततो हि त्रिवृदोंकार इति तस्याः प्रकृतित्वं कण्ठरवेणावगतं तत्प्रणवं प्रत्येव, न तु स्वरं प्रति प्रणवश्च मकारः न तु स्वरमात्रं, अतो व्यञ्जनान्तसमुदायं प्रत्यस्योपादानत्वान्न

तस्य स्वरोपादानत्वम् । 'अकारो वै सर्वावागि'ति तु सर्वं वर्णोपादानत्वा-वगमात् स्वरं प्रत्युपादानमेवाकार इति श्रुतिमर्यादानुरोधात् । 'अकारः सस्वरानन्यान् हलश्चापि ससर्जह' इति वाराहवचनाच्च इत्थं प्रकृतिपदं व्याख्यातम् । अनुशासनानुरोधात् । प्रकृतिपदं स्थानिपरमित्यपि वदन्ति । अकारोकारयोरोकारादेशे अकारस्थानित्वादवधारणार्थस्योकारस्याकारोपसर्जनत्वे-नार्थबलात् स्थानिरूपमापन्नस्येत्युपचर्यते । तत्र प्रकृतिपदेन प्राधान्यादकारस्यैव प्रकृतित्वाविशेषादकारोकारयोर्वाग्रहणं समुदायस्य सावधारणार्थपरतया भगवानेव समुदायप्रधानः । प्रकरणानुगुणत्वं च भगवत्परत्वम् । 'अम्भसी'ति पूर्वत्र उत्तरत्र 'ऋतं सत्य'मिति नारायणानुवाके च भगवत एव प्रकृतत्वात् । अयं चानुवाको भगवत्परः । अणोरणीयांसमिममात्मानमोङ्कारं नो व्याचक्ष्वेति नृसिंहतापनीय प्रयोगात् । अयं चानुवाकः शङ्खलिखितेन भगवत्पर-तयोपबृंहितः ।

अशब्दमस्पर्शमरूपं गन्धवर्जितम् ।
निर्दुःखमसुखं शुभ्रं तद्विष्णोः परमंपदम् ॥
अणोरणीयान्महतोमहीयान्
आत्मागुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥
एष देवस्तु मर्त्यानां पटैरिव पिधीयते ।
एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ॥

इति, इदं चोपबृंहितम् पाद्मे —

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥
योऽसावाकारवाच्यो वै विष्णुर्नारायणो हरिः ।
स एव पुरुषोनित्यः परमात्मा परमेश्वरः ॥

तस्यांशुभूतमैश्वर्यं यस्मिन् कस्मिन् हि वर्तते ।
तस्मिन्नीश्वरशब्दादिः प्रोच्यते मुनिभिस्तथा ॥
निरुपाधीश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।
आत्मेश्वर इति प्रोक्तो वेदवादैः सनातनः ॥
तस्मान्महेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ।
असौ त्रिपाद्विभूतेस्तु लीलाया अपि चेश्वरः ॥
विभूतिद्वयमैश्वर्यं तस्यैव सकलात्मनः
श्रीभूनिशापतिर्योऽसावीश्वरः समुदाहृतः ।
तस्मात्सर्वेश्वरत्वं तु वासुदेवे प्रतिष्ठितम् ॥

इति । अतो यद्वेदादाविति वाक्यबलादियं **दहरविद्या** भगवत्परेत्याहुः।

यदपि अर्थान्तरोत्प्रेक्षणम् **अग्निमीळे पुरोहितम्** इत्यादि, तदप्यसारम् । तथाहि तत्र प्रथमपक्षे प्रकृतेर्यः पर इति उक्तिमात्रेण चारितार्थ्यादितरद्व्यर्थं स्यात् । वासुदेवस्याकारवाच्यत्व प्रतिपादनार्थमितरदिति चेत् । किं वासुदेवस्याकारवाच्यत्व प्रतिपादनं तस्मिंस्तद्विधानार्थमुतानुवादमात्रमिति विवक्षितम् नाद्यः, वासुदेवे अकारवाच्यत्वस्यान्यत्र महेश्वरत्वस्य विधाने वाक्यभेद प्रसङ्गात् । न द्वितीयः आनर्थक्यपरिहारात् । न हि वासुदेवाकारवाच्यत्व प्रतिपादनेन कश्चनविशेषः सिद्ध्यति । तद्वाच्यत्व प्रतिपादनार्थत्वे वा, एतावद्व्यर्थम् । यद्वेदादावित्यनेन वा वेदान्ते चेत्यनेन वैदिकेन अकारोपस्थित्या इतरस्य प्रयोजनाभावाद्वेदाद्यन्तस्थत्वेनाभ्यर्हितत्व प्रतिपादनार्थमुभयं सार्थकमिति चेन्न । वेदमध्यस्थापेक्षया वेदान्तस्थस्य कुतोऽभ्यर्हितत्वं वेदवर्णेषु प्राथम्येन वेदोपरिनिविष्टत्वेन चाभ्यर्हितत्वमस्तीति चेन्न । वेदवर्णमालिकामध्यभागालङ्कारभूतत्वेन मध्यस्थस्याप्यभ्यर्हितत्वस्य वक्तुं शक्यत्वाद्वाक्यान्तरसिद्धार्थमादाय स्वरससिद्धार्थकथनसंभवे एवमुत्प्रेक्षणस्यायोगाच्च । किञ्च अग्निमीळे पुरोहितमित्यत्राग्नि पदस्थाकारस्य समानं परमित्यत्र रेफोत्तरस्याकारस्य चाकारस्यार्थान्तर प्रतिपादक पदस्थत्वेन वासुदेववाचकत्वासिद्धेस्तस्येत्यस्य तत्सजातीयपरत्वं वाच्यमिति

**देवदत्तस्य श्वशुरस्य श्वशुरः परगृहेषु पुस्तकानि वहतीति दत्तो विपश्चित्तम** इति वाक्यतुल्यं स्यात् तस्येत्यस्य लक्षणा च स्यात् ।

ननु किं भवत्पक्षे एतावतो वाक्यस्य प्रयोजनमिति चेन्न, ओंकार प्रभवान्वेदानित्यादिषु प्रणवस्य वेदोत्पत्तिलयस्थानत्वेनावगत्या तथा प्रतिपन्न प्रणवप्रकृतिभूताकारवाच्यत्व प्रतिपादनस्य समस्तवेद मूलकारणीभूत शब्द-वाच्यस्य महेश्वरत्वं युक्तमिति विधास्यमान महेश्वरत्वोपपत्ति सूचनार्थत्वेन प्रयोजनस्य स्फुटतरत्वात् । द्वितीयपक्षेऽपि अइउण्, इति सूत्रे इकार-परत्वेनोकारस्य दर्शनादिकारपरत्वविवक्षया प्रकृतिलीनस्येत्येतद्वयर्थमसङ्गतं च, न हि तस्मिन् सूत्रे इकारस्य दैर्घ्यावस्थाप्राप्तिरस्ति तत्प्राप्तिप्रतिपादनपरत्वं हि त्वयाभ्युपगतम् । वेदादिभूतान्तभूतवर्णपरत्वाभावात्तज्जातीय लक्षणा तस्येत्यस्य स्यात् । आकारपरत्वविवक्षायामीकारेकारयोर्भेदाभ्युपगमे तस्य प्रकृतिलीनस्येत्युक्तयसामञ्जस्यं तस्येत्यस्य प्राग्वर्णपरत्वात् । दीर्घस्य लक्ष्मी-वाचकत्वात् तयोरभेदाभ्युपगमे प्रकृतिलीनस्येत्युक्तिं विनापि तस्येत्यनेनैव, यः परः समहेश्वर इति प्रतिपाद्यमान महेश्वरत्वानुसारेण दैर्घ्यावस्थापन्नस्य ग्रहण-संभवे प्रकृतिलीनस्येत्युक्ति वैयर्थ्यानङ्गीकारग्रहणे —

> 'ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे ।
> ईशनायां शक्रचापे बाणे फणिनि कन्धरे ॥'

इत्येतेष्वर्थेषु ऐश्वर्य विशिष्टवाचक पुंलिङ्गान्त शब्दार्थस्य प्रतिपादनं संभवति अतः इकारस्य तस्य यः परइत्येतावन्मात्रेणैव ग्रहणं भवेदिति प्रकृतिलीनस्येत्येतद्वय-र्थमेव । अपि च वेदाद्यन्त प्रोक्तेकारग्रहणे तस्य व्यक्तिविशेषस्य दैर्घ्यावस्था-पन्नत्वाभावात्तस्येत्यस्य जातीयपरत्वावश्यम्भावे ईकारेऽपि साजात्यस्य निरङ्कु-शत्वात्तस्य तत्परत्वं वक्तुं शक्यमिति तस्य यः पर इत्यनेनोकारस्यैव ग्रहणं भविष्यतीति प्रकृतिलीनस्येत्येतत्सर्वथानर्थकमेव, तस्मान्नार्थान्तरोत्प्रेक्षा संभवः ।

**वेदान्तविजयकृतस्तु** — आकारस्य वेदाद्यन्तस्थत्वेनाभ्यर्हितस्य वाच्यो यो विष्णुस्तत्प्रधानभूतो महेश्वर इत्यर्थ कल्पनं तावन्नसंभवति स्वरस्यान्त

प्रतिष्ठितत्वाभावात् । समानं परमित्यत्र अकार एव ह्यन्तः प्रतिष्ठितः । अक्षरान्तत्वेऽपि वेदाद्यन्तत्वासिद्धेः । न चात्र अचोन्त्यादीत्यादिवत् सजातीय निर्देशः कृतः तस्य प्रकृतिलीनस्येत्यत्र प्रकृत्यर्थकस्य यः परः प्रधानमर्थ एवार्थार्थत्वाच्छब्द प्रयोगस्य तस्मादकारार्थस्यैव महेश्वरता सिद्ध्यतीति किमनिष्टम् । वासुदेवः पराकृतिरिति च वासुदेवस्य प्रकृतिशब्दवाच्यत्वं न विधीयते किन्तू-पादानत्वम् । अन्यथापरशब्दवैयर्थ्यात् उपादानत्वे च परशब्दः प्रकर्षपरः प्रकर्षश्च स्वेच्छाधीन परिणामित्व स्वरूपास्पर्शश्च । नापि दैर्घ्यावस्थेकार भूतोकारवाच्यो महेश्वर इत्येवमर्थकल्पनं संभवति । लक्ष्मीवाचकस्येकारस्य वेदाद्यन्तयोः प्रतिष्ठितत्वासिद्ध्या तस्य प्रकृतिलीनस्येत्युक्तययोगादित्याहुः ॥

यदपि प्रकरणानुसारेणैवार्थवर्णनं कर्तव्यं प्रकरणं चेत्यादि । तदसङ्गतम् । प्रकरणस्य भगवत्परत्व व्यवस्थापनात् । त्रिपुण्ड्रधारणाङ्ग भस्म-संपादने विनियोगात् अणोरणीयानित्यस्य शिवपरत्वमित्यप्यनुपपन्नम् । भस्म-संपादने विनियोगे भस्मपरत्वं परित्यज्य शिवपरत्वोक्तययोगात् । ऐन्द्र्या-गार्हपत्यमुपतिष्ठत इत्यनेन गार्हपत्ये विनियुक्तस्यैन्द्रमन्त्रस्य गार्हपत्यपरत्वं हि न्यायविद्भिर्वर्ण्यते । भस्मसंपादनस्य शिवदेवता-कत्वात्तत्र विनियुक्तस्य शिवप्रतिपादकत्वमुपपन्नमिति चेन्न । शिवस्य तत्र देवतात्वासिद्धेः । त्यज्यमानहविरुद्देश्यत्वेन वा मन्त्रस्तुत्यत्वेन वा देवतात्वं स्यात् । भस्मसंपादनस्यायागरूपत्वाच्च नोभयविधं देवतात्वं तत्र शिवस्य संभवतीति कथं तदुक्तिसंभवः, भस्माधिष्ठानदेवतात्वाच्छिवस्य तत्प्रकाशन-मुपपद्यत इति चेन्न । तस्य तदभिमानिदेवतात्वे मानाभावात् । भावे वा तदनुष्ठानदशायां गौण्या लक्षणया विनियोग संबन्ध्यर्थ प्रकाशकत्वसंपादन-मात्रेण विनियोगस्य चारितार्थ्यान्न तद्बलात् पूर्वोक्त प्रमाणावगत भगवत्परत्वादिकं प्रकरणविरुद्धार्थत्वकल्पनं युक्तम् ।

यदपि स्वाभिमतार्थकथनं वेदादौ यः स्वरः प्रोक्तः प्रणवः प्रतिपाद्य प्रतिपादकाभेदोपचारान्तर्विशेषं ब्रह्म तदेव वेदान्ते च प्रतिष्ठितमित्यादि । ददति-

स्थवीयः, स्वरशब्दस्य तत्प्रतिपाद्यब्रह्मपरत्वे वेदादिप्रोक्तत्वेन स्वरस्य विशेष्टुमशक्यत्वापत्तेः। ब्रह्मणोवेदादिप्रोक्तत्वासिद्धेः स्वरशब्दस्य परत्वेनाच्परत्वाभावात्तत्प्रतिपाद्यत्वेन वेषेण ब्रह्मलक्षकत्वेऽपि '**पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति** स्वरान्वयासंभवात्, यद्वेदादौ स्वरः प्रोक्त इति वाक्यस्य लक्षकत्वे सर्वेषां पदानां लक्षणास्यात्। लक्षणाङ्गीकारे च न किञ्चित् कारणं पश्यामः। वेदान्ते च प्रतिष्ठित इति वेदान्तभागप्रतिपाद्यत्वकथनात्तदनुसारेण लक्षणामङ्गीकुर्म इति चेन्न। प्रणवपरत्वेन तस्यार्थवर्णनस्यापि स्वरसत्वात् स्वरपदसामानाधिकरण्यानुरोधेन पूर्वोक्तरीत्या प्रणवपरत्वेनैवार्थवर्णनस्य युक्तत्वात्। स्वरपदमपि ब्रह्मपरमिति चेन्न। तत्कल्पकाभावस्यानुपदमेवोक्तत्वात्। वेदान्ते च प्रतिष्ठित इत्येतदेव कल्पकमिति तु परस्पराश्रयग्रस्तं वेदादौ प्रोक्त इत्यस्य वेदान्ते च प्रतिष्ठित इत्यस्य च वैरूप्यप्रसङ्गश्च। किं च प्रकृतिलीनस्य इत्यादिकमेवोक्तार्थप्रतिपादनसमर्थमिति तस्येत्यन्तं व्यर्थम्। प्रकृतिसहित जीवनियन्तृत्वमात्र प्रतिपादनस्यैवापेक्षितत्वेन प्रकृतिशब्दवाच्याविद्यासंश्लिष्टत्वं जीवस्यैवेति, तेन पदेन तदुपस्थापनात्। न चाविद्याकार्यस्य प्रपञ्चस्याविद्यायां लयसंभवात्तच्छन्देन प्रपञ्चोपस्थितौ तदपेक्षया परो यो जीवः स महेश्वर इति तथा च तत्सिद्ध्यर्थं यद्वेदादावित्यादिकमिति वाच्यम्। यः पर इत्यस्य जीवोपस्थापकत्वं प्रकृतेः यः पर इत्युक्तिमात्रेण प्रकृतिशब्दवाच्याविद्यापेक्षया परोजीव इति प्रतीत्या चरितार्थमिति प्रकृतिलीनस्येत्युक्तिवैयर्थ्यापत्तेः। अतस्तथोक्तिबलात् प्रकृतिलीनस्येत्यनेन विद्यासंबन्धि जीवोपस्थित्यातन्नियन्तुर्महेश्वरत्वविधानं संभवतीति तस्येत्यन्तस्य वैयर्थ्यं दुर्निवारम्। प्रणवप्रतिपाद्यस्यैव ब्रह्मणो जीवभावमापन्नस्य यः परोनियन्ता स रुद्र इत्यतिशयप्रतिपादनार्थं तदुक्तिरुपपद्यत इति चेत्। तथासति प्रणववेदान्तप्रतिपाद्य ब्रह्मव्यतिरिक्तत्व प्रसङ्गात्। न हि जीवभावापादनेन निन्द्यमानेन ब्रह्मणास्तूयमान महेश्वरस्याभेदः संभवति। स्तुत्यस्य निन्द्याभेदायोगात्। न चाकारभेदमादाय स्तुतिनिन्दयोरुपपत्तिरिति वाच्यम्। एतादृशपरिहारस्य शिवस्य ब्रह्मत्वसिद्ध्यनन्तरभावित्वात्। तच्चनेदानीमपि सिद्धम्। तथा चास्य शिवपरत्वं सिसाधयिषतस्तत्र

शिवस्य ब्रह्मव्यतिरेक प्रसङ्ग इति प्रसिद्धिमिच्छतो मूलहानिः शेषं ब्रह्मलक्षणया प्रणवप्रतिपाद्यमित्यप्यसङ्गतं 'ब्रह्मणेत्वा महस ओमित्यात्मानं युञ्जीते'ति भगवते जीवात्मसमर्पणपरत्वेन श्रुत्यैव व्याख्यानात्। अन्यथा मुख्यार्थभङ्ग-श्रुतिविरोधयोः प्रसङ्गात्। एतेन प्रणवस्थाकारस्य देवतान्तरपरत्वशङ्कापि गलहस्तिता। अस्य वाक्यस्य भगवत्प्रकरणस्थत्वेन ब्रह्मशब्दरूढ्या च भगवत्परत्वावगतिः तद्रूढिश्च वेदे भूरिप्रयोगाच्च शार्ङ्गिणि। 'तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तोमहामुने, इत्यादि।

'यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः॥'

इत्यन्तेन गारुडपुराणवचनेन सिद्धा। प्रकरणस्य भगवत्परत्वं च - 'सवा-एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशश्च सवै सर्वमिदं जगत् स च भूतं सभव्यजिज्ञासा क्लृप्त-ऋतजारयिष्टा श्रद्धा सत्योमहस्वान् तमसोपरिष्टात् ज्ञात्वा तमेवं मनसाहृदा च भूयो न मृत्युमुपयाति विद्वानित्युपक्रमे स एष पुरुष इति पुरुषश्रुतिबलात् येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं चेत्यनेन यस्मिन् द्यौरिति मुण्डकश्रुति प्रत्यभिज्ञानात्। सवै सर्वमित्यनेन तमसोपरिष्टात् ज्ञात्वा तमेवमित्यनेन च पुरुषसूक्तार्थप्रत्यभिज्ञानाच्च। अतोऽकारवाच्ये भगवति महेश्वरत्वनिरति-शयैश्वर्यशालित्वं विधीयत इति न देवतान्तरस्य यद्वेदादाविति मन्त्रप्रतिपाद्यत्व शङ्कावकाशः। एतेन महेश्वरशब्दरूढ्यनुसारादनूदितस्य परस्य शिवरूपता-विधौ तात्पर्यं निश्चीयते। अतो निश्चित विधेयानुरोधेनानेकधा योजयितुं शक्यस्यानुवाद भागस्य योजनमुचितमित्यादि तदपि निरस्तं वेदितव्यम्। योजनान्तरेष्वानर्थक्यासङ्गतत्वादि प्रसङ्गस्योक्तत्वेन तदनुरोधेन महेश्वर-शब्दरूढिभङ्गस्यैव युक्तत्वात् आनर्थक्याद्वरं लक्षणेत्यस्य सुप्रसिद्धत्वात्। असङ्गतार्थकथनापेक्षया लक्षणाभ्युपगमो युक्त इत्यस्याप्यस्य 'अग्नी-

**दग्नीन्विहरे'ति** ( जै. सू. 2-1-7 ) **प्रैषानन्तर्या**पेक्षया उत्तिष्ठन्तीत्यत्र उत्थानकाल लक्षणाज्यायसीति वदद्भिर्न्यायविद्भिरङ्गीकृतत्वाच्च । अतो **यस्यो-भावाग्नी अनुगतावित्यत्र** एतादृश दूषण प्रसङ्गाभावाद्विधेयानुरोधेऽप्यत्र

---

**मन्त्रनिर्वचनाधिकरणम्** —

आधान इदमाम्नायते — 'अहे बुध्निय मन्त्रं मे गोपाय इति । तत्र मन्त्रस्य लक्षणं नास्ति , अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात् । विहितार्थाभि-धायको मन्त्रः' इत्युक्ते 'वसन्ताय कपिञ्जलानालभेत' इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः । 'मनन हेतुर्मन्त्रः' इत्युक्ते - ब्राह्मणेऽतिव्याप्तिः । एवम् 'असिपदान्तो मन्त्रः' 'उत्तम पुरुषान्तो मन्त्रः' इत्यादि लक्षणानां परस्परमव्याप्तिरिति चेत् इति पूर्वपक्षः ।

सिद्धान्तस्तु — याज्ञिक समाख्यानस्य निर्दोष लक्षणत्वात् । तच्च समाख्यानमनुष्ठान स्मारकादीनां मन्त्रत्वं गमयति । 'उरु प्रथस्व' इत्यादयो-ऽनुष्ठानस्मारकाः । 'अग्निमीळे पुरोहितम्' इत्यादयः स्तुतिरूपाः । 'इषेत्वा' इत्यादयस्त्वान्ताः । 'अग्न आयाहि वीतये' इत्यादय आमन्त्रणोपेताः । 'अग्नीदग्नीन्विहर' – इत्यादयः प्रैषरूपाः । 'अधःस्विदासीदुपरि स्विदासीत्' इत्यादयो विचाररूपाः ।'अम्बे अम्बिके अम्बालिके न मानयति कश्चन' इत्यादयः परिदेवनरूपाः । 'पृच्छामि त्वां परमन्तं पृथिव्याः' इत्यादयः प्रश्नरूपाः । 'वेदिमाहुः परमन्तं पृथिव्याः' इत्यादय उत्तररूपाः । एवमन्यदप्युदा-हर्तव्यम् । ईदृशेष्वत्यन्तविजातीयेषु समाख्यान मन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति , यस्य लक्षणत्वमुच्येत । लक्षणस्योपयोगश्च पूर्वाचार्यैर्दर्शितः —

'ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥'

इति । तस्मात् – अभियुक्तानां 'मन्त्रोऽयम्' इति समाख्यानं लक्षणम् । ( जै. सू. 2-1-7 )

न तदनुरोधसंभवः । तस्माद्यद्वेदादावित्यस्य भगवत्परत्वमेवास्मदाचार्योक्तं निष्कण्टकमिति न महेश्वरशब्दोऽपि शिवोपस्थापक इति पूर्वोक्त पुरुषश्रुत्यादिभिः भगवत एवोपस्थित्या भगवानेव **दहरविद्योपास्य** इति अणोरणीयानित्यत्र प्रतिपाद्यत इति दिक् ।

यदपि **कैवल्योपनि**षत्प्रत्यभिज्ञानादियं दहरविद्या शिववैभवपरेति । तदसङ्गतम् । कैवल्योपनिषदो भगवत्परत्वव्यवस्थापनात् । किंच कैवल्योपनिषत्प्रत्यभिज्ञानमुपासनास्थान साम्याद्यदि तदा 'अथ यदिदं ब्रह्मपुरं पुण्डरीकं तस्य य आत्मा हेमपुण्डरीकमध्ये तस्मात् कारणरूपं बोधस्वरूपं विज्ञानघनं तस्मात्तटिदाभमात्रं 'ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः' सर्वभूतस्थमेकं नारायणम् इत्यात्म **प्रबोधोपनिषदे** भगवतो हृदयपुण्डरीकान्तर्वर्तित्वकथनात्तत्प्रत्यभिज्ञानमपि सुवचम् । न च विरूपाक्षकृष्णपिङ्गलपदयोस्त्रिलोचनोमासहाय पदसमानार्थत्वात् प्रत्यभिज्ञा । तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां इत्यम्भस्यानुवाके ऋतसत्यशब्दयोर्भगवति प्रयोगात् । संनिहिताम्भस्यनुवाक प्रत्यभिज्ञाया उपक्रमस्थायाः प्रबलायाः सत्वेन कैवल्योपनिषत्प्रत्यभिज्ञाया अनुदयात् । विरूपाक्षशब्दश्च भगवल्लोचनयोः सूर्यचन्द्रात्मकत्वेन वैरूप्यादुपपन्नः । कृष्णपिङ्गलत्वं तु भगवति स्वरसमित्युपपादितं विरूपाक्षशब्दश्च भगवति रूढः 'विष्वक्सेनो विरूपाक्षो मुरारिरिति **हलायुध निघण्ट्वनुसारात्** । न च शिवनमस्कारे शिवपादोदक प्राशने च विनियोगाच्छिव परत्वं तस्य लाक्षणिकार्थमादायाप्युपपत्तेः । ऊर्ध्वरेतमित्येतदपि देवानां रेतोवर्षम् । वर्षस्यरेत ओषधय इत्यादि प्रयोगाद्रेतः शब्दस्य विकारवाचकत्वेन विकारेभ्य उत्तीर्णत्वमादायोपपद्यते । अतो न **कैवल्योपनिषत्**प्रत्यभिज्ञया ऋतं सत्यमिति मन्त्रगतया तन्मन्त्रबलाद्वा **दहरविद्यायाः** शिवपरत्वम् ।

यदपि सहस्रशीर्षं देवमित्यनुवाके नारायणकीर्तनं हृदयादिकीर्तनवन्नारायणान्तरत्वेन शिवोपासनार्थमिति, तदप्यसारम् । तथा कल्पनस्योपास्यत्वाभाव निर्णयाधीनत्वेन तत्कल्पकाभावे तस्यायोगात् ।

न च शिवावरुद्धायामुपासनायां नारायणस्योपास्यत्वायोगात्तथाकल्पनमिति वाच्यम् । शिवावरुद्धत्वस्यात्रत्येशादिशब्दानां स्वार्थपरत्व सिद्ध्यधीनत्वेन तदसिद्धौ तदभावात्तेषां च भगवत्परत्वमेव ह्युपपादितम् । किञ्च नारायणकीर्तनमेवोपास्य समर्पणार्थं शिवकीर्तनं तु ज्ञानसाधनत्वादिनाकथंचिदुपपद्यत इति किमिति नोच्यते । तर्हि यद्वेदादाविति परमात्मधर्म प्रतिपादकं कथमुपपद्यत इति चेन्न । तस्य प्रकृतिलीनस्य विद्यासंश्लिष्टस्य ब्रह्मणो जीवभावमापन्नस्य यः परः ज्ञानप्रदत्वेन प्रधानभूत इत्यर्थवर्णनसंभवात् । यो देवानामित्यस्य तु न परमात्मधर्मप्रतिपादकत्वं स्फुटतरमुपलभ्यते । किंत्वस्मिन् पक्षेतस्याः शिखायामध्ये इत्यादिकं नारायणपरत्वं नारायणपरत्वेन त्वयाभ्यु- [illegible] कथमुपपद्यते । न चान्यस्य तदन्तरत्वेनोपास्यत्वे नोपास्यत्वे तस्य [illegible] घटते कान्तर्यामीन्द्रतात्मान्तररहितत्वे सत्यात्मत्वं हि परमात्वत्वम् । अपि च पतिं विश्वस्यात्मेश्वरमित्यनन्येश्वरत्व प्रतिपादनं तत्र कथमुपपद्यते अतो नास्याः विद्यायाः शिवावरुद्धत्वनिश्चयः ।

न च यच्छब्दस्य संनिहितरुद्रपरामर्शित्वाच्छिवावरुद्धत्वनिश्चयः पुरुषशब्दार्थस्य संनिहितत्वकथनात् । एतेन प्राचीन शैवपक्षोऽपि निरस्तः । एवं हि तत्पक्षस्थितिः — उपासनमुपास्यमुपासकश्चेत्युपासनविधौ विधेयं त्रिविधं, तत्र नारायणस्योपासनारूपत्वायोगादुत्पत्तिशिष्टशिवावरोधेनोपास्यत्वायोगाच्च । पारिशेष्यादुपासकत्वेनैवसिद्धिः, किञ्च परमात्मशब्दितस्य परमेश्वरस्य नारायणहृदयवह्निशिखामध्येऽवस्थानं नारायणस्योपासकत्वमन्तरेणानुपपद्यमानमित्यर्थापत्ति सहकृता तस्याः शिखाया इति श्रुतिः तस्योपासकत्वं कल्पयति । यद्यपि सर्वान्तर्यामिणो हृदयेऽवस्थानमुपासकत्वमन्तरेणापि घटते । तथापि विशिष्य नारायणहृदयावस्थानायोगेन परमात्मशब्दस्य नारायणातिरिक्तपरत्वकल्पनात् ।

ननु हृदयं तद्विजानीयादिति कीर्त्यमानं हृदयं नारायणसंबन्धि किन्तु वेदान्त विज्ञानेति कीर्त्यमानयति संबन्धीति चेन्न । नारायणप्रकरणे कीर्त्यमानस्य हृदयस्यान्यसंबन्धित्वायोगान्न 'हृदयस्याग्रेऽवद्यती'ति कीर्त्यमानं हृदयं पशुव्यतिरेकेणान्यस्य भवितुमर्हति ।

ननु वेदान्तविज्ञानसुनिश्चितार्था इत्यभिहितैरुपासकैरुपासनाविधेश्चरितार्थान्नारायणस्योपासकत्वकथनं व्यर्थमिति चेन्न । नारायणानुष्ठितत्वेनोपासनाप्राशस्त्यद्योतनार्थत्वात् । न चैवं नारायणपरं ब्रह्मेत्यादि कीर्तनमनुपपन्नं स्यादिति वाच्यम् । उपासके नारायणे उपास्यधर्मारोपेण श्रुत्या तथा प्रतिपादनोपपत्तेः । दृष्टश्च गारुडमन्त्रोपासके उपास्यधर्मारोपः अतो नारायणस्योपासकत्वेनान्वय उपपन्न इति । तन्निरासस्तु – पारिशेष्यं तावदयुक्तं शिवस्योत्पत्तिशिष्टत्वाभाव प्रपञ्चनात् ।

यत्तु परमात्मशब्दितस्य परमेश्वरस्येति । तन्न, 'विश्वात्मानं परायणं,' 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । इति सर्वात्मत्वेन प्रतिपन्नस्य भगवत एव परमात्मशब्देन ग्रहणस्य युक्तत्वेनाप्रतिपन्नस्य शिवस्य ग्रहणायोगात् । न च नारायणप्रकरणे कीर्त्यमानस्य हृदयस्य नारायणसंबन्धित्वमवश्यं वाच्यमिति न तस्य परमात्मशब्देन ग्रहणं युज्यत इति वाच्यम् । पतिं विश्वस्यात्मेश्वरमित्यनन्येश्वरत्वेन विश्वात्मानं परायणमित्यत्र यच्च किञ्चिदित्यत्र च सर्वात्मकत्वेन प्रतिपन्नस्य हृदयसंबन्धित्वेनान्वया योगात् । न हि संनिधिमात्रमेवान्वयबोधे तन्त्रं किन्तु योग्यताद्युपेतम् । न च सर्वान्तर्यामित्वेन प्रतिपन्नस्य हृदयसंबन्धित्वेनान्वयो योग्यः । अन्यथा यजेतेत्यत्र प्रवर्तनात्मक विध्यविरोधसमधिगत समाहिताकाङ्क्षा शालिन्यपि भावनादूरस्थं समीहितमपि स्वर्गादिकं परित्यज्य क्लेशात्मकं यागमेव भाव्यत्वेन गृह्णीयात् । तथा च **षष्ठाद्यविश्वजिदधिकरणाद्युच्छेदः**( जै. सू. 6-1-1 ) ।

---

## यागादिकर्मणां स्वर्गादि फलसाधनताऽधिकरणम् :—

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रूयते । तत्र यागक्रिया निष्पादकत्वं कर्तृत्वम् । फलभोक्तृतया स्वामित्वमधिकारः । तादृशोऽधिकारो यागकर्तुर्नास्ति । कुतः – फलभोगाभावात् । तथाहि 'यजेत' इत्यत्राऽऽख्यातेन भावनाऽभिधीयते । तस्याश्च धात्वर्थो भाव्यः एकपदोपात्तत्वात् । स्वर्गस्तु पदान्तरोपात्तत्वाद्वाक्येन भाव्यतयाऽन्वेतव्यः । तत्र वाक्यमेकपदरूपया श्रुत्या

किंचैवं सति प्रकाराकाङ्क्षाया अपि नक्षत्रेष्टिभावनायाः सन्निहितत्वेन कॢप्तोपकारैरप्युपहोमैः संबन्धः स्यादित्युपहोमानुष्ठानानन्तरभावो **नारिष्टानां स्यादिति प्रकृतिः पूर्वोक्तत्वादपूर्वमन्ते स्यादिति पाश्चमिकाधिकरण** ( जै. सू. 5-2-9 ) सिद्धान्तव्याकोपः स्यात् । अपि च हृदयस्य पूर्वं याति

---

बाध्यते । स्वर्गस्य भाव्यत्वाभावे सति गुणत्वमभ्युपेयम् । स्वर्गशब्दो नात्र सुखवाची, किन्तु सुखसाधनं चन्दनादिद्रव्यं ब्रूते । लोके तथा व्यवहारात् । तच्च कामयितुं योग्यम् । तेन द्रव्येण विना यागानिष्पत्तेः । तस्मात् — **अस्मिन्वाक्ये** फलानभिधानेन तद्भोगाभावात्कर्तुर्यागे कर्तृत्वमेव, नत्वधिकार **इत्यधिकारलक्षणं** नाऽऽरब्धव्यम् । इति पूर्वपक्षः ।

**सिद्धान्तस्तु** — 'यजेत' इत्यत्र प्रत्ययस्य केवलमाख्यातरूपत्वमेवेति न मन्तव्यम् । किन्तु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति । तत्राऽऽख्यातत्वाकारेण भावनामाचष्टे, विधित्वाकारेण पुरुषं प्रवर्तयति । पुरुषश्च स्वामित्वं फलमन्तरेण न प्रवर्तेत इति तदपेक्षितुं स्वर्गमेव भाव्यतया विधिरुपादत्ते । स्वर्गशब्दश्चोत्कृष्टसुखे रूढः द्रव्येतु लाक्षणिकः । तस्मात् — सुखस्य भाव्यत्वं विधिश्रुत्या सिद्धम् । धात्वर्थस्य तु भाव्यत्वमेकेन पदेन प्रतीयमानमपि न प्रत्ययेनावगम्यते । किं तु प्रकृत्या । तथा सति स्वर्गभाव्यत्वं भावनायां प्रत्यासन्नम्, एकेनैव विधिरूपेणाऽऽख्यातेनावगमात् । कामियोगादपि स्वर्गस्य भाव्यत्वम् । तस्मात् — फलभोगसंभवेन कर्तुरधिकारोऽस्तीत्यधिकारलक्षणमारब्धव्यम् । ( जै. सू. 6-1-1 )

## नारिष्टहोमस्योपहोमपूर्वताधिकरणम् —

अग्न्यादि देवतायुक्तानां कृत्तिकादि नक्षत्राणामिष्टयः काम्या विहिताः 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालम्' इत्यादयः । तत्र प्रधानहोमाः 'अग्निर्नः पातु कृत्तिकाः' इत्यादि याज्यानुवाक्या पुरःसरं हूयन्ते । तत्रोपहोमा एवमाम्नाताः । 'सोऽत्र जुहोति — अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा,

संबन्धित्वेन क्लृप्तत्वादत्र हृदयशब्दश्रवणेन क्लृप्तसंबन्ध्युपस्थित्या नैराकाङ्क्ष्यान्न नारायणस्य विभक्ति विपरिणामानुषङ्ग कल्पनापूर्वकं हृदयसंबन्धित्व कल्पनं युक्तम्। अत एव **गृहमेधीये** आज्यभागौ यजतीत्याज्यभागश्रवणोपस्थित प्राकृतोपकार निराकाङ्क्षाया गृहमेधीयभावनाया न चोदकापेक्षास्तीति नाङ्गान्तरसंबन्ध इत्युक्तं **गृहमेधीयाधिकरणे** ।

केचित्तु 'विश्वस्यायतनं मह'दित्यनेन विश्वं नारायणं देवमित्यादि पूर्ववाक्ये विश्वशब्दार्थत्वेनोक्तस्य नारायणस्याधिष्ठानत्वेन हृदयस्य कथनात् पद्मकोश प्रतीकाशमित्यादिकं नारायणस्योपास्यत्वसमर्पकं नोपासकत्वसमर्पकं तद्विरोधेन नारायणस्यहृदयसंबन्धित्वायोगादित्याहुः। हृदयसंबन्धित्वकीर्तन बलान्नारायणस्योपासकत्वं सिद्ध्यतीति अनुपपन्नम्। नारायणहृदयस्थत्वेनोपास्यस्तुतिमात्रपर्यवसानेन चारितार्थ्येन तदुपासकत्व कल्पनापर्यन्तं तथावनायोगात् तदुपासकत्वकल्पनेऽपि तदनुष्ठितत्वेनोपासन प्राशस्त्यद्योतनं हि प्रयोजनम्।

---

अम्बायै स्वाहा, दुलायै स्वाहा' इति। नारिष्ठहोमाश्च चोदकेन प्राप्ताः। 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादिभिर्मन्त्रैराज्याहुतयो नारिष्ठहोमाः। एतेभ्यो नारिष्ठहोमेभ्यः पूर्वमुपहोमाः कर्तव्याः। कुतः — 'अष्टाकपालं निर्वपेत्' 'सोऽत्र जुहोति' इति प्रत्यक्षपाठेन मुख्यसामीप्यमुपहोमानां प्रतीयते। तच्चातिदिष्टैर्नारिष्ठ होमैर्व्यवधाने बाध्येत। तस्मादुपहोमानां पूर्वत्वं इति पूर्वपक्षः।

सिद्धान्तस्तु — नक्षत्रेष्टिरूपा विकृतिर्विधीयमाना स्वोपकारकमङ्गजातमपेक्षते। तदा चोदकः प्राकृतं नारिष्ठहोमादिकमङ्गं बोधयति। प्रत्यक्षवाक्यं तु वैकृतमुपहोमादिकम्। तयोर्मध्ये क्लृप्तोपकारतया नारिष्ठ होमाद्यङ्गत्वं सहसा बुध्यते। उपहोमाद्यङ्गतातूपकारे कल्पिते पश्चाद्बुध्यते। ततः प्रधानप्रत्यासत्त्या नारिष्ठहोमाः पूर्वमनुष्ठेयाः। उपहोमाः पश्चादनुष्ठेयाः। (जै. सू. 5-2-9)

यदपि नारायण उपास्य शिवधर्मारोपेण नारायणपरं ब्रह्मेत्यादिकमुपपद्यत इति। तदतितुच्छम्। आरोपितार्थपरत्वकल्पनस्य प्रामाण्यविरोधित्वात्। अतो नोपासकत्वेनान्वय इति। एतेन यद्वेत्यपि निरस्तम्। तस्याः शिखायामध्ये परमात्मा व्यवस्थितः इत्यत्र सर्वात्मकत्वेन तदनुवाकप्रतिपन्न नारायणग्रहणसंभवे कैवल्योपनिषत्पर्यन्त धावनायोगात्। कैवल्योपनिषदो भगवत्परत्व व्यवस्थापनाच्च।

किञ्च **महोपनिषदि** 'सहस्रशीर्षं देव'मित्यादीनामनेकेषां वाक्यानामाम्नानेन तत्प्रत्यभिज्ञायाः प्रबलत्वात्तदनुसारेण भगवत्परत्वमेव युक्तम्। न च तदपि **कैवल्योपनिषत्**प्रत्यभिज्ञया शिवपरमिति युक्तं वक्तुम्। तस्याः शिखाया मध्ये पुरुषः परमात्मा व्यवस्थित इति पुरुषशब्दार्थस्य भगवत एव श्रुत्या उपस्थितेः। एको ह वै नारायण आसीदित्युपक्रमे सर्वोत्कर्षेण प्रतिपन्नस्य भगवतोऽन्योपसर्जनत्व कल्पनायोगेन तद्विरोधापाताच्च तत्र चार्थान्तरवर्णनं निरस्तमेव।

यत्तु नारायणानुवाक प्रत्यभिज्ञया **महोपनिष**च्छिवपरेत्येकोहवा इत्यादेरर्थान्तरपरत्वमिति। तत्तुच्छम्। चक्रकाश्रय प्रसङ्गात्। नारायणानुवाकस्य शिवपरत्वे सिद्धे तत्प्रत्यभिज्ञया महोपनिषदः शिवपरत्वावश्यम्भावः ततश्च एको हवा इत्यादेरर्थान्तरपरत्वम्। तस्य चार्थान्तरपरत्वे सिद्धे महोपनिषदः शिवपरत्व संभवः। ततश्च तत्प्रत्यभिज्ञा न बाधिकेति नारायणानुवाकस्य शिवपरत्वमिति। एवं च महोपनिषत्प्रत्यभिज्ञायाः प्राबल्यात् स ब्रह्मा सशिव इत्यत्र **कैवल्योपनिषत्**प्रत्यभिज्ञासत्वेऽपि ततो न तस्याः शिखायामध्ये इत्यस्य शिवपरत्वम्।

यदपि नारायणकीर्तनं नारायणात्मना स्वात्मनोऽनुसन्धानार्थमिति। तदपि कल्पकाभावाद्दूरोत्सारितम्। अपि च नारायणपरं ब्रह्मेति उक्तिविरोधश्च।

यत्तु भ्रान्तकल्पितं नारायणपरं ब्रह्मेत्यस्य समासपदत्वेन तत्त्वं ब्रह्म नारायणात् परं ज्यायः नारायणस्तु परस्तदन्य इति, तन्मूढगोष्ठीनिविष्टेभ्यो रोचते न तु न्यायमर्यादानुवर्तिभ्यः। 'विश्वतः परमं नित्यं' 'पतिं विश्वस्यात्मेश्वरं' 'विश्वात्मानं परायण'मिति पूर्वसन्दर्भे अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणःस्थित

इत्युत्तरसन्दर्भे च सर्वस्मात्परत्वेनानन्येश्वरत्वेन सर्वान्तर्यामित्वे प्रतिपादितान्ना-रायणादधिकस्य तन्मध्यस्थवाक्ये प्रतिपादनं तत्र तन्निकर्षप्रतिपादनमित्युक्तेरसम्बद्ध-प्रलापत्वात्। ब्रह्मणोनारायणादधिकत्वोक्त्यैव नारायणस्य तदन्यत्व सिद्धेर्नारा-यणः पर इत्यपि व्यर्थं। तत्वं ब्रह्मेत्यत्र तत्वमिति पदं च व्यर्थम्।

यदपि परोनारायणस्तत्वं सर्वतत्वात्मकः अत उपादानस्य स्वतन्त्रकर्तृ-शिवेच्छाधीन तत्तदाकार परिणामादि व्यापारत्वान्मृदपेक्षया कुलालस्येव नारा-यणापेक्षया शिवस्य परत्वमुक्तमिति। तदप्यसङ्गतम्। नारायणपरोज्योतिरा-त्मानारायणः पर इति वाक्यवैरूप्यापातात् आत्मत्वोक्ति विरोधाच्च। आत्मत्वं हि नियन्तृत्वम्। अथ **पुरुषोहवै नारायणोऽकामयतेति** सृष्टिसंकल्पवाक्य-बलान्निमित्तत्वप्रतीत्या उपादानत्वमात्रत्वोक्त्यसाङ्गत्याच्च। किञ्च महोपनिषदि नारायणः परं ब्रह्मेति विच्छेदेनाध्ययनात्तद्विरुद्धं च पञ्चमीसमासकल्पनम्।

यत्तु संप्रदायक्रमागतेषु पाठेषु नैतन्मन्त्राम्नानमिति। तन्न किं भवान् सर्ववेदगतसर्वशाखाध्यायी येन यस्यां शाखायां महोपनिषदाम्नायते। तच्छाखायाः कृत्स्नभागाध्यायी वोस्य वाक्यस्यानुपलम्भं ब्रूषे पूर्वं पूर्वं ग्रन्थ-कर्तृभिरुदाहृतत्वेन प्रामाणिकतामुपलभ्यव्यासाचार्यप्रभृतिभिः प्रामाणिकाग्रणी-भिरस्य वाक्यस्योदाहरणान्नात्रशङ्काशङ्काकलङ्कः।

यदपि सुपां सुलुगिति स्वादेशकल्पनया तदपि पञ्चमी समासानुगुण्येन नेतुं शक्यमिति। तन्न। एको हवै नारायण आसीदित्युपक्रमविरोधापातात् तैत्तिरीयवाक्ये एकत्वैव खलु गादेशाङ्गीकारेणोपपत्तौ अत्र विभक्त्यर्थलक्षणा महोपनिषद्वाक्ये व्यत्यय इत्युभयोः कल्पनायाः अयोगाच्च।

यदपि समर्थपरिभाषानुरोधेन सामानाधिकरणसमासोऽसङ्गत इति। तदप्यसारम्। किं परशब्दस्य ब्रह्मशब्दविशेषणतया परत्वस्य तदन्वयित्वेन नारायणपरशब्दयोरन्वयाभावात् पृथगर्थानामेकार्थीभावरूपं सामर्थ्यं नास्तीति अभिमतं, किं वापरशब्दस्य सामान्यशब्दत्वेन नारायणशब्दस्य विशेषशब्दत्वेन

परशब्दस्य विशेष्यसमर्पकत्वं नारायणशब्दस्य विशेषणसमर्पकत्वं च न संभवतीत्यभिमतम् । अथवा परशब्दस्य विशेषणसमर्पकत्वं च न संभवतीत्यभिमतम् । अथवा परशब्दस्य विशेष्याकाङ्क्षित्वेन सापेक्षमसमर्थमित्यसामर्थ्यमस्तीत्यभ्युपगतम् ।

नाद्यः — सामानाधिकरण समासाभ्युपगमपक्षे परशब्दो ब्रह्मशब्दार्थविशेषणत्वेन परत्वबोधको न नारायणशब्दार्थनिष्ठत्वेनेत्यनभ्युपगमात् । स्नातानुलिप्तो देवदत्त इत्यत्र स्नातत्वानुलिप्तत्वयोः परशब्दार्थविशेषणत्वेन परस्परानन्वितयोर्देवदत्तान्वयित्वं । नारायणपरत्वयोः परस्परान्वितयोर्ब्रह्मशब्दार्थान्वयित्वसंभवात् ।

न द्वितीयः — विशेषणविशेष्यभावे कामचारात् । अत एव '**निषादस्थपतिं याजयेदिति** प्रयोग उपपद्यते ।

न तृतीयः — विशेष्यसमर्पकपदस्य साकाङ्क्षत्वेऽपि सामर्थ्यसंभवस्य शाब्दिकाभ्युपेतत्वात् । दशरथमहाराजः पाण्डुराजा नलचक्रवर्तीत्यादाविव विशेषणभूतेन नारायणेनार्थात् परशब्दाकाङ्क्षाशान्तेश्च, तर्हिपरशब्दस्य नपुंसकत्वं न घटेतेति चेन्न । 'संस्कृतं भक्षाः' 'तेन तुल्यं क्रियाचेद्वतिः,' 'शक्यं चाश्वमांसेनापि क्षुत् प्रतिहन्तुं', 'शक्यमञ्जलिभिः पातुं । वाताः केतकिगन्धिनः' 'वेदाः प्रमाणामित्यादिवत्' पदसंस्कारपक्षे लिङ्ग सर्वनाम नपुंसकाश्रयणेन तदुपपत्तेः ।

यदपि मध्यमपरशब्दयोस्तत्वज्योतिर्विशेषणत्वायोग इति, तदपि तयोर्नारायणशब्दविशेषणत्वसंभवात्तत्वभूतः परोधर्मोनारायणः ज्योतीरूपः परोऽधर्मोनारायण इति च निर्वाहः सुकरः । नारायणपरोज्योतिरित्यत्र अथ यदतः परोदिवोज्योतिर्दीप्यत इति श्रुतिप्रत्यभिज्ञापकत्वेन तथैवाभिः स्वरसम् ।

यदपि लैङ्गोपबृंहणापवादकवचनसत्त्वान्नार्थतथात्वसाधकमिति । तदप्यसारम् ।

'न परं पुण्डरीकाक्षाद् दृश्यते भरतर्षभ ।
नारायणपरं ब्रह्म तत्वं नारायणः परः ।
परादपि परश्चासौ नास्ति तस्मात्परात्परः ॥

इत्यादि प्रबल **महाभारत** विरुद्धत्वेनापवादकत्वेन त्वदभिमत वचनजातस्य तत्संवाद्वत्त्वेन, '**अहमेव परं ब्रह्मे**'त्यस्य वचनस्यानेनैव तेषां वचनानां बाधात्। 'सपरः सर्वशक्तीनामित्यादौ विष्णुपरत्वप्रतिपादकमिति **त्रिमूर्त्युत्तीर्ण भङ्गे** प्रपञ्चितम्। परोक्तार्थग्रहणेऽपीत्यादिकमप्यज्ञानविजृम्भितम्। नारायणस्यो-पसर्जनत्वासिद्ध्या **अङ्गगुणविरोधाधिकरणन्यायानवतारात्**। तस्मा-न्नारायणानुवाकान्यथासिद्धेः परोक्ताया असंभवात् परपक्षे तद्विरोधस्य दुर्निवारत्वात् शिवोपासनापरत्वं दहरविद्याया वक्तुमशक्यमिति भगवानेवास्मद्वर्णितया रीत्या **दहरविद्यावेद्यत्वेन** तैत्तिरीये प्रतिपाद्यत इति दिक्।

उपबृंहणं च भारतस्थमस्मदुपवर्णितमुपोद्बलयति। **आनुशासनिके** —

'यं विश्वमुपजीवति येन विश्वमिदं ततम्।
यं प्राप्य न निवर्तन्ते तं भवान्वक्तुमर्हसि ॥'

इति **नारदप्रश्ने** सनत्कुमारः —

'यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम्।
तं वै शृणु महाबुद्धे नारायणमनामयम् ॥
एष नारायणो नाम यं विश्वमुपजीवति।
एष स्रष्टा विधाता च भर्ता पालयिता प्रभुः।
प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्मचिन्तकाः ॥'

इति। अत्र नारायणानुवाक प्रतिपाद्यविशेषण मुखेन भगवन्तं प्रस्तुत्य तस्य यतिप्राप्यत्ववर्णनाद्वेदान्त विज्ञानसुनिश्चितार्था इति वाक्यमुपबृंहितमिति तदुपा-स्यत्वेन **अणोरणीयानित्यनुवाके सिद्धो** दहरविद्यावेद्यो नारायण एवेति स्फुटीभवति। तत्रैव **सनत्कुमाररुद्रसंवादे** —

'ततः पश्यति तद्ब्रह्म ज्वलदात्मनि संस्थितम् ।
विद्युदम्बुधरोयद्वत्तद्वदेकमनाश्रयम् ॥
तमस्यगाधे तिष्ठन्तं निस्तमस्कमचेतनम् ।
चेतयानमचेतं च दीप्यमानं स्वतेजसा ॥
अङ्गुष्ठपर्वमात्रं तन्निश्रेयसमनिन्दितम् ।
महद्भूतमनन्तं च स्वतन्त्रं विगतज्वरम् ॥
ज्योतिषां ज्योतिषं देवं विष्णुमत्यन्तनिर्मलम् ।
नारायणमणीयांसमीश्वराणामधीश्वरम् ॥
विश्वतः परमान्नित्यं विश्वं नारायणं प्रभुम् ।
अविज्ञाय निमज्जन्ति लोकाः संसारसागरे ।
यं दृष्ट्वा यतयस्तात न शोचन्ति गतज्वराः ॥'

इति । अत्र द्वयोरनुवादकयोरर्थस्य सहोपबृंहणप्रतीत्या उभयोर्भगवत्परत्वं प्रतीयते । तदेवं न्यायोपबृंहणाढ्या दहरविद्या भगवदुपास्यतापरिष्कृतेति सिद्धम् । तदेवं **सर्वविद्यावेद्योभगवान्नारायण एव परं ब्रह्मेति** सर्वमवदातम् ।

इति श्रीशठमर्षणकुलतिलक निखिलवेदान्तविद्या निषद्याधीतहृदयकमल श्रीतातया-चार्यनन्दनस्य हयवदनकरुणाकटाक्ष वीक्षालब्ध पदवाक्यप्रमाणस्य श्रीमन्निगम-शिखर गुरुचरणसरसीरुह चञ्चरीकायमाण मानसस्य श्रीवेङ्कटदेशिक-पादसेवासमधिगत श्रीमच्छारीरक मीमांसाभाष्यहृदयस्य श्रीवेङ्कटा-चार्यस्य कृतिषु सिद्धान्तरत्नावल्यां

तृतीयः परिच्छेदः

---

## चतुर्थः परिच्छेदः

श्रीरङ्गिणः पदनखावलिरादधाना
मुक्ताश्रयत्वमदसीयमुदस्य नित्यम् ।
श्रेयस्तनोतु जगतां प्रणतत्रिनेत्र-
चूडासुधाकिरणपूर्तिधुरीणकान्तिः ॥
सिद्धे हरेर्ब्रह्मविद्यावेद्यत्वे तत एव हि ।
तत्क्रतुन्याय तस्सिद्धा स्यान्मुक्तजनभोग्यता ॥
तथापि साक्षादेवैतत्प्रतिपादनतत्परैः ।
वचनैर्विशदीकृत्य सैवास्मिन्नभिधीयते ॥

तत्र तावत्तैत्तिरीयके — 'ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता इत्यत्र नारायणस्य मुक्तभोग्यत्वमभिधीयते । ब्रह्मणा सहेत्यत्र 'क्षीरेण सहौदनं भुङ्क्ते' इतिवद्भोग्यसाहित्यस्य विवक्षितत्वेन ब्रह्मशब्दार्थस्य सत्यज्ञानादिवाक्योक्तस्यैव प्राप्यत्वादिस्मरणात्तस्य चानन्तशब्द-प्रसिद्धि प्राचुर्येण नारायणत्वावगमात् । ननु नात्रानन्तशब्दप्रसिद्धिराश्रयितुं युज्यते । प्रकरणस्यानन्दमयातिरिक्तपर्यवसायित्वादानन्दमयस्य चिच्छक्तिरूपत्वेन नारायणस्य चिच्छक्त्यंशत्वेन प्रमाणान्तरप्रतिपन्नत्वेन नारायणांशिभूतानन्द-मयाधिकरणप्रतिपादकप्रकरणस्यानन्तशब्दरूढिविवक्षाया अयोगात् । तथाहि — 'ब्रह्मविदाप्नोति पर'मित्यानन्दवल्ल्यां प्रतिपाद्यस्य कृत्स्नस्याप्यर्थस्य सङ्ग्राहकं सूत्रम् । तत्र किं ब्रह्म कथं च तद्वेदनं किं च तद्वेदनप्राप्यं परमुत्कृष्टं फलमित्याकाङ्क्षायां तत्र तृतीयं स्पष्टीकर्तुं तदेषाभ्युक्तेति ब्राह्मणोक्तार्थ-प्रतिपादकत्वेनावतरणपुरस्सरं तदनुव्याख्यानरूपः 'सत्यं ज्ञानमित्यादि'मन्त्र आम्नातः । तत्रापि कथं ब्रह्मणस्त्रिविधपरिच्छेदराहित्यरूपमानन्त्यं तस्य हि नित्य सत्वेन कालतो देशतश्च परिच्छेदराहित्येऽपि वस्त्वन्तरव्यावृत्तत्वाद्वस्तुपरिच्छेद-राहित्यं न सम्भवतीत्याशङ्कायां तदुपपादनार्थं 'तस्माद्वा एतस्मादात्मन' इत्यादि 'सोऽकामयत बहुस्यां प्रजायेये'ति च कारणवाक्यं तेन द्विविधेनापि

कारणवाक्येन चेतनाचेतनात्मक सकलप्रपञ्चोपादाननिमित्तभूतं स्वापृथक्सिद्ध सकलप्रपञ्चविशिष्टं ब्रह्मैकमेवेति स्वपृथक्सिद्धवस्त्वन्तराभावेन तथा भूतवस्तु परिच्छेदराहित्यं लभ्यते। तथा कस्यां गुहायां निहितमित्याकाङ्क्षायामन्न-मयादिकोशात्मिका गुहेति तद्विवरणार्थमन्नमयादिकोशानां निरूपणम्। एवं गुहान्तर्वर्तिप्रसिद्धव्योमविलक्षणं 'किं तत्परमं व्योमेत्याकाङ्क्षायां तदपि विवर-णीयमेवेति। तद्विवराणार्थमानन्दमयवाक्यमिति। परिशेषादानन्दमयः पुराणादिषु परमाकाशशब्देन प्रसिद्धा शैवीचिच्छक्तिरित्यवसीयते। किं च कोह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इत्यानन्दशब्दस्य प्रकृतानन्दमयविषयस्य व्योमशब्दपर्यायाकाशशब्दसामानाधिकरण्यं दृश्यते। तेनाप्यानन्दमयस्य परमाकाशशब्दितचिच्छक्तिरूपतावसीयते।

नन्वानन्दमयशब्दो धर्मिपर इति आनन्दविशिष्टवचनः यदेष आकाश आनन्दो न स्यादित्यादिस्तु धर्मविषय इति विरोध इति चेन्न। तत्प्रकृतवचने मयडिति मयड्विधायकसूत्रस्य तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात् स्वार्थे मयट्प्रत्ययो भवतीति प्रथमं वृत्तिकारादिभिर्व्याख्यातत्वेन धर्मपरत्वेऽप्युपपन्नत्वेनानन्दमयशब्दस्य विरोधाभावात्। उदाहरणं च 'अन्नमयं' 'यवागूमयं' 'प्राचुर्येण प्रस्तुतमन्नं प्रकृता यवागूरित्यादिस्तदर्थः।' अन्नमयो यज्ञ इत्याद्युदाहरणं तु प्रकृतं प्रस्तुतमुच्यते। अस्मिन्निति प्रकृतवचनम्। तदिति प्रथमासमर्था प्रकृतवचने मयट्प्रत्ययो भवतीति व्याख्यानानुसारेणनेयम्। अत्र च यदेष आकाश आनन्दो न स्यादिति वाक्यशेषानुसाराद्धर्मपरत्वमेवा श्रीयते। ननु धर्मपरत्वे कस्यानन्द इत्याकाङ्क्षायां कथं पूर्तिरिति चेन्न। 'स एको ब्रह्मण आनन्द' इत्यादिदर्शनेन 'ब्रह्म पुच्छं प्रतिष्ठे'त्यत्र प्रतिष्ठाशब्देन 'तस्य प्रियमेव शिर' इत्यतोऽनुषक्तस्येति पदस्यान्वयेन ब्रह्मसम्बन्धित्वा-कामादाकाङ्क्षापूर्तिसम्भवात्। एवं सत्येव 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यानन्दमयपर्यायेऽपि प्राणमयादिपर्यायवदात्मान्तरोपदेशो घटते। तस्या-नन्दमयस्यैव आत्मा यः पूर्वस्य विज्ञानमयस्येति हि तदर्थः। मत्वानन्दमयस्य ब्रह्मत्वे। आनन्दमयस्यानन्यात्मकत्व प्रतिपादकमिदमिति पक्षे च प्राणमयादि-

पर्यायेषु तस्यात्मान्तरप्रतिपादकत्वं, आनन्दमयपर्यायत्वेऽनन्यात्मत्व प्रतिपादकमिति वैरूप्यप्रसङ्गः। न च पूर्वपर्यायश्लोकानां पुच्छवद्विषयत्वादयं श्लोकः पुच्छवदानन्दमयविषयो न तु पुच्छब्रह्मविषय इति शङ्कनीयम्। श्लोकगत ब्रह्मश्रुतिभ्यां प्रायपाठबाधात्। 'अन्नाद्वै प्रजाः प्रजायन्ते' 'यतो वाचो निवर्तन्ते' इति श्लोकयोरन्नमय, मनोमयविषयत्वाभावेन प्रायपाठासिद्धेश्च। एवं च पुच्छवदानन्दमयोऽपि चेद्ब्रह्म तस्यैव तत्पुच्छभावनिवेशो न समञ्जसः स्यात्।

न चान्नमयपर्याये 'तस्येदमेव शिर' इत्यादिना स्वस्मादनतिरिक्तैः स्वावयवैः शिरः पक्षपुच्छादिमत्त्वकल्पना दृष्टेति वाच्यम्। तत्रावयवावयविभावौपयिकसंस्थानविशेषकृतसद्भावादानन्दमयस्य ब्रह्मत्वे तन्मात्ररूपस्यापि षष्ठ्यालम्बनस्य भेदस्याभावात्। तस्मादानन्दमयश्चिच्छक्तिरित्येव युक्तं नत्वानन्दमयादिपर्यायपञ्चकात् प्राक् तस्माद्वा एतस्मादात्मन इत्यादिनोपक्रान्तं जगत्कारणत्वं यथान्नमयादिकमतिक्रामति तथानन्दमयमतिक्रामति। नापि तत्प्रतिष्ठारूपे ब्रह्मण्यन्वेति। किन्त्वानन्दमय एवान्वेति। कुतः? तदनन्तरं 'सोऽकामयते'त्यादिना पृथगुपक्षिप्तजगत्कारणत्वप्रपञ्चे' स इति पुंलिङ्गेनानन्दमय परामर्शात्। न च ब्रह्मण्यपि 'तस्यैष एव शारीर आत्मे'ति वाक्ये पुंलिङ्गस्यात्मशब्दस्य श्रवणात्तदपेक्षया पुंलिङ्ग उपपद्यत इति वाच्यम्। तस्यैष इति वाक्यस्य सर्वपर्यायसाधारणत्वात् प्रकृतपरामर्शिनि सर्वनाम्न्यसाधारण्येन प्रकृतिसमर्पकं यत्प्रधानपदं तदीयलिङ्गापेक्षणस्यैवोचितत्वात्। अपि च उत्तरानुवाके भृगुवल्ल्यां 'यतो वा इमानि भूतानि जायन्ते' इत्यादिनोपक्षिप्तस्य जगत्कारणत्वस्यान्नप्राणादिपर्याय चतुष्टयातिलंघनेन पञ्चमपर्यायाम्नाते आनन्द एव 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिना श्रुत्यैवान्वय प्रतिपादनात् स्थानप्रमाणादानन्दमय एव जगत्कारणत्वान्वयोऽन्ववसीयते। तस्मादेवस्थानप्रमाणात् भृगुवल्लयुक्तानन्दवल्लयुक्तानन्दमय एवेत्यवसीयते। अतः कारणत्वान्वयादानन्दमयो ब्रह्मेति युक्तम्। सद्विद्यादिषु ब्रह्मणः कारणत्वप्रसिद्धेः। जन्मादिसूत्रे तन्मूलश्रुतौ च कारणत्वस्य ब्रह्मलक्षणत्वेनोक्तत्वात्। तस्माद्वल्ली-

द्वयस्यैकार्थ्यादानन्दवल्लयुक्तानन्दमयो भृगुवल्लयुक्तानन्दश्च ब्रह्मेत्येवाङ्गीकर्तुं युक्तम्। अत एव खलु भृगुवल्ल्यामानन्दमयवृत्तेरानन्दशब्दस्य 'आनन्दो ब्रह्मेति व्यजाना'दिति ब्रह्मशब्दसामानाधिकरण्यं दृश्यते । अत आनन्दमयश्चिच्छक्तिरिति पक्षे कारणत्वानुपपत्तिः तथा आत्मन आकाशस्सम्भूतः इति श्रुतात्म-शब्दान्वयानुपपत्तिश्च । आत्मशब्दोऽपि ज्ञातृवाची । न धर्मज्ञानरूपाया-श्चिच्छक्तेर्ज्ञातृत्वं सम्भवति । अतो नानन्दमयश्चिच्छक्तिरिति ।

उच्यते — छान्दोग्ये 'सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्याकाशसंज्ञितायाश्चिच्छक्तेस्सर्वभूतकारणत्वं श्रुतं किं चात्र आकाश-शब्दो भूताकाशपरः तद्देवतापरो वा तयोःसर्वभूतकारणत्वाभावात् । नापि ब्रह्मपरः वेदप्रयुक्तस्य कस्यचिच्छब्दस्य लोकप्रसिद्धार्थग्रहणासम्भवे हि वेदतदुप-बृंहणयोरन्यत्र यस्मिन् प्रयोगो दृष्टस्तस्य ग्रहणं युक्तम् । वेदे चान्यत्र 'आकाशशरीरं ब्रह्म' 'यदेष आकाश आनन्दो न स्या'दित्यादौ ब्रह्मणः शरीरानन्दादिरूपायां शक्तौ प्रयोगो दृष्टः । वेदोपबृंहणे च कूर्मपुराणे —

'यस्य सा परमा देवी शक्तिराकाशसंज्ञिता ।
आनन्दैश्वर्यसंयोगान्महेशो दृश्यते किल ॥'

इति तस्याकाशशब्दवाच्यत्वमुक्तम् । अतः छान्दोग्ये तस्यामाकाशकारणत्वं श्रुतमिति युक्तमेव । तथा बृहदारण्यके — 'यदिदं सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वापः ओताश्च प्रोताश्चेति वा या गार्गीत्यादि गार्गीयाज्ञवल्क्य प्रश्नोत्तरपरम्परया पृथिवीसलिलवाय्वन्तरिक्षलोकगन्धर्वलोकादिपरब्रह्मलोकान्तानां लोकानां पूर्वस्योत्तरोत्तरस्मिन्नोतत्वप्रोतत्ववर्णनानन्तरं कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति पृष्टेन याज्ञवल्क्येन परब्रह्मलोकस्यैतत्प्रोतत्वं परब्रह्मशक्तौ वर्णनीयं सा परतत्वभूता गुरूपसदनादिशिष्यकृत्यमर्यादामतिक्रम्य पृच्छसीति तत्प्रश्ननिवारणार्थं प्रवृत्ते 'गार्गिमातिप्राक्षीर्माते मूर्धा व्यपसत्' 'अनतिप्रश्न्यां देवतामिति प्राक्षीरिति वाक्ये तस्यामात्मत्वावान्तरविशेषधर्मरूपं देवतात्वं श्रुतम् । न चैतद्देवतात्वश्रवणं परमेश्वरविषयमिति शङ्कनीयम् । तदानीं

निर्धारितस्य परब्रह्मलोकान्तसकलजगदाधारप्रश्नस्य 'यदूर्ध्वं याज्ञवल्क्यदिवोयदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, कस्मिंस्तदोतं च प्रोतं चे'ति, पुनरवतारणे 'सत्याकाश एव तदोतं च प्रोतं चे'ति तदुत्तरवाक्ये चिदम्बरशक्तिविषयकाकाशशब्द श्रवणात्तदनन्तरं 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति प्रश्नान्तरस्योत्तरेण एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्तीत्यादिना 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'त्यन्तेन सन्दर्भेण तस्याक्षरशब्दोदितपरब्रह्म श्रुतत्व प्रतिपादनाच्च। तस्माच्चिदम्बरशक्तौ कारणत्वस्य चात्मत्वस्य चान्वये न काचिदनुपपत्तिः। किं च तस्मिन्नेव बृहदारण्यके अन्तर्यामिब्राह्मणे पृथिव्यादिक्रमेण ब्रह्मणः सर्वप्रपञ्चान्तर्यामित्वनिरूपणप्रस्तावे 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरोयमयत्येष त आत्मान्तर्याम्यमृत' इति। तेनान्तर्यामिणो नियाम्यं विज्ञानं किञ्चित्काः पठन्ति। तद्विज्ञानं कस्येत्याकाङ्क्षायां सन्निधानात्तस्यैवान्तर्यामिणः परब्रह्मण इति युक्तम्। तस्य हि सर्वावभासकतया नित्यं सर्वव्यापकं च विज्ञानं 'तस्य भासा सर्वमिदं विभाती'ति श्रुत्यन्तरप्रसिद्धं तथाभूतब्रह्मविज्ञानं च ब्रह्मसाधारणधर्मत्वेनानेक श्रुतिप्रसिद्धः प्रसिद्धाकाशविलक्षणः परमाकाश इत्येवाङ्गीकर्तुमुचितम्। आकाशो विज्ञानं चेति ब्रह्मणि पृथग्धर्मद्वयाङ्गीकारे गौरवात् तदीयविज्ञाने नित्यविभुत्वेन प्रसिद्धाकाश सादृश्येन 'आसमन्तात्काशत' इति योगेन चाकाशशब्दस्य वृत्त्युपपत्तेश्च। तस्मिन् बृहदारण्यके तस्मिन्नेव विज्ञानपर्याये 'य आत्मनि तिष्ठन्नात्मनोऽन्तर' इत्यादि माध्यन्दिनाः पठन्ति। अत्र पर्यायैक्यात्स्थानप्रमाणेन विज्ञानात्मशब्दयोरैकार्थ्यं वाच्यमिति ब्रह्मचिच्छक्तेरात्मत्वसिद्धिः।

ननु शिवस्य धर्मज्ञानरूपाचिच्छक्तिः चैतन्यरूपैव न चेतनरूपा। चेतनत्वे तदीयज्ञानेच्छाव्यवहारार्थं तत्रापि जीवेष्विव चिच्छक्त्यंतरस्याङ्गीकरणत्वापत्तेः तत्परिणामरूपाणां ज्ञानेच्छादिवृत्तीनां धर्मिभूतशिवज्ञानेच्छादिरूपत्वात् तदीयज्ञानेच्छादिरूपत्वस्याप्यङ्गीकारे जीवचिच्छक्तीनामपि तस्यैव रीत्या ज्ञातृत्वापत्तेः। अतश्शिवमहिषीत्वेन प्रसिद्धा गौरी शिवा सर्वमङ्गलेत्यादि-

नामवती शक्तिः शिवधर्मरूपायाश्चिच्छक्तेरन्या न तु तद्धर्मरूपा । पुराणादिषु तस्याः शिवधर्मत्व प्रसिद्धिस्त्वयुतसिद्धधर्मवन्नित्यसंबन्धित्वेनानपायत्वसाम्यात् । अतः चिच्छक्तौनात्मत्वमन्वेतीति, मैवम् । यजुर्वेदे हि 'तांसवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्यां यामस्य कण्वो अदुहत् प्रपीनाᳵ सहस्रधारां पयसा महीं गाम्' इत्याम्नायते मन्त्रः । अत्र सवितुर्वरेण्यः शिवयोदात्तमो मन्त्रे 'तदक्षरं तत्सवितुर्वरेण्य'मिति श्रवणात्तस्य सुमतिस्तदीयाचिच्छक्तिः सोत्तरार्धे 'या प्रथमाव्यौच्छत् सा धेनुरभवद्या मे सानः पयस्वती धुक्ष्वोत्तरा-मुत्तरांसमा'मितिव्युष्टीष्टकोपाधानमन्त्रार्थप्रत्यभिज्ञानात् गौरीत्यवसीयते । व्युष्टीष्टकोपाधानमन्त्राश्च 'इयमेव सा या प्रथमाव्यौच्छदित्यारभ्य प्रवृत्ताः पञ्चदशापि 'वधूर्जजान नवगजनित्री' सूर्यपत्नी विचरतः प्रजानती'त्यादि-मन्त्रलिङ्गेन देवीसूक्तस्य प्रसिद्ध्या च गौरीविषया इति स्पष्टमेव । अतश्शिवस्य चिच्छक्तिरेव गौरीति प्रमाणप्रतिपन्नोऽर्थः कुयुक्तिभिर्नबाधमर्हति । ब्रह्मधर्मत्वे-नावतिष्ठमानाया एव चिच्छक्तेः स्वयमपि चेतनान्तरत्वेनाव्यवस्थाने च काऽनुपपत्तिः । तदीयाः केचन ज्ञानेच्छादिपरिणामाः शिवस्य ज्ञानेच्छादयो भवन्ति । केचन शिवसङ्कल्पानुसारेणैव शक्तेर्ज्ञानेच्छादयो भवन्ति । यथा राज्ञा अमात्यवशे स्थापितेष्वेव स्वाभरणादिषु केचन राज्ञः केचन राजसङ्कल्पानु-सारेणामात्यस्य च भोग्या भवन्तीति हि समर्थयितुं शक्यम् । सैषा चिच्छक्तिरेव शिवस्य ज्ञानेच्छाकृतिबलतेजः प्रभृतिगुणरूपेण शरीरेन्द्रियमनः प्राणरूपेण विविधभोग्यभोगस्थान भोगोपकरणरूपेण सह भोक्तृदिव्यमहिषी-रूपेण च तमासेवते । स्वयमपि ज्ञानेच्छादिभिरुक्तैः सर्वैरप्युपेता पुरुषरूपेण दिव्यमहिषी युक्ता च भवति ।

आहुश्चाभियुक्ताः —

' शक्तिश्शरीरमधिदैवतमन्तरात्मा
ज्ञानं क्रियाकरणमासनजालमिच्छा ।
ऐश्वर्यमायतनमावरणानि च त्वं
किं तन्न यद्भवसि देवि शशाङ्कमौलेः ॥

योऽयं चकास्ति गगनार्णवरत्नमिन्दुः
  योऽयं सुरासुरगुरुः पुरुषः पुराणः ।
यद्वा ममार्थमिदमन्तकसूदनस्य
  देवि त्वमेव तदिति प्रतिपादयन्ति ॥'

इत्यादि । '**परास्य शक्तिर्विविधैव श्रूयते**' इति मन्त्रोऽप्यमुमर्थं क्रोडीकरोति । '**आकाश शरीरं ब्रह्म सत्यात्मप्राणारामं मन आनन्दं शान्तिसमृद्धममृत**'मिति श्रुतिरप्युक्तार्थमाविष्करोति । यदेष आकाश इति श्रुत्युक्ता चिच्छक्तिरेव ब्रह्मणः शरीरं तयैव सूक्त्या तत्सत्यात्मको ह्येवान्यादिति श्रुतेः प्रपञ्चस्य स्वस्यापि प्राणभूतायां तस्यामेवारामः क्रीडाऽस्य तयैव मनसानन्दानुभवः तयैव शान्त्या तदानन्दानुभव प्रयुक्त विषयवैराग्यरूपया समृद्धं ब्रह्मेति श्रुतेस्तात्पर्यम् । एवं सर्वाश्चर्यनिदानभूतायां तस्यां न किञ्चिदनुपपन्नमिति ज्ञानत्वेऽपि ज्ञातृत्वमुपपद्यते ।

नन्वेवमात्मत्वोपपत्त्या चिच्छक्तेरानन्दमय वाक्य प्रतिपर्यायत्वेन ब्रह्म पुच्छं प्रतिष्ठेत्यस्य तदधिक ब्रह्मप्रतिपादकत्वेऽपि सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रानन्त शब्दरूढ्यार्थविवक्षायां किं बाधकं तस्यैवानन्तशब्दार्थस्य नारायणस्य चिच्छक्त्याधारभूत ब्रह्मत्वसंभवादिति चेत् उच्यते । न नारायणस्य चिच्छक्त्याधारभूत ब्रह्मरूपता संभवति । नारायणस्य चिच्छक्त्यंशत्वेन श्रुत्यन्तरे प्रतीयमानत्वात् । तथा हि **श्वेताश्वतरोपनिषदि** —

छन्दांसि यज्ञाः क्रतवो व्रतानि
  भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत्
  तस्मिंश्चान्यो मायया संनिरुद्धः ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयव भूतेन व्याप्तमेतच्चराचरम् ॥

इत्याम्नायते, अत्राद्यमन्त्रे ऋचोऽक्षरे परमेव्योमन्निति तत्पूर्वमन्त्रे प्रकृतां परमेव्योमशब्दितां शैवीं चिच्छक्तिं परामृश्य पञ्चम्या तस्या समस्तजगदुपादानत्व प्रतिपादनात्तस्या मृद इव विकारित्वं 'सृजत' इति पदेन शिवस्य निमित्तत्वं प्रतिपादयता तस्य कुलालवदविकारित्वं च प्रतिपाद्यते। द्वितीयमन्त्रे मायां तु प्रकृतिं विद्यादित्यनेन पूर्वमन्त्रोपवर्णितोऽयमेवार्थः स्थिरीक्रियते, तत्र मायाशब्दः शिवशक्तिपरः तस्याः मायावयुनं ज्ञानमिति वैदिकनिघण्टौ ज्ञानपर्यायत्वेव परिगणनात्।

**कूर्मपुराणे**—कैषाभगवती देवी शङ्करार्धशरीरिणी।

इति प्रश्नोत्तरे।

'तस्य सर्वं जगत्सूतिः शक्तिर्मायेति विश्रुता।
तयेदं भ्रामयेदीशो मायावी पुरुषोत्तमः॥

इति मायाशब्दस्य शैवचिच्छक्तिप्रसिद्धत्व प्रतिपादनात्। तथा च मायां शैवीं चिच्छक्तिमेव तत्र तत्र प्रपञ्चप्रकृतित्वेन प्रतिपाद्यमानां विद्यादित्यर्थः। अनेन क्वचित्परमव्योमशब्देन जगत्प्रकृतिः प्रतिपाद्यते। 'यतः प्रसूता जगतःप्रसूतिः' इत्यत्र जगतः प्रसूतिशब्देन 'अजामेकां लोहित शुक्लकृष्णाम्' इत्यत्राजाशब्देन तेषां भिन्नार्थत्वे विरोधः स्यादित्यतिशङ्का सर्वेषामपि तेषां मायैकविषयत्वता निरस्ताभवति। नन्वेवमपि न विरोधशङ्काया निरासः तदैक्षत बहुस्यां प्रजायेये'त्यादि श्रुतिषु हि शिवस्य जगत्प्रकृतित्वं प्रतिपाद्यते। नारायणानुवाकादिषु नारायणस्य। न च शिववाचिनो नारायणवाचिनो वा शब्दस्य शैवी चिच्छक्तिरर्थो भवितुमर्हतीति शङ्का अवशिष्टपदत्रयेणनिरस्ता, तत्र मायिनमिति नित्ययोगेमत्वर्थीय प्रत्ययः ततश्च महेश्वरं मायिनमेव विद्यादित्यनेन शिवस्यापृथक्सिद्धकार्यावस्थाश्रयरूपमेव प्रकृतित्वं तेन तेन श्रुत्यन्तरेण प्रतिपाद्यते न तु परिणामित्वरूपमिति विभावितम्। उत्तरार्धेन सकलजगदुपमानतया बाह्याभ्यन्तर सकलजगद्व्यापकत्वेन।

'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः ॥'

इत्यादि श्रुतिषु प्रसिद्धं नारायणमनूद्य तस्य चिच्छक्त्यंशत्वमन्यतोऽप्राप्तं विदधानेन चिच्छक्तेर्जगदुपादानत्वं च स्यात् । नारायणात्तस्याप्राप्तिद्वारकमिति नदेत्र नारायणस्य जगदुपादानत्वं प्रतिपादयद्भिः श्रुत्यन्तरैः प्रतिपाद्यत इति विभावितम् ।

ननु तस्यावयवभूतेनेत्यत्र सर्वनाम्नः पूर्वार्धे प्रकृतमहेश्वरपरामर्शित्वौचित्यात्तदवयवित्वमेव कस्यचित् प्रतिपाद्यत इति प्रतीयते । तदपि नारायणस्य प्रतिपाद्यत इति न स्पष्टं प्रतीयत इति चेन्न । श्रुत्यन्तरानुसारेण नारायणस्य शिवशक्त्यंशत्वमत्र प्रतिपाद्यमिति कल्पनोपपत्तेः तथा हि — **'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततं'मिति** वेदत्रयेऽप्याम्नायते मन्त्रः । अयं मन्त्रः शिवशक्तिं विष्णोः परमं पदं प्राप्य इति प्रतिपादयतीति मन्त्रब्राह्मणरूपश्रुत्यन्तरार्थ प्रत्यभिज्ञानेनोपबृंहणस्मृतिवचनानुसारेण चात्रसीयते । कथं ? उपबृंहणं तावत् कूर्मपुराणे दृश्यते, तत्र हि —

'कैषा भगवती देवी शङ्करार्धशरीरिणी ।
शिवासती हैमवती यथावद्ब्रूहि पृच्छताम् ॥'

इति ऋषीणां प्रश्नानन्तरं वचनम् ।

'तेषां तद्वचनं श्रुत्वा ऋषीणां पुरुषोत्तमः ।
प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदम् ॥'

इति । अत्र कूर्मरूपिणाविष्णुनोपदेष्टव्यत्वेनौचित्यात् ध्यानविषयतया प्राप्तायां शिवशक्तौ स्वं परमं पदमिति विशेषणेन विष्णुं प्रति तस्याः परमपदत्वमुक्तं, तत्रैव तपश्चर्यया शिवमाराध्य प्रत्यक्षीभूतेन शिवेनसह कैलासे शिवभवनं गत्वा शिवासन एवोमयासह निविष्टं कृष्णं दृष्ट्वा विस्मिता देवकन्याः प्रति शिववचनम्—

'एष धाता विधाता च कारणं कार्यमेव च ।
कर्ता कारयिता विष्णुर्भुक्तिमुक्तिफलप्रदः ॥
भोक्ता पुमानप्रमेयः संहर्ता कालरूपधृक् ।
स्रष्टा पाता वासुदेवः विश्वात्मा विश्वतोमुखः ॥
कूटस्थो ह्यक्षरोऽव्यापी योगी नारायणाह्वयः ।
तारकः पुरुषो ह्यात्मा कैवल्यं परमं पदम् ॥
सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ।
शान्ता सत्या सदानन्दा परं पदमिति श्रुतिः ॥'

इति । अत्र केवलं परमं पदमित्यन्तेन कृष्णमहिमवर्णनानन्तरं कथमयं परमं पदं शक्तिर्हि तथा श्रुतिप्रसिद्धेति शङ्कायां सैषामाहेश्वरीति श्लोकः । स पूर्वोक्तः कृष्णः एषा परिदृश्यमाना माहेश्वरी गौरी मम शक्तिः अस्यां परमं पदमिति श्रुतिरस्तीत्येतदभेदात् । कृष्णेऽपि परमपदमित्युक्तमुभयमुपपद्यत इति भावः । न च विष्णुं प्रति परमपदत्वं श्रुत्योच्यते तत्तु भेदे सत्येव विष्णौ व्यपदेष्टुं शक्यमिति वाच्यम् । तद्विष्णोः परमं पदमिति श्रुतौ सकल जीवांशिभूतं विष्णुं प्रति परमपदत्वोक्त्या तदंशान् जीवान् प्रत्यपि परमपदत्वमर्थसिद्धमस्तीत्यर्थ-सिद्धस्य तस्य विष्णावपि व्यपदेष्टुं शक्यत्वात् । तत्रैव कृष्णतपश्चर्यानन्तरं शिवेन सह प्रत्यक्षीभूतायाः शक्तेः कृष्णं प्रति प्रतिवचनम् —

'वत्सजाने तथानन्तां निश्चलां सर्वदाच्युत ।
अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव ॥
त्वं हि नारायणः साक्षात्सर्वात्मा पुरुषोत्तमः ।
प्रार्थितोदैवतैः पूर्वं संजातो देवकीसुतः ॥
पश्यत्वमात्मनात्मान ममलं परमं पदम् ।
नावयोर्विद्यते भेद ऐक्यं पश्यन्ति सूरयः ॥'

इति । अत्रापि त्वं खलु परमं पदमिति श्रुतिः प्रसिद्धा कथमहं परमं पदमिति श्रुति प्रसिद्धायां कृष्णस्याकाङ्क्षायां नावयोर्विद्यते भेद इत्याद्युक्तम् ।

एवमादिभिः स्मृतिवचनैरस्मिन्मन्त्रे प्रथमपादस्य शिवशक्तिविषयत्वं स्पष्टमवसीयते उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तमम् । देवं देवत्रासूर्यमगन्मज्योतिरुत्तममिति मन्त्रार्थप्रत्यभिज्ञया पादान्तरयोस्तद्विषयत्वमवसीयते दिव उपरिस्थितमादित्यादि-ज्योतिरपेक्षयोत्कृष्टं परमानन्दात्मक परमाकाशरूपज्योतिरुत्पश्यन्तोवयं सर्वोत्कृष्टं परमव्योमसूर्यरूपं परमशिवाख्यं ज्योतिः प्राप्ता इति तस्यार्थः। प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरं परो यदीप्यते दिवीति मन्त्रार्थप्रत्यभिज्ञया च तयोस्त द्विषयत्वं प्रत्नस्य रेतसः प्राचीनस्य कारणस्य ज्योतिर्दीप्तिरूपा शक्तिः तद्वासरं वासरवन्मरीचिनिचयव्याप्तं पश्यन्ति तद्दर्शनयोग्यामुक्ताः। दिवः परं सद्यदीप्यत इति तदर्थः। तथा मनसैतान् क्रमात् पश्यन्रमते य एते ब्रह्मलोक इति छान्दोग्योपनिषद्वाक्यार्थो द्वितीयपादे प्रत्यभिज्ञायते । तद् खलु वाक्यं युगपान्मिलित सर्ववैषयिक सुखात्मक ब्रह्मानन्दानुभवं मुक्तानां प्रतिपादयन्ति, इह द्वितीयपादोक्तमेवार्थं प्रतिपादयति यतस्तत्र सूरिशब्दो मुक्तपरमपि श्लोका यन्ति पथ्येव सूरेरिति श्वेताश्वतरमन्त्रे मुक्ते सूरिशब्द प्रयोगदर्शनात् । सदा पश्यन्तीति नित्यानुभाव्यत्वोक्तया मुक्तानुभाव्यस्थिर पुरुषार्थ ब्रह्मानन्दरूपत्वं परमपदस्याविष्कृतम् । तस्य वैष्णवस्थानविशेषरूपत्वे ब्रह्मानन्दवन्नित्यानुभाव्यत्वायोगात् । तथा 'अथ यदतः परोदिवोज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेष्वि'ति श्रुतिः ज्योतिः शब्दोक्तपरब्रह्म दीप्तिरूपायाः शक्तेर्दिव उपरिभागस्थितेष्वप्राकृतलोकेषु व्याप्तिं प्रतिपादयति। तदर्थोऽत्र तृतीयपादे प्रत्यभिज्ञायते, एवं श्रुत्यन्तर प्रत्यभिज्ञोपबृंहण बलात्त-द्विष्णोरिति मन्त्रः शिवशक्तेर्विष्णुं प्रति परमपदत्वं प्रतिपादयतीति निर्णये सति तदनुरोधेन तस्यावयवभूतेनेत्यत्र षष्ठयन्तं पदं पूर्वमन्त्रप्रकृतपरमव्योमपरामर्शीति समर्थनीयम् । तदवयवत्वं च नारायणस्य प्रतिपादयतीत्युपपादनीयम् । न्यायं चैतत् । उत्तरार्धेन हि सर्वचराचरव्याप्तिस्तदवयवत्वं चेत्युभयं नाभिधीयते एकवाक्यप्रतीतेः अतः संभवत्प्राप्तिकानुवादेनाप्राप्तांशविधिरेष्टव्यः। अन्यतः प्राप्तित्वव्याप्तं सर्वं चराचरमित्यस्यास्ति 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति हि श्रूयते । तदवयवत्वस्य कुतश्चित्प्राप्तिः संभवतीति

तस्मात्तस्यावयवभूतेनेति श्वेताश्वतरवाक्यबलान्नारायणस्य चिच्छक्त्यंशत्व प्रतीते र्नारायणस्य मुक्तप्राप्यत्वं तदंशिभूतानन्दमयशब्दवाच्यचिच्छक्त्यर्थकत्व प्रतिपादक प्रकरणस्थानन्तशब्दबलात् सिद्ध्यतीति ।

अत्राभिदध्महे — यद्यप्यानन्दवल्ली आनन्दमयाधिकत्वप्रतिपादन प्रवणा तथापि नारायणस्य तत्प्रतिपाद्यतायां न किञ्चिद्बाधकमिति नान्तशब्द-रूढित्यागे प्रमाणं पश्यामः । न च नारायणस्य चिच्छक्त्यंशत्व प्रतिपादक प्रमाणानुसारादनन्तशब्दरूढित्याग आश्रीयत इति वाच्यम् । तदसिद्धेः, न च तस्यावयवभूतेन व्याप्तं सर्वमिदं जगदित्यनेन सकलजगदुपादानतया बाह्याभ्यन्तरसकलजगद्व्यापकत्वेन ।

'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥'

इत्यादि श्रुतिषु प्रसिद्धं नारायणमनूद्य तस्य चिच्छक्त्यंशत्वमन्यतोऽप्राप्तं विदधानेन नारायणस्य चिच्छक्त्यंशत्वं विभावितमिति वाच्यम् । 'तस्यावयव भूतैस्तु व्याप्तं सर्वमिदं जगत्' इत्येव तन्मन्त्रपाठात् तृतीयैकवचनान्ततया पाठासिद्ध्या बहुवचनविरोधेन नारायणपरत्वासंभवात् उपनिषद्व्याख्यानेषु बहु-वचनान्ततया पाठमाश्रित्यैव हि व्याख्यातम् । परमात्मांशभूतैर्जीवैश्चेतनं व्याप्तमिति परमात्मांशत्वं च जीवानां '**अंशो नानाव्यपदेशा**'**दित्यधिकरणे प्रकाशादित्यधिकरणे** 'प्रकाशादिवत्त नैवं परः' इति सूक्तोक्तन्यायेन परमात्मापृथक्सिद्धविशेषणतया विशिष्टैकदेशत्वमादाय निर्वाह्यम् । एक-वचनान्ततया त्वत्कल्पितपाठाश्रयणेऽपि नारायणस्य विवक्षितत्वेन किंचित्प्रमाणं पश्यामः । न च व्याप्तं सर्वमिदं जगदित्यनेन श्रुत्यन्तरसिद्धो नारायणोऽनूद्यत इति प्रत्यभिज्ञा बलासिद्धमिति वाच्यम् । तर्हि व्याप्तमेतच्चराचरमित्यस्य अन्तर्बहिश्चेति वाक्यप्राप्तानुवादकत्वे पुरोवादपर्यालोचनायां सहस्रशीर्षमित्यनुवाके नारायणस्यानन्येश्वरत्व सर्वोत्तीर्णत्व परब्रह्मत्वादीनामावेदनेन तद्विरोधेन चिच्छक्त्यंशत्व विधानासंभवात् । '**सप्तदश सामिधेनीरन्वाह** इत्य-

नारम्याधीतवाक्ये सामिधेनीप्राप्त्यपेक्षायां पाञ्चदश्यावरुद्धत्वेनैव प्राप्तया न सर्वासु विकृतिषु तद्विधानं संभवतीति हि न्यायविदः। उक्तं च तंत्र-वार्तिककृता —

'नानारम्यविधिप्राप्त्या सर्वास्वेव भविष्यति।
पश्चादि व्यतिरिक्तस्य पाञ्चदश्येन बाधनात्॥
स्वाङ्गेन पाञ्चदश्येन व्यासास्ताद्यतिदेशतः।
विहितं सामिधेन्यङ्गं साप्तदश्यं न गृह्यते॥'

इति। तथा च तत्पक्षेऽपि जात्यैक्यावलम्बनेन जीवपरत्वमेवाश्रयणीयमिति श्वेताश्वतरवाक्यं न विष्णोः शिवशक्त्यंशत्व साधकत्वेनोपन्यासार्हम्।

यदपि 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यादि-श्रुतिर्विष्णोः परमप्राप्यमूलरूपत्वेन शिवशक्तिं प्रतिपादयतीति।

तदपि तुच्छम्। पदशब्दस्य स्थानपरत्वे प्रसिद्ध्यतिशयेन तस्यैव पदशब्दोपस्थितत्वेन तदन्यपरत्वस्य वक्तुमयुक्तत्वात्। न च कूर्मपुराणोपबृंहण-बलादस्य मन्त्रस्य चिच्छक्तिपरत्वमिति वाच्यम्। परमशब्दकीर्तनमात्रेणै-तच्छ्रुत्युपबृंहणत्वस्य निश्चेतुमशक्यत्वात्। न ह्येतत् श्रुतिस्थपदान्तरार्थकथनं तत्र कृतं दृश्यते येनैतदुपबृंहणस्य श्रुतितात्पर्य निर्णयैक प्रयोजनकतयोपबृंहण प्रयोगानुसारेण पदशब्दार्थनिर्णयोऽवश्यंभावीति वाच्यम्। तथाप्येतच्छ्रुत्युप-बृंहणं विनापि श्रुत्यन्तरस्थपदवाच्य निर्धारणपरत्वेनाप्युपबृंहणत्वोपपत्त्या एतदुप-बृंहणत्वानिर्णयात्।

ननु विनिगमनाभावात् श्रुत्यन्तरवदेषापि श्रुतिस्तेनोपबृंहितेति वाच्यमिति चेन्न। पदशब्दरूढित्यागावश्यम्भावतदभावयोर्विनिगमकत्वादेतच्छ्रुतेः प्राप्यस्वरूप-परत्वे प्रमाणमन्तरेण पदशब्दरूढिर्भञ्जनीया। अन्यत्र तु — 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति वाक्ये पूर्वं —

'सर्वे देवा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योम् ॥'

इत्युपक्रम्य, 'अणोरणीयान्महतो महीयान्' 'नायमात्मा प्रवचनेन लभ्यः' 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन' इत्यादिभिस्तत्पदस्वरूपविवरणदर्शनेन रूढित्यागोऽवश्यम्भावी । तथा च तच्छ्रुतिस्थपदशब्दार्थनिर्णयपरत्वमेव युक्तम् । ननु तर्हि कठवल्लीनां भगवत्परत्वं न स्यादिति चेन्न ।

'चतुर्विंशतिरेतानि तत्वानि कथितानि तु ।
ज्ञात्वा ज्ञानं तद्विहीनं पुरुषं पञ्चविंशकम् ॥
यज्ज्ञात्वा तु विमुच्यन्ते यतयः शान्तबुद्धयः ।
यदेतत्परमं गुह्यमेतदक्षरमुत्तमम् ।
अशब्दमस्पर्शरसमरूपं गन्धवर्जितम् ॥
निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम् ।
अजं निरञ्जनं शान्तमव्यक्तं ध्रुवमक्षरम् ।
अनादिनिधनं ब्रह्म तद्विष्णोः परमं पदम् ॥
विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥
इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु पराबुद्धिः बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्नपरं किञ्चित्साकाष्ठा सा परागतिः ॥
स्वं देहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्विष्णुं पश्येद्धविस्थितम् ॥

रविमध्येस्थित: सोमस्तस्य मध्ये हुताशन: ।
तेजोमध्येस्थितं सत्वं सत्वमध्येस्थितोऽच्युत: ॥
अणोरणीयान्महतोमहीयान्
आत्मा गुहायां निहितोऽस्य जन्तो: ।
तमक्रतुं पश्यति वीतशोको
धातु: प्रसादान्महिमानमीशम् ॥
एष देवस्तु मर्त्यानां पटैरिव विधीयते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेषुभि: ।
एष वै पुरुषो विष्णु: व्यक्ताव्यक्त: सनातन: ॥'

इत्यादि शङ्खस्मृत्याद्युपबृंहणानुसारेण भगवत्परत्वावसायात् । कूर्मपुराण-वचनजातस्य तदनुसारेण नेयत्वात् । तत्रापि हि ध्यात्वा स्वं परमं पदमिति परमशब्दार्थं स्वं ध्यात्वेत्यर्थवर्णनात् भगवत्स्वरूपस्य तथात्वमवगम्यते । न च गौरीस्वरूपस्य प्रश्नविषयत्वेनौचित्यात् ध्यानविषयत्वं गौर्या एव वाच्यमिति । परमपद शब्दस्तत्पर इति वाच्यम् । उत्तरत्र प्रतिपाद्यमानगौरीपारम्यस्य भगवत्कलायोगनिबन्धनत्वव्यक्त्यै स्वस्वरूपं स्मृतवानिति प्रतिपादनसंभवात् । अत एव देवकन्यां प्रति शिववचनेऽपि नारायणस्य सृष्टिस्थितिलयकारणत्व-सर्वान्तर्यामित्वादि कीर्तयित्वाऽनन्तरं केवलं परमं पदमिति प्राप्यत्वं संकीर्त्य सैषा माहेश्वरीति श्लोके स्त्रीलिङ्गपदनिर्दिष्टगौरीमनूद्य परमं पदमिति तत्र विष्णवभेद: प्रतिपाद्यते । कृष्णं प्रति गौरीवचनेऽपि वत्स जाने तथानन्ता'मित्यादिना कृष्णस्यावतारमर्यादामनुसृत्योक्त्वा अनन्तरं 'त्वं हि नारायण: साक्षा'दित्यादिना सर्वोत्तमत्ववर्णनपूर्वकं भगवत एव परमपदत्वमाविष्कृतम् । अनन्तरं तदीय-कलावेशनिबन्धनमभिन्नत्वमुपपादितम् । तथा च कूर्मपुराणवचनेष्वपि परमपद-शब्दार्थत्वं भगवत: कथ्यत इति न तद्बलात् कठवल्लीनां भगवदतिरिक्त-परत्वम् । इदं तु वस्तुगतिमनुरुध्योक्तम् । कूर्मपुराणवचनानि तद्विष्णो-रित्येतन्नोपबृंहयन्तीति ।

परमार्थस्तु — तदुपबृंहणत्वेऽप्युक्तरीत्या भगवत्परत्वात्तेषां न तद्बलात् तद्विष्णोः परमं पदमित्यस्य शक्तिपरत्वोत्प्रेक्षासंभवः ।

यदपि — उद्वयंतमसस्परि पश्यन्तो ज्योतिरुत्तरमिति' मन्त्रार्थं प्रत्यभिज्ञया तद्विष्णोरिति मन्त्रस्य चिच्छक्तिपरत्वमिति ।

तदप्यसारम् । स्थानपरत्वपर उद्वयमिति मन्त्रस्थ ज्योतिश्शब्दस्य तत्परत्वोपपत्त्या प्रत्यभिज्ञया चिच्छक्तिपरत्वनिर्णयायोगात् । स्थानस्यापि स्व प्रकाशत्वमादाय ज्योतिश्शब्दविषयत्वं संभवति । उद्वयमित्यस्य शिवतच्छक्ति परत्वकथनं चानुपपन्नम् । प्रमाणाभावात् तमसस्परीत्यत्र च आदित्यवर्णं तमसः परस्तादिति मन्त्रार्थप्रत्यभिज्ञया भगवत्परत्वावसायाच्च ।

'तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम् ।
उदुत्यं तु जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ॥'

इति वैष्णवधर्मशास्त्रवचनबलात्तदुत्तरमन्त्राणां भगवत्परत्वावगत्या अस्यापि मन्त्रस्य भगवत्परत्वावसायात् ।

वस्तुतस्तु — उद्वयमित्यस्य दीप्तिपरत्वेऽपि प्रत्यभिज्ञायाः स्थलद्वय-परामर्शसापेक्षत्वेन विशेषित प्रवृत्तिकत्वात् श्रुतेर्बलतया फलशब्दश्रुत्युपस्थापि-तस्थानपरत्वमेव तद्विष्णोरित्यस्य युक्तम् । स्थानदीप्त्योरुभयोः सूरिदृश्यत्व-संभवात् । न च स्थानविशेषस्य नित्यानुभाव्यत्वायोगादस्य न तत्परत्वमिति वाच्यम् । सविभूतिकस्य ब्रह्मणः प्राप्यत्वेन, सार्वज्ञ्येन च नित्यानुभाव्यत्वस्य स्थानविशेषेऽपि संभवात् । एतेन मन्त्रान्तरप्रत्यभिज्ञापि निरस्ता । तथा च न तद्विष्णोः परमं पदमित्यस्य विष्ण्वंशीभूत चिच्छक्ति प्रतिपादकत्वमित्यानन्द-मयातिरिक्तपरत्वेऽप्यानन्दवल्ल्यानानन्तशब्दरूढिस्वीकारे किञ्चिद्बाधकमिति सत्यं ज्ञानमनन्तमित्यस्य नारायणपरत्वं निर्बाधमेव ।

वस्तुतस्तु — नानन्दमयातिरिक्ते पर्यवसानं युज्यते । ब्रह्मविदाप्नोति-परमिति प्रक्रान्तस्य सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षितस्य ब्रह्मणः 'तस्माद्वा

न्तस्मादात्मन आकाशः संभूत' इत्यात्मशब्देन निर्देशे कृते स आत्मा कः इति आकाङ्क्षायां क्रियमाणस्यात्मनिरूपणस्य स्थूलारुन्धतीन्यायेन प्राणमये प्रथममात्मत्व बुद्धिमवतार्य तदनन्तरं मनोमयाद्यवतरणक्रमेण तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय इत्यानन्दमये समापितत्वात् । न चोपक्रमे सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णे स्वप्रधानतया प्रकृतं ब्रह्मैव ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मपदेन गीयत इति तत्रैव स्वप्राधान्यं युक्तम् । स्वप्रधानमन्त्रवर्णिक ब्रह्मोपस्थापक ब्रह्मवशानुसारादिति वाच्यम् । तस्मादाकाशः संभूत इत्येतावतैव चारितार्थ्ये आत्मन इति निर्देशस्य प्रयोजनं किमिति विमर्शे आत्मत्वेन ब्रह्मनिरूपणमित्यत्रगत्या आत्मनिरूपणसीम्न एव ब्रह्मनिरूपण विश्रान्तिस्थानत्वावसायात् । अन्यथा आत्मन इत्यस्य वैयर्थ्यापातात् ।

न च ब्रह्मपदेन सत्यं ज्ञानमनन्तं ब्रह्मेति निर्देशाद्ब्रह्मत्वेन निरूपणं चिकीर्षितमिति वाच्यम् । तस्य ब्रह्मोपस्थापनरूपप्रयोजनकत्वात् आत्मन इत्यस्य तु न प्रयोजनान्तरं पश्यामः । न चात्मत्वेन निरूपणस्य क्रियमाणत्वेऽपि नानन्दमये पर्यवसानम् । तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यानन्दमयविज्ञानमययोरेकात्मत्वोपदेशेनानन्दमयातिरिक्तात्मप्रतीतिरिति वाच्यम् । पर्यायान्तर इव तस्माद्वा एतस्मादानन्दमयादित्याद्युपदेशाभावेन तस्यानन्यात्मत्वप्रतिपादनपरत्वावगत्याऽऽनन्दमयातिरिक्तात्मतात्पर्यासिद्धेः । न च ब्रह्मपुच्छं प्रतिष्ठेत्येवात्मान्तर उपदेश इति वाच्यम् । 'तस्यैष एव शारीर आत्मा यः पूर्वस्येत्येतदनन्तरभावित्वाभावेनात्मान्तरोपदेशपरत्वायोगात् । तस्यात्मान्तरोपदेशपरत्वाप्रतीतेश्च । इदं पुच्छं प्रतिष्ठेत्यादि पदप्रधानावयवनिरूपणपरत्वेन प्रतीयमानस्य प्रधानभूतात्मनिरूपणपरत्वायोगाच्च ।

ननु सत्यं ज्ञानमनन्तं ब्रह्मेति प्रधानतया प्रकृतस्य ब्रह्मपदेनोपस्थित्या तत्प्राधान्यस्यावश्यवाच्यत्वेन पुच्छपदस्याधारलक्षणां परिकल्प्य प्रधानभूतात्मान्तरोपदेशपरत्वं कल्प्यत इति चेदुच्यते — किमस्मिन् पक्षे 'असन्नेव स भवतीत्यादिकं पुच्छब्रह्मविषयकमानन्दविषयकं वा, नाद्यः, तत्तत्पर्यायशेषभूतश्लोकस्य तत्तदवयविपरत्वदर्शनेनास्य पुच्छपरत्वे वैरूप्याभावात् ।

न द्वितीयः — ‘असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः ।’ इति ब्रह्मशब्दस्यानन्दमयातिरिक्त ब्रह्म प्रतीतिप्रतिबन्धकत्व प्रसङ्गेन घट्टकुटी प्रभातन्यायापातात् । किञ्च ब्रह्म पुच्छं प्रतिष्ठेत्यत्र यदि ब्रह्मनिरूपणपर्यवसानं तदात्मन आकाश इत्यात्मग्रहणं व्यर्थमेवापद्येत । तदन्तरेणापि ब्रह्म पुच्छं प्रतिष्ठेति प्रधानप्रतिपादक ब्रह्मशब्दोपस्थित एव तस्यैष एव शारीर आत्मेत्येकात्मत्वोपदेशोपक्षिप्त आनन्दमयस्यात्मेति निर्धारणसंभवात् । न हि ब्रह्मात्मशब्दयोरेकार्थापर्यवसायित्व शङ्कासंभवः, येन तच्छब्दोपस्थित ब्रह्मण आत्मन इति निर्देशस्यार्थवत्त्वं स्यात् । न च ब्रह्मपदनिर्दिष्ट पुच्छब्रह्मण एव तस्यैष एव शारीर आत्मेत्यात्मशब्दार्थत्वसिद्धिः । तस्माद्वा एतस्मादात्मन इति निर्देशस्य प्रयोजनमिति शङ्क्यम् । तमन्तरेणापि तत्सिद्धेः, न च तदभावेऽनन्यात्मत्व प्रतिपादनमुखेनानन्दमये पर्यवसानं स्यादिति तद्वारणं प्रयोजनमिति वाच्यम् । वैरूप्यप्रसङ्गेन तस्यैष एवेत्यस्य प्रमाणमन्तरेण नान्यात्मत्वप्रतिपादनपरत्वासंभवेन तत्पर्यवसानायोगात् । न च पुच्छपदनिर्देशात् पुच्छब्रह्मण्यपर्यवसान शङ्कायां तद्वारकतया सार्थक्यमिति वाच्यम् । त्व प्रधानमान्त्रवर्णिक ब्रह्मोपस्थापकब्रह्मपदानुसारात्तस्यैष एवेत्यनन्तरात्मान्तरानिर्देशाच्च, पुच्छब्रह्मण्येव पर्यवसानादिति त्वयैवोक्तत्वात् । किञ्च कथमनेन पुच्छब्रह्मणिपर्यवसानवारणाय तस्मादात्मन इति सामानाधिकरण्यावगतै कार्थ्ययोरात्म ब्रह्मशब्दयोरेकार्थपर्यवसानं न्याय्यमिति बुध्युत्पादनद्वारेणेति चेत्, अन्योऽन्तर आत्मानन्दमय इत्यात्मशब्दस्यैकार्थपर्यवसायित्वमित्यानन्दमयाभिन्नस्यैव ब्रह्मणः पुच्छत्वव्यपदेश इति बुध्युत्पादन द्वाराऽऽनन्दमयपर्यवसायित्व ज्ञापकत्वस्यापि संभव इति वक्तुं शक्यत्वात् । एवं हि पुच्छशब्दस्वारस्य मपरित्यक्तं, अर्थवत्त्वं च पुच्छशब्दस्य भवति । अन्यथा तस्याधारत्वलक्षकत्वे प्रतिष्ठापदेनैव तल्लाभेन तद्वैयर्थ्यापातात् । **न च कान्तिमान्मुखचन्द्र** इत्यत्र चन्द्रतुल्य कान्तिमत्प्रतिपत्त्यर्थत्वेन चन्द्रशब्दस्यैव पुच्छतुल्याधारत्व प्रतिपत्त्यर्थत्वेन पुच्छशब्दस्य सार्थक्यमिति वाच्यम् । चन्द्रतुल्यकान्तिमत्त्वप्रतिपत्तेरुत्कर्ष हेतुत्वेन ब्रह्मणः पुच्छतुल्याधारत्वस्य निकर्षावहत्वेन वैषम्यात् ।

नन्वाधारत्वसामान्यमेव पुच्छवद्भावविशेषिततया तेन लक्षणीयं ब्रह्मणि श्रोतृबुद्ध्यवतारणाय श्रुत्या अन्नमयादिक्रमेण तन्निरूपयिषितमिति पक्षितया निरूपितस्यानन्दमयस्य ब्रह्मपुच्छपदाधार इत्युक्ते दृष्टान्तमुखेन संप्रतिपत्ति संभवात्। तदर्थं पुच्छशब्द एकार्थक इति चेन्न। तथा सति पुच्छशब्दस्य पुच्छवद्भावपरत्वे पक्षिनिरूपणस्यापरिपूर्ति प्रसङ्गात्। तथासति तस्य पुरुष विधतां अन्वयं पुरुषविध' इति वाक्यविरोधाभावात् विज्ञानमयस्य पक्षिविधत्व मनुकृत्यायं पुरुषविध इति हि तस्यार्थः तस्मादयमात्मेति विशिष्य निर्दिष्टे कृत ब्रह्म निरूपण पर्यवसानज्ञापनैः स प्रयोजनकः 'तस्माद्वा एतस्मादात्मन' इत्यात्मशब्देन निर्देश इत्युन्नीयते। एवं तत्पर्यायशेषभूतस्य श्लोकस्य तत्तदवय-विपरत्वदर्शनेन तदभाव वैरूप्यापातात्। 'आनन्द' इति निर्देशबलात्पुच्छ-शब्दानुसारात् तस्यैष एवेति वाक्यस्थस्य तस्येत्यस्य श्लोकप्रतिपाद्यातिरिक्तपरत्वे वैरूप्यापातात्। नत्वपूर्वपर्यायेष्वन्वयविप्राधान्यस्य दृष्टस्य त्यागप्रसङ्गात्। तस्यैष एवेत्यस्यानन्यात्मत्वपरत्वं कथंचिद्भेदकल्पनया, ब्रह्मणः पुच्छत्वं च परिकल्प्यानन्दमये पर्यवसानस्य वक्तुं शक्यत्वाच्च नानन्दमयातिरिक्तपर्यव-सानमानन्दवल्ल्योपपादितम्।

यत्तु कस्यां गुहायां निहितमित्याकाङ्क्षायामन्नमयादिकोशानां निरूपणं प्रवृत्तमिति। तदयुक्तम्, तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यस्य प्रतिपर्याय-मधीयमानस्यानर्थक्यापत्तेः अस्य हि प्राणमयादिषु अवतीर्णाया अन्नमयात्मत्व-बुद्धेरेकात्मत्वोपदेशेन निवर्तनं हि प्रयोजनमध्यवसीयते। गुहाशब्दार्थविवरणपरत्वे अन्नमयादीनां निरूपणमात्रेणैव तत्सिद्धेस्तस्यैष एव शारीर आत्मेत्यस्य न प्रयोजनं पश्यामः।

यदपि किं तद्व्योमेत्याकाङ्क्षायामानन्दमयनिरूपणं प्रवृत्तमिति। तदप्य-सारम्। 'तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्मा प्राणमयः' इति प्राणमये प्रथममात्मत्व बुद्धिमवतार्य तत्रावतीर्णामात्मत्व बुद्धिं तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यन्नमयप्राणमययोरेकात्मत्वोपदेशेन विनिवर्त्य स आत्मा क

इत्याद्याकाङ्क्षायां तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमय इति मनोमयेतामवतार्य पुनरपि तन्निवर्तनेनविज्ञानमयावतरण तन्निवर्तनेन पूर्वकमानन्दमयेऽसौ बुद्धिरवतार्यते इति तत्रत्य वाक्यशैल्यनुरोधादात्मरूपैकार्थनिरूपणतात्पर्यावगमेन तद्विरोधात् । कस्यचिदर्थस्य अत्र आनन्दमयनिरूपणात् पूर्वं निरूपणे समाप्ते अनन्तरमानन्दमयनिरूपणमिति कल्पनाया अनुदयात् । अन्यथा वाक्यभेदप्रसङ्गात् ।

न च परिशेषाद्व्योमशब्दार्थनिरूपणपरत्वमानन्दमयपर्यायस्यावसीयत इति वाच्यम् । कोऽयं परिशेषः किं सत्यज्ञानादिवाक्योपात्तानां पदार्थानां निरूपणादस्य तत्परत्वासंभवाद्व्योमशब्दार्थनिरूपणपरत्वं परिशिष्यत इति । किं वान्यत्र व्योमशब्दार्थनिरूपणपरत्वासंभवादस्यैव तत्परत्वं परिशिष्यत इति ।

न तावदाद्यः — ब्रह्मणः निरूपणपरत्वसंभवात् । न च 'तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यत्र तन्निरूपितमिति वाच्यम् । तर्हि असन्नेव स भवतीत्यत्र तदभावापत्तेः ।

न द्वितीयः — त्वद्रीत्या स एको ब्रह्मण आनन्द इत्यत्र तन्निरूपण संभवात् । न च सैषानन्दस्य मीमांसा भवतीत्यादिना ब्रह्मानन्दस्यैव सकलवैषयिकसुखात्मना विद्यमानतोक्तया सर्वान् कामानित्यनेन सर्वकामात्मना विद्यमानः स एवोच्यत इति विवरणेन सर्वकामशब्दार्थनिरूपणपरत्वमवसीयत इति वाच्यम् । सर्वकामात्मत्व प्रतिपादनासिद्धेः । न च 'ते येशतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द' इति सामानाधिकरण्यात्तयात्वमवसीयत इति वाच्यम् । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्द' इत्यत्र शतगुणितमानुषानन्दतुल्यानन्दवत्त्व परत्व प्रतीत्यात्रापि तत्परत्वावसायात् । सर्वकामात्मत्वपरत्वेऽपि व्योमशब्दार्थनिरूपणपरत्वमप्यस्तु' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति तत्स्वरूपस्य ते येशतमित्यादिना सर्वकामात्मत्वस्य च निरूपणदर्शनात् । न च सत्यादिवाक्य प्रतिपन्नप्रकारेण निरूपणमेवं नस्यादिति वाच्यम् । त्वत्पक्षेऽपि गुहायां

परमेव्योमन्निहितमित्यन्वयाङ्गीकारेण तद्वाक्ये ब्रह्मणो व्योमाधिकरणत्वं प्रतीयते। आनन्दमयवाक्ये तु आनन्दमयस्य ब्रह्मणोध्येयत्वं इति वैषम्यासद्भावाद्गुहा-निहितत्वांशे सारूप्यमस्तीति चेन्न। अन्नमयादिनिरूपणस्य गुहानिरूपणपरत्वा-संभवस्य वर्णितत्वात्। तस्मान्न परिशेषाद्व्योमशब्दार्थनिरूपणपरत्वमानन्दमय निरूपणस्य युक्तम्। किञ्चेत्यप्यनुपपन्नम्। आकाशचिच्छक्तिपरत्वे प्रमाणा-भावात्। यथा चैतत्तथाऽनुपदमेव वक्ष्यामः।

यदप्येवं सत्येव तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यानन्दमयपर्याये-ऽपि प्राणमयपर्यायवदात्मान्तरो घटते। नत्वानन्दमयस्य ब्रह्मत्वं इति। तदप्यमञ्जुलम्। तदनन्तरं तस्माद्वा एतस्मादानन्दमयादित्याद्युपदेशाभावे-नात्मान्तरोपदेशपरत्वासंभवात्। तर्हि किं तेन प्रतिपाद्यत इति चेत् अनन्यात्मत्वमिति गृहाण। न चैवं वैरूप्यमिति वाच्यम्। त्वन्मतेऽपि पूर्वपर्यायेषु इदं पुच्छं प्रतिष्ठेत्यादीनामप्रधानावयवपरत्वमत्र ब्रह्मपुच्छं प्रतिष्ठा इत्यानन्दमयप्रधानब्रह्मनिरूपणपरत्वमिति वैरूप्यस्यानिवारणात्। असन्नेवेति श्लोकस्यावयविपरत्वाभावकृतं वैरूप्यमप्युक्तमेव। न चेदं भिन्नार्थत्वकृतं वैरूप्य-मिति वाच्यम्। पुच्छशब्दस्य क्वचिन्मुख्यत्वं क्वचिद्गौणत्वमिति वैरूप्यसत्त्वात्। ब्रह्मपुच्छं प्रतिष्ठेत्येतत् नात्मान्तरोपदेशपरमित्युक्तम्। न चानन्दमयस्य ब्रह्मत्वे ब्रह्मणः पुच्छत्वासंभव इति वाच्यम्। त्वत्पक्षे प्रचुरानन्दस्यैवानन्दमय शब्दार्थत्वेनानन्द आत्मेत्यानन्दस्य मध्यकायत्वनिरूपणासंभवप्रसङ्गात्। आनन्द-मयो जीव इति पक्षेऽप्यानन्दशब्दस्य जीवपरत्वे आनन्दमयाभिन्नत्वेन ब्रह्मपरत्वे उपसर्जनत्वायोगेन च मध्यकायत्वेन निरूपणं न संभवत्येव। तथा च कथं चिद्भेदकल्पनामाश्रित्य पुच्छत्व पुच्छवत्वयोरुपपत्तिर्वर्णनीया। अन्यथा पुरुष-विधत्वनिरूपणे अवयववैकल्यप्रसङ्गः।

यत्तु ब्रह्मश्रुतिभ्यां प्रायपाठान्नानन्दमयविषयश्लोकः इति तन्न। आनन्द-मयस्यापि ब्रह्मशब्दाभिधेयत्वेन तत्परत्वेऽप्युपपत्तेः प्रायपाठबाधायोगात्।

यत्तु — 'अन्नाद्वै प्रजाः प्रजायन्ते' 'यतो वाचो निवर्तन्ते इति श्लोकयोरन्नमयमनोमय विषयत्वाभावेन प्रायपाठासिद्धिरिति। तन्न। 'तदप्येष श्लोको भवतीत्यनेन तत्परत्वस्य श्रुत्यैव प्रतिपादनेन तद्विषयत्वस्यावश्यवाच्यत्वात् कथं तत्परत्वमिति चेन्न। अन्नस्तुतेरन्नरसमय शरीरे पर्यवसानसंभवात्। यतो वाचो निवर्तन्त इति मनोमय श्लोकोऽपि मनोमयविषय एव। आनन्दं ब्रह्मणो विद्वानिति विशुद्धमनोग्राह्यत्व प्रतिपादनात्। 'न बिभेति कदाचनेति मनसि भयनिवृत्तेः प्रतिपादनाच्च। यत्त्वानन्दमयस्य ब्रह्मत्वे भेदाभावाद्ब्रह्मणः पुच्छत्वं न संभवतीति। तन्न। प्रचुरानन्दविशिष्टत्वेन ब्रह्मत्वविशिष्टत्वेन च कथंचिद्भेद-कल्पनासंभवात्। अन्यथा आत्मेति मध्यकायत्वनिरूपणस्याप्यसंभवप्रसङ्गात् पूर्वपर्यायेष्वनिरूपितस्यात्र ब्रह्मावयवत्वस्य निरूपणस्य प्रयोजनं तु ब्रह्मविदाप्नोति परमित्युपक्रान्तस्य ब्रह्मोपदेशस्यानन्दमयपर्याये समापनमिति ज्ञापनमेव। तस्मादा-नन्दमयः परं ब्रह्मैव न चिच्छक्तिरिति।

'यदपि सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इति चिच्छक्तिजगत्कारणत्वं श्रुतमिति, तदसत्। परमात्मनो वाक्यान्तरश्रुत-जगत्कारणत्वमेवात्रानूद्यत इति ह वै शब्दबलात् नास्य परमात्मव्यतिरिक्त-कारणत्वप्रतिपादकत्वात्। न चाप्राप्तार्थकत्वाच्चिच्छक्तिकारणत्व विधायकमिति शक्यं वक्तुम्। तद्वाचकपदाभावात्। न च आकाशशब्दस्तत्परः, तथात्वे-मानाभावात्।

यदपि वेदप्रयुक्तस्य कस्यचिच्छब्दस्य लोकप्रसिद्धार्थसंभवे वेदतदुप-बृंहणयोर्यस्मिन् प्रयोगो दृष्टस्तत्परत्वमेव युक्तम्। न च चिच्छक्तावाकाश-शब्दस्येति तत्र वेदे प्रयोगस्तावदसिद्धः। न चाकाशशरीरं ब्रह्मेति गुहानिहि तायां चिच्छक्तौ प्रयोगो दृष्ट इति वाच्यम्। प्रसिद्धाकाशपरत्वेऽपि तत्तुल्य-शरीरकत्वेन तच्छरीरकत्वेन वा परमात्मप्रतिपादकत्वोपपत्तौ तस्य प्रयोगस्य चिच्छक्तिपरत्वे प्रमाणत्वासंभवात्।

वस्तुतस्तु — तस्मिन्नयं पुरुषः मनोमयः अमृतो हिरण्मय इत्युपास्यस्योज्ज्वल शरीरत्वस्य वर्णितत्वेन तस्यैव प्राप्यत्वकीर्तनाय समन्तात्प्रकाशमानदिव्यविग्रहयुक्तत्वं वर्ण्यत इति न चिच्छक्तिपरत्वं युज्यते। 'यदेष आकाश आनन्दो न स्यादिति प्रयोगोऽपि न चिच्छक्तेराकाशशब्दवाच्यत्वसाधकं विज्ञानमानन्दं ब्रह्मेति श्रुत्या ब्रह्मणोप्यानन्दशब्दाभिधेयत्वेन तत्परत्वोपपत्तेः। तत्रापि सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तानन्त्योपपादनार्थं तस्माद्वा एतस्मादित्यादिकं प्रवृत्तमित्युक्तत्वेन परमात्मन्येव कारणत्वं प्रथममुपपादितमिति। असद्वा इदमग्र आसीदित्यस्यापि तत्परत्वेन तद्गतस्य 'यदेष आकाश' इत्यस्यापि तत्परत्वमेव वर्णयितुमुचितम्। तस्माद्वा एतस्मादित्यस्य परमात्मान्यपरत्वे च तस्माद्वा एतस्मादित्युक्तयसङ्गतिः। तस्माद्ब्रह्मविदाप्नोतीति ब्राह्मणोक्तात् एतस्मात् सत्यं ज्ञानमनन्तमिति अव्यवहितमन्त्रोक्तादिति हि तदर्थः। उपक्रमे ब्रह्मविदाप्नोति परमिति यो वेद निहितं गुहायामिति च मोक्षहेतुज्ञानकर्मत्वस्य परमात्मन उपपादितत्वेन 'यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्य' इत्यस्यापि तत्परत्वमेवेति तत्रेतस्मिन्निति परामर्शविषयस्य यदेष आकाश इत्यस्यापि परमात्मपरत्वावश्यं भावाच्च। न चाकाशवत् सर्वगतश्च नित्य इति सर्वगतत्वनित्यत्वयोराकाशस्य दृष्टान्तीकृतत्वेन प्रसिद्धाकाशस्य कार्यस्य नित्यत्वात् प्रयोगश्चिच्छक्तेराकाशशब्दवाच्यत्वसाधकः। आकाशवत्सर्वगत इत्यत्र सर्वगतत्वमात्रे दृष्टान्तीकृतत्वेन नित्यत्वेऽपि तस्य चिच्छक्तित्वेन 'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इत्यत्र चिच्छक्तेर्दृष्टान्तीकरणस्य संभवेन परिच्छिन्नस्य भूताकाशस्य कथं दृष्टान्तीकरणमित्यनुयोगस्य तुल्यत्वात्।

न चेषुवत् सविता गच्छतीत्यत्र सवितुरिष्वधिक वेगवत्त्वेऽपि गतिमान्द्यनिवृत्तितात्पर्येण सवितृतुल्यगतिमत्त्ववर्णनं तथा यावान्वा अयमाकाश इत्यपि परिच्छिन्नत्व निवृत्तितात्पर्यमात्रेणोपपन्नमिति वाच्यम्। आकाशवत्सर्वगत इत्यत्रापि तथैववर्णनसंभवे आकाशशब्दस्य शक्त्यन्तरकल्पने मानाभावात्। अतो न वेदप्रयोगः चिच्छक्तेराकाशशब्दवाच्यत्वसाधकः नाप्युपबृंहण प्रयोगः।

'यस्य सा परमादेवी शक्तिराकाशसंज्ञिता' । इत्याकाशरूपेण परिणामप्रतिपादनमुखेन भूतकारणत्व तात्पर्येणोपपन्नत्वेन गौरवप्रस्त शब्दान्तरकल्पकत्वासंभवात । न चाकाशरूपेण परिणाममात्रोक्त्या कथं भूतकारणत्वसिद्धिरिति वाच्यम् । आकाशाद्वायुरित्याद्युक्तया तस्यैव वाय्वादिरूपेण परिणामेन ततो भूतकारणत्व तात्पर्यसिद्धेः । एवं चाकाशशब्दस्य चिच्छक्तिशक्तौमानाभावान्न छान्दोग्यस्थस्य 'सर्वाणि ह वा इमानि भूतानी'त्यस्य तत्कारणत्वप्रतिपादकत्वं युक्तम् । अतो न सोऽकामयतेत्यस्य तत्कारणत्वप्रतिपादनं न साधयितुं शक्यम् ।

यदपि बृहदारण्यके यदूर्ध्वं याज्ञवल्क्येत्यादिना समस्तवस्त्वाधारे पृष्टे आकाश एव तदोतं च प्रोतं चेत्युत्तरं चिच्छक्ति विषयमिति । तदप्यमञ्जुलम् । कालत्रयवृत्तिसकलपदार्थाधार भूताकाशाधारः क इति प्रश्ने 'सहोवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमि'त्यादिना तथा भूताकाशाधारमुपवर्ण्यास्याक्षरस्य कालत्रयवर्तिपदार्थाधाराकाशाधारत्वमेव जगदाधारत्वम् । ततश्चाकाशापेक्षया किञ्चिदाधिक्यमिति बुद्धिं निवर्तयितुं पुनश्चैतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिना सर्वस्य प्रपञ्चस्य तदाज्ञावशवर्तित्वप्रतिपादनमुखेनोत्कर्षः प्रतिपादित इति वाक्यशैल्यनुरोधादवगम्यमानत्वेन चिच्छक्ति प्रतिपादकत्वस्य वक्तुमशक्यत्वात् । न ह्याकाशशब्दस्य चिच्छक्तिपरत्वपक्षे उत्तरसन्दर्भस्यैवमुत्कर्षान्तर व्यक्तयर्थत्वं संभवति । त्वन्मते चिच्छक्तिरपि पञ्चकृत्याधिकारित्वेन प्रपञ्चस्य तदाज्ञावशवर्तित्व सत्वात् । तदुक्तं शिवानन्दलहरी व्याख्यायाम् — न च निमित्तत्वविशेषणेन निरासः शक्तेरपि पञ्चकृत्यकारित्वाभ्युपगमादिति । अतः कालत्रयवर्तिपदार्थाधारत्वेन निर्दिश्यमान आकाशोऽव्याकृत इत्यवगम्यते ।

*ननु प्राथमिकगार्गी प्रश्ने* 'यदिदं सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वापः ओताश्च प्रोताश्चेति वायौ गार्गी इत्यादिकेन गार्गीप्रश्न याज्ञवल्क्य प्रतिवचनरूपेण सन्दर्भेण पृथिवीसलिलवाय्वन्तरिक्षलोक गन्धर्वलोकादिस्य

लोकचन्द्रलोकदेवलोक प्रजापति लोक ब्रह्मलोकानां मध्ये उत्तरोत्तरं पूर्वाधारत्वेन प्रतिपादितम्। ततः कस्मिन्नुखलु ब्रह्मलोका ओताश्च प्रोताश्चेति गार्ग्या पृष्टे 'माति प्राक्षीर्मातेमूर्धाव्यपप्तत्' अनतिप्रश्न्यां वै देवतामतिपृच्छसीति गुरूपसदनादि नियमेन प्रष्टव्यं तं प्रश्नमन्यथा प्रष्टुमनर्हं नियममतिक्रम्य मा प्राक्षीरिति निवारित प्रश्न एव पुनः समयान्तरे गार्ग्या याज्ञवल्क्यानुज्ञापूर्वकं कृतः। 'यद् ऊर्ध्वं याज्ञवल्क्यदिव' इत्यादिना तस्योत्तरमाकाश एव तदोतं च प्रोतं चेति। एवं चाकाशस्यानतिप्रश्नस्य देवतारूपत्वादचेतनस्य देवतात्वा संभवान्नात्रास्याकृतमाकाश इति चेत्। अत्र **वेदान्तविजयकृतः** —

अत्र शब्दस्य नियमातिक्रमपरत्वं तावदनुपपन्नं, प्रकरणविरोधात्। तथाहि — 'जनको हवै वैदेहो बहुदक्षिणेन यज्ञेनेजे। तत्रह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुरित्यादिना जनकयज्ञदर्शनार्थं समागतान् कुरुपाञ्चालदेशेभ्यः समागतान् दृष्ट्वा क एतेषां ब्रह्मिष्ठ इति जिज्ञासुना परिचिक्षिषया गवां सहस्रमवरुध्य एकैकस्याः श‍ृङ्गयोः पलपरिमितं सुवर्णमाबध्य 'ब्राह्मणा भगवन्तः यो वै ब्रह्मिष्ठः स एता गा उद्जता'मित्युक्ते सर्वेष्वधृष्टेषु तूष्णीं स्थितेषु धाष्टर्याद्याज्ञवल्क्यानुशिष्टेन तस्य शिष्येण सामश्रवसा उद्गीयमाना गा उपलभ्य क्रुद्धेषु तस्य जनकस्य होताश्वलस्तदमृष्यमाणो धाष्टर्याद्याज्ञवल्क्यं जेतुकामः साधिक्षेपं अपूर्वान् कांश्चिदर्थान् पप्रच्छ। तस्मिन् सदुत्तरेण याज्ञवल्क्येन जिते तथैवार्तभाग भुज्योषस्ति कहोल, गार्ग्युद्दालक, विदग्धशाकल्यानां विजिगीषया यथायथं प्रश्नाः सर्वेषां च तेषां पराजयः शाकल्यमूर्द्धविपातान्तः संवृत्त इत्यस्मिन् प्रपाठके श्रूयते, अत्र जल्पकथारूपे प्रश्ने कुतो गुरूपसदनादिनियमापेक्षा किञ्च यदि नियमापेक्षां ब्रूयात्तदा याज्ञवल्क्य यथाकाश्योवा वैदेहो वोग्र पुत्र उज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नाति व्याधिनौ हस्ते कृत्वोपतिष्ठे देवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूही'ति स्वकीयप्रश्नानां याज्ञवल्क्यस्य पराजयावश्यम्भावं दृष्टान्तोपन्यासेनाभिव्यज्य धाष्टर्येन याज्ञवल्क्यस्य ज्ञानप्रकटीकरणेन जयार्थं तं गार्गी प्रत्यवतिष्ठते कथं च याज्ञवल्क्यः प्रश्नयोरुत्तरं ब्रूयात्। किं च तंत्वौपनिषदा पृच्छामि तं च मे न वक्ष्यसि

मूर्धा ते विपतिष्यतीति तं ह नमेने शाकल्यस्तस्य मूर्धा विपपातेति एतत्प्रपाठकान्तरवाक्ये साकल्य याज्ञवल्क्य संवादरूपेत्वांसिदिमे ब्राह्मणा अङ्गारावक्षयणं अक्रता इति वाक्येन त्वांनूनमङ्गारग्रहण साधनकाष्ठसंदंशादिरूपं कृतवन्तः ब्राह्मणैः प्रेरितस्त्वं भाव्यनर्थमपश्यन् कलहायसे इत्येवमर्थकेन ब्राह्मणानुज्ञया प्रवृत्तत्वेन दर्शितस्यापि याज्ञवल्क्यस्य मूर्धनिपातवचनेन सत्यवादितया दर्शितो याज्ञवल्क्यो यदि नियममतिक्रम्य पृच्छन्त्या गार्ग्या मूर्धविपातं ब्रूयात् तदा साहङ्कारामिलापं विजिगीषया पृच्छन्त्या गार्ग्या मूर्धा कथं न विपतेत्। 'पृच्छगार्गी'ति याज्ञवल्क्येनानुमतेः करणान्न मूर्धविपातप्रसङ्ग इति चेन्न, पूर्वमेव ब्रह्मप्रश्नस्य निषिद्धतया ततो निवृत्ता प्रश्नान्तरमेव करिष्यतीति बुद्ध्याऽनुमति दानात्तदर्थमेव च द्वाभ्यामुपोदस्थामिति द्वित्वकीर्तनम्। ननु द्वित्वकीर्तनस्य कथं तादर्थ्यमिति चेन्न । द्वित्वकीर्तनेनानिवारित प्रश्नसाहचर्येण प्रश्नान्तरत्वबुद्धेरेव दृढीकरणात् ।

ननु ब्रह्मलोकाद्याधारे उक्ते तस्याप्याधारभूतं ब्रह्म प्रक्ष्यतीति बुध्या खलु तन्मूलभूत प्रश्नोनिषिद्धः अतः प्रश्नद्वित्वकीर्तनमस्य प्रश्नद्वयस्य पूर्वनिषिद्धत्व बुद्धिव्यावर्तन समर्थमिति चेन्न। पूर्वनिषेधस्य प्रश्नद्वयगोचरत्वेमानाभावात्। एक प्रश्नानन्तरं प्रवृत्ततया 'अति पृश्न्या देवता'मित्येकवचनेन न चैक प्रश्नविषयत्वस्यैव प्रतीतेः। तस्मात् प्रश्नान्तरत्व बुद्ध्यैवानुमतिदानं प्रक्ष्यामीत्यादि वचनस्य निवारित प्रश्नानुज्ञानार्थत्वे द्वयोरनिवारणेन द्वित्वकीर्तनानुपपत्तेः। प्रक्ष्यामीत्यादिवचनं तु, सानुज्ञानार्थम्। किन्तु द्वाभ्यामेव प्रश्नाभ्यां याज्ञवल्क्यस्य पराजयो भविता। न चेन्न केनापीति प्रश्नस्य दुर्वचत्वख्यापनेन स्वप्रागल्भ्यद्योतनार्थम्। एवं च द्वित्वकीर्तनेन तस्य पूर्वप्रश्नत्व बुद्धिं प्रतिबद्ध्य प्रश्नानुमतिः कारिता। तस्या प्रागल्भ्यवचनं निशम्येदानीमप्युत्तरानुक्तौ स्वस्य पराजयो भविष्यतीति आशयवता अनति प्रश्नस्याप्युत्तरमुक्तमित्येतावदेव, न तु निवारित प्रश्नस्यानुमतिः कृतेति कथं गार्ग्या मूर्धा न विपतेत्। कथं च धर्मं विना विजिगीषयोद्दालकेन कृतस्यान्तर्यामिप्रश्नस्योत्तरं ब्रूयात्। अपि च देवतामतिपृच्छसीति कर्मप्रवचनीय योगे द्वितीयातिक्रमणार्थं द्योतयन्ती प्रकृत्यर्थ एव तद्द्योतयेत्।

त्तश्च देवताया एवातिक्रमकर्मत्वं युक्तम्। यथा काठके 'अत्यंहप्रश्न संवादाख्यायिकायां 'स कस्मिन् (सत्य इति) प्रतिष्ठित' इति किं तत्सत्यमिति तप इति कस्मिन्नु तप इति बल इति किं तद्बलमिति प्राण इति वाक्ये प्रश्नपूर्वकं प्राणे कथितेऽपि 'मास्म प्राणमतिपृच्छ' यद्वै ब्रह्मचारिन् प्राणमत्यप्रक्ष्यः मूर्धाते व्यपतिष्यदिति प्राणः कर्मतयावगम्यते। तत्र हि प्रश्नोत्तरपरम्परया प्राणपर्यन्तमागते प्राणादप्यूर्ध्वं किञ्चिदय प्रक्ष्यतीति मत्वा तत्प्रश्ननिवारणमेव कृतमिति स्वीकार्यम्। अतोऽतिक्रमकर्म प्राण एव। तथा 'यो वै स्वां देवतामतियजते' इति स्वां देवतामतिक्रम्य यजत इत्यर्थः। तत्रातिक्रम कर्म स्वादेवतैव। न च तत्रापि नियममतिक्रम्य यजत इत्यर्थः। 'नागत श्रीर्महेन्द्रं यजेत त्रयो वैगतश्रियः शुश्रुवान् ग्रामणीराजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्रस्वायै देवतायैच्यवते न परां प्राप्नोति पापीयान् भवतीति' सन्दर्भविरोधात्। अनइश्रुतादिभिः, स्वा देवतेन्द्र एव यष्टव्यो न महेन्द्र इत्येवं परोह्ययं सन्दर्भः। राजसूये वासुदेवार्हणकुपितस्य चैद्यस्य वचने च 'अति पश्यसि वा सर्वान् न वा पश्यसि पाण्डव' इत्यतिक्रमणकर्मता राज्ञामेव नियतमित्यध्याहृत पदे द्वितीयां कर्मप्रवचीनय योगनिमित्तामङ्गीकृत्य द्वितीयया तत्संबन्ध्यतिक्रम द्योतनाङ्गीकारेण प्रश्नकर्मणि देवताशब्दात् कारक द्वितीयाङ्गीकारो जघन्यः श्रूयमाणद्वितीयाया एव स्वरसतः कर्म प्रवचनीय योगनिमित्तत्वप्रतीतेः।

नन्वतेः कर्म प्रवचनीयत्वं न विवक्षितं? किन्त्वतिरेव पृच्छिं विशिषन्नतिक्रमपूर्वकत्वं पृच्छेः सूचयति। ततश्च पृच्छिकर्मण्येव द्वितीया। अतिक्रमकर्मत्वं तु नियमस्यार्थादिति चेन्न। कर्मप्रवचनीयविवक्षायां तद्योगद्योत्यातिक्रमणरूपार्थ बलादेवान्यस्य प्रश्नकर्मत्वपृष्टत्वादेव तद्विशेषश्च झटिति प्रतीयत इति तत्स्वीकारस्यैव युक्तत्वात्।

नन्वनतिप्रश्नामित्यत्रातेः समस्ततयोपसर्गत्वमेव उत्तरत्रातेरुपसर्गत्वमेव युक्तमिति चेन्न। तत्र तथात्वेप्यतिपृच्छसीत्यत्रोक्तयुक्तया कर्मप्रवचनीयत्वस्य युक्तत्वात्।

वस्तुतस्तु — अनतिप्रश्नमित्यत्र कर्मप्रवचनीयत्वेऽपि न समासानुपपत्तिः। प्राति प्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधः प्रत्यादिविषय एव अतेस्तु भवत्येवेति पदमञ्जर्यामभिधानात्। कारकविभक्त्यङ्गीकारे तु अतिक्रमकर्म विशेषः कुतो लभ्येत। किञ्च कारकविभक्त्यङ्गीकारेऽप्यतिक्रम्य प्रश्नरूप-विशिष्टधात्वर्थस्य विशेषणकर्मण एककर्मत्व विवक्षया तत्र द्वितीयायां शुद्ध-विशेष्यकर्मविशेषोतिक्रम सामर्थ्यात् पृष्टत्वाच्च सुगमविशेष्यकर्मणो विशिष्टकर्मत्वं विवक्षित्वा तत्र द्वितीयाङ्गीकारे विशेषणकर्म न सुगममिति विशेषणकर्मण एव विशिष्टत्वाङ्गीकारो युक्तः। तद्देवतामतिक्रम्य पृच्छसीत्येवार्थः ब्रह्मलोकमतिक्रम्य तस्याप्याधारभूतं किञ्चित् गार्गी पप्रच्छेति ब्रह्मलोक एवात्र देवता तस्माद्ब्रह्मलोक शब्देन ब्रह्मैव विवक्षितं लोकपद प्रयोगादिन्द्रलोकादिवच्चतुर्मुखलोक एवोक्त इति भ्रान्त्या गार्ग्या तदाधारप्रश्ने कृते तस्य ब्रह्मरूपस्य लोकस्य नाधारान्तरमस्ति अतस्तथा तत्प्रश्नो न कर्तव्य इति याज्ञवल्क्येन स्वाभिप्रायो विवृतः। न च ब्रह्मलोका इति बहुवचनानुपपत्तिः अवयवभेदविवक्षया बहुवचन संभवात्। संभवति चौपाधिक प्रदेशभेदो ब्रह्मणि सकलभोग्याधारत्वेन हि ब्रह्मलोकशब्दः प्रयुक्तः। पूर्वशैल्यनुरोधाय च लोकशब्दः। अथवा ब्रह्मलोकशब्दश्चतुर्मुख-लोकपरः अनति पृश्न्यपदेन ब्रह्मलोकाधारतया यद्वस्तु पृष्टं तदेवोच्यते तदेव ब्रह्म तस्य निर्धारत्वे नाति प्रश्नानर्हत्वात् अति प्रश्न एव निषिध्यते तत्र ब्रह्मपर्यन्तं बहूनामति प्रश्नानां करणाद्ब्रह्मलोकाधारेऽप्यति प्रश्नं करिष्यतीत्युन्नीय वर्तमानसामीप्य बुद्ध्या अति पृच्छसीति वर्तमान व्यपदेशः अति पृच्छसि माति प्राक्षीरिति वचोभङ्गीशो षणवि ब्रह्मलोकाधोनिराधारा सर्वाधार भूतापरदेवते त्युत्तरमुक्तं भवति। एवं वर्तमानसामीप्याद्वर्तमानव्यपदेशे मातिप्राक्षीरिति निषेधः स्वरसो भवति। ब्रह्मलोकपदस्य ब्रह्मपरत्वे तु सकृत्पृष्टवत्यां प्रश्ननिषेधो ब्रह्मलोकस्य निराधारत्वादुत्तरं न मया वाच्यमुत्तरानुक्तं न पुनरतिप्रक्ष्यतीति मत्वा पुनर्मातिप्राक्षीरित्येवं पुनः प्रश्नविषयो वाच्यः पूर्वपक्षिणापि कृतप्रश्न-विषयो निषेधः पुनः करणविषय एव वाच्यः। तस्मात् पूर्वं गार्गी प्रश्न परम्परायास्तदुत्तरस्य च मातिप्राक्षीरित्यन्तेन पूर्णत्वात्। पूर्वनिषिद्ध प्रश्नस्यैव

पुनरुज्जीवनमिदं प्रश्नद्वयमित्यत्रोत्प्रेक्षातिरिक्त प्रमाणादर्शनादुक्तबाधक बलाच्च। देवतामतिपृच्छसीत्यत्र देवता शब्दविवक्षितब्रह्मणो भिन्नार्थः स्यादाकाशस्याव्यक्त परत्वमविरुद्धं निषिद्धोज्जीवनरूपत्वाभावादेव। पुनः प्रश्नस्य कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोता चेत्येवमाकारत्वाभावः समञ्जसो भवति।

अस्तु वा पूर्वनिषिद्ध प्रश्नस्यैव पुनरुज्जीवनं अतिप्रश्नस्य चोक्त एवार्थः। अथापि न देवताकाशपरयोः समानार्थानां पूर्वोक्तन्यायेन वर्तमान-सामीप्ये वर्तमानव्यपदेशेन ब्रह्मगोचर प्रश्नस्यैव देवतामतिपृच्छसीत्युक्ततया मातिप्राक्षीरिति तत्पूर्वप्रश्नस्यानिषेधात्।

अस्तुवा अत्र देवताकाशपदयोः समानार्थता, अथाप्याकाशपदस्या-व्यक्तपरत्वमविरुद्धम्। परदेवताशरीरतया तत्र देवतापद प्रयोगसंभवात्। अत एव हि हन्ताहमिमास्तिस्रोदेवता इत्युच्यते। तस्मादव्याकृतपर एवाकाश शब्द इत्याहुः। तस्मान्न चिच्छक्तेरात्मत्वमिदं वाक्यं साधयितुं प्रभवतीति दिक्।

यदपि योविज्ञाने तिष्ठन्निति पर्याये य आत्मनि तिष्ठन्नात्मनोऽन्तर इत्यादि माध्यन्दिन पाठात्स्थान प्रमाणेन विज्ञानात्मशब्दयोरैकार्थ्यमवगम्यत इति चिच्छक्तेरात्मत्व सिद्धिरिति।

तदप्यासारम्। विज्ञानशब्दस्य नन्द्यादिल्युट् प्रत्ययान्तत्वं कृत्यल्युटो बहुलमिति कर्त्रर्थल्युडन्तत्वं वा समाश्रित्यात्मपरत्वोपपत्तावात्मशब्दस्य धर्मभूत ज्ञानपरत्व कल्पनाया अनुन्मेषात्। न चैवं विषयावच्छिन्न धर्मभूत ज्ञानातिरिक्तपरत्वे ज्ञानशब्दस्यामुख्यत्वप्रसङ्ग इति वाच्यम्। धर्मभूतज्ञानपरत्वे आत्मशब्दस्यामुख्यत्व प्रसङ्ग इति तुल्यत्वात्। इयांस्तु विशेषः। विज्ञानं यज्ञं तनुते' 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादौ ज्ञानाश्रयेऽपि ज्ञानशब्दः क्लृप्त प्रयोगः। धर्मभूतज्ञानेत्वात्मशब्दः कल्प्यप्रयोग इति। ननु शब्दद्वय-मुख्यत्वाय धर्मभूतस्यैव चेतनत्वं कल्प्यमिति चेत्तर्हि आकाशपद मुख्यत्वाय जडाकाशभिन्नत्वस्यापि प्रसङ्गात्। न चाकाशशब्दे विच्छित्तिविषयक शक्त्यन्तरकल्पनेनाप्याकाशपदप्रयोग विषयत्वमुपपद्यत इति वाच्यम्। तर्हि

विज्ञानशब्दस्य जीवेशक्त्यन्तरकल्पनोपपत्तिरिति सम्भ्रमः । न च कार्यभूताकाशाभिन्नत्वं सृष्टिप्राक्कालिक चिच्छक्तेः कथमुपपद्यत इति वाच्यम् । नानाविध प्रसरणाद्यवस्थारूप विकारभाजो निर्विकारात्मस्वरूपत्वं कथमुपपद्यत इति तुल्यत्वात् । नित्योनित्यानां चेतनश्चेतनानां क्षरं प्रधानममृताक्षरं हरः । 'आत्माशुद्धोऽक्षरः शान्तोनिर्लेपः प्रकृतेः परः' 'तदक्षरं तत्सवितुर्वरेण्य'मित्यादिभिर्जीवात्मत्वरूपस्य परमात्मस्वरूपस्य च स्वरूपान्यथाभाव शून्यत्वावगमात् । न च तदुभयविलक्षण चेतनान्तरमस्ति । 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदिति विभागविरोधात् । किञ्चात्मशब्द पाठाद्विषयावच्छिन्नज्ञप्तिरूपत्वमात्मनः किमिति नासुखं गम्यते । न च विषयाभावात्तथात्वं न संभवतीति वाच्यम् । विषयान्तरासंभवेऽपि स्वरूपस्यैव विषयत्वसंभवात् । न च धर्मभूतज्ञानेनैव स्वरूपस्यापि भानोपपत्तिः । तस्य सुषुप्तिदशायाः प्रकाशकत्वात् । तदानीमपि स्वस्वरूपस्य भानात् । न च स्वस्य स्वविषयकत्वं कथमुपपद्यत इति वाच्यम् । ज्ञानशब्दस्य विषयावच्छिन्न ज्ञप्तिपरत्वेन तत्प्रयोग बलादभेदेऽपि विषयविषयिभावोऽस्तीति कल्पनासंभवात् । न च तथैवास्त्विति वाच्यम् । तर्हि चिच्छक्तेरात्मत्वासिद्धिप्रसङ्गात् । अत एव वेदवाक्येषु जीवे दृष्टस्य ज्ञानशब्दस्य नन्द्यादिल्युट्प्रत्ययान्ततया ज्ञातृपरत्वेन वा स्वप्रकाशतयाज्ञप्तिरूपतापि जीवस्यास्तीति तदर्थकत्वेन वा निर्वाहसंभवेऽपि '**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्**' इति **ब्रह्मसूत्रे** ज्ञानमिच्छादिसकलव्यवहारहेतुतया प्राचुर्येण सदानुवर्तमानं जीवस्य सारभूतो गुण इति तद्वाचिनो ज्ञानशब्देनास्यौपचारिको व्यपदेशः । यथा सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिषु ब्रह्मणस्तेन व्यपदेशेन निर्वाहः कृत इतित्वदुक्तिविरोधापाताच्च । न च पूर्ववर्णितरीत्या स्वव्यवहारे संविदन्तरानपेक्षस्वरूप स्वप्रकाशत्वाङ्गीकारेण च ज्ञानत्व स्वप्रकाशत्वव्यवहारोपपत्तौ किमिति अभेदे विषयविषयिभावकल्पनमिति वाच्यम् । तर्हि धर्मभूतज्ञानस्य चेतनत्वं न दृष्टमिति ज्ञानपर्याये आत्मशब्दपाठोऽपि कथंचिन्निर्वाह्य इति तुल्यम् । एतेन 'तां सवितुर्वरेण्यस्य चित्रामहमावृणे सुमतिं विश्वजन्या'मिति प्रतीयमानासुमतिर्यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां

त्पसा महीं गामित्युत्तरार्धे सान: पयस्वती धुक्ष्वेति देवी सूक्तस्य मन्त्रार्थ प्रत्यभिज्ञानाद्गौरीत्वमवसीयत इति निरस्तम् । सुमती गौर्योर्भिन्नत्वेऽप्युभयत्र प्रतीयमान पयोदोग्धृत्वोपलक्षित परमपुरुषार्थप्रदत्वस्य संभवेनोभयोरैक्यावश्यं भावासिद्धे: । न हि गौर्याभेदाभावेऽपि ईश्वरज्ञानस्य पुरुषार्थप्रदत्वं नेति वक्तुं युक्तं गौर्या: पुरुषार्थप्रदत्वस्य सङ्कल्पद्वारकत्वेन तत्सङ्कल्पवदीश्वरसङ्कल्पस्यापि तत्प्रदत्वोपपत्ते: । न च सुमत्यभेदाभावे गौर्यास्तन्नेति वक्तुं युक्तम् । ईश्वर-वदुपपत्ते: ईश्वरद्वित्वप्रसङ्गस्तु —

> ' ब्रह्मैक्यं वा विशिष्टं प्रकटयति
> ऋतं सत्यमित्यादि मन्त्र: ।
> शम्भुं तस्मिन्विशेष्यं प्रथयति च
> युजे वामिति ह्येष मन्त्र: ॥ '

इति त्वयैव परिहृतम् । तथाचोद्गीर्णविद्याप्रत्यभिज्ञावद्भेदेऽपि इयं प्रत्यभिज्ञोप-पद्यते । एकार्थपरत्वावश्यंभावेऽपि तां सवितुर्वरेण्यस्य चित्रामिति मन्त्रस्य सुमतिशब्दो बहुव्रीहिमाश्रित्य गौरीप्रतिपादकत्वमेव वक्तुं शक्यं वरेण्यस्येति षष्ठ्या: संबन्धमात्र प्रतिपादन परत्वेनात्रापि सङ्गतत्वात् ।

यदपि शिवस्य चिच्छक्तिरेव गौरीति प्रमाणप्रतिपन्नोऽर्थ: सयुक्तिभिर्न-बाधमर्हतीति । तन्न । ' सर्वं खल्विदं ब्रह्म ' इदं सर्वं यदयमात्मेत्यादि प्रमाण-प्रतिपन्नत्वेन जडप्रपञ्चाभेदस्याप्यभ्युपगमप्रसङ्गात् । न च सत्यज्ञानादिवाक्य प्रतिपन्नज्ञानस्वरूपत्व विरोधात् तत्त्यज्यत इति वाच्यम् । आत्मस्वरूपस्याक्षरत्व प्रतिपादकश्रुतिविरोधेन प्रज्ञा च तस्मात्प्रसृतापुराणीति प्रसरणावस्थाशालि प्रज्ञारूपत्वायोग इति तुल्यत्वात् ।

यदपि तदीया: केचन ज्ञानेच्छादिपरिणामा: शिवस्य ज्ञानेच्छादयो भवन्ति । केचन शिवसंकल्पानुसारेणैव शक्तेर्ज्ञानेच्छादयो भवन्तीति । तदप्यबोधविलसितम् । प्रज्ञा च तस्मात्प्रसृतापुराणी ' तस्मात् क्षरति प्रज्ञाद्वते:

पादादिवोदकम्'। इत्यादि प्रयोगानुसारेणावस्थावत एव ज्ञानशब्दवाच्यत्वेन चिच्छक्तेर्ज्ञातृत्वस्य समर्थयितुमशक्यत्वात् । न हि परम्परासंबन्धेन प्रसरणावस्थाश्रयत्वेनात्मनो ज्ञातृत्वं, येन साक्षात्तदाश्रयत्वमादाय चिच्छक्तेरपि ज्ञातृत्वं समर्थयितुं शक्येत, किन्तु तदवस्थावत एव ज्ञानशब्दवाच्यत्वमिति तदाश्रयत्वमेव ज्ञातृत्वप्रयोजकमिति न चिच्छक्तेर्ज्ञातृत्वसिद्धिः।

यदपि चिच्छक्तेः शरीरादिरूपत्वे आकाशशरीरं ब्रह्मेत्याद्युपन्यसनम्। तदतिस्थवीयः, आकाशशब्दस्य चिच्छक्तिपरत्वस्य दूषितत्वात्। 'अमृतो हिरण्मय' इति पूर्वमुक्तया आसमन्तात् प्रकाशमान दिव्यविग्रह युक्तत्वस्यैव तदर्थत्वात् । सत्येत्यादेश्च सत्यात्मनां नित्यमुक्तानामात्मनां प्राणवत्परम-प्रेमास्पदभूतो यः परमात्मा स एवारामः सर्वविधभोग्यभूत इति मुक्तपरत्वेनार्थ-वर्णनात्। 'व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठतीति मोक्षस्य प्रस्तुतत्वेन 'एतत्ततोमवती'त्यत्र तदीयरूपाविर्भावस्य वक्तव्यत्वात्। तर्हि आकाशशरीरं ब्रह्मेति कथं सङ्गतमिति चेन्न। ब्रह्मणो हि प्रतिष्ठाहमिति प्रयोगानुसारेण ब्रह्म-शब्दस्याविर्भूतब्रह्मरूपमुक्तपरत्वात् । हिरण्मय इत्युपास्यस्य रूपकथनेनाकाश शरीरमित्येतत्प्रकाशयुक्त दिव्यविग्रह युक्तत्वेनाविर्भावपरम् । सत्यात्मेत्यादे-ब्रह्मपरत्वेऽपि सत्यात्मनां परप्रेमास्पदं भोग्यभूतमित्यर्थोवर्णयितुं युज्यते। 'मन आनन्दं' संकल्पमात्रसिद्धानन्दमिति, 'यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठती'त्याद्यनुसारादुच्यते। तथा च चिच्छक्तेर्नशरीरादिरूपत्वसाधिकेयं श्रुतिः परास्य शक्तिर्विविधैव श्रूयते इत्यादिकमपि भगवज्ज्ञान शक्त्यादीनां स्वाभाविकत्वादिकथनपरमिति नत्वदुत्प्रेक्षाया अत्रावकाश इति। अतो न चिच्छक्तेरात्मत्वस्य प्रामाणिक मार्गानुसार इति नानन्दमय वाक्य प्रति-पाद्यत्वमिति नेदं प्रकरणं आनन्दमयाधिकरणतत्प्रतिपादनपरमिति दिक्।

वस्तुतत्वमिदम्—परतत्वपर्यवसायिन्यायपर्यालोचनायां तु तदधिक-तत्परत्वेऽपि नानन्दशब्द प्रसिद्धार्थत्यागे किंचित्प्रमाणमिति वर्णितमधस्तात्। तथा च मुक्तप्राप्यत्वं भगवतः सत्यादि वाक्यबलान्निष्कण्टकं सिध्यतीति सर्वमनवद्यम्।

तथा छान्दोग्येऽपि भगवतो मुक्तप्राप्यत्वमवगम्यते । भूमविद्या-वेद्यस्य नारायणस्य तत्र यो वै भूमा तत्सुखमिति सुखस्वरूपत्वप्रतिपादनात् सुखिरूपस्य मुक्तप्राप्यत्वं 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति' इत्यनेनावगम्यते । भूमविद्यावेद्यस्य नारायणत्वं च 'स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नी'त्यत्र स्वतन्त्रचैतन्यं स्वे महिम्नि तिष्ठमानं पश्यतीति मैत्रायणीय श्रुतिप्रत्यभिज्ञानादवगम्यते । तस्याश्च भगवत्परत्वं विष्णुसंज्ञं सर्वाधारं धामेत्यादिबलादसकृदावेदितं, तथा च प्रजापतिवाक्येऽपि एवमेवैष संप्रसादो-ऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येतीति' प्राप्यस्य ज्योतिषः पुरुषोत्तमत्वाविष्करणात् भगवतो मुक्तप्राप्यत्वं सिध्यति । न च उत्तमः पुरुष इत्येव श्रूयते न तु पुरुषोत्तमशब्द इति वाच्यम् । योगार्थकथने पुरुषोत्तमशब्दे तत्प्रत्यासत्तिमतोरूढ्याऽर्थस्य भगवत उपस्थितेः ।

ननु पुरुषोत्तमशब्दरूढ्यर्थस्य न योगार्थेन साकं प्रत्यासत्तिः तदा-वयवार्थनिरूढ्यसंबन्धेन योगरूढत्वासिद्धेः । तथा हि पुरुषोत्तमशब्देन कर्मधारयः सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः इत्यस्य पूर्वनियमार्थत्वेन उत्तम-शब्दस्य पूर्वनिपातप्रसङ्गात् ।

न च षष्ठीसमासः, 'न निर्धारणे,' इति निषेधात् । नापि सप्तमी समासः न निर्धारणे इति निषेधादेव । न च वाच्यं षष्ठ्या एवायं समास-निषेधो न सप्तम्या इति निषेधाभावेन सप्तम्या अपि निषेधात् । अन्यथा षष्ठी सप्तमी समासयोरूपतोऽर्थतश्च भेदाभावेन निषेधानर्थक्यात् । अतः केवलरूढ एवायमश्वकर्णादिवदिति । तन्न, पुरुषोत्तमशब्दे उक्तसमासत्रयनिर्वाहसंभवात् । तथा हि — न तावत् कर्मधारयपक्षे उत्तमशब्दस्य पूर्वनिपातप्रसङ्गः पूजाया अविवक्षितत्वात् । उत्तमशब्दे हि, 'क्लीबे प्रधानं प्रमुख-प्रवेकानुत्तमोत्तमाः,' इति श्रेष्ठवाचिवत् त्रिप्रभृतीनामन्त्यमुत्तममित्यन्तिम-वाचकोऽप्यस्तीति, तेन समासस्य वर्णनसंभवात् । न च तथापि विशेषण

शब्दत्वेन पूर्वनिपातत्वप्रसङ्गः पुरुसनोतीति पुरुष इति भूरिदत्व वाचितया पुरुष-शब्दस्य विशेषणशब्दत्वसंभवात् । अन्तिमत्वं च भगवतोऽश्वमेधो वै यज्ञाना-मन्त इत्यत्रेव श्रेष्ठपरिगणनपर्यवसान भूमित्वं, तथा च न कर्मधारयानु-पपत्तिः । नापि षष्ठीसमासानुपपत्तिः, यस्मान्निर्धार्यते यश्चैको निर्धारण-हेतुरेतत्त्रयसंनिधाने निर्धारणं भवतीति तत्रैव षष्ठीसमासप्रतिषेधः । 'इह तु नागानामुत्तम इति त्रयसंनिधानाभावात्संबन्धसामान्ये षष्ठीसमासो भवत्ये'वेति [illegible]कथा संबन्ध सामान्यविहितषष्ठीमादाय समाससंभवात् । तदुक्त-[illegible]वादैः — 'शैषिक षष्ठी वा नीचोत्तमभाव संबन्धावलम्बीनि । [illegible]दर्शितार्था समस्येत नगोत्तमादिशब्दाश्च शब्दविद्भिरेवमनिरूद्धा [illegible] तथा च षष्ठीसमासेऽप्यनुपपत्तिः । नापि सप्तमी समासानुपपत्तिः "न निर्धारणे इत्यस्य षष्ठीसमासविषयत्वात् । न च निषेधानर्थक्यम् । सप्तमी [illegible] तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इति पूर्वपद प्रकृति-[illegible] [illegible]तव्यम् । षष्ठीसमासे तु अन्तोदात्तेनेति विशेषसद्भावेन तत्सामर्थ्यात् [illegible] योगविभागबलात्सप्तमीसमास उपपद्यत इति न कोऽपि दोषः । [illegible]नुसारे तु पञ्चमीसमासः स्पष्टः ।

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।'

इति वचनात् । न च पञ्चमीसमास विधायकाभावात् पञ्चमीभयेनेत्यत्र पञ्चमीति योगविभागादुपपत्तेः योगविभागे च तादपि परस्तत्पर इति भाष्यमेव प्रमाणम् । न च 'स उत्तमः पुरुष इत्यस्य कर्मधारयपक्षे प्रत्यासत्त्या रूढ्यर्थ-स्मारकत्वेऽपि समासान्तरपक्षे कथं रूढ्यर्थस्मारकत्वमिति वाच्यम् । उत्तमत्वस्य संबन्ध्याकाङ्क्षायां पुरुषशब्दस्यैव तत्समर्पकत्वेनोपस्थित्या समासान्तरं विग्र-हार्थोपस्थितेः तद्वारारूढ्यर्थोपस्थितिसंभवात् । पुरुषशब्दस्य भगवदसाधारण्याच्च उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः इति स्मृत्यर्थस्य झटिति प्रत्यभिज्ञानाच्च तदुपस्थिति संभवात् ।

**ऽीच्छत स एतं वरुणं चतुष्कपालमपश्य'** दित्यत्र तच्छब्दस्य प्रजापति परामर्शकत्व दर्शनात् । अन्यथा उपक्रमानुसाराद्धातुरिष्टिरित्यस्यानुपपन्नत्व प्रसङ्गादिति चेन्न । उत्तमः पुरुषस्त्वन्यः इति भगवत एवोत्तमपुरुषत्वेनोप स्थितिकर्तुर्युत्तमपुरुषस्त्वन्यबाधितत्वेन विधानासंभवात् यत्किञ्चिदपेक्षयोत्तमस्य ब्रह्मात्मकत्वस्य प्राप्तत्वेन विध्ययोगात् । न च स उत्तमः पुरुष इत्यनुवाद वाक्यानर्थक्यात् । अस्मत्पक्षे तु देवतानिर्धारणं प्रयोजनम् ।

न च स उत्तमः पुरुष इति मुक्तस्य ब्रह्मात्मकत्वविधिपरमस्त्विति वाच्यम् । स तत्र पर्येतीति भेदनिर्देशासाङ्गत्यप्रसङ्गात् । अतः प्राप्यस्य पुरुषोत्तमत्वमेवं श्रुतिः प्रतिपादयति । **इममर्थं भगवानापस्तम्बोऽपि स्पष्टीचकार ।** '**द्विजातीनामपवर्गोऽर्थत**' **इति ब्रह्मणेभ्यस्यापवर्गात्मकत्वमुपक्षिप्य** वेष्टितुं पुरुषोत्तममिति **प्राप्ये पुरुषोत्तमशब्द प्रयोगात्** । यत्तु —

अधिगत्य जगत्यधीश्वरादथमुक्तिं पुरुषोत्तमात्ततः ।

इत्यन्यत्रापि प्रयोगाद्योगेन साधारणोऽयं शब्द इति । तन्न । हरिर्यथैकः पुरुषोत्तमः स्मृतः, श्रीपतिः पुरुषोत्तमः, '**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः**' इत्यादि **लौकिकवैदिक प्रयोगानुसारेण** न साधारणत्वा-ध्यवसायात् । '*अथ मुक्तिं पुरुषोत्तमात्ततः*' इत्यत्रापि प्रकृतनलपरामर्शि-तच्छब्द समभिव्याहाराद्योगाश्रयणेऽपि भगवद्रूपार्थान्तरप्रतीतिं विना श्लेष निर्वाहेण रूढिं विना तदनुपस्थित्या च भगवद्रूढत्वमेतस्य शब्दस्य सिद्ध्यति । न च पुरुषोत्तमशब्दस्य भगवति रूढत्वे कथमन्यत्र प्रयोग इति वाच्यम् । अर्थान्तरे रूढानामपि शब्दानां गङ्गायां घोष इतिवत् पङ्कजं कुमुदमितिवच्चान्यत्र प्रयोगेऽपि रूढ्यभावात् । तुल्यवत्प्रयोग एव हि रूढिबाधकः, 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति योगार्थः शिवे प्रयुक्त इति तु प्रथम-परिच्छेदे निराकृतम् ।

यदप्यपवर्गप्राप्य स्वस्वरूपे उत्तमः पुरुष इति यौगिकार्थपरशब्दस्य प्रयोगेन सूत्रस्य पुरुषोत्तमपदयोगस्यापि कल्पनालाघवेन तन्मूलकतया यौगिकत्वमिति, तदपि छान्दोग्य प्रयोगस्यापि भगवत्परत्वोपपादनान्निरस्तम्। वेष्टितुमित्येतच्चासंगतं स्यात्। न हि स्वस्वरूपं वेष्टयत इत्युक्तिसंभवः। अतः परंज्योतिरुपसंपद्यस्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति वाक्यबलात् मुक्तोपसृप्यो नारायण इति सिध्यतीति दिक्।

**एवं प्रश्नोपनिषदपि** भगवतो मुक्तप्राप्यत्वमाविष्करोति, 'स यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायेत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हवै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' इति पुरुषशब्दवाच्यस्य नारायणस्य मुक्तदृश्यत्व प्रतिपादनात् सर्वपापविनिर्मुक्तः प्राप्यं ब्रह्मलोकमधिकृत्य 'यत्तत्कवयोवेदयन्त' इति सूरिदृश्यत्वोक्त्या 'सदा पश्यन्ति सूरयः' इति प्रत्यभिज्ञानाद्वैष्णवपदत्वप्रतीत्या च तत्रत्यो मुक्तप्राप्यो भगवानित्यवसीयते। तथा **कौषीतकीनामोपनिषदपि** भगवतो मुक्तप्राप्यत्वं स्फुटयति। 'स आगच्छत्यमितौजसः पर्यङ्कम्। स प्राणः। तस्य भूतं च भविष्यच्च पूर्वौपादौ श्रीश्चेराचापरौ बृहद्रथन्तरे अनूच्ये। भद्रयज्ञायज्ञीये शीर्षण्यम्। ऋचश्च सामानि च प्राचीनातानम्। यजूंषितिरश्चीनानि। सोमांशत उपस्तरणम्। उद्गीथ उपश्रीः। श्रीरुपबर्हणम्। तस्मिन् ब्रह्मास्ते। तमित्थंवित्पादेनैवारोहतेत्यत्र ब्रह्मास्तरणस्य सोमांशुरूपत्ववर्णनानन्तरमुद्गीथ उपश्रीरिति लक्ष्मीसमीपे विद्यमानस्यास्तरणस्योद्गीथरूपत्ववर्णनया मुक्तप्राप्यस्य लक्ष्मीपतित्वाभिव्यक्तेः। तदेवमेतादृशप्रमाणबलान्नारायण एव मुक्तप्राप्य इति सिद्धम्। अत एव हि तदीयं पदं प्रकृत्युत्तीर्णमित्युच्यते, 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीवचक्षुराततं तद्विप्रासो विपन्यवोजागृवांसस्समिन्धते विष्णोर्यत्परमं पदं' 'क्षयन्तमस्यरजसः पराके' 'यदेकमव्यक्तमनन्तरूपं,

'विश्वं पुराणं तमसः परस्तात् ।'

'आदित्यवर्णं तमसः परस्तात्' 'यो वेद निहितं गुहायां परमेव्योमन्' 'तदेव भूतं तदुभव्यमा इदं तदक्षरे परमेव्योम'न्नित्यादिषु, अत्र 'सदा पश्यन्ति सूरय' इति श्रुतिर्नमुक्तविषया। तेषां सदा दर्शनानुपपत्तेः। नापि मुक्तप्रवाहविषया, सदा पश्यन्तीत्येकैकतया प्रतीतेः श्रुतिभङ्गप्रसङ्गात्। किन्तु नित्यविषयेति तैः सदा दृश्यत्वप्रकृतिमण्डलान्तर्गतस्य पदस्येति तदुत्तीर्णत्व सिद्धिः। रजसः पराक इति त्रिगुणात्मिका प्रकृतिरुच्यते केवलस्य रजसोऽनवस्थानात्। इमां त्रिगुणात्मिकां प्रकृतिमतिक्रम्य स्थिते स्थाने 'क्षयन्तं' वसन्तमित्यर्थः। अनेन त्रिगुणात्मकात् क्षेत्रज्ञस्य भोग्यभूताद्वस्तुनः परस्ताद्विष्णोर्वासस्थानमिति गम्यते। अस्य च भगवद्विषयकत्वं, 'वषट् ते विष्णवास आकृणोमीत्युपक्रमात्' आदित्यवर्णं तमसः परस्तादित्यत्रापि तमः शब्देन प्रकृतिरेवोच्यते केवलं तमसोऽनवस्थानादेव परस्तादिति प्रकृत्युत्तीर्णं स्थानमुच्यते। 'दिक्छब्देभ्यः सप्तमी प्रथमाविभ्यो दिग्देशकालेष्वस्तातिरि'ति विहितस्यास्ताति प्रत्ययस्य प्रकृते देशवाचित्वात्। योवेद निहितं गुहायां परमेव्योमन् तदक्षरे परमेव्योमन्निति तत्स्थानमविकाररूपं परमव्योम शब्दाभिधेय-मिति गम्यते। तदक्षरे परमेव्योमन्निति तत्स्थानस्याक्षरत्व श्रवणात्। न च व्योमशब्दस्य चिच्छक्तिपरत्वं वक्तुं युक्तं प्रमाणाभावात्।

'यस्य सा परमादेवी शक्तिराकाशसंज्ञिता।'

इत्यादेराकाशशब्दवाच्यत्वमात्र परत्व संभावनायामपि तद्वाचक शब्दान्तर वाच्यत्वे प्रमाणत्वस्यासंभवतितत्वात्। एवं स्मृतिरपि तदीयस्थानस्या प्राकृतत्वं प्रकटयति।

एकान्तिनः सदा ब्रह्म ध्यायिनो हिये।<br>
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥<br>
कला मुहूर्तादिमयश्च कालः न यद्विभूतेः परिणामहेतुः।

इत्यादिका। अत्र यद्वै पश्यन्ति सूरयः इत्यत्र श्रुतिप्रत्यभिज्ञानात् भगवत्स्थान-परत्वं कलामुहूर्तादिमयश्च काल इत्यपि **रैवतकं** प्रति ब्रह्मणो वचनमिति भगवत्स्थानपरम्। **महाभारते** च —

> **सर्वात्मना गुणैर्मुक्तः क्षेत्रज्ञः स युधिष्ठिर।**
> **प्रकृतिं** चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम्।
> **परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम्॥**

इति। अत्र प्रकृतिमतिक्रम्य गच्छतीत्युक्तया प्रकृतिमण्डलोत्तीर्णदेशगमनं प्रतीयत इति स्थानविशेषसिद्धिः।

**यद्यपि रत्नत्रय परीक्षायामुक्तं** गोलोकान्तर्गतं वैष्णवं पदमिति **श्रुतिः प्रतिपादयतीति** न तस्य प्रकृत्युत्तीर्णत्वं सा च तेते धामान्युश्मासीगमध्यै-गावोयत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेरिति। अस्याश्चायमर्थः — हे विष्णो ते तानि तानि तच्छब्दाद्बहुवचनस्य 'सुपां सुलुगि'त्यादि सूत्रेण शे इत्ययमादेशः ते तव धामानि स्थानानि गमध्यै गन्तुं उश्मसि इच्छामः। गमध्यै इति गमिधातोस्तुमर्थे से सनित्यादि सूत्रेण तुमुन् प्रत्ययार्थे अध्य इति प्रत्ययम्। उश्मसीति वशकान्ताविति धातोरुत्तम पुरुषबहुवचने इदं तोमसिरिति सूत्रेणान्तिम इकारः संहितोदीर्घः। तान्येव धामानि विशेष्यन्ते। यत्र येषु स्थानेषु अयासः अनपायिन्यः धातोरसुन् प्रत्यये नञ् समासः। भूरिशृङ्गा दीर्घशृङ्गा, गावः नन्दादयो गोमातरः सन्ति। 'अत्राह' एष्वेव स्थानेषु। अहेति निपात एवकारार्थः। तत्प्रसिद्धः उरुगायस्य उरुभिर्महद्भिर्गीयमानस्य। भूरेर्महतो विष्णोस्तत्र परममधस्तन विष्णुलोकापेक्षयोत्कृष्टं पदमवभाति। परमशिवलोकस्याधस्ताद्भातीति। अतः प्रकृत्यन्तर्गतत्वमनया श्रुत्या वैष्णवपदस्य प्रतीयत इति, तन्न प्रकृत्युत्तीर्णत्व प्रति-पादकप्रमाणाविरोधेनार्थवर्णने संभवत्यन्यथा तदयोगात्। तच्च 'हे विष्णो ते तानि धामानि प्राप्तुमिच्छामः येषु भूरिशृङ्गा गावः सन्ति, गाव इति सर्वपुरुषार्थोपलक्षणम्। एवं प्रकृत्यन्तर्गतलोकानुक्त्वाह — अत्राहेति तेष्वपि

स्थानेषु मध्ये परमं पदमुत्कृष्टं स्थानं प्रकृत्युत्तीर्णमिति यावत्। श्रुत्यन्तरप्रत्यभिज्ञानुसाराच्छन्दस्वारस्याच्चायमर्थोऽवगम्यते तदवभाति अवभासत इत्यर्थः। अवात्येत्येतदवभासत इतिवदनतिरिक्तार्थकं नत्वधस्ताद्भातीति तदर्थः। अवध्युपस्थापकपदाध्याहारापत्तेः उपक्रमगतपरमशब्दस्वारस्याच्च। तस्माद्विष्णुलोकस्य प्रकृत्युत्तीर्णतायां न बाधकं किंचित्। एतेन।

'ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपदं महत्।
भोगस्थानमतुलं कर्मयोगरतात्मनाम् ॥
अप्रमेयगुणैः सर्वैर्विमानैः सार्वकामिकैः।
असंख्यैस्तत्परं प्राप्तं सर्वप्राण्युपकारकैः ॥
सहस्रभूमिविस्तीर्णैः सूर्यकोटिसमप्रभैः।
रुद्रलोकमिति प्रोक्तमशेषगुणसंयुतम् ॥'

इति वचनाद्विष्णुलोकापेक्षयोपरितनः शिवलोक इति निरस्तम्। अस्य वचनस्य ब्रह्माण्डान्तर्गत विष्णुलोकादधिकस्तत्र शिवलोकोऽस्तीति प्रतिपादनेन चरितार्थस्य सर्वोत्तीर्णतया तत्साधनासामर्थ्यात्। न च,

'ऊर्ध्वं शिवपुराज्ज्ञेयं स्थानत्रयमनुत्तमम्।
नित्यं परमशुद्धं च स्कन्दोमात्वकरात्मकम् ॥'

इत्युपक्रमः।

'शुद्धस्फटिकसङ्काशं जटामकुटभूषितम्।
त्र्यक्षं चतुर्भुजं शान्तमक्षमालाधरं हरम् ॥
वरदाभयहस्तं च त्रिशूलासक्तपाणिकम्।
ध्यायमानः शिवं नित्यं शिवसायुज्यमाप्नुयात् ॥
ये संप्राप्तपदं स्थानं ध्यानयोगरता नराः।
न तेषां पुनरावृत्तिर्घोरे संसारसागरे ॥
सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा महेश्वराः।
शिवतुल्य बलोपेताः पुरं शिवपुरं गताः ॥'

इति प्रतिपादनात् सर्वोत्तीर्णत्वमवगम्यत इति वाच्यम् । अस्यापि वचनजातस्य ब्रह्माण्डान्तर्गत शिवलोकोत्तीर्णप्रकृत्यन्तर्गत शिव शिवलोकान्तरप्रतिपाद-कत्वेनोपपत्त्या प्रकृत्युत्तीर्णत्वप्रतिपादनासमर्थत्वात् । अस्ति च ब्रह्मलोको ब्रह्माण्डोत्तीर्णे प्रकृत्यन्तर्गतःत्वयैव **रत्नत्रयपरीक्षायाम्** —

> ' शिवलोकाद्बहिर्ज्ञेय मण्डस्यावरणाष्टकम् ।
> अण्डादूर्ध्वं पुनर्ज्ञेयं प्रकृतेर्मध्यतः स्थितः ॥
> ब्रह्मणः परमं स्थानं पद्मरागसमप्रभम् ।
> ब्रह्मलोकात्परंज्ञेयं विष्णोःस्थानं सनातनम् ॥
> इन्द्रनीलप्रतीकाशं महाभागैरलङ्कृतम् ।
> विष्णुलोकात्परंस्थानं कुमारस्य महात्मनः ॥
> स्वच्छमौक्तिकसङ्काशं वरभोगसमन्वितम् ।
> स्कन्दस्थानात्परं स्थानमुमादेव्याः प्रकीर्तितम् ॥
> तप्तचामीकरप्रख्यं विशेषगुणसंयुतम् ।
> उमास्थानात् परतः स्थानमाद्यमुमापतेः ।
> दिनकृत्कोटिसङ्काशं सर्वकालसमन्वितम् ॥ '

इति । तत्र प्रमाणभूतानां वचनानामुपन्यासाच्च नित्यत्वादिप्रतिपादनात् प्रकृत्युत्तीर्णत्वसिद्धिरिति वाच्यम् । पूर्वोदाहृतश्रुत्यादिबलाद्विष्णुलोकस्य सर्वो-त्तीर्णत्वावगमादस्य वचनस्य **चातुर्मास्य फलाक्षयत्व** प्रतिपादकवचन-वन्नेयत्वात् । तथा च श्रीमन्नारायण एव मुक्तप्राप्यः, तदेवमुत्तरमीमांसा-विचारितवेद प्रतिपाद्य जगत्कारणत्व मुमुक्षूपास्यत्वमुक्तप्राप्यत्व धर्मपरिष्कृतो नारायण इति सिद्धम् ।

एवं पूर्वमीमांसाविचारित वेदप्रतिपाद्य सर्वधर्माराध्यत्वरूपधर्मालंकृतोऽपि स एव । अम्भस्यानुवाके इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिरिति तथात्वावेदनात् । अस्याः श्रुतेरयमर्थः । इष्टं यागादिश्रौतं पूर्तं

ज्ञातादिस्मार्तं भूतभविष्यद्रूपमग्नीन्द्रादिदेवतान्तरसंबन्धि सर्वमपि बिभर्ति-स्वीकरोति, तदाराध्य इति यावत्। भुवनस्य नाभिः कर्मफलप्रदतया आधारभूत इति अम्भस्यनुवाकस्य च भगवत्परत्वं प्रथमपरिच्छेदे व्यक्तम्।

नन्वग्न्यादीनामेव यदाग्नेयोऽष्टाकपाल इत्यादि वाक्यैस्तत्तत्कर्मसंबन्धि देवतात्वावगमेनोत्पत्तिशिष्ट **गुणावरोधे गुणान्तरनिवेशायोगस्य गुणाधिकरणे संप्रतिपन्नत्वेन** भगवतो देवतात्वकल्पनोन्मेषमर्हतीति चेन्न। अस्य चोद्यस्य, नदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः इत्येतन्मन्त्रोत्तरार्धेनैव परिहृतत्वात्। अनेन हि भगवत एवाग्न्यादिकृत्स्नदेवता शरीरकत्व प्रतिपादनमुखेन कर्मविधायक वाक्यगताग्न्यादि शब्दानां भगवत्पर्यन्ततात्पर्यकत्वेन तैर्भगवानेवाभिधीयत इत्या-विष्क्रियते। एतेनाग्न्यादेरितर सापेक्षदेवतात्वे आग्नेय इत्यादि तद्धितानु-पपत्तिरिति निरस्तम्। अनेन बिभर्तीत्यस्याराध्यत्व तात्पर्यमित्यपि सिद्ध्यतीति नान्यार्थकल्पनोन्मेषसंभवः। नन्वस्य **वाक्यस्योपनिषत्त्वेन यदाग्नेय इत्यादि कर्मकाण्डस्थ वाक्यार्थावधारण दशायामनुपस्थितत्वेन तद्दशायामग्न्यादिशब्दानां** भगवत्पर्यन्ततावगमेन देवतात्व प्रतीतेः शरीरभूताग्न्यादिमात्रपर्यवसितत्वेन विधेस्तन्मात्रपर्यवसायित्वान्नोत्पत्तिवाक्यात्रसेयं भगवतो देवतात्वमिति चेन्न। न्यायानुसन्धानवाक्यान्तरविमर्श वैधुर्यदशायां वाक्यानुसन्धानमात्रात्सहसा परि-निष्पन्नस्य वाक्यतात्पर्यविषयत्वाभावात्। न्यायनिपुणाहि वाक्यान्तरन्याय विमर्शान्तरभाविज्ञानविषय एव शास्त्रतात्पर्यविषयोर्थ इति वर्णयांचक्रुः। अत एव हि **दर्शपूर्णमासाभ्यां स्वर्गकामोयजेतेत्यत्र** न झटिति शास्त्रतात्पर्य विषयीभूतार्थबोधनिष्पत्तिः। किन्तु बहुन्यायानुसन्धान विलम्बितैव। **तथा हि प्रथमं तावद्दर्शपूर्णमासशब्दार्थः** एतद्वाक्यार्थानुप्रविष्ट इति ज्ञायते। अनन्तरं विमर्शो भवति किं कालवचनः शक्त्या किं वा वृत्त्यन्तरेण कर्मवचन इति कालवाचित्वे अन्यत्र सर्वत्रेवात्रापि सप्तमीप्रसङ्गादत्यन्तसंयोग विवक्षायां च द्वितीयाप्रसङ्गात् कर्मवचनत्वे सिद्धे कर्मान्तरपरं वा, कर्मपरं वेति विषये, कर्मान्तरत्वे अरूपत्वादिविशिष्टविधि गौरवात्। प्रकृत प्रत्यभिज्ञानादपेक्षित फलपरत्वावश्यंभावाच्च। प्रकृत कर्मपरत्वे निर्णीते, प्रकृतेषु च किं सर्वपरत्वं,

किं वाग्नेयादिमात्रपरत्वमिति विचार्य प्रयाजादीनां कालसंबन्धाभावादाग्नेयादीनां कालसंबन्धस्योत्पत्तौ विद्यमानत्वादाग्नेयादीनां परत्वं विनिश्चित्य, तत्रापि विमृशति किमाग्नेयादिषट्परत्वं किं वा यागद्वय परत्वमिति द्वयपरत्वे विनिगमना-विरहात्, अपेक्षा संनिधि योग्यत्वानामविशेषात् षट्सूत्पत्तिषु कालवाचिपद वैयर्थ्यप्रसङ्गाच्च षट्परत्वं निश्चिनोति, ततश्च विमर्शान्तरं दर्शपूर्णमासाभ्यामिति पदस्य षट्परत्वे बहुवचनान्तता स्यात् एकैतरपदांशवैयर्थ्यं च, समुदायपरत्वे एकवचनान्तत्वापत्तिरिति दोषमनुसन्धाय, विद्वद्वाक्ययुगलपरामर्शे प्रवर्तते। तत्र विशिष्टविधिः कर्मान्तरविधिपरत्वे पौर्णमासीनयेन निरस्ते तद्वाक्ययुगलस्य प्रयोजनाकाङ्क्षायां समुदायद्वयापत्त्या, नामधेयपरत्वं निश्चित्य, निर्धारित-समुदायद्वयपरत्वं दर्शपूर्णमास शब्दयोरवगच्छति, दर्शपूर्णमासपदमाग्नेयादिषु कथं वर्तते, अमावास्याशब्दो हि विद्वद्वाक्ये व्युत्पाद्यत इति विचार्य, दर्शो वा एतयोः पूर्वः पूर्णमासः उत्तर इति वाक्यशेषानुसारेण दर्शामावास्या शब्दौ पर्यायाविति निश्चिनोति, पुनरपि विमृशति, कथमुपांशुयाजस्य पौर्णमासी शब्दाभिधेयत्वमुत्पत्तौ कालाभावादिति तत एव तन्निश्चिनोति उत्पत्तौ तदभावेऽपि पौर्णमासीं यजन्निति कालविधेः श्रवणादुपांशुयागस्यापि कालसंबन्धो भवतीति तत एवं वाक्यार्थबोधो भवति दर्शपूर्णमासाभ्यां यागैः समीहितं कुर्यादिति।

नन्वेवमप्यसंनिहितवाक्यान्तरपर्यालोचनापर्यन्तं विलम्बः कथमिति चेन्न। उक्थ्यान्निगृह्णातीत्यत्र तं पराञ्चमुक्थ्यात्षोडशिनं गृह्णातीति शाखान्तरवाक्यानुसारेण पुरोडाशं चतुर्धा कृत्वेति वाक्ये आग्नेयं चतुर्धा करोतीति शाखान्तरवाक्यस्य निर्णयस्य न्यायविद्भिरभ्युपगमात्।

ननु तथाप्यप्राकरणिक वाक्यपर्यालोचना नास्तीति चेन्न। यस्य पर्णमयी जुहूर्भवति यस्य खादिरस्रुवो भवतीत्याद्यनारभ्याधीतवाक्य-विधीयमान पर्णतादि प्राप्त्यपेक्षत्वेन दर्शपूर्णमासकृत प्रयोगविधेः प्राकरणिकत्वात्। समात्रपर्यालोचनापेक्षित्वस्यासिद्धेः। किञ्च न प्राकरणिक-

वाक्यमात्रपर्यालोचनापेक्षा शङ्कितुमपि शक्या । 'चतुर्गृहीतान्याज्यानि भवन्ति' 'न ह्यत्रानुयाजा इज्यन्ते' इत्यादि ध्यानप्रकरणस्थं वाक्यं पर्यालोच्याष्टावुपभृती: गृह्णातीति वाक्यप्रतिपाद्य चतुर्गृहीतद्वये एकं केवलप्रयाजार्थं परं केवलान्यान्य प्रयाजार्थमिति निर्णयात् ततश्च 'तिह्वायोर्बर्हि: प्रतिसमानीयते' जुह्वामौपभृतमित्युच्यमानं समानयनं प्रयाजार्थस्यार्द्धस्येत्यस्य सिद्धे: अन्यथा समंस्यादश्रुतत्वादिति न्यायेन यदुपभृति प्रयाजानुप्रयाजेभ्यस्तदित्युभयार्थत्वेनावगतस्यार्थाधिकमनूयाजत्रयार्थं विशेषणीयं प्रयाजद्वयार्थमुद्धन्यूनं च समानेतव्यं स्यात् । ननूपभृत्यष्टगृहीतमेकं हविर्निभवति । किन्तु चतुर्गृहीतं हविर्द्वयं यच्चतुर्गृहीतं जुह्वोतीति विधिना चतुर्ग्रहण संस्कृतस्याङ्गत्वात्रगमात् । तथा च 'यदुपभृतीति' प्रयाजार्थमेकं चतुर्गृहीतमनुयाजार्थमपरमित्यस्मिन् अर्थे पर्यवस्येत् । अत: समानयनविधीनामेव समानेतव्यं प्राप्नुयादिति चेत् नैवं, तथा व्यवस्थापक विध्यन्तराभावेऽपि यदुपभृतीत्यविशेषविधानेन चतुर्गृहीतद्वयस्यापि प्रयाजानुयाजार्थत्वप्राप्तेरनिवार्यत्वात् । न चैकस्मिन् यागे हविर्द्वयं न प्राप्नोतीति शक्यं वक्तुं, वचनबलादेकस्य चतुर्गृहीतस्य हविषोऽनेकप्रयाजार्थत्ववदनेकानुयाजार्थत्वच्च चतुर्गृहीतद्वयरूपस्य हविर्द्वयस्यैकैकयागार्थत्वस्याप्युपपत्ते: । पशुयाग एकस्मिन् हृदयजिह्वाद्येकाद्येकादशहविरन्वयदर्शनाच्च चतुर्गृहीतान्याज्यानि भवन्तीति अनुयाजरहितायामतिथ्यायां चतुर्गृहीतान्यज्यानि भवन्ति, नह्यत्रानूयाजान् यक्ष्यन्भवति विधे: सत्त्वेन चतुर्गृहीतान्तरपरिसंख्यावलादुपभृति प्रयाजार्थमेकं चतुर्गृहीतमनुयाजार्थमपरमिति व्यवस्थावगम्यार्धमेव समानेतव्यमिति सिद्ध्यति ।

ननु चतुर्गृहीतवचनमातिथ्यायां प्रयाजार्थमेव चोदकाच्चतुर्गृहीतद्वयप्राप्तौ तत्रैकमेव चतुर्गृहीतं हविरिति प्रयाजार्थे हविषिवैकृतविशेषवचनतयाप्युत्पन्नेनोक्तव्यवस्थां गमयेदिति चेत् । सत्यम् । उभयथाप्युपपन्नस्य तस्य 'नह्यत्रानुयाजा इज्यन्त इति वाक्यशेषवशाद्व्यवस्थापकता भविष्यति । अनेन हि वाक्यशेषेणोपभृति द्वितीय चतुर्गृहीतभावेऽनूयाजानामभावो हेतूक्त: । ततश्च तत्र हेतौ साध्यभूतायामादिथ्यायामुपभृति द्वितीयचतुर्गृहीतस्य केवलप्रयाजार्थत्वं च

व्यवस्थापयति। तस्मान्न प्राकरणिक वाक्यमात्रपर्यालोचनापेक्षोवैदिक वाक्यार्थ-निर्णयः । **अपि च ज्योतिष्टोम प्रकरणगत**दक्षिणादानशास्त्रस्य ऋत्विक् परिक्रयार्थत्वेन, आत्मीयं द्रव्यमृत्विजामुपयोगीकुर्यादित्यर्थे पर्यवसितस्य विभाग-पर्यन्तत्वात् कथं विभागा इत्याकाङ्क्षायां द्वादशाहदीक्षाक्रमवाक्यगतार्थादि समाख्यानुसारेण निर्णयोऽवश्यम्भावीति न प्राकरणिकेतरानपेक्षा, किं बहुना प्रकृतिं क्रतुशास्त्रस्य कृत्स्नस्य प्रकृतिक्रतुविधायक शास्त्राधीननिर्णय स्वार्थत्वान्नैतद-पूर्वमस्माभिरुच्यते। किञ्च सौर्यं चरुं निर्वपेदिति चरुशब्दार्थनिर्णय आदित्यः प्रायणीय इत्येतद्वाक्यविशेषभूतःस्यादिति मोदनेत्यस्य प्रवृत्तिमपेक्षते। एवं त्रिवृदग्निष्टोम इत्यत्र वृच्छब्दार्थनिर्णयोऽपि तादृशवाक्यान्तरमपेक्षत इति तद्वदत्र तादेवाग्निरित्यादिवाक्यार्थनिर्णयाधीन निर्णय एव 'यदाग्नेयोऽष्टाकपालो' 'वायव्यं श्वेतमालभेत' इत्यादि विध्युद्देश इति नोत्पत्तिशिष्टन्यायेन भगवतो देवतात्वबाधः। किञ्च '**यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेदप्रति-यज्ञेन तिष्ठति, नयज्ञाद्भ्रंशत, आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामहे इति पञ्चाक्षरं, द्व्यक्षरोवषट्कार, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो, य एवं वेद प्रतियज्ञेनतिष्ठति, न यज्ञाद्भ्रंशत**, इति तावच्छ्रूयते। अत्र प्रजापतिशब्दो भगवत्परः सप्तदशप्राजापत्यान् पशूनालभते सप्तदशः प्रजापतिः प्रजापतेराप्त्यै श्यामा एकरूपा भवन्ति एवमिवहि प्रजापतिः समृध्यै इति श्रुतौ प्राजापत्यपशुषु श्यामत्वगुणविधायिन्या एकरूपा भवन्तीत्युक्त्या भगवत्पर सप्तदशपद समभिव्याहृतस्य प्रजापतिशब्दस्यात्रापि तत्परत्वौचित्यात् —

> चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
> हूयते च पुनर्द्वाभ्यां समेविष्णुः प्रसीदतु ॥

इत्यनुस्मृतावुपबृंहणाच्च। एवं चात्र भगवत एव सर्वयज्ञाराध्यत्वं प्रतीयते। अन्वायत्तमित्याराध्यत्वेन संबन्धित्व प्रतिपादनात्।

यद्यप्ययमर्थवादो दर्शपूर्णमास प्रकरणस्थ इति दर्शपूर्णमासाराध्यत्वमात्र प्रतिपादनेन चरितार्थः। तथापि प्रजापतेः सप्तदशत्वमिह सप्तदशाक्षर-हूयमानत्वमिति **भारतवचनादवगम्यमानत्वेन** तत्राग्नीन्द्रादिसर्वसाधारणस्य सप्तदशाक्षरहूयमानत्वरूपसप्तदशत्वस्य भगवद्धर्मत्व व्यपदेशोऽन्यथादि शब्दानामपि तात्पर्यमन्तरेण न सिद्ध्यतीति द्विपशु सोमात्मक सर्वयज्ञाराध्यत्वं भगवतो निष्प्रत्यूहमनया श्रुत्या सिध्यत्येव। अपि च '**य इमा विश्वा भुवनानि जुह्वदृषिर्होतेत्यादि** *__विश्वकर्मसूक्तं__ भगवत्परम्। 'अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितं' 'विश्वकर्मास्यजनिष्ट देव आदिर्गन्धर्वो-ऽभवद्द्वितीय' इति तत्रत्यस्य मन्त्रस्य। 'अजस्यनाभाव्ध्येकं अर्पितं यस्मिन् इदं विश्वं भुवनमधिश्रितम्।'

---

***विश्वकर्मसूक्तम्** —

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश॥
किं स्विदासीदधिष्ठानमारम्भणं कथमत् स्वित् कथमासीत्।
यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः॥
किं स्विद्वनं क उ स वृक्ष आस यतोद्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदुतदूयदध्यतिष्ठद्भुवनानि धारयन्॥
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः॥
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवी मुतद्याम्।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु॥
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम।
सनो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा॥

'पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ।'

इति स्तवराजाध्याये भगवता बादरायणेन भगवत्परतयोपबृंहणात् । तत्र 'यो देवानां नामधा' इत्ययं मन्त्र आम्नायते । तत्र नामधा इत्यनेनाग्नीन्द्रादि सर्वशब्दवाच्यत्वं स्फुटतरमवगम्यते । न च नामधा इत्येतन्नामकरणपरम् । डुधाञ् धारणपोषणयोरिति धातुपाठे धारणस्योपात्तत्वेन तत्रैव प्रसिद्धि प्राचुर्येण तदर्थस्यैव शीघ्रोपस्थितिकत्वात् । तत्र नामनामिनोर्वाच्य वाचक-भावस्य स्फुटप्रतिपत्त्या तद्वाच्यत्वोपस्थितेः देवानां नामधा इति विशिष्योक्तेः प्रयोजनाभावाच्च । सर्वनामकर्तापि स एव । एतेन नामरूपशब्दाश्रयत्व मित्यपि निरस्तम् । आकाशादि साधारण तदुक्तेर्निष्फलत्वात् । देवानां वाच्यत्व प्रतिपादनं तु सर्वकर्मसमाराध्यत्व सर्वफलप्रदत्वप्रतिपादनार्थ-मित्यर्थवत् । अस्तु वा नामकरणमर्थः । अथापि नामरूपव्याकरणश्रुतौ रूपसृष्ट्यैव तद्विशेषनामसृष्टेः सिद्धत्वात्, सृष्टिप्रतिपादनं सर्वशब्दवाच्यत्व परमिति श्रुतप्रकाशिकायां क्षुण्णम् । एवं च तदनुसारेणात्र नामधा इति तद्वाच्यत्वं परमवसीयते । किञ्च 'चतुर्होतारो यत्र संपदं गच्छन्ति देवैरिति' सर्वयज्ञाराध्यत्वं भगवतः प्रतीयते । चतुर्होतृशब्दस्य यज्ञपरत्वात् । एवमेव हि भगवता भाष्यकृता व्याख्यातं वेदार्थसंग्रहे । याज्ञिकैरपि तथा व्याख्यातम् ।

नन्वस्य विष्णुपरत्वे किं प्रमाणमिति चेन्न । सुवर्ण घर्मानुवाकस्य भगवत्परत्वस्यासकृदावेदितत्वेन तद्गतस्यास्य भगवतस्तद्गतत्वे तात्पर्यात् । 'एवमग्निहोत्रायावह' 'स्वं महिमानमावह' इति दर्शपूर्णमास प्रकरण समाम्नातो हौत्रमन्त्रोऽपि इष्टिपशुरूपकर्माराध्यत्वे प्रमाणम् । अनेन मन्त्रेण दर्शपूर्णमास प्रकरण गृहीतेन महिम शब्दाभिधेयस्य भगवतस्तत्र देवतात्वसिद्धेः । अतिदेशतः प्राप्तस्य तेनैव मन्त्रेण तद्विकृति भूतेष्टि पश्वात्मक कृत्स्नयाग देवतात्व सिद्धेश्च । महिम शब्दस्य विष्णुपरत्वं तु एष वै देवानां महिमा यो विष्णुः परमेष्ठीति याज्ञिकोदाहृत श्रुतिबलात् सिद्ध्यति ।

अत्राग्निमात्रहेत्यावाहनमात्रादेवाग्न्यादिशरीरक भगवदाह्वानं सिद्ध्यति। तथापि वेदान्तव्युत्पत्ति विधुराणामग्न्यादिशब्दानां भगवदतिरिक्त देवतामात्रपर्यवसान भ्रमःस्यादिति। तद्व्यावृत्त्यर्थं सकलदेवतान्तरात्मभूतस्य भगवत आवाहन-मुपपद्यते। सोमात्मक कर्माराध्यत्वं तु 'विष्णवुरुक्रमैषते सोमस्तं रक्षस्वे'ति मन्त्रवर्णात् सिद्ध्यति। ते इत्यस्य षष्ठ्यन्तत्वे संबन्धविशेषनिर्धारणासंभवेन निर्धारितविशेषपरत्वे संभवति। अनिर्धारितविशेषार्थपरत्वासंभवाच्चतुर्थ्यन्तत्व-मङ्गीक्रियते। तथा च चतुर्थीतादर्थ्याद्यन्यथानुपपत्याविष्णोः सोमद्रव्योद्देश्य देवतात्वं सिद्ध्यतीति पूर्वोक्तन्यायेन सर्वकर्माराध्यत्वं भगवतः सिद्ध्यति। तथा 'तव देवा हवमायन्ति सर्वे त्वमेकोऽसि बहूननुप्रविष्टः' इत्यपि तत्र मानम्। तव हवमाह्वानं सर्वेदेवा आयन्ति प्राप्नुवन्ति त्वय्याहूते सर्वेदेवा आहूता भवन्तीति यावत्। कुत इत्यत आह, त्वमेकोऽसि बहूननुप्रविष्ट इति भगवतः सर्वात्मभूततया सर्वप्रधानत्वेन भगवदाह्वाने तमागच्छन्त मन्वागच्छन्ति ब्रह्मादयस्तत्किङ्करत्वादिति श्रुत्यर्थः। अस्य भगवत्परत्वं तु 'भर्ता संभ्रियमाणो बिभर्ति। एको देवो बहुधा निविष्ट, इत्यनुवाकोपक्रमे। एकः सन् बहुधा विचार इति सुवर्णधर्मानुवाक प्रत्यभिज्ञानादुत्तरनारायणानुवाकादनन्तर-भावित्वाच्च। तथा भगवान्नारायण एव सर्वकर्माराध्यः।

कश्चित्वाह — शिवस्य केषुचिद्वाक्येषु सर्वकर्माराध्यत्वं प्रतीयत इति। न विष्णोस्तथात्व निर्णयः सुशकः। तथाहि गाथपतिं मेधपतिं रुद्रं जलाषभेषजमिति मन्त्रस्तावत्तत्र प्रमाणम्। तस्य चायमर्थः — गाथास्तोत्राणि तत्पतिं मेधा यज्ञास्तत्पतिजाः प्राणिनस्तैर्लभ्यत इति व्युत्पत्त्या जलाष शब्दः सुखपरः तदर्थं भेषजमिति। 'अधो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः' इति श्रुतिरपि तत्र प्रमाणम्। अध्वरस्य राजानमिति अध्व-राध्यक्षत्व प्रतीतेः। एवं छन्दोगानां सर्वकर्मारम्भजप्ये प्रपदानामके मन्त्रे विरूपाक्षोऽसिदन्ताञ्जलिः इति शिवं प्रस्तुत्य — 'यत्ते द्वादश पुत्रास्तेत्वा-संवत्सरे संवत्सरे कामपरेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्तीत्यपि' शिवस्य सर्वकर्माराध्यत्वे प्रमाणम्। किञ्च 'अयं सोमः कपर्दिन' इति श्रुतिः

सोमस्य शिवसंबन्धित्वमावेदयन्ती सोम द्रव्योद्देश्य देवतात्वं शिवस्य प्रतिपाद-यतीति सोम यागाराध्यत्वं तस्य सिद्ध्यति। किञ्च सोमस्य हूयमानावस्थ-स्यापि रुद्रसंबन्धित्वमवगम्यते 'रुद्र आहूतो वायुरावृत्त' इति। तथा च सोम यागाराध्यत्वमप्रतिहतं तथा 'इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये' 'अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यमिति' पशोः शिवसंबन्धित्वं प्रतीयत इति इति पशुयागाराध्यत्वमपि सिद्धम्॥

अपि च चमकेषु वाजश्च मे प्रसवश्च मे इत्यादिषु धाता च मे विष्णुश्च मे इत्यादिषु च वाजादीनां वस्तूनां विष्ण्वादि देवतानां च देयत्व प्रतीतेः परिशेषाच्छिवस्यैव सर्वफलप्रदातृत्व सिद्धिः। विष्ण्वादीनां देयत्वं च स्वाधीन-करणं उपबृंहणमपि कूर्मपुराणस्थं शिवस्य सर्वयज्ञाराध्यत्वे प्रमाणम्।

'अहं वै सर्वहविषां भोक्ताचैव फलप्रदः।
तथा सोमेनाराधयेद्देवं सोमं सोमविभूषणम्॥'

इति च। अतः शिव एव सर्वयज्ञाराध्य इति।

अत्राचक्ष्महे — न तावत् गाथपतिं मेधपतिं रुद्रं जलाषभेषजमिति वाक्यं शिवस्य सर्वकर्माराध्यत्व प्रतिपादन समर्थम्। 'आशासाना मेधपतिभ्यां मेधमित्यत्र मेधशब्दस्य पशुपरत्वाभ्युपगमेन पशुपतित्व प्रतिपादनमात्रेण चरितार्थत्वेन यज्ञाराध्यत्वपरत्वस्य नियन्तुमशक्यत्वात्। न च तत्रापि मेधशब्दो यज्ञपर एवास्त्विति वाच्यम्। तथा सति नवमेऽध्याये 'आशासाना मेधपतिभ्यां मेधम्' आशासाना मेधपतये मेध'मिति शाखाभेदेन समाम्नातयोर्मन्त्रयोर्मेधशब्दस्य देवतापरत्वेसति अग्नीषोमयोर्द्वित्वादेकवचनानु-पपत्तिः। यजमानपरत्वे द्विवचनं पत्न्यभिप्रायेणोपपद्यते। तस्मात् स्वामि संख्यावशादनयोर्मन्त्रयोरूह इति पूर्वपक्षे प्राप्ते यजमानपरत्वे मेधपतये यो मेधस्तमाशासाना इति वचनव्यक्तिः देवतापरत्वे मेधमाशासाना मेधपतये इति वचनव्यक्तिः स्यात्। तत्र च देवतापरत्व पक्षे मेधमाशासाना इत्युक्ते किमर्थ-माशासाना इत्यपेक्षायां मेधपतये इति संबन्धादपेक्षितार्थ पूरणम्। न च

यजमानायासावाशास्यते तस्माद्देवतावचनः । एकवचनंचाग्नीषोमयोर्व्यासक्तं देवतात्वमिति तदाश्रययोरुपपद्यते । द्विवचनं चाधिष्ठानद्वित्वमादायेति देवता-संख्यावशाद्द्वयोर्यथोचितमूह इति राद्धान्तितमिति तद्विरोधः स्यात् । न हि पशुपरत्वाभावे मेधपति शब्दस्य यजमानपरत्व संभावना, येन तत्परत्व निराकरणायाधिकरणमिदमर्थवत्स्यात् । किं चैवं मेधपति शब्दस्याग्निष्टोमयोरपि प्रयोगात् तयोरपि सर्वकर्माराध्यत्वप्रसङ्गः । न च पशुपतित्वमपि सर्वोत्कर्ष-साधकमेवेति वाच्यम् । वरं वृणा अहमेव पशूनामधिपतिरसानीति । तस्माद्रुद्रः पशूनामधिपतिरिति वरदानलब्धत्वावगमेन स्वाभाविकत्वानवगमेन सर्वोत्कर्ष साधकत्वाभावात् । न चैवमपि गाथपतिमिति स्तोत्रपतित्व प्रतिपादनबलात् सर्वदेवान्तरात्मकत्वं सिद्ध्यतीति वाच्यम् । स्तोत्रविशेषस्तूयमानत्वमादायापि तदुपपत्तेः, अन्यथा अस्य देवस्यमीढुषोवयाविष्णोरेषस्य प्रभृथेहविर्भिः । विदेहि रुद्रो रुद्रियं महित्वमिति भगवदाराधनलब्धमन्यपूज्यत्वमिति प्रतिपाद-यन्ती श्रुतिर्विरुध्येत । अस्याः श्रुतेरयमर्थः — अस्यविष्णोर्देवस्य दीप्तस्य एषस्य एषणीयस्य सर्वस्वामित्वेनापेक्षणीयस्य मीढुषः सेक्तुः वया शाखा-विष्णोस्तरुस्थानीयस्य शाखास्थानीयोरुद्रः प्रभृथे यज्ञे रुद्रकर्तृके हविर्भिः रुद्रीयं महित्वं विदे लब्धवान् इति । महित्वमिति मह पूजायामित्यस्मादौणादिके इन् प्रत्यये पूज्यवचनम् । महत्वार्थकत्वेऽपि कर्माराध्यत्वस्य तदन्तर्गतत्वेन विवक्षितार्थसिद्धिः । उपबृंहिताचेयं श्रुतिर्महाभारते —

> महामेधः सर्वमेधे महात्मा
>
> हुत्वात्मानं देवदेवो बभूव । इति ।
>
> 'आत्मा च भगवान् पुरुषोत्तम एव ।
>
> विष्णुरात्मा भगवतो भवस्यामिततेजसः ॥'

इति तत्रैव भारते प्रतिपादनात् । आपो राजानमध्वरस्य रुद्रं होतारमित्येतदपि न सर्वयज्ञाराध्यत्वसाधनसमर्थम् । 'त्वामग्ने वसुपतिं वसूनामभिप्रमन्दे ऽध्वरेषु राजन्' इत्यग्नौ 'प्रसम्राजं प्रथममध्वराणामितीन्द्रेऽप्यध्वरराजत्व

श्रवणेनातिप्रसञ्जकत्वात् । यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे कामप्रेणेति' श्रुतिरपि न तत्र प्रमाणं 'कामप्रेण यज्ञेनेति । फलविशेषोद्देश्यककर्माराध्यत्व-मात्रप्रतिपादनात् । यच्चायं 'सोमः कपर्दिन' इति श्रुतिः सोमस्य कपर्दि-शेषत्वं प्रतिपादयन्ती सोमद्रव्यकयागाराध्यत्वे प्रमाणमिति । तदप्यनुपपन्नम् । 'मनुः पुत्रेभ्यो दायं व्यभजत्सनाभानेदिष्टं ब्रह्मचर्यं वसन्तं' 'ततो वै तस्य रुद्रः पशून्नाभ्यमन्यते'ति मन्थिसंस्रावाद्व्यतिरिक्तानन्वय प्रतिपादन-विरोधेन सोमयागाराध्यत्व साधनासमर्थत्वात् । अत एव 'यज्ञस्य शिरोच्छिद्यत ते देवा अश्विनावब्रुवन् भिषजो वैस्थ इति । यज्ञस्य शिरः प्रतिधत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विन मगृह्णन्नित्यादि बलादश्विनोरन्यत्रानन्वयः सिद्ध्यति । 'किञ्चोच्छेषण भागो वेदह' इति प्रसिद्धव्यपदेशश्चान्यत्रानन्वयं प्रतिपादयति । एवं च सोमः कपर्दिन इति संबन्धमात्रप्रतिपादकं यथाकथंचिदुपपन्नं न सोमाराध्यत्व साधनसमर्थम् । एतेन रुद्र आहूत इति श्रुतिः प्रमाणमित्यपि परास्तम् । सामानाधिकरण्यस्य संबन्धमात्रे चोपपन्नत्वात् । 'प्रजापतिर्मनसान्ध' इत्यादि कृत्स्नवाक्यपर्यालोचनयापीदं स्पष्टम् । 'इमं पशुं पशुपते तेऽद्य बध्नाम्यग्ने' इति श्रुतिर्न पशुयागोद्देश्यत्वं शिवस्य प्रतिपादयितुं शक्नोति । देवोद्देश्यकत्याग विषय पशुसंबन्धित्वमात्रप्रतीतेः । प्रत्युत देवोद्देशेन त्यागार्थं क्रियमाणाया अनुमति प्रार्थनाया एवात्र प्रतिपादनेन त्यागानुद्देश्यत्वस्यैव प्रतीयमानत्वात् ।

'यदप्यग्निश्चम इन्द्रश्चम' इत्यत्राग्नीन्द्रादीनां प्रदेयत्व प्रतिपादनसिद्धेः । न हि वाजश्चम इत्यादौ देयत्व प्रतिपादकपदमस्ति न च तद्वाचकपदाध्याहारेण देयत्वं प्रतिपादयितुं शक्यमिति वाच्यम् । अध्याहारादनुषङ्गस्य 'ज्यायस्त्वे-नायुर्यज्ञेन कल्पतां' 'बृहद्रथन्तरे च मे यज्ञेन कल्पेतां' 'दिशश्चमे यज्ञेन कल्पन्तामिति, वाक्यस्थ क्लृप्तिवाचकपदानुषङ्गेण वाक्यपूरणसंभवे दीयतामिति पदाध्याहारायोगात् । क्लृप्तिश्चात्रानुकूल्याचरणं, तथा चाग्नीन्द्रादीनां प्रदेयत्वेन परिशेषाच्छिवस्य प्रदातृत्वसिद्धिरिति तस्याराध्यत्वं सिध्यतीत्येतन्मूलच्छेदाच्छिन्नम् । अस्तुवाग्न्यादीनां प्रदेयत्वम् । तथापि प्रदात्रा ततोऽन्येम भाव्यमिति न

निर्बन्धः । य आत्मदा बलदा इति प्रमाणदर्शनेन प्रदेयस्य प्रदातुश्चाभेद-संभवात् । उक्तं च —

'सस्वेनैवफलप्रदः फलमपि स्वेनैव नारायणः ।'

इति । दीयतामित्यध्याहृतस्य कर्मकर्तृनिष्पत्त्यभ्युपगमेन प्रदातृप्रदेययोरभेदाभ्यु-पगमेऽपि तदुपपद्यते । ननु प्रदातुरन्यत्वाभ्युपगमः स्वरस इति चेन्न । उपक्रमे अग्नाविष्णू सजोषसे मावर्धन्तु वां गिरः इत्यग्नाविष्ण्वोः श्रवणेन अग्निश्चमे इन्द्रश्चमे विष्णुश्चमे इत्यनयोः प्रदेयत्वेन श्रुतयोरेव प्रदातृत्वस्याङ्गीकरणीयत्वात् ।

ननु अग्नाविष्णू सजोषसेति मन्त्रे अग्नाविष्ण्वोः प्रतिपादनेऽपि वाजश्चमे इत्यादीनां तद्विषयत्वं कुत इति चेन्न । वाजश्चमे इत्यादिषु प्रतिपाद्यमान प्रार्थनाया उद्देश्यान्वयावश्यम्भावेन तत्र देवतान्तरवाचकपदाभावेनोपक्रमश्रुताग्ना-विष्णुपदानुषङ्गेन तद्वाक्य पूरणावश्यम्भावेन तद्गामित्वात् । किञ्च प्रदातृप्रदेय-मेदाङ्गीकारेऽपि धाता च मे इन्द्रश्च मे इत्यनन्तरं विष्णुश्च मे इन्द्रश्च मे इत्युक्तया धातृशब्दस्यादित्यगणान्तर्गत प्रथमादित्यपरत्वेन विष्णुशब्दस्यापि तदन्तर्गत भगवत्परत्वात् । आदित्यगणान्तर्गतस्य भगवतो मूलभूतेन वास्तविकमेदाभावे-ऽप्यवतारभेदमादाय तदुपपद्यते । हव्यवाहनः त्रेधाविभज्यते '**त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सह रक्षा असुराणामिति**'। तथा अग्निरपि त्रेधाविभज्यते 'अग्निं तृतीयं रुद्रं तृतीयं वरुणं तृतीयमिति' एवं च प्रदातृप्रदेय मेदाङ्गीकारेऽपि नाग्नाविष्ण्वोर्वाजश्चम इत्यादि प्रार्थनो-द्देश्यत्वानुपपत्तिः । तस्माच्छिवस्य कर्माराध्यत्वपराणामन्यथासिद्ध्यर्हत्वाद्भगवानेव सर्वकर्माराध्यः । **गीतं च भगवता** —

येऽप्यन्य देवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधि पूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥

इति । तथास्मृत्यन्तरम् —

'ये यजन्ति पितॄन्देवान्ब्राह्मणान् सहुताशनान् ।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥' इति ।

आनुशासनिके —

'यूपं विष्णुं वासुदेवं विजानन्
सर्वान् विप्रान् बोधते तत्त्वदर्शी ।
विष्णुक्रान्तं वासुदेवं विजानन्
विप्रो विप्रत्वं गच्छते तत्त्वदर्शी ॥
विष्णुर्यज्ञस्त्विज्यते चापि विष्णुः
कृष्णो विष्णुर्यश्च कृत्स्नः प्रभुश्च ।
कृत्स्नो वेदाङ्गं वेद वेदाश्च कृष्णः
एवं जानन् ब्राह्मणो ब्रह्म एति ॥
स्थानं सर्वं वैष्णवं यज्ञमार्गे
चातुर्होत्रं वैष्णवं तत्र कृष्णः ।
सर्वैर्भावैरिज्यते सर्वकामैः
पुण्यान् लोकान् ब्राह्मणाः प्राप्नुवन्ति ॥
सोमं सद्यावाद्ये च जातं पिबन्ति
दीप्तं कर्म ये विदानाश्चरन्ति ।
एकान्तमिष्टौ चिन्तयन्तो दिविस्था
स्तेवैस्थानं प्राप्नुवन्ति प्रयज्ञाः ॥
तथा आज्यं यज्ञस्रुक्स्रुवौ यज्ञदाता
इच्छापत्नी पत्रशाला हवींषि ।
इध्मा पुरोडाशं सर्वदा होतृकर्ता
कृत्स्नं विष्णुं संविजानमेति ॥
योगे योगे कर्मणां चाभिहारे

युक्ते कृष्णो वार्ष्णेयैरिज्यते संमृशानैः ।
कृष्णोमुक्तैरिज्यते वीतमोहैः
देवानामपि देवस्त्वं सर्वविद्यापरायणः ॥
वेदाः साङ्गोपनिषदः सरहस्यार्थसंग्रहाः ।
सोङ्काराः सवषट्काराः प्राहुस्त्वां यज्ञमुत्तमम् ॥
तमध्वरेशं शंसितारः स्तुवन्ति
रथन्तरे सामगाश्च स्तुवन्ति ।
तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति
तस्मै हविरध्वर्यवः कल्पयन्ते ॥

**आश्वमेधिके—**

'होतारमपि हव्यं च विद्धिमां भृगुनन्दन ।
अध्वर्युः कल्पकश्चापि हरिः परमसत्कृतः ।
उद्गाताचापि मां स्तौति गीतघोषैर्महाध्वरे ॥'

इत्येवमादीनि पारे परार्धं वचांसि सन्ति तानि विस्तरभयान्नलिख्यन्ते । तस्मात् सोपबृंहणाभिरुदाहृत श्रुतिभिर्नारायण एव सर्वकर्माराध्य इति सिद्ध्यतीति स एव सर्वोत्कृष्ट इति युक्तम् ।

ननु **रुद्रोपनिषदथर्वशिरः** प्रभृतिषु शिवस्य नमस्कारघटितमन्त्र भूयस्त्वदर्शनाद्देवतान्तराणां क्वचिन्नमस्कारघटिततद्योगेऽपि तद्बाहुल्यानुपलम्भात्स्व-विषयोत्कर्षलिङ्गं नमस्कार भूयस्त्वेनानितरदेवतासाधारणेनानन्य सामान्य-महिमाख्याप्यत इति स एव सर्वोत्कृष्टः । न च नमस्कारो न स्वविषयोत्कर्षलिङ्गं, कुतश्चित्स्वहिंसाशंकायाः भयादपि नमस्कारस्य लोके दर्शनात् वेदेऽपि **'नमस्ते अस्तु मामाहिंसीरिति' भय प्रयुक्त नमस्कारोपलम्भाच्च** इह तु तद्भूयस्त्वं भयभूयस्त्वादुपपन्नमिति वाच्यम् । तथापि 'महद्भयं वज्रमुद्यतं' इति कठवल्लीषु तस्य ब्रह्मधर्मत्वदर्शनात् । **'कम्पनादिति'** सूत्रे च तथात्वोक्तेश्च सर्वोत्कर्षसिद्धेरपि कस्यात् न हि नमस्ते अस्तु मामा

हिंसीरिति नमस्कारस्य भयप्रयुक्तत्वेऽपि ततस्तद्विषयस्योत्कर्षसिद्धिः 'नमस्ते हरसेशोचिष' इति मन्त्रश्रुतनमस्कारस्य तत्तुल्यरूपस्यैव 'नमस्ते हरसेशोचिष इत्याह नमस्कृत्य हि वसीयांसमुपचरन्ती'ति तन्मन्त्र ब्राह्मणेनौत्सर्गिकत्व-विषयोत्कर्षप्रयुक्तयाख्यागोक्तेः। किञ्च 'सर्वो वै रुद्र' इत्यादिमन्त्रेषु भयलिङ्ग रहितेषु केवलं शिवस्य सार्वात्म्यप्रतिपादनायैव प्रवृत्तेषु बुध्यमानाः नमस्कार-विषयगौरव प्रयुक्ता इति न तत्र काचिदन्यथासिद्धिर्वक्तुं शक्यते। उक्तं च लैङ्गे —

'सर्वं रुद्रेति वै प्राहुर्मुनयस्तत्त्वदर्शिनः।
नमस्कारेण सहितं गौरवात्परमेष्ठिनः ॥'

इति। अतो नमस्कारबलाच्छिवस्योत्कर्षसिद्धिरनिवार्या। अपि च 'यस्मै नमस्तस्मैत्वा जुष्टं नियुनज्मी'ति मन्त्रे शिवस्य सर्वनमस्कारविषयत्वमवगमयति। स्वस्वोद्देश्यनमस्कारविषयत्वस्य सर्वसाधारणत्वेन तेनासाधारणशिवस्वरूप-समर्पणायोगेन तस्य सर्वनमस्कारविषयस्य परत्वावश्यम्भावात्। न च नमस्कार-भूमविषयत्वे तस्य तात्पर्यमस्तु तस्य रुद्राध्यायादिमन्त्राणां नमस्कारभूम्ना शिव-साधारणत्वे स्वरूपसमर्पकत्वात् सर्वनमस्कारविषयत्वस्य प्रमाणान्तरानवगमेन तेनरूपेण तदनुवादायोगाच्चेति वाच्यम्। देवतान्तरनमस्कारेभ्यो बाहुल्यरूपस्य शिवनमस्काराणां भूम्नात्र प्रतिपादकस्य शब्दस्याभावात् नमश्शब्दस्यैव तत्तात्पर्य कल्पने लक्षणापत्तेः। सर्वनमस्कारविषयत्वस्य नमःशब्दे जात्याश्रयण बलाद्यस्मा एव नम इति सर्वं वाक्यं सावधारणमिति सामान्यव्युत्पत्तिसिद्धोचित-स्थलान्वयावधारणबलाद्वा सिद्ध्युपपत्तेस्तस्य स्मृत्यन्तरानवगमेऽपि यो ब्रह्माण-मिति मन्त्रे परमेश्वरस्याध्यापयितृत्ववदनुवादसामर्थ्यादेव सिद्धिसंभवात्। दहरविद्यान्वयि परमेश्वरगुणप्रतिपादनपरे ऋतं सत्यमिति मन्त्रे' विश्वरूपायवै नमः इति भागस्यापि सर्वनमस्कारशेषित्वलक्षण तदन्वयि तद्गुणविशेषपरत्वौ-चित्येन पुरोवादत्वस्यापि संभवाच्च। अतः सर्वनमस्कारविषयत्वपरमेवेदम्। एवं यस्मै नमस्तच्छिर इत्यादिकमप्यत्रोदाहार्यमिति।

अत्र वदामः-किं नमस्कारभूयस्त्वं सर्वोत्कर्षव्यापकं किं वा तत्प्रकाशक मन्त्रभूयस्त्वम् । नाद्यः तस्य नमस्कार्ये प्रीत्यतिशयादिमात्रद्योतकत्वेनोपपन्नस्य सर्वोत्कर्षव्याप्यतानाम्नानात् । न च प्रीत्यतिशयादिकमेवोत्कर्षनिबन्धनमिति वाच्यम् । तस्येष्टप्रदानादिसामर्थ्यातिशय निश्चयाधीनत्वात् । अन्यथा सकृत्ते अग्ने नमः द्विस्ते नमः त्रिस्ते नमः चतुस्ते नमः पञ्चकृत्वस्ते नमः शतकृत्वस्ते नमः सहस्रकृत्वस्ते नमः अपरिमितकृत्वस्ते नमः इत्यत्र तद्दर्शनादग्नेरपि- सर्वोत्कर्षप्रसङ्गः ।

न द्वितीयः - विकल्पासहत्वात् । किं तत्सर्वनन्तव्यत्वोन्नायकत्वेन तद्व्यापकं स्वत एव वा । नाद्यः, एकपुरुषानुष्ठीयमानानेकनमस्कार प्रतिपाद- कत्वेनाप्युपपन्नस्य नमस्कारमन्त्रभूयस्त्वस्य सर्वनन्तव्यत्वं विनानुपपत्त्यभावेन तत्साधकत्वाभावात् । न चान्यत्र नमस्कारभूयस्त्व सर्वनन्तव्यत्वयोर्व्याप्तिर्दृष्टेति तत्सिद्धिरिति शक्यं वक्तुम । ईश्वरत्वेनाभिमतव्यक्त्यतिरिक्तनिष्ठत्व प्रसङ्गेने- श्वरत्वासाधकत्वात् । अन्यथा ईश्वरानेकत्वदोषात् । न चरमः, तस्य सर्वोत्कर्षं विनानुपपत्त्यभावेनाप्रयोजकत्वात् । किञ्चोत्कर्षासाधकत्वे नमस्कार- तद्भूयस्त्वयोःस्थिते तादृशार्थप्रतिपादकशब्दभूयस्त्वं तत्साधकमित्याशामात्र विजृम्भितम् । अन्यथाग्निप्रतिपादकमन्त्राणामितरमन्त्रापेक्षयाधिक्यात् । तस्य सर्वोत्कर्षसिद्धेः, अपि च नमस्कारस्योत्सर्गत उत्कर्षप्रयुक्तत्वेऽपि 'यच्छत रुद्रीयं जुहोति यैवास्य घोरातनूस्तां तेन शमयति' 'नमो रुद्राय मखघ्ने' इत्यादिभिर्भयहेतुत्वावगतेर्नोत्कर्षाविनाभावः । न च भयप्रयुक्तत्वे- ऽप्युत्कर्षप्रयुक्तिर्नत्याज्येति वाच्यम् । तत्प्रयुक्तत्वेनावधृते प्रयोजकान्तरकल्पनाया अनुदयात् । न च 'नमस्कृत्य हि वसीयांसमुपचरन्ती'त्युत्कर्षप्रयुक्तकथनात्त- थात्वमवसीयत इति वाच्यम् । तत्र कृत्स्ननमस्कारस्य श्रेष्ठत्वप्रयुक्तत्वा- कथनात् । श्रेष्ठनमस्कारपूर्वकं बहुमन्तव्य इति श्रेष्ठनमस्कारप्रयोजकमित्येतावन् मात्रमुक्तं न तु कृत्स्ननमस्कारश्रेष्ठप्रयुक्त इति । न च नमस्कारस्योत्कर्षपूर्वकत्व- नियमदर्शनादुत्कर्षसिद्धिरिति वक्तुं शक्यम् । असिद्धेः । लोके बाधादि- निवृत्यर्थमतद्विषयेऽपि तद्दर्शनात् ।

न च वैदिकनमस्कारस्य स्वविषयोत्कर्षप्रयुक्तत्वनियमः कल्पयितुं शक्यः, हेत्वन्तरप्रयुक्तत्व प्रमाणबलात् श्रुति तत्कल्पनानुदयात् । 'नमस्कृत्य हि वसीयांसमुपचरन्तीत्येतत् 'नमस्ते हरसेशोचिष' इत्यादिमात्रविषयमिति न शतरुद्रीयादिवाक्यमप्यवगाहते । न चैवं शूद्रवन्दनवद्व्यक्तिक्रमप्रयुक्तत्वकल्पना-प्रसङ्गः इति वाच्यम् । अनिषिद्धत्वेन तथात्वकल्पनाया अनुदयात् । न चैवं शिवस्यास्मदाद्यपेक्षयाप्युत्कर्षो न सिध्येदिति वाच्यम् । नमस्कारबलादसिद्धावपि संहारकर्तृत्व सार्वज्ञ्यादिना चतुर्मुखादेरिव तत्सिद्धिसंभवात् । न च स एव नमस्कार प्रयोजकोऽस्त्विति शक्यं वक्तुम् । हेत्वन्तरश्रवणे जाग्रति कैमर्थ्या-काङ्क्षाया अनुदयेन तस्य प्रयोजनाकल्पनात् । न च भयप्रयुक्तत्वेऽपि नोत्कर्षसिद्धिः । तस्य परमार्थधर्मत्वस्य श्रुतिसूत्रसिद्धत्वादिति वाच्यम् । अग्नीन्द्रादिभयहेतुत्वस्य तत्र तद्धर्मत्वावेदनेन भयहेतुत्वमात्रस्य तथात्वाभावात् अन्यथातिप्रसङ्गात् ।

यदपि 'सर्वो वै रुद्र' इत्यादिषु भयलिङ्गरहितेषु सार्वात्म्यप्रतिपादनायैव प्रवृत्तेषु विषयगौरवप्रयुक्तत्वं तस्यावगम्यत इति । तदपि न, सर्वो वै रुद्र इतीत्यस्य पुरुषो वै रुद्र इत्यादिवाक्यानुसारेण भगवत्परत्वस्यासकृदावेदितत्वा-द्भगवच्छरीरत्वनिबन्धनस्तत्रापि नमस्कारयोग्य इत्यवसायेन निरुपाधिकनमस्यत्वा-भावेन सर्वत्रापि तस्य तद्योगस्य तथात्वावसायात् ।

यदपि - 'यस्मै नमस्तस्मैत्वा जुष्टं नियुनज्मीति मन्त्रबलात्सर्वनन्तव्यत्व सिद्धेरिति तदप्यसारम् । यस्मै नम इति यच्छब्दबलादनुवादप्रतीत्या सर्वानन्तव्यत्वस्य च प्रमाणान्तरानवगतत्वेन तद्योगान्नमस्कारभूमविषयत्वस्य च तद्प्रमाणावगतत्वेन तत्परत्वकल्पनात् । न च तत्पारम्यसाधकमित्युक्तम् । न च लक्षणाप्रसङ्गः, अनुवादे लक्षणाया अदोषत्वात् । न चास्यैव सर्वनमस्कार विषयत्वसाधकत्वमस्त्विति वाच्यम् । गौरवप्रसङ्गात् । अग्नीन्द्रादि-शब्दघटित मन्त्रप्रतिपाद्य नमस्कारविषयत्वाय तदन्तर्यामित्वमपि हि कल्प्यम् । लक्षणा च नातीवदुष्यति । शूलगवाख्यकर्मण ईशानायत्वा जुष्टमुपाकरोमीति

मन्त्रवर्णबलाद्रुद्रदेवत्यत्वस्य प्रमाणसिद्धत्वेन रुद्रस्य च नमस्कारभूयस्त्वसंबन्धस्याप्यन्यतः सिद्धत्वेन तस्मिन् कर्मणि विनियुक्ते मन्त्रे श्रुतेन नमः शब्देन तद्भूयस्त्वस्य झटित्युपस्थितेः । अपि च ऋग्वेदे 'त्वमग्न इन्द्रस्त्वं ब्रह्म इत्यादिना अग्नेर्देवतान्तरतादात्म्य प्रशंसायां 'त्वं विष्णुरुरुगायो नमस्य' इत्याम्नायते । अत्र नमस्य इति नमस्कार विषयत्वमात्रपरं चेत् साधारण्येन नास्त्युपयोगः नमस्कारभूम विषयत्वपरं चेन्नम इत्यस्य लाक्षणिकत्वप्रसङ्गः । अतोऽसङ्कोचेन सर्वनन्तव्यत्व साधकमिति ब्रूयोः सर्वेश्वरत्वायोगात्तद्विरोधात् । यस्मै नम इति तद्भूमविषयत्वपरमेव । न चैतद्विरोधात्तस्य तत्परत्वमिति शक्यं वक्तुम् । प्रमाणान्तराप्रतिपन्नत्वेन विष्णोस्तद्भूमविषयत्वस्य लाक्षणिकत्व गौरवरूपदोषद्वयपरिहाराय सर्वनन्तव्यत्व मात्रपरत्वात् । 'विश्वरूपायवै नम' इत्येतद्भगवत्परमिति प्रतिपादितमधस्तात् । अतः सर्वनमस्कारविषयत्वं 'यस्मै नमस्तस्मैत्वाजुष्टं नियुनज्मीत्यनेन शिवस्य सिद्ध्यति ।

यत्तु 'यस्मै नमस्तच्छिर' इत्यादिकं मन्त्रोदाहार्यमिति । तन्न । तस्य शिवपरत्वासिद्धेः प्रत्युत भगवत एव नमस्कारविषयत्वं तेनावगम्यते । तथा हि - एवं हि तच्छ्रूयते — 'यस्मै नमस्तच्छिरोधर्मोमूर्धानं ब्रह्मोत्तराहनुर्यज्ञोधराविष्णुर्हृदयं संवत्सरः' 'सर्वं ते नमः' इतीदमपि भगवत्परं शिशुमारप्रतिपादकत्वात् तस्य च भगवद्रूपत्वम् ।

'तारामयं भगवतः शिशुमाराकृतिः प्रभोः ।
दिव्यरूपं हरेरस्तु तस्य पुच्छे ध्रुवःस्थितः ॥'

इति वैष्णवपुराणवचनात् । आश्वमेधिके च पर्वणि —

नमस्ते .... थस्तु भूत्वमत्रावगम्यते ।

इति । न शिवस्यानेन तत्साधनानवकाशः । उपबृंहणमपि भागवतस्थमिममर्थं दृढयति —

'आकाशात्पतितंतोयं यथागच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रतिगच्छति ॥' इति ।
'अनुग्रहार्थं लोकानां विष्णुर्लोक नमस्कृतः ।'

इति च ।

'सर्वे देवा वासुदेवं यजन्ते
सर्वे देवा वासुदेवं नमन्ते ।'
'तमिमं सत्वसंपन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितुमिच्छामः सर्वेसंमन्तुमर्हथ ॥'

इत्यादिकमत्रोदाहार्यम् । **शौनकश्चेममर्थं** प्रतिपादयति —

'यज्वानो यन्नमस्यन्ति यं नमस्यन्ति देवताः ।
योगिनो यं नमस्यन्ति तं नमस्यं नमाम्यहम् ॥'

इति । तस्मात्सर्वनन्तव्योऽपि भगवानेव, तदेवं सर्वधर्माराध्यत्व, मुक्त प्राप्यत्व, सर्वविद्या वेद्यत्वादि, जगत्कारणत्व व्याप्यधर्मप्रतिपादकैः साक्षात्तत्प्रतिपादकैश्च वेदान्तैः परमकारुणिकत्वं भगवदसाधारणत्वेनावगम्यत इति '**जन्माद्यस्य यतः**' इति सूत्रोदितं, जगज्जन्मादिकारणं परं ब्रह्म भगवान्नारायण इति सिद्धम् ।

इति श्रीशठमर्षण कुलतिलक निखिलवेदान्तविद्या निषद्यायित हृदयकमल
श्रीताताचार्यनन्दनस्य हयवदनकरुणाकटाक्षवीक्षालब्धपदवाक्यप्रमाणसारस्य
श्रीमन्निगमशिखर गुरुचरण सरसीरुह चञ्चरीकायमाणमानसस्य
श्रीवेङ्कटदेशिकपादसेवासमधिगत श्रीमच्छारीरकमीमांसाभाष्यहृदयस्य
वेङ्कटाचार्ययज्वनः कृतिषु सिद्धान्तरत्नावल्यां

तुरीयः परिच्छेदः ॥

---

'तातार्योयस्य तातः क्षितिपति-
मकुटीराजिनीराजिताङ्घ्रिः ।
माता श्रीवेंकटाम्बानिखिल
जगती गण्य पुण्य प्रभावा' ॥

तेनानेक प्रबन्ध प्रकटित
यशसा वेङ्कटार्येण क्लृप्ता ।
शुद्धा सिद्धान्तरत्नावलिरिह
विदुषां श्रेयसे भूयसेऽस्तु ॥

गुणसान्द्रं गुरुचन्द्रं यति-
राजमुनिं नमामि यद्दीक्षा ।
रक्षाजगतां साक्षात्सद्रत्ना-
वलिमिमामादितः ॥

जयति यति सार्वभौमः-
जयति स निगमान्तदेशिकोधन्यः ।
स जयति च गुरुवरेण्यस्तनयो-
यस्याद्रि शैलमौलिमणिः ॥

इति सिद्धान्तरत्नावली समाप्ता ॥

---

## पञ्चरुद्रेष्वथर्वशिर उपनिषत् पृष्ठम् - ९३

## भद्रं कर्णेभिरिति शान्तिः

---

ओं । देवा ह वै स्वर्गं लोक मगमंस्ते देवा रुद्रमपृच्छन् को भवानिति सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्योऽहं ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणां चोदं चोह मधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमानपुमांस्त्रियश्चाहं गायत्र्यहं सावित्र्यहं सरस्वत्यहं त्रिष्टुब्ज-गत्यनुष्टुप्चाहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्नि राहवनीयोऽहं सत्योऽहं गौरहं [illegible]ऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोहं तेजोऽहमृग्यजुस्सामाथर्वाङ्गिरसोह मक्षरमहं क्षरमहं गोप्योऽहं गुह्योऽह मरण्योऽहं पुष्करमहं पवित्रमह मग्रं च मध्यं च बहिश्च पुरस्ताद्दशसु दिक्ष्वत्रस्थित मनवस्थितं च ज्योतिरित्यहमेकस्सर्वे च मामेव मां यो वेद सर्वान् देवान्वेद गां गोभिर्ब्राह्मणान् ब्राह्मणेन हवींश्षि हविषायुरायुषा सत्य ५ सत्येन धर्मं धर्मेण तर्पयामि । स्वेन तेजसा ततो देवा रुद्रं नापश्यंस्ते देवा रुद्रं ध्यायन्ति ततो देवा ऊर्ध्वबाहवस्स्तुवन्ति । ओं ।

योह वै रुद्रस्स भगवान यश्च ब्रह्म भूर्भुवस्तस्मै वै नमो नमः शीर्षजनपदों विश्वरूपोऽसि ॥ १ ॥ (यथा प्रथम मन्त्रोक्ता वाद्यन्तौ तथा सर्वमन्त्रेषु द्रष्टव्यौ) यश्च विष्णुः ॥ २ ॥ यश्च महेश्वरः ॥ ३ ॥ या चोमा ॥ ४ ॥ यश्च विनायकः ॥ ५ ॥ यश्च स्कन्दः ॥ ६ ॥ यश्चेन्द्रः ॥ ७ ॥ यश्चाग्निः ॥ ८ ॥ या च भूः ॥ ९ ॥ यश्च भुवः ॥ १० ॥ यश्च सुवः ॥ ११ ॥ यच्च महः ॥ १२ ॥ यश्च जनः ॥ १३ ॥ यच्च तपः ॥ १४ ॥ यच्च सत्यं ॥ १५ ॥ या च पृथिवी ॥ १६ ॥ याश्चापः ॥ १७ ॥ यच्च तेजः ॥ १८ ॥ यश्च वायुः ॥ १९ ॥ यच्चाकाशम् ॥ २० ॥ यश्च सूर्यः ॥ २१ ॥ यश्च सोमः ॥ २२ ॥ यानि च नक्षत्राणि ॥ २३ ॥ ये चाष्टौ ग्रहाः ॥ २४ ॥ यश्च प्राणः ॥ २५ ॥ यश्च कालः ॥ २६ ॥ यश्च यमः

॥ २७ ॥ यश्च मृत्युः ॥ २८ ॥ यच्चामृतम् ॥ २९ ॥ यच्च भूतं भव्यं भविष्यत् ॥ ३० ॥ यच्च विश्वम् ॥ ३१ ॥ यच्च कृत्स्नम् ॥ ३२ ॥ यच्च सर्वम् ॥ ३३ ॥ यच्च सत्यम् ॥ ३४ ॥ ओमादौ मध्ये भूर्भुवस्सुवरन्तेशीर्षं जनपदों विश्वरूपोऽसि । ब्रह्मैकत्वं द्वित्रिविधोर्ध्वमधश्चत्वं शान्तिश्चत्वं पुष्टिश्चत्वं तुष्टिश्चत्वं हुतमहुतं विश्वमविश्वं दत्तमदत्तं कृतमकृतं परमपरं परायणं चेति । अपाम सोमममृता अभूमागन्मज्योति रविदाम देवान् - किं नून मस्मान् कृणवदरातिः किमु धूर्ति रमृतं मर्त्यस्य । सर्वञ्जगद्धितं वा एतदक्षरं प्राजापत्यं सूक्ष्मं सौम्यं पुरुषमग्राह्य मग्राह्येण वायुं वायव्येन सोमं सौम्येन ग्रसति । स्वेन तेजसा तस्मादुपसंहर्त्रे महाग्रासाय वै नमो नमः । हृदिस्थादेवतास्सर्वा हृदिप्राणाः प्रतिष्ठिताः । हृदित्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतः शिरोदक्षिणतः । पादोय उत्तरतः । स ओङ्कारो य ओङ्कारस्स प्रणवो यः प्रणवस्स सर्वव्यापी यस्सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्मेति । स एकस्स एको रुद्रस्स ईशानस्स भगवान् स महेश्वरः स महादेवः । अथ कस्मादुच्यत ओंकारो यस्मादुच्चार्यमाण एव सर्वꣳशरीरमूर्ध्वमुन्नामयति तस्मादुच्यत ओङ्कारः । अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव ऋचो यजूꣳषि सानून्यथर्वाङ्गिरसश्च यज्ञे ब्रह्म च ब्राह्मणेभ्यः प्रणामयति तस्मादुच्यते प्रणवः । अथ कस्मादुच्यते सर्वव्यापी तस्मादुच्चार्यमाण एव सर्वान् लोकान् व्याप्नोति स्नेहो यथा पललपिण्डं शान्तमूलमोतं प्रोतमनुप्राप्य सर्वं व्यतिशिष्टस्तस्यैवानुविद्धं व्यतिशिष्टस्तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एवान्तं नोपलभ्यतेतिर्यगूर्ध्वमधस्तात्तस्मादुच्यतेऽनन्तः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्म जरामरण संसारमहद्भयात्संतारयति तस्मादुच्यते तारम् । अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा परशरीराण्येवाधितिष्ठति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयते तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव महति

तमसि सर्वं शरीरं विद्योतयति तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यत एको यस्सर्वान् लोकान् उद्गृह्णात्यजस्रं सृजति विसृजयति वासयति तस्मादुच्यत एकः । अथ कस्मादुच्यत एको रुद्र एक एव रुद्रो न द्वितीयाय तस्थुर्य इमान् लोकान् ईशत ईशनीयुर्जननियुः । प्रत्यङ्जनास्तिष्ठन्ति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोप्ता तस्मादुच्यत एको रुद्रः । अथ कस्मादुच्यत ईशानो यः सर्वाँल्लोकानीशत ईशनीभिर्जननीभिः परमशक्तिभिः । अभित्वा शूरनूनुमो दुग्धा इव धेनवः । ईशानमस्य जगतस्सुवर्दृशमीशानमिन्द्रतस्थुषः तस्मादुच्यत ईशानः । अथ कस्मादुच्यते भगवान् यः सर्वान्भावानीक्षत्यात्मज्ञानं निरीक्षयति योगं गमयति स एव तस्मादुच्यते [illegible] अथ कस्मादुच्यते महेश्वरो यः सर्वान् लोकान् संभक्षस्संभक्षयत्यजस्रं सृजति विसृजति वासयति तस्मादुच्यते महेश्वरः । अथ कस्मादुच्यते महादेवो यस्सर्वान्भावान्परित्यज्यात्मज्ञान योगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः । तदेतद्रुद्रचरितम् । एषो हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातस्स उगर्भे अन्तः । स एव जातस्सजनिष्यमाणः प्रत्यङ्जनास्तिष्ठति विश्वतोमुखः । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । संबाहुभ्यान्धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः । तदेतदुपासितव्यम् । वाग्वदन्ति तदन्तर्ग्रहणम् । अयं पन्था वितत उत्तरेण येन देवा येन ऋषयो येन पितरः प्राप्नुवन्ति परमपदं परायणं चेति । वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वतीनेतरेषाम् । यो योनिं योनिमधितिष्ठत्येको येनेदं पूर्णं पञ्चविधं च सर्वम् । तमीशानं पुरुषं देवमीड्यं निदिध्यायाताारं शान्तिमत्यन्तमेति । प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन् क्रोधो या च तृष्णाक्षमा च । तृष्णां छित्वा हेतुजालस्य मूलं बुद्ध्या संचिन्त्य स्थापयित्वा तु रुद्रे । रुद्र एकत्वमाहुः । रुद्रं शाश्वतं वै पुराणमिष मूर्जन्त मसा नियच्छतु । व्रतमेतत्पाशुपतम् । अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ५

वा ह इदं भस्म । मन इत्येतानि चक्षूंषि भस्मानि । अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । तस्माद्व्रतमेतत्पाशुपतम् । पशुपाश विमोक्षाय योऽथर्वशिरसं ब्राह्मणो नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति। स सर्वभूतो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। स सर्वेषु वेदेष्वधीतो भवति । स सर्ववेद चर्यासु चरितो भवति । सैर्वर्देवैर्ज्ञातो भवति। स सर्वक्रतुभिरिष्टवान्भवति । तेनेतिहास पुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति। गायत्र्याश्शतसहस्रं जप्तं भवति। प्रणवानामयुतं जप्तं भवति। रूपे रूपे दश पूर्वान्पुनाति। दशोत्तरानाचक्षुषः पङ्क्तिं पुनाति। इत्याह भगवानथर्व-शिरोथर्वशिरः। सकृज्जप्त्वाशुचिः पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गाणापत्यमवाप्नोति। तृतीयं जप्त्वा देवमेवानुप्रविशतीत्योॐसत्यम्। यो रुद्रो अग्नौ यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश। य इमा विश्वा भुवनानि चक्लिपेतस्मै रुद्राय नमो अस्तु। अस्य मूर्धानमस्य सॐशीर्योऽथर्वा हृदयश्च मस्तिष्कादूर्ध्वं प्रेरयन्पवमानोथर्वशीर्ष्णस्तद्वाथर्व शिरोदेवकोशस्समुज्झितस्तत्प्राणो अभिरक्षतु। श्रियमन्नमथो मनः श्रियमन्नमथो मनः। विद्यामन्नमथोमनो विद्या-मन्नमथोमनः। मोक्षमन्नमथो मनो मोक्षमन्नमथो मनः इत्योॐसत्यमित्युपनिषत्। भद्रङ्कर्णेभिरिति शान्तिः।

इत्यथर्वशिरोपनिषत्समाप्ता ॥

---

श्रीगुरुभ्यो नमः

# पञ्चरुद्रेष्वथर्वशिखोपनिषत्–पृष्ठम्–४९–५३

## भद्रं कर्णेभिरिति शान्तिः

ओम् । अथ हैनं पैप्पलादोऽङ्गिरास्सनत्कुमारश्चाथर्वण मुवाच भगवन्किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तत् ध्यानं को वा ध्याता कश्च ध्येयः स एभ्योथर्वा प्रत्युवाच । ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्य मित्येतदक्षरं परं ब्रह्मास्य पादाश्चत्वारो वेदाश्चतुष्पादिदमक्षरं परं ब्रह्म पूर्वास्य मात्रा पृथिव्यकारस्स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः । द्वितीयान्तरिक्षꣳस उकारस्स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्निः । तृतीयाद्यौस्समकारस्ससामभिस्सामवेदो रुद्रा आदित्या जगत्याहवनीयः । यावसानेस्य चतुर्थ्यर्धमात्रा स सोमलोक ओंकारस्साथर्वणमंत्रैरथर्ववेदस्संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती: स्मृताः । प्रथमा रक्तपीता महद्ब्रह्मदैवत्या । द्वितीया विद्युमती कृष्णा विष्णु दैवत्या । तृतीयाशुभाशुभा शुक्ला रुद्रदैवत्या । यावसानेस्य चतुर्थ्यर्धमात्रा विद्युमती सर्ववर्णा पुरुषदैवत्या । स एष ह्योङ्कारः । चतुरक्षरश्चतुष्पादश्चतुश्शिरश्चतुरर्धमात्रस्थूलमेतद्ध्रस्वदीर्घप्लुत इति । ओं १ ओं २ ओं ३ इति त्रिरुक्त्वा चतुर्थश्शान्त आत्मा प्लुतप्रणव प्रयोगेन समस्तमोमिति प्रयुक्त आत्मज्योतिस्सकृदावर्तते सकृदुच्चारितमात्र ऊर्ध्वमुन्नामयतीत्योङ्कारः । प्राणांत्सर्वान् प्रलीयत इति प्रलयः प्राणात्सर्वान् परमात्मनि प्रणामयतीत्येतस्मात् प्रणवः । चतुर्धावस्थित इति सर्वदेव वेदयोनिस्सर्ववाच्यवस्तु प्रणवात्मकम् ॥ १ ॥ देवाश्चेति सन्धत्तां सर्वेभ्यो दुःखभयेभ्यः सन्तारयतीति तारणात्तारः । सर्वदेवाः संविशन्तीति विष्णुः । सर्वाणि बृह्मयतीति ब्रह्म । सर्वस्यान्तःस्थानेभ्यो ध्येयेभ्यो प्रदीपवत् प्रकाशयतीति प्रकाशः । प्रकाशेभ्यः सदोमित्यन्तः शरीरे विद्युद्वत् द्योतयति मुहुर्मुहुरिति विद्युद्वत्प्रतीयाद्दिशं दिशंभित्वा सर्वान् लोकान् व्याप्नोति व्यापयतीति व्यापनाद्व्यापी महादेवः ॥ २ ॥ पूर्वास्य मात्रा जागर्ति

जागरितं द्वितीया स्वप्नं तृतीया सुषुप्तिश्चतुर्थी तुरीयं मात्रा मात्राः प्रतिमात्रागतास्सम्यक्समस्तानपि पादपाञ्जयतीति स्वयंप्रकाशस्स्वयं ब्रह्मभवतीत्येष सिद्धिकर एतस्माद्ध्यानादौ प्रयुज्यते । सर्वकरणोपसंहारत्वाद्धार्यधारणाद्ब्रह्म तुरीयम् । सर्वकरणानि मनसि संप्रतिष्ठाप्य ध्यानं विष्णुः । प्राणं मनसि सहकरणैस्संप्रतिष्ठाप्य ध्यानाद्रुद्रः । प्राणं मनसि सहकरणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्य ५ सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतैर्नकारणं कारणानां ध्याता कारणं तु ध्येयस्सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये ध्रुवंस्तब्ध्वाधिकं क्षणमेकं क्रतुशतस्यापि चतुस्सप्तत्या यत्फलं तदवाप्नोति कृत्स्नमोङ्कारगतिश्च स्वरध्यानयोग ज्ञानानां यत्फलमोङ्कारो वेदपर ईशो वा शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत् परित्यज्य समस्ताथर्वशिखैतामधीत्य द्विजो गर्भवासा द्विमुक्तो विमुच्यत एतामधीत्य द्विजो गर्भवासा द्विमुक्तो विमुच्यत इत्यो ५ सत्यमुपनिषत् । भद्रं कर्णेभिरिति शान्तिः ।

इत्यथर्वशिखोपनिषत् ॥

---

# कैवल्योपनिषत्–पृष्टम्–२८२

हरिः ओम्। सहनाववत्विति शान्तिः। अथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच। अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिस्सेव्यमानां निगूढाम्। ययाचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान्। तस्मै सहोवाच पितामहश्च श्रद्धाभक्ति ध्यानयोगादवेहि। न कर्मणा न प्रजयाधनेनत्यागेनैके अमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति। वेदान्तविज्ञान सुनिश्चितार्थास्सन्यासयोगाद्यतयश्शुद्धसत्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे। विविक्तदेशे च सुखासनस्थश्शुचिस्समग्रीव शिरश्शरीरः। अत्याश्रमस्थस्सकलेन्द्रियाणि निरुद्ध्य भक्त्या स्वगुरुं प्रणम्य। हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्। अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दरूपमद्भुतम्। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिन्तमसः परस्तात्। स ब्रह्म स शिवस्सेन्द्रः सोऽक्षरः परमस्स्वराट्। स एव विष्णुस्सप्राणस्सकालोऽग्निस्सचन्द्रमाः। स एव सर्वं यद्भूतं यच्चभव्यं सनातनम्। ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये। सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन् ब्रह्मपरमं याति नान्येन हेतुना। आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः। स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्। स्त्र्यन्नपानादिविचित्रभोगैस्स एव जाग्रत्परितृप्तिमेति। स्वप्ने तु जीवस्सुख दुःखभोक्ता स्वमायया कल्पित विश्वलोके। सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति। पुनश्च जन्मान्तर कर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः। पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्। आधारमानन्द मखण्डबोधं यस्मिन् लयं याति पुरत्रयञ्च। एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। यत्परं

ब्रह्म सर्वात्मा विश्वस्यायतनं महत् । सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेवत्वमेव तत् । जाग्रत्स्वप्न सुषुप्त्यादिप्रपञ्चं यत्प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते । त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः । मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्माऽद्वयमस्म्यहम् । अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रम् । पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि । अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुस्स शृणोम्यकर्णः । अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाऽहम् । वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् । न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति । न भूमिरापो मम वह्निरस्ति न चानिलोमेऽस्ति न चाम्बरञ्च । एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् । समस्तसाक्षि सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् । यश्शतरुद्रीयमधीते सोऽग्निपूतोभवति । स्वर्णस्तेयात्पूतोभवति । सुरापानात्पूतोभवति । ब्रह्महत्यात्पूतोभवति । कृत्याकृत्यात्पूतोभवति । तस्मादविमुक्तमाश्रितो भवति । अत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते कैवल्यं पदमश्नुते इति । सहनाववत्विति शान्तिः ॥

कैवल्योपनिषत्समाप्ता ॥

---

# अन्तरादित्यविद्या-पृष्टम्-४२०

य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातै-तस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढ ५ साम तस्मा-दृच्यध्यूढ ५ साम गीयते । वागेव सा प्राणोमस्तत्साम ॥ १ ॥ चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढ ५ साम तस्मादृच्यध्यूढ ५ साम गीयते । चक्षुरेव साऽऽत्माऽमस्तत्साम ॥ २ ॥ श्रोत्रमेव नः साम तदेतदेतस्यामृच्यध्यूढ ५ साम तस्मादृच्यध्यूढ ५ साम गीयते । श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्य-ध्यूढ ५ साम तस्मादृच्यध्यूढ ५ साम गीयते । अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥ अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्यरूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥ स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्य कामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ॥ ६ ॥ अथ य एतदेवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ता ५ श्चाप्नोति देवकामा५श्च ॥ ७ ॥ अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ता५-श्चाप्नोति मनुष्यकामा५श्च तस्मादुहैवं विदुद्गाता ब्रूयात् ॥ ८ ॥ कं ते काम मागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ९ ॥

## मधुविद्या - पृष्टम्–४७५

ओं असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीन वꣳशोऽन्तरिक्ष-मपूपो मरीचयः पुत्राः ॥ १ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः । ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥ एतमृग्वेद मभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोऽजायत ॥ ३ ॥ तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्य-देतदादित्यस्य रोहितꣳरूपम् ॥ ४ ॥

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेद मभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसो-ऽजायत ॥ २ ॥ तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि सामान्येतꣳसामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳरूपम् ॥ ३ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसो-ऽजायत ॥ २ ॥ तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳरूपम् ॥ ३ ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्योगुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥ ते वा एते रसानाꣳरसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृताना-ममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै वेदा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्ये तस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदवसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येत देवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्ये-तस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतो-ऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ ४ ॥

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभि-संविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदादित्यानामेवैको भूत्वावरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्ये-तस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ ४ ॥

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेव ममृतं वेद मरुता मेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोस्त मेता मरुतामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ ४ ॥

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्ये तदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैत देवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रपादुदेति ॥ ३ ॥ स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वं उदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥४॥

अथ तत ऊर्ध्वं उदेत्यने नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥ न वै तत्र न निम्लोचनोदियाय कदाचन । देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥ न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति स एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥ तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म होवाच ॥ ४ ॥ इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥ नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥६॥

---

## गायत्रीविद्या–पृष्टम्–४७९

ओं गायत्री वा इदꣳसर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥ १ ॥ या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याꣳ हीदꣳसर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥ या वै सा पृथिवीयं वाव सा यदिद मस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥ यदैतत्पुरुषे शरीरमिदं वाव तद्यदिद मस्मिन्नन्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥ सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥ ५ ॥ तावानस्य महिमा [illegible] पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥ [illegible] वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥ अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥ अयं वाव स योऽयमन्तर्हृदय आकाश-स्तदेतत्पूर्णमप्रवर्ति पूर्णमप्रवर्तिनीꣳश्रियं लभते य एवं वेद ॥ ९ ॥

---

## शाण्डिल्यविद्या–पृष्टम्–४८१

ओं सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतु रस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥ मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥ एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाक तण्डु-लाद्वा एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्याया-नेभ्यो लोकेभ्यः ॥ ३ ॥ सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसःसर्वमिदमभ्यात्तो-ऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥

---

# उपकोसलविद्या

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार स ह स्माऽन्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥ तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिच-चारीन्मात्वाऽग्नयः परिप्रवोचन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासांचक्रे ॥२॥ स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥ अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ॥ ४ ॥ प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति सहोवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥

अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एत मेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

अथ हैन मन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

अथ हैन माहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाह मस्मीति ॥ १ ॥ स य एतमेवं

विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावर-पुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

ते होचु रुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसल ३ इति ॥ १ ॥ भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु माऽनुशिष्याद्भो इतीहापेव निह्नुत इमे नून मीदृशा अन्यादृशा इतीहाग्नी-नभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥ इदमिति ह प्रतिजज्ञे लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥

---

# सनत्कुमारविद्या

---

ओं । अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳहोवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ १ ॥ ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳसामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳराशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्र-विद्यां नक्षत्रविद्याꣳसर्पदेव जनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥ सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तꣳहोवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥ नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्योराशि दैवो निधिर्वाको-वाक्य मेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेव-

जनविद्या नामैवैतन्नामोपास्स्वेति ॥ ४ ॥ स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेद मथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳराशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेव जनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चा हृदयज्ञं च यद्वै वाङ्ना-भविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥ स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथा कामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये द्वितीयः खण्डः ॥

मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रा-नधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्राꣳश्च पशूꣳश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥ स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथा कामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये तृतीयः खण्डः ॥

संकल्पो वाव मनसो भूयान्यदा वै संकल्पयतेऽथ मनस्यन्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥ तानि ह

वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तापश्च तेजश्च तेषा४ संक्लृप्त्यै वर्ष४संकल्पते वर्षस्य संक्लृप्त्या अन्न४ संकल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते प्राणाना४संक्लृप्त्यै मन्त्राः संकल्पन्ते मन्त्राणा४संक्लृप्त्यै कर्माणि संकल्पन्ते कर्मणा४संक्लृप्त्यै लोकः संकल्पते लोकस्य संक्लृप्त्यै सर्व४ संकल्पते स एष संकल्पः संकल्पमुपास्स्वेति ॥ २ ॥ स यः संकल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं तत्रास्य यथा कामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥

इति सप्तमाध्याये चतुर्थः खण्डः ॥

चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥ तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थ चित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्त४ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥ स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्धयति यावच्चित्तस्य गतं तत्रास्य यथा कामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

इति सप्तमाध्याये पञ्चमः खण्डः ॥

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौ ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादा४शा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः

पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाꣳशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥ स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथा कामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये षष्ठः खण्डः ॥

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳराशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳसर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृण वनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चा हृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥ स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथा कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २॥

इति सप्तमाध्याये सप्तमः खण्डः ॥

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीट पतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥ स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथा कामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति सप्तमाध्याये अष्टमः खण्डः ॥

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्युह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याऽऽयै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥ स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै सलोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथा कामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये नवमः खण्डः ॥

आपो वावान्नाद्भूयस्यस्तस्माद्यदा सुवृष्टिर्नभवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥ स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाꣳस्तृप्तिमान्भवति यावदपांगतं तत्रास्य यथा कामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥

इति सप्तमाध्याये दशमः खण्डः ॥

तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योततेस्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥ स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहत तमस्कानभिसिद्ध्यति यावत्तेजसो गतं तत्रास्य यथा कामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याय एकादशः खण्डः ॥

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥ स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथा कामचारोभवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये द्वादशः खण्डः ॥

स्मरो वावाकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान्विजानाति स्मरेण पशून् स्मरमुपास्स्वेति ॥ १ ॥ स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथा कामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये त्रयोदशः खण्डः ॥

आशावाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥ स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्यमोघाः ह्यस्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथा कामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशायाभूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्याये चतुर्दशः खण्डः ॥

प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति

प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥ स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥ अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषंदहेन्नैवं ब्रूयुः पितृहाऽसीति मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥ प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥

इति सप्तमाध्याये पञ्चदशः खण्डः ॥

एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्याये षोडशः खण्डः ॥

यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानंत्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥

इति सप्तमाध्याये सप्तदशः खण्डः ॥

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्याये अष्टादशः खण्डः ॥

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धात्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्याय एकोनविंशः खण्डः ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्श्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठात्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥

इति सप्तमाध्याये विंशः खण्डः ॥

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्याय एकविंशः खण्डः ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳस भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥ गो अश्वमिह महिमेत्याचक्षते हस्ति हिरण्यं दासभार्यं क्षेत्राण्याय-तनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥

इति सप्तमाध्याये चतुर्विंशः खण्डः ॥

स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳसर्वमिति ॥ १ ॥ अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳसर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरति-रात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳसर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥

इति सप्तमाध्याये पञ्चविंशः खण्डः ॥

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मतः आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप

आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेद५सर्वमिति ॥ १ ॥ तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखता५सर्व५ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतं च दश चैकश्च सहस्राणि च वि५शति राहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवास्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदित कषायाय तमसस्पारं दर्शयति भगवान्सनत्कुमारस्त५स्कन्द इत्याचक्षते त५स्कन्द इत्याचक्षते ॥ २ ॥

इति सप्तमाध्याये षड्विंशः खण्डः ॥

---

# दहरविद्या

## अष्टमोऽध्यायः ॥

ओं अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥ तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥ यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥ तं चेद्ब्रूयुरस्मि५श्चेदिदं ब्रह्मपुरे सर्व५समाहित५सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरामाप्नोति प्रध्व५सते वा किं ततोऽति शिष्यत इति ॥ ४ ॥ स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष

आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्य-संकल्पो यथाह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥ तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा ँ स्तेषा ँ सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषा ँ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

इत्यष्टमाध्याये प्रथमः खण्डः ॥

स यदि पितृलोक कामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥ अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥ अथ यदि भ्रातृलोक कामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥ अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥ अथ यदि सखिलोक कामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥ अथ यदि गन्धमाल्य लोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्य लोकेन संपन्नो महीयते ॥ ६ ॥ अथ यद्यन्नपान लोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठत-स्तेनान्नपान लोकेन संपन्नो महीयते ॥ ७ ॥ अथ यदि गीतवादित्र लोक-कामो भवति संकल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्र लोकेन संपन्नो महीयते ॥ ८ ॥ अथ यदि स्त्रीलोक कामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥ यं यमन्तमभि-कामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ १० ॥

इत्यष्टमाध्याये द्वितीयः खण्डः ॥

त इमे सत्याः कामा अनृतापिधानास्तेषाᳬ सत्यानाᳬ सता मनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥ अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥ स वा एष आत्मा हृदि तस्यैतदेव निरुक्तᳬ हृद्ययमिति तस्माद्धृदय महरहर्वा एवं वित्स्वर्गं लोकमेति ॥ ३ ॥ अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥ तानि ह वा एतानि त्रीण्यक्षराणि सत्तीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभेयच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवं वित्स्वर्गंलोकमेति ॥ ५ ॥

इत्यष्टमाध्याये तृतीयः खण्डः ॥

---

## सुवर्णधर्मानुवाकः

सुवर्णं धर्मं परिवेद वेनम् । इन्द्रस्यात्मानं दशधा चरन्तम् । अन्तः समुद्रे मनसा चरन्तम् । ब्रह्माऽन्वविन्दद्दशहोतारमर्णे । अन्तः प्रविष्टः शास्ता जनानाम् । एकः सन् बहुधा विचारः । शतᳬशुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं भवन्ति । स मानसीन आत्मा जनानाम् ॥

अन्तः प्रविष्टः शास्ता जनानाᳬसर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः । स मानसीन आत्मा जनानाम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानᳬ सवितारं बृहस्पतिं । चतुर्होतारं प्रदिशोनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविन्दत् । अन्तः प्रविष्टं कर्त्तारमेतम् । त्वष्टारᳬरूपाणि विकुर्वन्तं विपश्चिम् ॥

अमृतस्य प्राणं यज्ञमेतम्। चतुर्होतृणामात्मानं कवयो निचिक्युः। अन्तः प्रविष्टं कर्तारमेतम्। देवानां बन्धुर्निहितं गुहासु। अमृतेन क्लृप्तं यज्ञमेतम्। चतुर्होतृणामात्मानं कवयो निचिक्युः। शतं नियुतः परिवेद विश्वा विश्ववारः। विश्वमिदं वृणाति। इन्द्रस्यात्मा निहितः पञ्चहोता। अमृतं देवानामायुः प्रजानाम्॥

इन्द्रꣳराजानꣳसवितारमेतम्। वायोरात्मानं कवयो निचिक्युः। रश्मिꣳरश्मीनां मध्ये तपन्तम्। ऋतस्य पदे कवयो निपान्ति। य आण्डकोशे भुवनं बिभर्ति। अनिर्भिण्णः सन्नथ लोकान् विचष्टे। यस्याण्डकोशꣳशुष्ममाहुः प्राणमुल्बम्। तेन क्लृप्तोऽमृतेनाहमस्मि। सुवर्णं कोशꣳरजसा परीवृतम्। देवानां वसुधानीं विराजम्॥

अमृतस्य पूर्णां तामु कलां विचक्षते। पादꣳषड्ढोतुर्न किलाविवित्से। येनर्त्तवः पञ्चधोत क्लृप्ताः। उतवा षड्ढा मनसोत क्लृप्ताः। तꣳषड्ढोतारमृतुभिः कल्पमानम्। ऋतस्य पदे कवयो निपान्ति। अन्तः प्रविष्टं कर्तारमेतम्। अन्तश्चन्द्रमसि मनसा चरन्तम्। स हैव सन्तं न विजानन्ति देवाः। इन्द्रस्यात्मानꣳशतधा चरन्तम्॥

इन्द्रो राजा जगतो य ईशे। सप्तहोता सप्तधा विक्लृप्तः। परेण तन्तुं परिषिच्यमानम्। अन्तरादित्ये मनसा चरन्तम्। देवानाꣳहृदयं ब्रह्मान्वविन्दत्। ब्रह्मैतद्ब्रह्मण उज्जभार। अर्कꣳश्चोतन्तꣳसरिरस्य मध्ये। आ यस्मिन्त्सप्त पेरवः। मेहन्ति बहुलाꣳश्रियम्। बह्वश्वामिन्द्र गोमतीम्॥

अच्युतां बहुलाꣳश्रियम्। स हरिर्वसुवित्तमः। पेरुरिन्द्राय पिन्वते। बह्वश्वामिन्द्र गोमतीम्। अच्युतां बहुलाꣳश्रियम्। मह्यमिन्द्रो नियच्छतु। शतꣳशता अस्य युक्ता हरीणाम्। अर्वाङायातु वसुभी रश्मिरिन्द्रः। प्रमꣳहमाणो बहुलाꣳश्रियम्। रश्मिरिन्द्रः सविता मे नियच्छतु॥

घृतन्तेजो मधुमदिन्द्रियम्। मय्ययमग्निर्दधातु। हरिः पतङ्गः पटरी सुपर्णः। दिविक्षयो नभसा य एति। स न इन्द्रः कामवरं ददातु। पञ्चारं

चक्रं परिवर्त्तते पृथु । हिरण्यज्योतिः सरिरस्य मध्ये । अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु । सप्त युञ्जन्ति रथमेकचक्रम् ॥

एको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजर मनर्वम् । येनेमा विश्वा भुवनानि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे । तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसन्नमन्तु । श्वेतꣳरश्मिं बोभुज्यमानम् । अपान्नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन् ॥

रोहिणीः पिङ्गला एकरूपाः । क्षरतीः पिङ्गला एकरूपाः । शतꣳ सहस्राणि प्रयुतानि नाव्यानाम् । अयं यः श्वेतो रश्मिः । परिसर्वमिदं जगत् । प्रजां पशून् धनानि । अस्माकं ददातु । श्वेतो रश्मिः परि सर्वं बभूव । सुवन् मह्यं पशून् विश्वरूपान् । पतङ्गमक्तमसुरस्य मायया ॥

हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । पतङ्गो वाचं मनसा बिभर्त्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमानाꣳस्वर्यं मनीषाम् । ऋतस्य पदे कवयो निपान्ति । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः ॥

प्रजापतिः प्रजया संविदानः । वीतꣳस्तुकेस्तुके । युवमस्मासु नियच्छतम् । प्र प्र यज्ञपतिन्तिर । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषाꣳसप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । वायुस्ताꣳअग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन् गुहाहितम् । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषाꣳसप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥

# पुरुषसूक्तम्

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेद॰सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । एतावानस्य महिमा । अतो-ज्यायाँ॰श्च पूरुषः ॥

पादोस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत् पुरुषः । पादोस्येहाऽऽभवात् पुनः । ततो विश्वङ्व्यक्रामत् । साशनानशने अभि । तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥

यत् पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः । सप्तास्यासन् परिधयः । त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ॥

तेन देवा अयजन्त । साध्या ऋषयश्च ये । तस्माद्यज्ञात् सर्वहुतः । सम्भृतं पृषदाज्यं । पशू॰स्ताँ॰श्चक्रे वायव्यान् । आरण्यान् ग्राम्याश्च ये । तस्माद्यज्ञात् सर्वहुतः । ऋचः सामानि जज्ञिरे । छन्दाँ॰सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥

तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । यत् पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते । ब्राह्मणोस्य मुखमासीत् । बाहू राजन्यः कृतः ॥

ऊरू तदस्य यद्वैश्यः । पद्भ्याँ॰शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ।

नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन् यदास्ते । धाता पुरस्ता-द्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥

---

## उत्तरनारायणानुवाकः

अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत् पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥

तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥

---

# शुद्धाशुद्ध पत्रिका

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 24 | एकैकवाक्ये | एकैकवाक्य |
| 3 | 16 | शाखायाम् | शाखायाम् |
| 6 | 3 | प्राप्तविधि | प्राप्त विधि |
| 11 | 10 | प्रकरणाः | प्रकरण |
| 13 | 2 | रात्रि | रात्री |
| 17 | 17 | बर्हिः | बर्हिः |
| 20 | 9 | अनुदानादिति | अनुशासनदर्शनादिति |
| 31 | 8 | निर्धार्य | निर्धार्यम् |
| 32 | 7 | सतं | ऽस्तं |
| 38 | 14 | भूग्रामस्य | भूतग्रामस्य |
| 43 | 8 | चतुरवर्ती | चतुरवत्ती |
| ,, | 3 | पंचावर्तैव | पंचावत्त्यैव |
| 44 | 4 | सत्र | अत्र |
| ,, | 18 | विषयः | विषया |
| 46 | 17 | नासीदति | न सीदति |
| 47 | 6 | नार्मेषा | नामैषा |
| ,, | 11 | धृतं | ध्रुवं |
| ,, | 19 | प्रात्य | प्राप्यत्व |
| 48 | 4 | दृष्टय | विष्णाव |
| 49 | 1 | मत्राय | मैत्राय |
| 51 | 18 | ऊर्ध्वं | ऊर्ध्वं |
| ,, | 19 | व्यवेहिते | व्यवहिते |
| 53 | 18 | मनुर्वचन | मनुवचन |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 55 | 2 | धातु प्रसादा | धातुः प्रसादा |
| 60 | 5 | मदुग्र | मुदग्र |
| 61 | 6 | कल्पनया | कल्पनायाः |
| 63 | 1 | पृष्टैरूप | पृष्टैरुप |
| 64 | 10 | वासुदेवो | वासुदेवे |
| 66 | 21 | त्याधिकरणे | त्यधिकरणे |
| 68 | 21 | तदि | यदि |
| 70 | 2 | सहस्रीर्ष | सहस्र शीर्ष |
| 71 | 8 | ब्राह्मणं | ब्रह्माणं |
| ,, | 11 | अब संभवः | अब्जसंभवः |
| 72 | 18 | रूपायमपर | रूपायामपर |
| 73 | 10 | कात्स्ने | कार्त्स्न्ये |
| 76 | 5 | वायव्यासीत्यत्र | वायव्यासित्यत्र |
| 79 | 1 | दिष्नुसंधेय | विष्णुसंधेय |
| 83 | 12 | वेत्यस्य | वेत्यस्य |
| 85 | 5 | परमात्मधाम्ना | परममात्मताधाम्ना |
| 89 | 1 | स्योद्दयसम | स्योद्देश्यसम |
| 95 | 24 | विधि | विद्धि |
| 104 | 2 | भगवत्प्रणव | भगवत्प्रवणत्व |
| 106 | 4 | तस्यायमात्मा | यस्यायमात्मा |
| 109 | 9 | प्रदर्शन | प्रतर्दन |
| 110 | 8 | एवं | एतं |
| 111 | 9 | तद्धारा | तद्द्वारा |
| 113 | 22 | सौ भ वध | सौभद्रवध |
| 119 | 4 | वेद वेधा | वेद विद्या |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 120 | 2 | म्यगाचार | म्यगाचर |
| 122 | 1 | तदाशायामिज्ञान | तदाशयामिज्ञान |
| 123 | 15 | माश्रिय | माश्रय |
| 125 | 12 | समक्न्तरः | समनन्तरः |
| 126 | 8 | उद्भूतासि | उद्धृतासि |
| 129 | 1 | श्रियैर्मरुतो | श्रियैमरुतो |
| 130 | 15 | वशं | वरं |
| 137 | 3 | उपस्यिता | उपस्थितिः |
| 140 | 11 | पर्य वेदितव्यं | परिवेदितव्यं |
| 141 | 20 | मनान्मुनि | मननान्मुनि |
| ,, | 24 | महत्वी | महत्व |
| 143 | 8 | वश्यकत्व | वश्यत्व |
| 150 | 1 | गतनिनिवर्तेति | गताः न निवर्तन्ति |
| 151 | 6 | सुदर्शनमिदं | सुदुर्दर्शमिदं |
| 152 | 15 | स क्यं | स्वयं |
| 155 | 3 | वकल्प | वैकल्प |
| 160 | 4 | प्रतितेः | प्रतीतेः |
| 165 | 8 | ष्टेहवयमहिष्णु | ष्टैश्वर्य सहिष्णु |
| 166 | 4 | मुखमाश्रय | मुख्यमाश्रय |
| 173 | 13 | नारायणात्मा | नारायणः आत्मा |
| 186 | 20 | वाक्यस्यर्थः | वाक्यस्यार्थः |
| 189 | 7 | सहितस्सोम | सहित सोम |
| 190 | 9 | गानकतृत्व | गानकर्तृत्व |
| 192 | 8 | शिव | शिवः |
| 194 | 15 | पृदिव्याङ्गेषु | पृथिव्यङ्गेषु |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 197 | 13 | त्यमिप्राये | त्यामिप्राये |
| 199 | 21 | तया | तथा |
| 201 | 11 | सहस्रस्य | सहस्रास्यः |
| ,, | 21 | प्रभः | प्रभुः |
| 207 | 14 | णातेरूप | णातेरुप |
| 210 | 5 | शति | इति |
| 211 | 16 | मस्या | मस्याः |
| 214 | 21 | पासितव्मम् | पासितव्यम् |
| 214 | 24 | पुनरूप | पुरुरूप |
| 219 | 9 | दर्शना रूप | दर्शन रूप |
| 228 | 7 | परमपत | परमत |
| 230 | 11 | धम्यन्तरं | धर्म्यन्तरं |
| 232 | 11 | द्व | वा |
| 238 | 8 | प्रार्थक | सार्थक |
| 248 | 17 | वीशनीशौ | वीशानीशौ |
| 252 | 14 | दुर्मति | दुर्मतिः |
| 284 | 18 | रहितावांतर | रहितावांतर |
| 285 | 5 | व्यस्यनेन | व्यस्ययेन |
| 289 | 5 | हराति | हरतीति |
| ,, | 14 | प्रायेश्र | प्रायेश्रू |
| 291 | 19 | पृष्टा | पृष्ठा |
| 293 | 14, 15 | पृष्ट | पृष्ठ |
| 294 | 23 | वस्तुम् | वक्तुं |
| 295 | 15 | वन्ति | यन्ति |
| ,, | 16 | दाविव | दावेव |

| पृष्टं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 296 | 17 | सौबां | सौबा |
| ,, | ,, | निर्धारि | निधरि |
| ,, | 19 | नां | नाम् |
| 297 | 5 | सद्वैरूप्यं | वद्वैरूप्यं |
| 299 | 7 | ले अ | लअ |
| ,, | 22 | सस्या | सस्था |
| 302 | 4 | प्रतिक्ष | प्रतिपक्ष |
| ,, | 12 | नात्म | नामात्म |
| 303 | 4 | द्र्य | द्र्य |
| ,, | 16 | नःभूतः | नभूः |
| 304 | 3 | समोभ्याधिक | समोऽस्त्यभ्यधिकः |
| ,, | 17 | चतुर्धाव | चतुर्धाभ |
| 305 | 8 | गुणागुण | सगुणानुगः |
| ,, | 9 | सर्गोत | सर्गकरेन्त |
| 307 | 11 | केति | का इति |
| ,, | 24 | परी | परि |
| ,, | 25 | रस्य | करणस्य |
| 308 | 14 | मूर्तिमेव | मूर्तमेव |
| 309 | 3 | णानन्तर | णोनन्तर |
| ,, | 5 | मान्याधिकरण | मानाधिकरण्य |
| ,, | 21 | भाग | भग |
| 310 | 13 | धारिणाम् | धारिणम् |
| 311 | 1 | क्षरो | रंश्च |
| 312 | 2 | सूक्ष्लार्थे | सूक्ष्मार्थं |
| ,, | 19 | नेन नैव | नेनै |

| पृष्टं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 314 | 4 | परमस्त | परस्त |
| ,, | 16 | कश्चि | कश्चि |
| 315 | 11 | कृत | कृतः |
| ,, | 12 | णेषुभूतेषु | णभूतेषु |
| 317 | 17 | भवता | भगवता |
| 318 | 2 | कल्वृत्त | |
| 320 | 5 | आभूतस्सं | |
| ,, | 15 | ऽनहृत | |
| 322 | 8 | शायित्वं | शयितत्वं |
| 324 | 6 | मिविष्ट | मिनिविष्ट |
| 325 | 28 | रकस | |
| 326 | 24 | शांस्तु | शास्तु |
| 331 | 6 | वृतुर्लि | वृतुलि |
| 333 | 12 | कश्नो | [illegible] |
| ,, | 15 | धन्तन्तं | धन्तं |
| 334 | 16 | काभावी | कभावो |
| 336 | 8 | पप्रट | प्रबलद्वेषेण |
| ,, | 12 | प्रयां | प्रया |
| 337 | 21 | व्याहतमप्रसंचात् | व्याहतं |
| 338 | 13 | ऽनिर्यार्य | ऽनिवार्यः |
| 339 | 11 | साङ्कीर्णा | संकीर्णाः |
| ,, | 13 | स्येत्यद्य | स्येत्याद्य |
| ,, | 22 | प्रवृद्ध | प्रवृत्त |
| 340 | 10 | लाषित | लषित |
| ,, | 13 | सत्स | सत्त्वं |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 341 | 17 | नात्ववत् | नवत् |
| 343 | 19 | लक्षण | लक्ष |
| 345 | 19 | पवषस्तु | नवस्तु |
| 348 | 17 | कारणा | करणा |
| 348 | 22 | दिष्ठ | दिष्ट |
| 349 | 7 | मार्ध्यत्व | माध्यं |
| ,, | 8 | ज्ञानत्वत्व | ज्ञानवत्व |
| 350 | 16 | काथतु | |
| 351 | 6 | सुर | सुरः |
| 352 | 21 | माध्यस्थ | माध्यस्थ्य |
| 355 | 3 | ख्याना | ख्यान |
| ,, | 5 | ष्वेव | ष्वेवं |
| 356 | 4 | पतति | पततीति |
| 357 | 10 | गम्यतेति | गम्यत इति |
| 376 | | न्यूदेशेन | न्यूहेशेन |
| 389 | 12 | जेतजसः | जेतसः |
| 395 | 11 | न्येन | न्येचन |
| 397 | 16 | हरश्चैव | हरश्च |
| 400 | 18 | प्रह्यत | प्राह्यत |
| 426 | 7 | वष्ठि | वष्टि |
| 428 | 17 | वद्दि | वह्नि |
| ,, | 21 | दितं | कृतं |
| 437 | 13 | सम | साम |
| 449 | 6 | घजवन्त | घजन्त |
| ,, | 11 | अतमा | अततमा |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 452 | 23 | शब्दो | शब्द |
| 457 | 20 | भूयिष्ट | भूयिष्ठ |
| 466 | 1 | पृष्ठ | पृष्ट |
| 468 | 11 | स्मिन्ना | स्मिना |
| 470 | 4 | कौम | कौर्म |
| 483 | 10 | श्रोस्त्रं | श्रोत्तं |
| ,, | 14 | राजान्वा | राजन्वा |
| ,, | 20 | एष ऽ | एषोऽ |
| 484 | 15 | शब्दा | शब्द |
| ,, | 21 | मितिविप्र | मितिप्र |
| 485 | 12 | अपह्रत | अपहृत |
| 486 | 24 | धानर्हः | धनार्हः |
| 487 | 12 | यदन्तद्दु | यदन्तस्तद्दु |
| 488 | 3 | मह्रे | . मह्रे |
| 497 | 9 | सामाना | समाना |
| 498 | 5 | तयात्वाव्य | तयात्वव्य |
| ,, | 8 | ब्रह्मापर | ब्रह्मपर |
| 502 | 19 | याजष्ति | याजेष्ति |
| 504 | 22 | ष्टषु | ष्टसु |
| 505 | 5 | देवना | देवाना |
| ,, | 9 | ननत्वा | नत्वा |
| ,, | 12 | विकल्पप | विकल्प |
| 509 | 6 | हश्य | हत्य |
| ,, | 11 | ङ्क्षया | ङ्क्षाया |
| 510 | 7 | गगनं | गहनं |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 517 | 12 | दिशश्च | दिशाश्च |
| ,, | ,, | भव्य जि ज्ञासा | भव्यं जि ज्ञास |
| ,, | 13 | ष्टाव् | ष्टात् |
| 523 | 11 | तभाव | भात्र |
| 525 | 5 | स्रवत | स्रत |
| ,, | 21 | सामा | समा |
| 528 | 9 | परमा | परमं |
| 533 | 12 | कस्येत्य | कस्येत्या |
| 536 | 12 | द्त्व | द्वत्व |
| 539 | 11 | युगपान्मि | युगपन्मि |
| 540 | 18 | दिवत्त | दिवत्तु |
| ,, | 22 | बलासि | बलाप्ति |
| 546 | 20 | बुध्धु | बुद्ध्यु |
| ,, | 24 | र्थन्वेन | र्थत्वेन |
| 547 | 7 | कृत | कृते |
| 556 | 22 | निषोधो | निषेधो |
| 561 | 15 | मोनेः | मानैः |
| ,, | 18 | षष्टचा | षष्ट्या |
| 563 | 17 | सारेपान | सारेणसा |
| 565 | 17 | भवतितत्वात् | भावितत्वात् |
| 571 | 18 | न्यज्यानि | न्याज्यानि |
| 572 | 6 | प्रकृतिं | प्रकृत |
| ,, | 4 | विभागा | विभाग |
| ,, | 7 | आदिभ्यः | आदित्यः |
| ,, | 6 | निर्णयस्वार्थ | निर्णयार्थ |

| पृष्टं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 572 | 12 | मत्नं | मत्तं |
| ,, | 14 | द्वयक्ष | द्वयक्ष |
| ,, | 18 | मृध्धै | मृद्धयै |
| 573 | 8 | आदिर्ग | आदिद्र |
| ,, | 9 | ऽभवद्विती | अभवद्वितीय |
| ,, | 12 | ह्वहषि | जुह्वहषिः |
| 576 | 6 | इति-इति | इति |
| 583 | 2 | प्रीन्यति | प्रत्यति |
| ,, | 5 | कृस्त्वते | कृत्वस्ते |
| ,, | 18 | भिर्यहे | भिर्ययहे |
| 584 | 15 | इतील्यस्य | इत्यस्य |
| ,, | 20 | सर्वान | सर्वेन |
| 573 | | अस्यां पंक्तौ "अजस्य" इत्यारभ्य श्रितं इत्यंतं वाक्यं निष्कासनीयम् । | |
| 142 | 13 | भगवन् इत्यारभ्य 'त्वान्' इति पर्यंतं निष्कासितव्यम् ॥ | |

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 572 | 12 | मत्नं | मत्तं |
| ,, | 14 | द्वयक्ष | द्वयक्ष |
| ,, | 18 | मृध्यै | मृद्ध्यै |
| 573 | 8 | आदिर्ग | आदिद्र |
| ,, | 9 | ऽभवद्विती | अभवद्वितीय |
| ,, | 12 | हृद्दषि | शुद्धदृषिः |
| 576 | 6 | इति-इति | इति |
| 583 | 2 | प्रीन्यति | प्रत्यति |
| ,, | 5 | कृस्त्वते | कृत्वस्ते |
| ,, | 18 | मिर्यहे | मिर्ययहे |
| 584 | 15 | इतीत्यस्य | इत्यस्य |
| ,, | 20 | सर्वान | सर्वेन |
| 573 | | अस्यां पं क्तौ "अजस्य" इत्यारभ्य श्रितं इत्यंतं वाक्यं निष्कासनीयम् । | |
| 142 | 13 | भगवन् इत्यारभ्य 'त्वान्' इति पर्यंतं निष्कासितव्यम् ॥ | |